तदर्थदर्शनाभावात् मिथ्यार्थप्रतिभासिषु ।
ज्ञानाकारेषु सङ्केत इति केचित्प्रचक्षते ॥ ४० ॥
बाह्यार्थदृष्टिभागेषु गृहीतग्रहणेष्वपि ।
सत्याकारावबोधेषु सङ्केतमपरे विदुः ॥ ४१ ॥
न भेदेषु न सामान्ये केवले न च तद्वति ।
फलाभावादशक्तेश्च समयः सम्प्रवर्तते ॥ ४२ ॥
स एवार्थः समश्चेति प्रत्ययस्तन्निबन्धनः ।
वितथोऽवितथश्चापि तदेकत्वनिबन्धनः ॥ ४३ ॥
तथा तत्प्रतिषेधेऽपि वैलक्षण्यादिशब्दवत् ॥ ४३½ ॥
तत्समानासमानेषु तत्प्रवृत्तिनिवृत्तये ।
संक्षेपेण क्वचित्कश्चिच्छब्दः सङ्केतमश्नुते ॥ ४४½ ॥
तथाऽनेकोऽपि तद्धर्मनानात्वप्रतिपादने ।
एकत्र बहुभेदानां सम्भवान्मेचकादिवत् ॥ ४५½ ॥
समानं केनचित्किञ्चिदपरञ्च तथाविधम् ।
भेदविद् धर्मिणः कृत्वा समानाकारकल्पना ॥ ४६½ ॥
तदन्यश्च समानात्मा स एवेति तथाविधे ।
व्यवच्छेदस्वभावेषु विशेषणविशेष्यधीः ॥ ४७½ ॥
तन्निमित्तकः शब्दस्तथान्यत्रापि योज्यताम् ।
ततः सत्तेति साध्यन्ते सन्तो भावाः स्वलक्षणाः ॥ ४८½ ॥
['सहशब्दार्थ' ( ३९ ) इत्यादि 'तत सत्तेति' ( ४८½ ) इत्यन्तं व्याख्यानश्लोकाः]
नानैकवचनाः शब्दाः तथा सङ्केतिता यतः ॥ ४९ ॥
प्रत्यभिज्ञा द्विधा काचित्सादृश्यविनिबन्धना ।
प्रमाणपूर्विका नान्या दृष्टिमान्द्यादिदोषतः ॥ ५० ॥
अस्ति प्रधानमित्यत्र लक्षणासम्भवत्वतः ॥ ५०½ ॥
तत्रान्यत्रापि यासिद्धं यद्विना यद्विहन्यते ।
तत्र तद्गमकं तेन साध्यधर्मी च साधनम् ॥ ५१½ ॥
अप्रत्यक्षः सुषुप्तादौ बुद्धः प्रत्यक्षलक्षणः ।
जीवतीति यतः सोऽयं जीव आत्मोपयोगवान् ॥ ५२½ ॥
कर्मणामपि कर्ताऽयं तत्फलस्यापि वेदकः ।
संसरेत् परिणामात्तो मुच्यते वा ततः पुनः ॥ ५३½ ॥
आत्मादिव्यतिरेकेण कोऽपरोऽध्यक्षतां व्रजेत् ।
नानायं क्रमशो वृत्तेर्न चेदत्राभिधास्यते ॥ ५४½ ॥
भूतानामेव केषाञ्चित् परिणामविशेषतः ।
कायश्चित्कारणं सोऽपि कथं संसारमुक्तिभाक् ॥ ५५½ ॥
शक्तिभेदे तथा सिद्धिः संज्ञा येन निवार्यते ॥ ५६ ॥
यथा भूताविशेषेऽपि प्रज्ञादिगुणसंस्थितिः ।
तथा भूताविशेषेऽपि भवेद्भूतादिसंस्थिति ॥ ५७ ॥
तस्मादनेकरूपस्य कथञ्चिद् ग्रहणे पुनः ।
तद्रूपं भेदमारोप्य गुण इत्यपि युज्यते ॥ ५८ ॥
यदि स्वभावाद्भावोऽयं भिन्नो भावः कथं भवेत् ।
अनवस्थानतोऽभेदे सकलग्रहणं भवेत् ॥ ५९ ॥

तदनेकात्मकं तत्त्वं न हि ज्ञानात्मना क्वचित् ।
शरीरग्रहणं येन तद्गुणः परिकल्प्यते ॥ ६० ॥
गुणानां गुणसम्बन्धो गन्धादेः सङ्ख्यया ग्रहात् ।
तादात्म्यं केन वार्येत नोपचारप्रकल्पनम् ॥ ६१ ॥
अत्रान्यत्रापि तुल्यत्वात् आधारस्यैकरूपतः ।
तत्रैकत्वं प्रसज्येत संख्यामात्रं यदीष्यते ॥ ६२ ॥
नानात्मविभ्रमादेवं न पृथग्गुणिनो गुणाः ।
प्रसक्ता रूपभेदाच्चेत् भेदो नानात्वमुच्यते ॥ ६३ ॥
एकता भावसाम्याच्चेत् उपचारस्तथा भवेत् ।
भेदेऽपि वस्तुरूपत्वात् न चेदन्यत्र तत्समम् ॥ ६४ ॥
एतेन भिन्नविज्ञानग्रहणादिकथा गता ॥ ६४½ ॥
जीवच्छरीरधर्मोऽस्तु चैतन्यं व्यपदेशतः ।
यथाऽचैतन्यमन्यथेत्यपरः प्रतिपन्नवान् ॥ ६५½ ॥
अप्रत्यक्षेऽपि देहेऽस्मिन् स्वतन्त्रमवभासनात् ।
प्रत्यक्षं तद्गुणो ज्ञानं नेति सन्तः प्रचक्षते ॥ ६६½ ॥
तद्दृष्टिहानिरन्येषामदृष्टपरिकल्पना ॥ ६७ ॥
स्वातन्त्र्यदृष्टेर्भूतानामदृष्टेर्गुणभावतः ।
तत्सारतरभूतानि कायापायेऽपि कानिचित् ॥ ६८ ॥

[ 'तस्मादनेकरूपस्य' ( ५८ ) इत्यादि 'स्वातन्त्र्यदृष्टे' ( ६८ ) इत्यन्तं व्याख्यानश्लोकाः ]

कार्यकारणयोर्वृद्धिकाययोस्तन्निवृत्तितः ।
कार्याभावगतेर्नास्ति संसार इति कश्चन ॥ ६९ ॥
तस्यापि देहानुत्पत्तिप्रसङ्गोऽन्योन्यसंश्रयात् ।
उत्तरोत्तरदेहस्य पूर्वपूर्वधियो भवः ॥ ७० ॥
अत एव विरुद्धत्वादलं प्रायस्तथा भवन् ।
तत्र कारणमित्येव कार्यसत्तानियर्तकम् ॥ ७१ ॥
स्वनिवृत्तौ तथा तक्षो गोपुराट्टालकादिषु ॥ ७२ ॥
युगपद्भिन्नरूपेण वहिरन्तश्च भासनात् ।
न तयोः परिणामोऽस्ति यथा गेहप्रदीपयोः ॥ ७२½ ॥
प्रमितेऽप्यप्रमेयत्वाद्विकृतेरविकारिणि ।
निर्ह्रासातिशयाभावान्निर्ह्रासातिशये धियः ॥ ७३½ ॥
बलीयस्यबलीयस्त्वाद्विपरीते विपर्ययात् ।
काये तस्माच्च ते तस्य परिणामा सुखादयः ॥ ७४½ ॥
एतदत्र घटादीनां न तु जातुचिदीक्ष्यते ।
तुल्यश्च गुणपक्षेण तत्तया परिणामतः ॥ ७५½ ॥
अक्षादीनां विकारोऽयमात्मकर्मफलं भवेत् ।
अन्यथानियमायोगात् प्रतीतेरपलापतः ॥ ७६½ ॥
कल्पनायामसामर्थ्यात् तनस्तद्विकृते ऋते ।
पारम्पर्येण साक्षाच्च नास्ति विज्ञानविक्रिया ॥ ७७½ ॥
कारणं नाक्षसङ्घातस्तत्प्रत्येकं विना भवात् ।
विकल्पानां विशेषाच्च तत्तद्गति विरोधतः ॥ ७८½ ॥

जातिस्मराणां संवादादपि संस्कारसंस्थितेः ।
अन्यथा कल्पयन् लोकमतिक्रामति केवलम् ॥ ७९½ ॥
नाऽस्मृतेरभिलापोऽस्ति न विना सापि दर्शनात् ।
तद्धि जन्मान्तराभ्यासं जातमात्रेऽपि लक्ष्यते ॥ ८०½ ॥
गर्भे रसविशेषाणां ग्रहणादिति कश्चन ।
तदाद्यावभिलापेन विना जातु यदृच्छया ॥ ८१½ ॥
तत्संस्कारान्वयेक्षत्वाद् भूयो भूयः प्रवर्तितः ।
कोशपानं विधेयं न समं भूयस्तथा दृशः ॥ ८२½ ॥
रूपादिदर्शनाभावात् तत्सम्बन्धस्मृतिः कथम् ।
नावश्यं चक्षुरादीनां सर्वत्रोन्मीलनादयः ॥ ८३½ ॥
तथा रागादयो दृष्टाः सङ्कल्पाद्यविनाभुवः ॥ ८४ ॥
तदाहारादिसामान्यस्मृतिवद्विभ्रमोपयोः ।
भावोऽभावश्च वृत्तीनां भेदेष्विह च दृश्यते ॥ ८५ ॥
तस्मात् संसारवैचित्र्यं नियमाच्च विहन्यते ।
न च कश्चिद्विरोधोऽस्ति देहान्तरपरिग्रहे ॥ ८६ ॥
तदभावे हि तद्भावप्रतिबंधो न युक्तिमान् ॥ ८६½ ॥
['जातिस्मराणां' (७९) इत्यादि 'तदभावे हि' (८६½) इत्यन्तं व्याख्यानश्लोकाः]
बुद्धेः पुरुषतन्त्रत्वे नित्यत्वात्तदनुक्रिया ।
न भवेत्परिणामित्वाद्विनाशानुपलक्षणात् ॥ ८७½ ॥
परस्याप्यविरोधश्चेत् फलहेतुव्यपोहतः ।
प्रवृत्तेर्व्यवहाराणामविनाशेऽपि सम्भवात् ॥ ८८½ ॥
यथाऽजनकजन्येषु न सन्ति कलशादयः ।
तथा जनकजन्येषु ततस्तत्त्वं निरन्वयम् ॥ ८९½ ॥
तत्र नाशादिशब्दाश्च समिताः समनन्तरे ॥ ९० ॥
अन्यस्यान्यो विनाशः किं किन्न स्यादचलात्मकः ।
तद्विवेकेन भावाच्चेत् कथन्नातिप्रसज्यते ॥ ९१ ॥
सदापि सर्वभावानां परस्परविवेकतः ।
न चानन्तरमित्येव भावस्तद्व्यपदेशभाक् ॥ ९२ ॥
तत्प्रतीत्यसमुत्पादात् भावश्चेत् स कुतो मतः ।
सादृश्यात् प्रत्यभिज्ञानं न सभागविबन्धनम् ॥ ९३ ॥
विशेषकल्पनायां स्याद् परस्याप्यभिचारिता ।
तस्मात् सभागसन्तानकल्पनापि न युज्यते ॥ ९४ ॥
न चेत् स परिवर्तेत हेतुरेव फलात्मना ॥ ९४½ ॥
तस्माद्भावविनाशोऽयं फलीभावः तदग्रहः ।
तद्ग्रहः प्रतिषेधोऽस्य केवलं तन्निबन्धनः ॥ ९५½ ॥
अन्यथात्वं यदीष्येत हेतोरपि फलात्मनः ।
अन्य एवेति किन्नेष्टमिति केचित्प्रचक्षते ॥ ९६½ ॥
अन्यथात्वं न चेत्तस्य भवेद् ध्रौव्यमलक्षणात् ।
अभावस्याप्यभावोऽपि किन्नेत्यन्ये प्रचक्षते ॥ ९७½ ॥
स्वस्वभावस्थितो भावो भावान्तरसमुद्भवे ।
नष्टो वा नान्यथाभूतः ततो नातिप्रसज्यते ॥ ९८½ ॥

साधनं प्रकृताभावेऽनुपपन्नं ततोऽपरे ।
विरुद्धासिद्धसन्दिग्धा अकिञ्चित्करविस्तराः ॥ ९९३ ॥
तथार्थेऽसत्यसम्पूर्णधर्मो न बहिरङ्गतः ।
सर्वथैकान्तविश्लेषे साध्यसाधनसंस्थितेः ॥ १००३ ॥
एकं चलं चलैर्नान्यैर्नष्टैर्नष्टं न चापरैः ।
आवृतैरावृतं भागे रक्ते रक्तं विलोक्यते ॥ १०१३ ॥
अन्यथा तदनिर्देश्यं नियमस्याप्यसम्भवात् ।
वृत्तावपि न तस्येदं विश्वरूपं विभाव्यते ॥ १०२३ ॥
सम्यग्ज्ञानं व्यवस्थाया हेतुः सर्वत्र तत्पुनः ।
प्रत्यक्षं यदि बाध्येत लक्षणं प्रतिरुद्ध्यते ॥ १०३३ ॥
साङ्कर्यं व्यवहाराणां सन्निवेशविशेषतः ।
नानेकपरिणामोऽयं यदि न व्यवतिष्ठते ॥ १०४३ ॥
सत्यप्येकार्थकारित्वेऽसंश्लेषपरिणामतः ।
इन्द्रियादिषु नैकत्व यदि किं वा विरुद्ध्यते ॥ १०५३ ॥
तदनेकार्थसंश्लेषविश्लेषपरिणामतः ।
स्कन्धस्तु सप्रदेशोंऽशी बहिः साक्षात्कृतो जनैः ॥ १०६३ ॥
नानाकारैकविज्ञानं स्वाधारे बदरादिवत् ।
तादात्म्येन पृथग्भावे सति वृत्तिर्विकल्प्यते ॥ १०७३ ॥
दर्शनादर्शने स्यातां सप्रदेशाप्रदेशयोः ।
विरोधानुपलम्भेन किल स्कन्धो विरुद्ध्यते ॥ १०८३ ॥
सम्भवत्यपि मात्राणां दर्शनादर्शनस्थितिः ।
इदं विज्ञानमन्यद्वा चित्रमेकं यदीक्ष्यते ॥ १०९३ ॥
अथान्तरारम्भेदानामामभ्यात् सकलाग्रहे ।
नानाकारणसामर्थ्याज्ज्ञानं भेदेन भासते ॥ ११०३ ॥
भेदसामर्थ्यमारोप्य प्रत्यासत्तिनिबन्धनम् ।
बोधं महति नीलादौ तुल्यं तद्विषयाकृति ॥ १११३ ॥
सर्वथा श्लेषविश्लेषे नाणूनां स्कन्धसम्भवः ।
अन्यथा नाप्रदेशादीत्यपरैर्दत्तमुत्तरम् ॥ ११२३ ॥
नैरन्तर्यं निरंशानां स्वभावानतिरेचनम् ॥ ११३ ॥
चित्रचैत्तविचित्राभदृष्टमङ्गप्रसङ्गतः ।
स नैकः सर्वथा श्लेषात् नानेको भेदरूपतः ॥ ११४ ॥
स्कन्धो मात्रानुरोधेन व्यवहारेऽवधार्यते ।
सङ्ख्यादिसमभावेऽपि तत्स्वभावविवेकतः ॥ ११५ ॥
अतादात्म्यस्वभावे वा ह्यानर्थक्यादलं परेः ॥ ११५३ ॥
स्पर्शोऽयं चाक्षुषत्वाद्य न रूपं स्पर्शनग्रहात् ।
रूपादीनि निरस्यान्यं न चाभ्युपलभेमहि ॥ ११६३ ॥
सामग्रीविहितधानदर्शिताकारभेदिनः ।
प्रायेणैकस्य ताद्रूप्यं पृथक्सिद्धौ प्रसङ्गतः ॥ ११७३ ॥
अल्पभूयःप्रदेशैकस्कन्धभेदोपलम्भवत् ।
अन्यथा स्वात्मनि ज्ञानमन्यथा चानुमीयते ॥ ११८३ ॥

सत्प्रमेयत्वयोर्नास्ति सर्वथा नियमो यदि ।
अप्रवृत्तेः फलाभावात्तत्र वृत्तेर्निषेधतः ॥ ११९३ ॥
प्रमाणमर्थसम्बन्धात् प्रमेयमसदित्यपि ।
केवलं व्याहव्यमेवैतत् किन्न सन्तं समीक्ष्यते ॥१२०३॥
सत्प्रत्यक्षं परोक्षेऽर्थे साधनं त्रिविधं द्वयम् ।
हेत्वात्मनोः परं हेतुः तज्ज्ञानव्यवहारयोः ॥ १२१३ ॥
परसत्त्वमसत्ताऽस्यादर्शनं परदर्शनम् ।
सदसज्ज्ञानशब्दाश्च केवलं तन्निबन्धना. ॥ १२२३ ॥
अग्निः स्वपररूपाभ्यां भावाभावात्मको यथा ।
अन्वयव्यतिरेकाभ्यां शब्दबुद्ध्याऽवधार्यते ॥ १२३३ ॥
अप्रमेयं प्रमेयं चेत्सत्किन्न सदात्मकम् ।
अथ न व्यवहारोऽयं अन्यत्रापि निरंकुशः ॥ १२४३ ॥
सत्प्रत्यक्षं परोक्षार्थगतिस्तत्रैकलक्षणम् ।
साध्येऽसति विरोधोऽयमतस्तर्केण साध्यते ॥ १२५३ ॥
सर्वत्र परिणामादौ हेतुः सत्त्वादिरन्यथा ।
शब्देऽपि साधयेत् केन तस्मान्नान्वयतो गतिः ॥ १२६३ ॥
सिद्धमर्थक्रियाऽसत्त्वं सर्वथाऽविचलात्मनः ।
निरन्वयविनाशेऽपि साधनं नोपचारतः ॥ १२७३ ॥
अवश्यं बहिरन्तर्वा प्रमाणमवगच्छताम् ।
सिद्धमेकमनेकात्मपरिणामव्यवस्थितम् ॥ १२८३ ॥
परापरविवेकैकस्वभावपरिनिष्ठितः ।
परमाणुरतोऽन्यो वा बहिरन्तर्न बुद्ध्यते ॥ १२९३ ॥
अर्थस्यानेकरूपस्य कदाचित् कस्यचित् क्वचित् ।
शक्तावतिशयाधानमपेक्षातः प्रकल्प्यते ॥ १३०३ ॥
स्वभावातिशयाधानं विरोधान्न परीक्ष्यते ।
तत्र सिद्धमसिद्धं वा तस्माज्ज्ञातिर्न हेतुतः ॥ १३१३ ॥
सन्निधानं हि सर्वस्मिन्नव्यापारेऽपि तत्समम् ।
न चेत् स परिवर्तेत भाव एव फलात्मना ॥ १३२३ ॥
परिणामस्वभावः स्याद्भावस्तत्रानपेक्षणात् ।
अयमर्थक्रियाहेतुरन्तरेण निरन्वयम् ॥ १३३३ ॥
भेदाभेदात्मनोऽर्थस्य भेदाभेदव्यवस्थितिः ।
लोकतो यानुगन्तव्या सभागविसभागवत् ॥ १३४३ ॥
['सिद्धमर्थक्रिया' (१२७) इत्यादि 'लोकतो यानु' (१३४) इत्यन्तं विवरणश्लोकाः]।
सामान्यभेदरूपार्थसाधनस्तद्गुणोऽखिलः ।
अन्यथाऽनुपपन्नत्वनियमस्यात्र सम्भवात् ॥ १३५३ ॥
प्रत्यक्षेऽपि समानान्यनिर्णयः प्रतिरुध्यते ।
यथा क्षणक्षयेऽणूनां इत्यात्मानो विडम्बयेत् ॥ १३६३ ॥
अपृथग्वेद्यनियमादभिन्नाः परमाणवः ॥ १३७ ॥
देशकालान्तरव्याप्तिः स्वभावः क्षणभङ्गिनाम् ।
सम्प्रत्यस्तमिताशेषनियमा हि प्रतीतयः ॥ १३८ ॥
अग्रहः क्षणभङ्गोऽपि ग्रहणे किमनिश्चयः ।

आकृतिभ्रमवद्बुद्धिरियमक्षैर्विलोकितम् ॥ १३९ ॥
न चर्तेऽर्थविदोऽर्थोऽर्थात् केवलो व्यवसीयते ॥ १३९½ ॥
भावान्तरसमारोपेऽभाविताकारगोचरः ।
समक्षसंविदोऽर्थानां सन्निधिं नातिशेरते ॥ १४०½ ॥
अणवः क्षणिकात्मानः किल स्पष्टावभासिनः ।
अतत्फलपरावृत्तार्थाकारस्मृतिहेतवः ॥ १४१½ ॥
स्थूलस्पष्टविकल्पार्थाः स्वयमिन्द्रियगोचराः ।
समानपरिणामात्मशब्दसङ्केतहेतवः ॥ १४२½ ॥
स्वभावव्यवसायेषु निश्चयानां स्वतो गतेः ।
नाशस्यैकार्थरूपस्य प्रतीतिर्न विरुद्ध्यते ॥ १४३½ ॥
व्यामोहशबलाकारवेदनानां विचित्रता ।
साकल्येन प्रकाशस्य विरोधः सम्प्रतीयते ॥ १४४½ ॥
सम्भावितान्यरूपाणां समानपरिणामिनाम् ।
प्रत्यक्षाणां परोक्षात्मा प्रमाणान्तरगोचरः ॥ १४५½ ॥
प्रत्ययः परमात्मानमपि च प्रतिभासयेत् ।
सत्यं परिस्फुटं येन तत्र प्रामाण्यमश्नुते ॥ १४६½ ॥
आसादितविशेषाणामणूनामतिवृत्तितः ।
एकाकारविवेकेन नैकैकप्रतिपत्तयः ॥ १४७½ ॥
कालापकर्षपर्यन्तविवर्तातिशया गतिः ।
अशक्तेरणुवत् सेयमनेकान्तानुरोधिनी ॥ १४८½ ॥
अंशग्रहविवेकत्वान्मन्दाः किमतिशेरते ।
निर्णयेऽनिर्णयान्मोहो बहिरन्तश्च तादृशः ॥१४९½॥
जीवः प्रतिक्षणं भिन्नश्चेतनो यदि नावृतः ।
सकलग्रहसामर्थ्यात्तथात्मानं प्रकाशयेत् ॥ १५० ॥
तादात्म्यात् प्रत्यभिज्ञा न सदृशापरहेतुतः ।
अवस्थान्तर्विशेषोऽपि बहिरन्तश्च लक्ष्यते ॥१५१॥
सूक्ष्मस्थूलतरा भावाः स्पष्टास्पष्टावभासिनः ।
वितथेतरविज्ञाने प्रमाणेतरतां गते ॥ १५२ ॥
यस्मिन्नसति यज्जातं कार्यकारणता तयोः ।
भेदिनां प्रत्यभिज्ञेति रचितोऽयं शिलाप्लवः ॥ १५३ ॥
अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ।
नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥१५४॥
प्रत्येति न प्रमाहेतुं प्रत्येति पुनरप्रमाम् ।
प्रमाहेतुतदाभासभेदोऽयं सुव्यवस्थितः ॥१५५॥
नियमेन न गृह्णाति निःशङ्कं चतुरस्रधीः ।
अन्यथाऽसम्भवेऽज्ञाने ह्यर्थं स्यादव्यवस्थितः ॥१५६॥
प्रतिव्यूढस्तु तेनैव प्रभवोऽनलधूमयोः ।
प्रत्यक्षेऽर्थे प्रमाणेन विकल्पेन प्रकल्पितः ॥१५७॥
प्रत्यक्षानुपलम्भाभ्यां यदि तत्त्वं प्रतीयते ।
अन्यथाऽनुपपन्नत्वमतः किन्न प्रतीयते ॥१५८॥

प्रमाणसाधनोपायः प्रमाणान्तरगोचरः ।
व्याप्यव्यापकभावोऽयमेकत्रापि विभाव्यते ॥१५९॥
सत्यप्यन्वयविज्ञाने स तर्कपरिनिष्ठितः ।
अविनाभावसम्बन्धः साकल्येनावधार्यते ॥१६०॥
सदृदृष्टैश्च धर्मैस्तं न विना तस्य सम्भवः ।
इति तर्कमपेक्षेत नियमेनैव लैङ्गिकम् ॥१६१॥
तस्माद्वस्तुबलादेव प्रमाणं मतिपूर्वकम् ।
यद्भेदं श्रुतं साक्षात् पारम्पर्येण चेष्यते ॥१६२॥
अर्थमात्रावबोधेऽपि यतो नर्ते प्रवर्तनम् ।
स युक्तो निश्चयो मुख्यं प्रमाणं तदनन्वयात् ॥१६३॥
लिङ्गसंवृतयोस्तुल्या गृहीतग्रहणादपि ।
[illegible] ।
[illegible] ।
अनुमानं तु हेतोः स्यात् अविनाभावनिश्चयात् ॥१६५॥
यथा कार्यं स्वभावो वाप्यन्यथाशङ्क्यसम्भवः ।
हेतुश्चानुपलम्भोऽयं तथैवेत्यनुगम्यताम् ॥१६६॥
प्रत्यक्षानुपलम्भस्य विधानप्रतिषेधयोः ।
अन्तरेणेह सम्बन्धमहेतुरिव लक्ष्यते ॥१६७॥
प्रपञ्चोऽनुपलब्धेर्नापक्षे प्रत्यक्षवृत्तितः ।
प्रमाणं सम्भवाभावाद्विचारस्याप्यपेक्षणात् ॥ १६८ ॥
तुलोन्नामरसादीनां तुल्यकालतया न हि ।
नामरूपादिहेतुत्वं न च तद्व्यभिचारिता ॥ १६९ ॥
तादात्म्यं तु कथञ्चित् स्यात् ततो हि न तुलान्तयोः ।
सास्नाविषाणयोरेवं चन्द्रार्वाक्परभागयोः ॥ १७० ॥
उपलब्धेश्च हेतुत्वादन्तर्भावात् स्वभावतः ।
तयोरनुपलम्भेषु नियमो न व्यवस्थितः ॥ १७१ ॥
अभविष्यत्यसम्भाव्यो धर्मो धर्मान्तरे क्वचित् ।
शेषवद्धेतुरन्योऽपि गमकः सुपरीक्षितः ॥ १७२ ॥
एतेन पूर्ववद्वीतसंयोग्यादौ कथा गता ।
तल्लक्षणप्रपञ्चश्च निषेद्धव्यो दिशाऽनया ॥ १७३ ॥
अन्यथानुपपन्नत्वरहिता ये विडम्बिताः ।
हेतुत्वेन परैस्तेषां हेत्वाभासत्वमीक्ष्यते ॥ १७४ ॥
विरोधाद्न्वयाभावाद् व्यतिरेकाप्रसिद्धितः ।
कृतकः क्षणिको न स्यात् नैकलक्षणहानितः ॥ १७५ ॥
सत्ता सम्प्रतिबद्धैव परिणामे क्रियास्थितेः ।
निर्व्यापारो हि भावः स्यान्नित्यत्वे वा निरन्वये ॥ १७६ ॥
अवस्थादेशकालानां भेदेऽभेदव्यवस्थितिः ।
या दृष्टा सोऽन्वयो लोके व्यवहाराय कल्पते ॥ १७७ ॥
सर्वसन्तानविच्छेदः सति द्वैतो फलोदयः ।
अन्यथा नियमाभावादानन्तर्यं विरुध्यते ॥ १७८ ॥

सत्त्वमर्थ क्रियाऽन्ये वा वस्तुधर्माः क्षणक्षये ।
हेत्वाभासा विरुद्धाख्याः परिणामप्रसाधनाः ॥ १७९ ॥
सर्वज्ञप्रतिषेधे तु सन्दिग्धा वचनादयः ।
रागादिसाधनाः स्पष्टा एकलक्षणविद्विषाम् ॥ १८० ॥
धर्मिधर्मस्य सन्देहे व्यतिरेके ततो भवेत् ।
असिद्धिः प्रतिबन्धस्येत्यपरे प्रतिपेदिरे ॥ १८१ ॥
वाचो विरुद्धकार्यस्य सिद्धिः सर्वज्ञबाधिनी ।
शिरःपाण्यादिमत्त्वाद्या विरुद्धव्याप्तसिद्धयः ॥१८२॥
सत्सम्प्रयोगजत्वेन विरुद्धः सकलग्रहः ।
स्वभावकारणासिद्धेरेकलक्षणविद्विषाम् ॥१८३॥
कथञ्च सम्भवी वक्ता सर्वज्ञस्तस्य तेन नो ।
यावत् प्रकृष्यते रूपं तावत् कार्यं विरुद्धयते ॥१८४॥
विवक्षामन्तरेणापि वाग्वृत्तिर्जातु वीक्ष्यते ।
वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः ॥१८५॥
प्रज्ञा येषु पटीयस्यः प्रायो वचनहेतवः ।
विवक्षानिरपेक्षास्ते पुरुषार्थं प्रचक्षते ॥१८६॥
अप्रमत्ता विवक्षेयमन्यथा नियमात्ययात् ।
इष्टं सत्यं हितं वक्तुमिच्छा दोषवती कथम् ॥१८७॥
प्रज्ञाप्रकर्षपर्यन्तभावः सर्वार्थगोचरः ।
तत्कार्योत्कपर्यन्तभावः सर्वहिताभिधा ॥१८८॥
यथा वचनसर्वज्ञकार्यकारण भूतयोः ।
अविरोधेन वाग्वृत्तेरप्रकर्षस्तन्निषेधने ॥१८९॥
तथैव पुरुषत्वादेरक्षयाद् बुद्धि विस्तरे ।
सर्वप्रकाशसामर्थ्ये ज्ञानावरणसंक्षयात् ॥१९०॥
अक्षयात् पुरुषत्वादेः प्रतिपक्षस्य संक्षयात् ।
सर्वतोऽक्षमयं ज्योतिः सर्वार्थैः सम्प्रयुज्यते ॥१९१॥
*कथञ्चित् स्वप्रदेशेषु स्यात् कर्मपटलाच्छता ।*
संसारिणां तु जीवानां यत्र ते चक्षुरादयः ॥१९२॥
साक्षात्कर्तुं विरोधः कः सर्वथावरणात्यये ।
सत्यमर्थं तथा सर्वं यथाऽभूद्वा भविष्यति ॥१९३॥
परदुःखपरिज्ञानाद् दुःखितः स कथं भवेत् ।
स्वतो हि परिणामोऽयं दुःखितस्य न योगिनः ॥१९४॥
भावनापाटवाद् बुद्धेः प्रकर्षोऽयं मलक्षयः ।
कारणासम्भवाक्षेपविपक्षः सम्प्रतीयते ॥१९५॥
असिद्धश्चाक्षुषत्वादिः शब्दानित्यत्वसाधने ।
अन्यथासम्भवाभावभेदात् स बहुधा स्मृतः ॥१९६॥
सर्वथा नास्ति सामान्यं परिणामविनाशयोः ।
यो हेतोराश्रयः अनिष्टेरिष्टः स्वात्माविशेषतः ॥१९८॥
साध्यसाधनभावो च शब्दे नाशित्वसत्त्वयोः ।
अनलः पावकोऽग्नित्वात् इत्यनेकान्तविद्विषाम् ॥१९९॥
सर्वान्यार्थासमः शब्दः शब्दादिपरिणामतः ॥२००॥

अणूनां श्रुतयोऽन्यत्वात्तिरायाद्यानह्वानयः ।
शब्दोत्पत्तिविनाशाः सत्साध्यसाधनसंस्थितिः ॥२०१॥
अन्यथाऽनुपपन्नत्वरहिता ये त्रिलक्षणाः ।
अकिञ्चित्कारकान् सर्वान् तान् वयं संगिरामहे ॥२०२॥
तत्र मिथ्योत्तरं जातिः यथाऽनेकान्तविद्विषाम् ।
दध्युष्ट्रादेरभेदत्वप्रसङ्गादेकचोदनम् ॥२०३॥
सुगतोऽपि मृगो जातो मृगोऽपि सुगतः स्मृतः ।
तथापि सुगतो वन्द्यो मृगः खाद्यो यथेष्यते ॥२०४॥
तथा वस्तुबलादेव भेदाभेदव्यवस्थितेः ।
चोदितो दधि खादेति किमुष्ट्रमभिधावति ॥२०५॥
अत्रैवोभयपक्षोक्तदोषारेकाऽनवस्थितेः ।
अनन्वयादिदोषोक्तेः प्रपञ्चो वाऽनया दिशा ॥२०६॥
मिथ्योत्तराणामनन्त्याच्छास्त्रे वा विस्तरोक्तितः ।
साधर्म्यादिसमत्वेन जातिर्नेह प्रतन्यते ॥२०७॥
प्रकृताशेषतत्त्वार्थप्रकाशपटुवादिनः ।
विब्रुवाणोऽब्रुवाणो वा विपरीतो निगृह्यते ॥२०८॥
असाधनाङ्गवचनमदोषोद्भावनं द्वयोः ।
न युक्तं निग्रहस्थानमर्थापरिसमाप्तितः ॥२०९॥
वादी पराजितो युक्तो वस्तुतत्त्वे व्यवस्थितः ।
तत्र दोषं ब्रुवाणो वा विपर्यस्तः कथं जयेत् ॥२१०॥
सम्बन्धो यत्र निर्ज्ञातः साध्यसाधनधर्मयोः ।
स दृष्टान्तस्तदाभासाः साध्यादिविकलादयः ॥ २११ ॥
सर्वत्रैव न दृष्टान्तोऽनन्वयेनापि साधनात् ।
अन्यथा सर्वभावानामसिद्धोऽयं क्षणक्षयः ॥ २१२ ॥
प्रत्यनीकव्यवच्छेदप्रकारेणैवसिद्धये ।
वचनं साधनादीनां वादः सोऽयं जिगीषतोः ॥ २१३ ॥
आस्तां तावदलाभादिरयमेव हि निग्रहः ।
न्यायेन विजिगीषूणां स्वाभिप्रायनिवर्तनम् ॥ २१४ ॥
तदाभासा वितण्डादिः अभ्युपेताव्यवस्थितेः ।
तदात्मोत्कर्षणायैव वाचो वृत्तिः अनेकधा ॥ २१५ ॥
प्रामाण्यं यदि शास्त्रगम्यमथ न प्रागर्थसंवादनात् ।
सङ्ख्यालक्षणगोचरार्थकथने किं कारणं चेतसाम् ।
आ ज्ञातं सकलागमार्थविषयज्ञानाविरोधं बुधाः ।
प्रेक्षन्ते तदुदीरितार्थगहने सन्देहविच्छित्तये ॥ २१६ ॥
शास्त्रं शक्यपरीक्षणेऽपि विषये सर्वं विसंवादकम्
मिथ्यैकान्तकलङ्कितं बहुमुखैरुद्वीक्ष्य तर्कागमैः ।
दाहार्तैः परिणामकल्पविटपिच्छायागतैः साम्प्रतं ।
विश्रब्धैरकलङ्करत्ननिचयन्यायो विनिश्चीयते ॥ २१७½ ॥

इति द्वितीयः अनुमानप्रस्तावः

---

# प्रवचनप्रस्तावः

सकलं सर्वथैकान्तप्रवादातीतगोचरम् ।
सिद्धं प्रवचनं सिद्धपरमात्मानुशासनम् ॥१॥
तथाऽन्यगुणदोषेषु संशयैकान्तवादिभिः ।
पुरुषातिशयो ज्ञातुं यद्यशक्यः किमिष्यते ॥२॥
परोक्षोऽप्यविनाभावसम्बद्धैर्गुणदोषयोः ।
शास्त्रैर्निर्वर्तितैः शास्त्रकारवत् सम्प्रतीयते ॥३॥
सिद्धहिंसानृतस्तेयाब्रह्मचर्यप्रवृत्तितः ।
स प्रत्यस्तमिताशेषदोषो नेति प्रतीयते ॥४॥
हेयोपादेयतत्त्वस्य सोपायस्य किलेदृशः ।
प्रवक्ता धिगनात्मज्ञं तदसाध्यमसाधनम् ॥५॥
सर्वथाऽसदुपादेयं हेयं सत् तदकारणम् ।
तदर्थोऽयं प्रयासश्चेत्यहो सत्यव्यवस्थितिः ॥६॥
करुणा स्वपरज्ञानसन्तानोच्छेदकारणम् ।
इति न करुणा अत्यन्तं परदुःखं न गोचरः ॥७॥
तत्त्वज्ञानाद्यनुत्पादहेतुरुन्मार्ग एव सः ।
मिथ्याविकल्पविज्ञानभावनापरिपाकतः ॥८॥
तत्त्वज्ञानमुदेतीति कुतस्तत्त्वविनिश्चयः ।
अनादिवासना न स्यात् त्रैलोक्यमविकल्पकम् ॥९॥
निरुपद्रवभूतस्य बाधाऽयुक्ता विपर्ययैः ।
विच्छेदो वस्तुच्छेदाद्विद्वस्तत्पक्षपाततः ॥१०॥
यस्तावत्करुणावत्त्वात् तिष्ठत्येव हि चेतसाम् ।
सन्तानः स परोच्छेदान्न समत्वं प्रपद्यते ॥११॥
तथा निरास्रवीभावः संसारान्मोक्ष उच्यते ।
सन्तानस्यात्मनो वा इति शब्दमात्रं तु भिद्यते ॥१२॥
नित्यस्यापि सतः साक्षाददृष्टयानुभवात्मनः ।
सुखादिर्विषयः शब्दाद्यविशेषो धियाऽन्यथा ॥१३॥
प्रदर्पः पुनरस्यैव गुणयोगनिवृत्तितः ।
निर्वाणमाह वेदोऽयं प्रमाणमिति साहसम् ॥१४॥
विश्वलोकाधिकज्ञाने विप्रलम्भनशङ्किनः ।
प्रामाण्यं कथमक्षादौ चञ्चले प्रमिमीमहे ॥ १५ ॥
परीक्षाक्षमवाक्यार्थपरिनिष्ठितचेतसाम् ।
अदृष्टदोषाशङ्कायाममानं सकलं भवेत् ॥ १६ ॥
प्रत्यक्षागमयोरिष्टं प्रामाण्यं गुणदोषयोः ।
दर्शनादर्शनाभ्यासात् क्वचिद् वृत्तसमत्वतः ॥ १७ ॥
तज्ज्ञानपूर्वकं तथ्यमनुमानसमीक्षितम् ।
मानं वस्तुबलादेव सर्ववस्तुनिबन्धनम् ॥ १८ ॥

[ एते १६–१८ अन्तरश्लोकाः ]

आगमः पौरुषेयः स्यात् प्रमाणमतिलौकिके ।
संवादासम्भवाभावात् समयाविप्रलम्भने ॥ १९ ॥
सकलज्ञस्य नास्तित्वे स्वसर्वानुपलम्भयोः ।
आरेकासिद्धते तस्याप्यर्वाग्दर्शनतोऽगतेः ॥ २० ॥
विज्ञानमञ्जसा स्पष्टं विप्रकृष्टे विरुध्यते ।
न स्वप्ने क्षणिकादेर्वा ज्ञानावृतिविवेकतः ॥ २१ ॥
ततः संसारिणः सर्वे कथञ्चिच्चेतनात्मकाः ।
तत्तत्स्वभावतो ज्ञानं सर्वत्र शबलायते ॥ २२ ॥
अभिन्नो भिन्नजातीयैर्जीवः स्याच्चेतनः स्वयम् ।
मलैरिव मणिर्विद्धः कर्मभिर्न प्रकाशते ॥ २३ ॥

सर्वार्थग्रहसामर्थ्यचैतन्यप्रतिबन्धिनाम् ।
कर्मणां विगमे कस्मात् सर्वानर्थान्न पश्यति ॥ २४ ॥
प्रभुः साक्षात्कृताशेषप्रपञ्चभुवनत्रयः ।
अनर्थैः परमात्मानमत एव न योजयेत् ॥ २५ ॥
एवं यत्केवलज्ञानमनुमानविजृम्भितम् ।
नर्ते तदागमात् सिद्ध्येत् न च तेन विनाऽऽगमः ॥ २६ ॥
सत्यमर्थबलादेव पुरुषातिशयो मतः ।
प्रभवः पौरुषेयोऽस्य प्रबन्धोऽनादिरिष्यते ॥ २७ ॥
ग्रहादिगतयः सर्वाः सुखदुःखादिहेतवः ।
येन साक्षात्कृतास्तेन किन्न साक्षात्कृतं जगत् ॥ २८ ॥

सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा ।
अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः ॥२९॥
वेदस्यापौरुषेयस्य स्वतस्तत्त्वं विवृण्वतः ।
आयुर्वेदादि यद्यङ्गं यत्नस्तत्र निरर्थकः ॥३०॥
शास्त्रज्ञानं तथैव स्यात् सामग्रीगुणदोषतः ।
अविरोधेऽपि नित्यस्य भवेदन्धपरम्परा ॥३१॥
तदर्थदर्शिनोऽभावान्म्लेच्छादिव्यवहारवत् ॥३१½ ॥
अनादिसम्प्रदायश्चेत् आयुर्वेदादिरागमः ।
कालेनैतावताऽनाप्तः कथन्न प्रलयं गतः ॥ ३२½ ॥
सिद्धं श्रुतेन्द्रियातीतं त्रिकालविषयं स्फुटम् ॥३३॥

तथा न क्षणिकादीनां सर्वथासगुणात्ययात् ।
तद्विरम्य विरम्यैतद् युक्तं शास्त्रप्रवर्तनम् ॥३४॥
तादृशोऽभावविज्ञाने शास्त्रे वृत्तिरनर्थिका ।
सन्देहेऽपि च सन्देहस्ततस्तत्त्वं निरूप्यते ॥३५॥
स्वतन्त्रत्वे नु शब्दानां प्रयासोऽनर्थको भवेत् ।
व्यक्त्यावरणविच्छेदसंस्कारादिविरोधतः ॥३६॥
वंशादिस्वरधारायां सद्कुल्याप्रतिपत्तितः ।
क्रमेणाशुग्रहेऽयुक्तः सकृद्ग्रहणविभ्रमः ॥३७॥
ताल्वादिसन्निधानेन शब्दोऽयं यदि जायते ।
को दोषो येन नित्यत्वं कुतश्चिदवकल्प्यते ॥३८॥

उपादानस्य सूक्ष्मत्वाद् युक्तं चानुपलम्भनम् ।
सादृश्यान्नैकरूपत्वात् स एवायमिति स्थितिः ॥३९॥
यदि चैवंविधो नित्यो नित्यास्ते विद्युदादयः ।
प्रत्यभिज्ञाऽप्रमाणं स्यात् युगपद्भिन्नदेशयोः ॥४०॥
सर्वार्थानामनादित्वे स विशेषो निराश्रयः ।
योऽन्यथासम्भवी शब्दघटाद्यात्योऽवभासते ॥४१॥
स वर्णपदवाक्यानां कालदेशादिभेदिनाम् ।
सदृशानां प्रबन्धोऽयं सर्वेषां न विरुद्धयते ॥४२॥

वाचः प्रमाणपूर्वायाः प्रामाण्यं वस्तुसिद्धये ।
स्वतः सामर्थ्यविश्लेषात् सङ्केतं हि प्रतीक्षते ॥४३॥
स पुनर्बहुधा लोकव्यवहारस्य दर्शनात् ।
शब्दार्थयोर्विकल्पेन सन्निवेशोऽनुवर्तते ॥४४॥
न सर्वयोग्यता साध्वी सङ्केतान्नियमो यदि ।
सम्बन्धनियमेऽन्यत्र समयेऽपि न वर्तताम् ॥४५॥
ततः शब्दार्थयोर्नास्ति सम्बन्धोऽपौरुषेयकः ॥४५½॥

स हि शब्दार्थसम्बन्धो यतोऽर्थः सम्प्रतीयते ।
तादृशो वाचकः शब्दः सङ्केतो यत्र वर्तते ॥४६½॥
क्रमेणोच्चार्यमाणेषु ध्वनिभागेषु केषुचित् ।
न वर्णपदवाक्याख्या अविकारेष्वसम्भवात् ॥४७½॥
शब्दभागाः स्वहेतुभ्यः समानोन्नयहेतवः ।
सकलाग्रहणात् तेषां युक्ता हि श्रोत्रगोचराः ॥४८½॥
परिणामविशेषा हि भावानां भावशक्तयः ॥४९।
ध्वनयस्तत्समर्थानां अभावाद्व्यतिरेकिणाम् ।
वाचामपौरुषेयीणामाविर्भावो न युज्यते ॥५०॥

सम्यग्ज्ञानाङ्कुरः सत्यः पुरुषार्थाभिधायकः ।
इति अत्रापौरुषेयत्वं जातु सिद्धमनर्थकम् ॥५१॥
रागादयः सजातीयपरिणामाभिवृद्धयः ।
सर्वार्थानामनेकात्मपरिणामौ व्यवस्थितौ ।
मार्गस्तद्विपयश्चेति मतं सत्यं चतुर्विधम् ॥५२॥
अर्हं ममास्रवो बन्धः संवरो निर्जरा क्षयः ।
कर्मणामिति सत्कृत्य प्रेक्षाकारी समीहते ॥५३॥
तत्त्वज्ञानप्रभावेण तपः संवरणं नृणाम् ।
तपसश्च प्रभावेण निर्जीर्णं कर्म जायते ॥५४॥

रागद्वेषौ विहायैव गुणदोषवतोस्तयोः ।
मोक्षज्ञानात् प्रवर्त्तन्ते मुनयः समबुद्धयः ॥५५॥
सज्ज्ञानपरिणामात्मतत्त्वसम्प्रतिपत्तितः ।
पीतदोषास्रवाकारो विपरीतग्रहक्षयः ॥५६॥
सूचयन्ति हि कर्माणि स्वहेतुप्रकृतीनि च ॥ ५७ ॥

सात्मीभावाद्विपक्षस्य सतो दोषस्य संक्षये ।
कर्मश्लेषः प्रवृत्तानां निवृत्तिः फलदायिनाम् ॥ ५८ ॥

प्रतिपक्षस्थिरीभावः प्रायः संस्कारपाटवत् ।
निर्ह्रासातिशयौ येषां तत्प्रकर्षापकर्षयोः ॥ ५९ ॥
यद्यप्यनात्मविज्ञानभावनासम्भवस्ततः ।
न निरोधो निरोधे वा न प्रयोजनमीक्ष्यते ॥ ६० ॥
हेयोपादेयतत्त्वार्थविपरीतव्यवस्थितेः ।
मिथ्याज्ञानमनात्मज्ञं मैत्र्यादिप्रतिरोधतः ॥ ६१ ॥
तत्त्वार्थदर्शनज्ञानचारित्रेषु महीयसाम् ।
आत्मीयेषु प्रमोदादिरत एव विधीयते ॥ ६२ ॥
यस्तावत् करुणावत्त्वात्तिष्ठत्येव हि चेतसाम् ।
सन्तानः स परोच्छेदान्न समत्वं प्रपद्यते ॥ ६३ ॥
तस्मात् निरास्रवीभावः संसारान्मोक्ष उच्यते ।
सन्तानस्यात्मनो वेति शब्दमात्रं तु भिद्यते ॥ ६४ ॥

नित्यस्येच्छा-प्रधानादियोगोऽनित्यः किमात्मनः ।
मिथ्याज्ञानाद्विनिर्मोक्षस्तथाऽनेकान्तविद्विषाम् ॥ ६५ ॥
द्रव्यपर्यायसामान्यविशेषप्रविभागतः ।
स्याद्विधिप्रतिषेधाभ्यां सप्तभङ्गी प्रवर्तते ॥ ६६ ॥
तदतद्वस्तुभेदेन वाचो वृत्तेस्तयोभयम् ।
तदतद्वागवृत्तेश्च सह तदवागवृत्तिना ॥ ६७ ॥
प्रयोगविरहे जातु पदस्यार्थः प्रतीयते ।
स हि शब्दार्थतत्त्वज्ञैस्तस्येति व्यपदिश्यते ॥ ६८ ॥
अहमस्मीति वाक्यादौ सिद्धावन्यतरस्थितेः ।
उभयोक्तिवदप्रोक्ताद्युपालम्भो विरुध्यते ॥ ६९ ॥

यदि केचित् प्रवक्तारो वृत्तिवाक्यार्थयोरपि ।
सूत्रेष्वेव तयोरुक्तौ त्रैलोक्यं किन्न वर्तते ॥ ७० ॥
केवलं प्रतिपत्तारः स्याद्वादे जडवृत्तयः ।
जातितद्दूषणोहादिवादं च न हि जानते ॥७१॥
सर्वथैकान्तविश्लेषतत्त्वमार्गव्यवस्थिताः ।
व्याख्यातारो विवक्षातः स्याद्वादमनुरुन्धते ॥७२॥
अनेकलक्षणार्थस्य प्रसिद्धस्याभिधानतः ।
संशयादिप्रसङ्गः किं स्याद्वादेऽमूढचेतसः ॥७३॥
साकल्येनेह सामान्यविशेषपरिणामधीः ।
मिथ्यैकान्तप्रवादेभ्यो विदुषो विनिवर्तयेत् ॥७४॥

आप्तवादः स स यथायं यत्रार्थः समवायिनः ।
प्रमाणमविसंवादात् प्रणेता यदि शङ्क्यते ॥७५॥
आत्मा योऽस्य प्रवक्तायमपरालीढसत्पथः ।
नात्यक्षं यदि जानाति नोपदेष्टुं प्रवर्तते ॥७६॥
परीक्षाक्षमवाक्यार्थपरिनिष्ठितचेतसाम् ।
अदृष्टदोषाशङ्कायामन्यत्रापि प्रसज्यते ॥७७॥
प्रत्यक्षागमयोरिष्टं प्रामाण्यं गुणदोषयोः ।
उपलभ्यनुपलब्धिभ्यां क्वचिद्वृत्तसमत्वतः ॥७८॥

# शुद्धिपत्रम्

## प्रस्तावना

[पृ० ५१ श्लो० २० इत्यादि पृ० ५७ श्लो० १४९½ इत्यन्त श्लोकानामङ्काः अर्धाङ्काधिका मुद्रिताः ते अर्धाङ्कन्यूनाः पठनीयाः ]

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | १६ | प्रतिगन्धो | -प्रतिषेधो |
| ५५ | ३ | -धर्मो | -धर्मो |
| ५७ | ३५ | निययेन | नियमेन |
| ,, | ३७ | न्यूमयोः | धूमयोः |
| ५८ | ४० | विरुद्धयते | निरुद्धयते |
| ५९ | २३ | थयाद | थयाद् |
| ,, | २६ | सर्वार्थैः | सर्वार्थैः |
| ,, | ३७ | ॥१९८॥ | ॥१९७॥ |
| ,, | ३९ | ॥१९९॥ | ॥१९८॥ |
| ,, | ४० | ॥२००॥ | ॥१९८½॥ |

[पृ० ६० श्लो० २०१ इत्यादि पृ० ६० श्लो० २१६ इत्यन्त एकार्धाधिकाः श्लोकाङ्काः मुद्रिताः ते एकार्धन्यूनाः पठनीयाः ]

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६० | २ | तत्साध्य | तत्साध्य |
| ,, | १३ | णामनन्त्य | णामानन्त्य |
| ,, | १९ | पादी | वादी |
| ,, | २९ | -भेताल्थ | -भेताल्य- |
| ,, | ३० | ॥२१५॥ | ॥२१३½॥ |
| ,, | ३४ | ॥२१६॥ | ॥२१४½॥ |
| ,, | ३८ | ॥२१७½॥ | ॥२१५½॥ |
| ,, | ,, | निचप | -निचय- |
| ६२ | ७ | संसारिण | संसारिणः |
| ,, | ९ | जीवः | जीवः |
| ,, | ,, | प्राभाण्य | प्रामाण्यं |
| ६३ | २२ | -शक्त्यः | -शक्तयः |
| ,, | २६ | इति अत्रा | इत्यत्रा- |

[पृ० ६३ श्लो० ५२ इत्यादि पृ० ६५ श्लो० ९४ इत्यन्त श्लोकाङ्काः अर्धाङ्कन्यूना मुद्रितास्तेऽर्धाङ्काधिकाः पठनीयाः ]

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | ३३ | यत्रार्थः | यत्रार्थां. |
| २५० | १६ | भावानामेव | भावनामेव |
| २५८ | १९ | यथागतस्य | तथागतस्य |
| २६२ | ६ | श्रुत्यादिवैरस्थितिरुच्यते (?) | श्रुत्वा दैवैरस्थितिरुच्यते । |
| ३७२ | १९ | अयमेव | अयमेवं |
| ३७६ | ८ | शब्दोथ | शब्दोऽथ |
| ४३७ | | त्रिलोचन | २।२८०।२५ |

---

श्रीमद्भट्टाकलङ्कदेवविरचित

# न्यायविनिश्चयः

स्याद्वादविद्यापतिश्रीमद्वादिराजसूरिविरचित–

न्यायविनिश्चयविवरणसहितः

## [ द्वितीयोऽनुमानप्रस्तावः ]

एतावदप्रगल्भनिप्रतिपत्तिकृतया प्रत्यक्षं प्रभेदतो निरूपितम्, इदानीं परोक्षस्य तथा निरूपणमवसरप्राप्तमिति तत्प्रभेदमनुमानं निरूपयन्नाह–

**साधनात्साध्यविज्ञानमनुमानं तदत्यये ।**
**विरोधात्क्वचिदेकस्य विधानप्रतिषेधयोः ॥ १ ॥** इति ।

स्मरणादिरपि तत्प्रभेद एव तस्य कस्मादनिरूपणमिति चेत्? न, तस्यापि पश्चान्निरूपणात्। पूर्वमेव तस्य निरूपणमुपपन्नम्, स्मरणादिक्रमेण तत्प्रभेदस्य सूत्रे[1] निर्देशात्–"**स्मृतिः सञ्ज्ञा चिन्ताभिनिबोधः**" [ त० सू० १।१३ ] इति, निर्देशानुरूपत्वाच्च निरूपणस्येति चेत्, सत्यमिदम्, तथापि प्राधान्यादनुमानस्य तदेवात्र प्रथमं निरूप्यते । कथं प्राधान्यमिति चेत्? उच्यते, शास्त्रमिदं प्रवचनप्रामाण्यनिरूपणपरम् '**बालानाम्**' इत्यादिना[2] शास्त्रारम्भे तथैव प्रतिपादनात्। तत्प्रामाण्यञ्च[3] प्रत्यक्षानुमेयात्यन्तपरोक्षविषयम्। [4]तत्र प्रत्यक्षविषये तदविसंवादात् तत्प्रामाण्यनिवेदनार्थं[5] प्रत्यक्षं निरूपितम्। तथा प्रवचनमत्यन्तपरोक्षे तत[6] एव तदर्थं निरूपयिष्यते । परिशिष्टमनुमेयं तत्र च प्रधानमनुमानमेव तदविसंवादादेव तत्र तत्प्रामाण्यनिर्णयात्, ततस्तदेवात्र प्रथमं निरूप्यते । तन्निर्णयानुपयोगिनः[6] स्मरणादेः पश्चादपि किमर्थं निरूपणमिति चेत्? अनुमान(नार्थ)मेवेति ब्रूमः । न ह्यनुमानं तन्निरपेक्षमुत्पत्तुमर्हति[7] । निवेदयिष्यते चेतत् पश्चादेव । शास्त्रान्तरे तर्हि कथं स्मरणादेः पूर्वं निरूपणं कृतमिति चेत्? न, तत्रापरतद्भेदापेक्षस्य तत्प्राधान्यस्य विवक्षितत्वात् । तदपि तस्य तत्प्रामाण्यनिर्णयं प्रति न प्रत्यक्षादिवत् साक्षादुपयोगात् अपि तु पारम्पर्येण । अत एव कथञ्चिदनुपयोगिन एव परोक्षभेदस्य शास्त्रे निरूपणं नापरस्य । न ह्यपरस्तद्भेदो नास्त्येव सम्भवैतिह्यप्रतिभादेरनेकप्रकारस्य तस्योपलम्भादित्यलं प्रसङ्गेन ।

प्रकृतं व्याचक्ष्महे–**साधनं** साध्याविनाभावनियमनिर्णयैकलक्षणं वक्ष्यमाणं लिङ्गम्, तस्मात् । **साध्यस्य** वक्ष्यमाणलक्षणस्यैव यद् **विज्ञानम्** । तद् अनु व्याप्तिनिर्णयस्य पश्चाद्भाविमानम् **अनुमानम्** ।

१ मति स्मृति सञ्ज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम् ।" इति सूत्रे । २ श्लो० २ । ३ प्रवचनप्रामाण्यञ्च । ४ तत्र–आ०, ब०, प० । ५ प्रवचनाविसंवाद त् । पूर्वापराविरोध एव प्रवचनस्य प्रवचनाविसंवाद । उक्तञ्चाचार्यैः–दृष्टेऽर्थेऽध्यक्षतो वाक्यमनुमेयेऽनुमानतः । पूर्वापराविरोधेन परोक्षे च प्रमाणता मिति ।'–ता० टि० । ६ प्रवचनप्रामाण्यनिर्णयानुपयोगिनः । ७ स्मरणादिनिरपेक्षम् ।

'साधनाद्विज्ञानम्' इत्येवास्तु न साध्यग्रहणम्, साध्यविज्ञानस्यैव साधनादुत्पत्ते। न साधनत्व[1] तस्य स्वरूपविषय[2] सम्भवति साध्यविषयतयैव तस्य निर्णयात्। रूपान्तरप्रयुक्तन्तु[3] ततस्तद्विज्ञान रूपान्तराद्विज्ञानमेव न साधनाद्विज्ञानम्। तत्र साधनज्ञाननिवृत्त्यर्थं साध्यग्रहणम्। असाध्यज्ञाननिवृत्त्यर्थमित्यपि न चतुरस्रम्; असाध्यापेक्षया कस्यचित् साधनत्वानुपपत्ते।

अन्यथाऽनुपपत्त्या हि साधनं व्यवतिष्ठते।
अन्यथानुपपत्तिश्च साध्यापेक्षैव नान्यथा ॥ १२१० ॥
साधनं प्रकृताभावेऽनुपपन्नमिति श्रुते।
शक्यत्वादिविशिष्टञ्च साध्यं प्रकृतमुच्यते ॥ १२११ ॥
तदसाध्ये न विज्ञानं साधनादस्ति सम्भवि।
यद्व्यवच्छित्तये साध्यपदमत्रोपवर्ण्यते ॥ १२१२ ॥

तत्र साध्यपदमर्थवत् विनाऽपि तेन तदर्थस्य प्रतिपत्ते। साध्यविज्ञानमित्येवं[4] वाऽस्तु न साधनादिति, साधनादेव तद्विज्ञानस्य भावात्। प्रत्यक्षादपि भाव पर्वतादावनुमितस्य पावकादे प्रत्यक्षादपि प्रतिपत्तेरिति चेत्; न; साध्यस्य शक्याभिप्रेतादिरूपत्वात्, तद्रूपतया च तत्तन्तस्याप्रतिपत्ते। अव्यतिरिक्तमेव पावकादेस्तद्रूपम्, द्रव्यनयार्पणादिति चेत्; सत्यम्; न तथाऽपि तस्य मुख्य साध्यत्वम्, विशेषरूपस्यैव पर्यायनयार्पितस्य मुख्यतया तत्त्वेन लक्षणात्। तस्य च साधनादेव प्रतिपत्ति, न प्रत्यक्षादिनि विफलं साधनादिति पदमिति चेत्; इत्थमेतत् तान् प्रति येषामेवं परिज्ञानसामर्थ्यम्, ये तु बाला शब्दताडित एवार्थे प्रतिपत्तिसौकर्यं मन्यन्ते न तान्प्रति। ततस्तेषां तत्सौकर्यावकल्पनाय पदद्वयोपादानम्। शास्त्रस्यापि मुख्यतस्तदुपकारपरतयैव प्रवृत्तत्वात्। अत एवोक्तम्–'**बालानां हितकामिनाम्**' इति।

विज्ञानग्रहण तर्हि व्यर्थं प्रमाणत्वादेवानुमानस्य विज्ञानत्वप्रतिपत्ते, विवेचितञ्च विज्ञानमेव प्रमाणमिति। यदि पुनर्विज्ञानं विज्ञेयमुच्यते कर्मणि कृद्विधानात्, तदयमत्र समास–साध्य विज्ञान विज्ञेय यस्य तत् साध्यविज्ञानमिति; तन्न; एवं सति साध्यविज्ञेयमिति स्पष्टस्यैवोपन्यासस्य प्रसङ्गात्। तन्न तद्ग्रहणमर्थवदिति चेत्; न, अनुमानस्य परिच्छित्तिरूपत्वप्रतिपादनार्थत्वात्। तस्य तद्रूपत्वमपि विज्ञानत्वादेव प्रतीयत इति चेत्; न; तथाऽपि बौद्धैस्तदनभ्युपगमात्। न चैतद्वाङ्मात्रम्; प्रमाणभावात्–विषयपरिच्छित्तिरूपमनुमान प्रमाणत्वात् प्रत्यक्षवदिति। प्रत्यक्षमपि प्रतिबन्धादेव तद्विषये प्रमाण न तत्परिच्छित्तिरूपत्वादिति चेत्, न; द्विचन्द्रादिज्ञानस्याप्येव प्रामाण्यापत्ते। एकचन्द्रादौ तस्यापि तद्भावभावित्वेन प्रतिबन्धात्। तथा च न तत्प्रत्यक्षम्, भ्रान्तत्वात्[7]। नानुमानम्; अलिङ्गजत्वादिति प्रमाणद्वित्वनियमव्याघातकमन्यदेव प्रमाणं भवेत्। अथ तल्लिङ्गमेव एकचन्द्रादौ न प्रमाणम्; तल्लिङ्गजस्यानुमानस्यैव तत्र प्रामाण्यात्।

---

१–त्व न तस्य आ०, ब०, प०। २ साधनस्वरूप। ३–क्तं तत–आ०, ब०, प०। ४–त्येवास्तु आ०, ब०, प०। ५ प्रत्यक्षतः। ६ साध्यत्वेन। ७ 'प्रत्यक्ष ह्यभ्रान्त प्रत्यक्ष कल्पनापोढमभ्रान्तमिति वचनात्'–ता० टि०।

"प्रतिभासो य ईदृशो न संस्थानविवर्जितः ।
एवमन्यत्र दृष्टत्वादनुमानं तथा च तत् ॥" [ प्र० वार्तिकाल० १।१ ] इति वचनादिति चेत्; तल्लिङ्गमेवेति कुतः ? प्रतिबन्धादिति चेत्; अनुमानमपि तदेव स्यात् तदविशेषात् । तत्राप्यन्यदेव तदुद्भवमनुमानं प्रमाणमिति चेत्; न; तत्रापि पूर्ववल्लिङ्गत्वोपनिपातात् पुनरनुमानान्तरपरिकल्पनायामव्यवस्थापत्तेः । न चैवं प्रत्यक्षस्यापि प्रामाण्यम्, प्रतिबन्धबलेन तत्रापि लिङ्गत्वस्यैवोपपत्तेः; सत्यम्; वस्तुतः तत्प्रतिभासस्यापि लिङ्गत्वम् । अनभ्यासे तत एव प्राप्यस्यानुमानात् । अभ्यासे तु लिङ्गमपि प्रत्यक्षमेव, तस्यैव प्राप्यप्रतिभासित्वेन व्यवहारिभिरभ्यनुज्ञानात् । तदनुरोधादेव च तत्प्रामाण्यस्य बौद्धैः परिचिन्तनादिति चेत्; सिद्धमिदानीं तद्वदेवानुमानस्यापि तद्विषये तत्प्रतिभासित्वादेव प्रामाण्यं व्यवहर्तृभिस्तस्यैवाभ्युपगमात्, तत्प्रामाण्यस्यापि तदनुरोधादेव तैः परिचिन्तनात् । कः पुनस्तस्य विषय इति चेत् ? प्रत्यक्षस्य कः ? स्वलक्षणमेव परमाणुलक्षणमिति चेत्; न; तस्य कदाचिदप्यप्रतिवेदनात् । स्थूलपावकादिरिति चेत्; अनुमानस्यापि स एवास्तु तस्यैव तत्रापि प्रतिभासनात् । अर्थ एव तत्प्रतिभासो न भवति अस्पष्टत्वात्, न ह्यस्पष्टोऽर्थः प्रत्यक्षेण पुनरन्यथैवोपलम्भात् । न हि तस्यैव पुनरन्यथोपलम्भो विरोधात् । अस्ति च ततो नार्थ एवायम् । अत एवोक्तम्—"न च स एव प्रतिभासोऽर्थो युक्तस्तस्य पुनः प्रत्यक्षेणान्यथा दर्शनात्" [ ] इति । इति चेत्; किम्पुनरिदं तस्यानर्थत्वम् ? बोधरूपत्वमेव, स्वतस्तथैव प्रतिपत्तेरिति चेत्; न तर्हि तत्रार्थविभ्रमः, अनर्थत्वप्रतिपत्त्या तस्य विरोधात् । अथ स एवानुमानविकल्पः तद्विभ्रमो न भवति, विकल्पान्तरस्यैव तज्जन्मनस्तत्त्वादिति चेत्; कथं तर्हि तस्यैव विभ्रमत्वमुक्तम्—"तदेतदतस्मिंस्तद्ग्रहो भ्रान्तिः" [ ] इति ? विभ्रमविकल्पजननादिति चेत्; न; तेनापि व्यतिरिक्तस्याप्रतिवेदनात् । अव्यतिरिक्तस्य च बोधरूपतयैव प्रतिपत्तेः कथं सोऽप्यर्थविभ्रमः ? मा भूत्तज्जन्मनो विकल्पस्यैव तत्त्वादिति चेत्; न; तेनापीत्यादेः प्रसङ्गादनवस्थापत्तेश्च । तन्नेदमनर्थत्वम् । अवस्तुरूपत्वमिति चेत्; तद्रूपस्य कथमनुमानेऽपि प्रतिभासनम् ? तत्कारणत्वादिति चेत्; न; तत्र तदसम्भवात् । तदव्यतिरेकादिति चेत्; वस्तुरूपत्वमेव स्यात् अनुमानस्य तत्त्वात् । तस्याप्यवस्तुरूपत्वमिति चेत्; सुस्थितमनुमानत्वम् बोधस्यैव तत्त्वोपगमात् अवस्तुरूपस्य च बोधत्वासम्भवात् । अवस्तु-वस्तुरूपमेवानुमानम्, तद्ग्राह्याकारस्यैवावस्तुरूपत्वात्, तदतद्रूपतया द्विरूपस्यानुमानस्य प्रतीतिबलेनाभ्युपगमादिति चेत्; अभिमतमापतितम्, अर्थस्यापि स्पष्टेतररूपतया द्विरूपस्यैवापत्तेः । द्विरूपतयैव प्रत्यक्षेऽन्यत्र च किन्न तस्य प्रतिभासनमिति चेत् ? न; प्रमाणस्य समानाकारगोचरत्वाभावात् । अन्यथाऽनुमाने ग्राह्याकारस्यावस्तुरूपत्वमपि प्रतिभासत इति कथं तत्रार्थभ्रान्तिः ? अनिश्चयादिति चेत्; तदव्यतिरिक्ते भासुरादिरूपेऽपि कथं निश्चयो यतः पावकादौ तदर्थिनः प्रवर्तेरन् ? निश्चये वा खण्डशो ग्रहणमप्यर्थस्य तथैव स्यात् प्रत्यक्षेण स्पष्टतया अन्यथा चानुमानेन । तत्र प्रतिभासभेदादर्थभेदप्रकल्पनं तयोरुपपन्नमिति न

---

१ नः इ–आ०, ब०, प० । २–त्र–आ०, ब०, प० । ३–दविशे–आ०, ब०, प० । ४–मनव–आ०, ब०, प० । ५ व्यवहारानुरोधादेव । ६–नादिति चे–आ०, ब०, प० । ७ सोऽप्यर्थ–आ०, ब०, प० । ८–वादवस्तुरूप–आ०, ब०, प० । ९ न सम्भावित–आ०, ब०, प० ।

सुभाषितमेतत्—

"प्रामाण्यं वस्तुविषयस्तयोरर्थभिदां जगौ ।
प्रतिभासस्य भिन्नत्वादेकस्मिंस्तदयोगतः ॥" [ ] इति ।

मा भूदनुमानमपि द्विरूपमिति चेत्; किमिदानीं तदेव नास्ति, सदेकरूपं वेति ? न तावदेकरूपम्; ग्राह्याकारमात्रेणावस्तुत्वात्, स्वालक्षण्यमात्रेण प्रत्यक्षत्वात् । तदेव नास्तीति चेत्; किमिदानीं तत्प्रमाणम् यत किमपि स्वाभिमतं सिध्येत् ? प्रत्यक्षमेव, तत एवाभिमतस्याद्वैतात्मन स्वरूपस्य सिद्धेरिति चेत्; कुतस्तस्य वस्तुसत्त्वम् ? प्रतिभासादिति चेत्; न; तस्य बहिर्भावसन्तानभेदादावस्तुसत्यपि भावात् । विचारसहात् प्रतिभासादिति चेत्; यदि नामायं तथाऽपि तस्मात् कुतो वस्तुसत्त्वस्यावगतिः ? अविनाभावादिति चेत्; आगतमनुमानम्—अविनाभाविनो धर्मात् धर्मान्तरावगमस्यैवानुमानत्वेन तद्वादिनामिष्टत्वात् । वस्तुसतोऽपि ततः कस्मात् स्वरूपस्यैवाद्वैतात्मन परिज्ञानं न पुनर्बहिर्भावादेर्भेदस्यापि ? तस्य तत्रानुपलम्भादिति चेत्; अस्तु नामानुपलम्भ तथापि कस्मादसौ तत्परिज्ञाननिषेधमवबोधयति ? अविनाभावादिति चेत्; उक्तमुत्तरम्—'आगतम्' इत्यादि । तत्रानुमानमन्तरेण क्वचित्कस्यचिद्विधानं प्रतिषेधो वा सम्भवति, तत एवाह—**तदत्यये** । तस्यानुमानस्य अत्यये अभावे **क्वचित्** प्रत्यक्षे **एकस्य** वस्तुसत्त्वस्य **यद्विधानं** यश्च **प्रतिषेधो** बहिर्भावादिपरिज्ञानस्य तयो **विरोधात्** अनुपपत्तेः । साधनात्साध्यविज्ञानमनुमानमिति सम्बन्धः । तत्र तदेव नास्ति । सतोऽपि नैकरूपत्वम्; द्वैरूप्येऽपि न प्रत्यक्षाद्भिन्नविषयत्वमित्युपपन्नमेतत् विषयपरिच्छेदरूपमनुमानं प्रमाणत्वादिति ।

बार्हस्पत्यास्तु प्राहुः—सतोऽप्यनुमानस्य कथं प्रामाण्यम् ? अव्यभिचारिलिङ्गप्रभवत्वादिति चेत्; तदेव कुतः ? प्रामाण्यादिति चेत्; न; परस्पराश्रयात्—तत्प्रभवत्वात्प्रामाण्यं ततश्च तत्प्रभवत्वमिति । अन्यत एव तस्य तत्प्रभवत्वमवगम्यते ततश्च प्रामाण्यमिति चेत्; अन्यस्य प्रत्यक्षत्वे व्यर्थं तत्प्रामाण्यपरिकल्पनम्, तत एव साध्यस्यापि परिज्ञानात् अन्यथा तदव्यभिचारिलिङ्गप्रभवत्वस्य ततोऽनवगमात् । अनुमानत्वे तु कथं तस्यापि प्रामाण्यम् ? अव्यभिचारिलिङ्गप्रभवत्वादिति चेत्; न; तत्रापि 'तदेव कुत' इत्यादेः प्रसङ्गादनवस्थानदोषस्योपनिपातात् । क्व चेदमव्यभिचारित्वं लिङ्गस्य प्रतिपत्तव्यम् ? दृष्टान्त इति चेत्; न; तत्र तद्गतस्यैव तस्य प्रतिपत्तेर्नान्यस्य । तस्य तत्प्रतिपत्तिरेवान्यस्यापि तत्प्रतिपत्तिः समानत्वादिति चेत्; तर्हि धूमादेरिव तत्पुत्रत्वादेरपि तथा तत्प्रतिपत्ते श्यामत्वादौ सोऽपि गमक एव भवेत् । भवत्येव यस्तत्समानः तस्याव्यभिचारात्, यस्तु गौरत्वादावपि दृश्यते स विलक्षण एवेति चेत्; न कश्चिदिदानीं व्यभिचारी हेतुः सर्वस्यैव गमकत्वात् । सत्यमिदम्, तदपेक्षया यस्य वैलक्षण्यपरिज्ञानं तद्विकलप्रतिपत्रपेक्षयैव व्यभिचारस्य परिकल्पनादिति चेत्; नेदानीमेकान्ततः क्वचिद्व्यभिचार इति कथं तेन परस्यैकान्तिकः पराजयः स्यात् । तत्र दृष्टान्ते तत्प्रतिपत्ति । नापि सर्वत्र; तद्वत सर्वज्ञत्वप्रसङ्गात् । न पक्षेऽपि; तत्र साध्यस्य प्रतिपत्तौ तत्प्रतिपत्तिवैफल्यात्, तस्यास्तदर्थत्वात् । अप्रतिपत्तौ तदव्यभि-

---

१ नास्ति तदे–आ०, ब०, प० । २ क्वचिदव्य–आ०, ब०, प० । ३ अव्यभिचारित्वस्य । ४–देरिति त–आ०, ब०, प० । ५ अव्यभिचारित्वपरिच्छेदः । ६ गोचरत्वादावपि आ०, ब०, प० । ७–तत् सर्वज्ञत्वेऽपि तत्र–आ०, ब०, प० ।

चारस्य दुरवबोधत्वात् । तन्नाव्यभिचारि किञ्चिल्लिङ्गमिति कथं तत्प्रभवत्वेन प्रामाण्यमनुमानस्येति ?

तेषामपि तदप्रामाण्ये कुतश्चैतन्यभूतोपादानत्वपरलोकनिषेधादेः प्रतिपत्तिः ? प्रत्यक्षादिति चेत् ; किमर्थमिदानीं शास्त्रम् ? विप्रतिपत्तौ तन्निवर्तनार्थमिति चेत् ; न ; प्रत्यक्षविषये तस्या एवाभावात् पृथिव्यादिवत् । भावेऽपि न तत् स्वत एव तस्या निवर्तकम् अप्रमाणकत्वात् । निवर्तकस्य प्रमाणस्योपदर्शनादिति चेत् ; न ; प्रत्यक्षस्यातन्निवर्तकत्वात् । अनुमानस्येति चेत् ; किं तदनुमानम् ? भूतोपादान चैतन्यं तद्विकारे विकारित्वात्, यत् यद्विकारे विकारि तत्तदुपादानं दृष्टम् यथा मृद्विकारविकारिशिवकादि मृदुपादानम्, भूतविकारविकारि च चैतन्यम्, तस्मात्तदुपादानमिति । तथा, न तत् परलोकि भूतोपादानत्वात् शरीरवदिति । इति चेत् ; कथं पुनः सामान्येनानुमानस्य निषेधे तद्विशेषयोरनयोरपि सम्भवो विशेषस्य सामान्याभावेन विरुद्धत्वात् । एतदेवाह–**तदत्यये । क्वचित्** चैतन्ये । यत् **एकस्य** भूतोपादानत्वस्य **विधानम्** तत्परमनुमानं यश्चैकस्य परलोकित्वस्य **प्रतिषेधः** तत्परमनुमानं तयो**र्विरोधादिति** । अथेष्यत एव हीदृशमनुमानं परलोकाद्यनुमानस्यैव परपरिकल्पितस्य निषेधादिति चेत्, कुतस्तस्यैव निषेधः ? तत्साधनस्यैवाव्यभिचारनिर्णयाभावेनाभावादिति चेत् ; न ; तदभावस्यान्यत्राप्यविशेषात् । नचाविशेषे कस्यचिदिच्छया विधानं प्रतिषेधश्च परस्योपपन्नः । तदाह–**तदत्यये** । तस्य साधनस्यात्यये **क्वचित्** । इष्टसाध्ये यत् **एकस्य** अनुमानस्य **विधानम्** इच्छया यश्चापरस्य **प्रतिषेधः** तयोः **विरोधात्** । भवतु तर्हि परप्रसिद्धादेवानुमानादभिमतसिद्धिरिति चेत् ; कः पुनः परो नाम ? काय एव देवदत्तादेरिति चेत् ; न ; तस्याचेतनत्वेनानुमानस्य तत्प्रसिद्धत्वायोगात् । तद्गतो बुद्धिविवर्त इति चेत् ; तस्यापि न प्रत्यक्षात्प्रतिपत्तिः, संशयाभावप्रसङ्गात् । न हि तत्प्रतिपन्ने संशयो रूपादिवत् । अस्ति च 'साधुरयं धूर्तो वा, पण्डितोऽयं मूर्खो वा' इति । नापि व्यापारादिलिङ्गजादनुमानात्, तस्यापि स्वयमसिद्धेः । ततोऽपि परप्रसिद्धादेव तत्प्रतिपत्तिरिति चेत् ; कः पुनरत्र परो यस्यातः प्रतिपत्तिः ? स एवेति चेत् ; न ; तस्याप्रतिपत्तावस्यैवाभावात् । प्रतिपत्तौ भावश्चेत् ; न ; परस्पराश्रयात्–भावात्प्रतिपत्तिः, ततश्च भाव इति । तदन्य एव परः, तत्प्रसिद्धादनुमानात् प्रकृतस्य प्रतिपत्तिरिति चेत् ; तस्यापि न प्रत्यक्षात्प्रतिपत्तिरुक्तदोषात् । नापि व्यापारादिलिङ्गजादनुमानात् ; तस्यापि स्वयमप्रसिद्धेः । परप्रसिद्धादेव ततोऽपि तस्य प्रतिपत्तिरिति चेत् ; न ; अत्रापि 'कः पुनः' इत्यादेः प्रसङ्गादव्यवस्थावैधुर्याच्च । तन्न परप्रसिद्धादपि ततः परेषामभिमतनिष्पत्तिः । कथञ्चैवं प्रत्यक्षस्यापि प्रामाण्यम् ? विषयपरिच्छेदादिति चेत् ; न ; तस्याऽसत्यपि विषये भावात् । अव्यभिचारादिति चेत् ; स एव तत्र कुतः ? प्रामाण्यात् । तदपि ? अव्यभिचारादिति चेत् ; न ; परस्पराश्रयस्य स्पष्टत्वात् । अन्यतस्तस्याव्यभिचारः प्रतीयते ततश्च प्रामाण्यमिति चेत् ; किं तदन्यत् ? प्रत्यक्षमिति चेत् ; न ; तदव्यभिचारस्यापि तदन्यतः प्रतिपत्तावनवस्थापत्तेः । अर्थक्रियाज्ञानमिति चेत् ; न ; अविशेषात् ।

---

१ अनुमानाप्रामाण्ये । २ शास्त्रम् । ३ 'चार्वाकमतापेक्षया'–ता० टि० । ४ चैतन्यम् । ५–तदिति चेत् आ०, ब०, प० । ६ तद्विषययोः आ०, ब०, प० । ७ "स्यादौ सहायो नास्ति यथा, सुप इत्येति सूत्रेण सप्तम्यन्तात् दसत्ययः ।"–ता० टि० । ८ "स्वस्य चार्वाकस्य"–ता० टि० । ९–तस्यातैमपरान्न आ०, ब०, प० ।

स्वत एव तत्राव्यभिचारप्रतिपत्तौ प्रथमज्ञानेऽपि स्यात्। तस्य क्वचिद्व्यभिचारोऽपि दृश्यत इति चेत्; न, अर्थक्रियाज्ञानस्यापि स्वप्ने तद्दर्शनात्। स्वप्नतज्ज्ञानविलक्षणमेव जाग्रतज्ज्ञानमिति चेत्, प्रथमज्ञानमपि व्यभिचारिज्ञानविलक्षणमेव किन्न स्यात्? लोकस्य तथा विवेकाभावादिति चेत् न, इतरत्रापि तुल्यत्वात्।

अपि च, तत एवानुमानस्यापि किन्न प्रामाण्यम्? सर्वत्र तद्विषये तदभावादिति चेत्, प्रत्यक्षस्यापि न स्यात्, तद्विषयेऽपि सर्वत्र तदभावात्। विद्यमानतज्ज्ञानप्रत्यक्षसाधर्म्यादितरतत्प्रामाण्यपरिकल्पनम् अनुमानप्रामाण्यमपि परिपुष्णाति विशेषाभावात्। अथ प्रत्यक्षमविचारितप्रामाण्यमेव परिगृह्यते, अन्यथा व्यवहारविलोपात्, किमिदानीमनुमानेन भवतोऽपराद्धम् यतस्तदपि तथाविधमेव न परिगृह्येत? किं तेन परिगृहीतेनापि परमार्थपरिज्ञानस्य तद्वशादनुपपत्तेरिति चेत्, प्रत्यक्षेणापि किं ततोऽपि तदनुपपत्तेरविशेषात्? तस्मादनुपपन्नमेव प्रत्यक्षस्य विधानं प्रतिषेधश्चानुमानस्य। तदाह– **तदत्यये** तनोति विस्तारयति प्रामाण्यमिति **तत्** प्रामाण्यहेतुर्विशेषः तस्य **अत्ययः** तस्मिन् **क्वचित्** पृथिव्यादौ यत् **एकस्य** प्रत्यक्षप्रामाण्यस्य **विधानम्** यश्च **क्वचित्** परलोकादावेकस्यानुमानप्रामाण्यस्य **प्रतिषेधः** तयोः **विरोधात्** इति।

मा भूत्प्रत्यक्षमपि प्रमाणम्, उपप्लवस्यैव सर्वत्रोपगमादिति चेत्, न, तद्वादस्य प्रतिक्षिप्तत्वात्। ततः प्रत्यक्षं प्रमाणयता प्रमाणयितव्यमनुमानमपि, तदव्यभिचारिलिङ्गप्रभवत्वस्योत्तरत्र समर्थनादिस्युपपन्नमिदम्–स्वार्थपरिच्छेदरूपमनुमानम् प्रमाणत्वात् प्रत्यक्षवदिति।

प्रत्यक्षस्यापि न वस्तुतः स्वार्थपरिच्छेदः तत्काले तदर्थस्य कारणत्वेन व्यतिक्रमात्, अपि तु तदाकारस्वरूपपरिच्छेदस्य तत्रारोपादौपचारिक एव, तथानुमानस्यापि तत्परिच्छेदसाधने सिद्धसाधनमिति चेत्; अत्राह–

**प्रत्यक्षं परमात्मानमपि च प्रतिभासयेत्।**
**सत्यं परिस्फुटं येन तथा प्रामाण्यमश्नुते ॥ २ ॥** इति।

तात्पर्यमत्र कीदृशं तत्प्रत्यक्षं यदाकारपरिच्छेदस्तद्विषये समारोप्येत? निर्विकल्पं निरंशपरमाणुविषयमिति चेत्, न, तस्य क्वचिदप्यपरिज्ञानात्, संहृतविकल्पकालेऽपि नानाभागसाधारणस्य नीलादिवेदनस्यैवानुभवात्, अन्यथा तत्कल्पनाया न क्वचिद्वस्तुनि व्यवस्था स्यात्। परिज्ञानेऽपि तस्य यदि विषयादुत्पत्तेः प्रामाण्यं चक्षुरादावपि स्यात्। उत्पत्तिविशेषात् सारूप्यलक्षणादिति चेत्, न, तथाऽप्यकिञ्चित्करादौ प्रसङ्गात्। अकिञ्चित्करं हि विषदर्शनमज्ञस्य संशयादीनामन्यतमस्यापि तेनाकरणात्, तस्यापि विषयसारूप्यात् प्रामाण्ये ततोऽपि न प्रवृत्तिः स्यात्। तथा च–

वस्तुशक्त्यवबोधस्य दर्शनादेव सम्भवात्।
वैद्यकाद्युपदेशोऽयं तदर्थो व्यर्थतां व्रजेत् ॥ १२१२ ॥

---

१–तज्ज्ञानादप्र–आ०, ब०, प०। २ तत्त्वोपप्लववादी प्राह। ३–न प्रति–आ०, ब०, प०। ४ संहृतवि–आ०, ब०, प०। ५ निर्विकल्पस्य।

क्षणक्षयादावध्यक्षं विपर्यासादिकार्यवत् ।
तस्याप्येवं प्रमाणत्वं तत्रवृत्तिश्रमं भवेत् ॥ १२१४ ॥
आरोपेण सता ऽप्येवं तत्प्रामाण्यानुपद्रवात् ।
तद्व्यवच्छेदयैत्तत्ते प्रयासायैव केवलम् ॥ १२१५ ॥
अनुमानं प्रमाणत्वं तद्व्यवच्छेदिनो ऽपि तत् ।
कथं नामावतिष्ठेत यत्प्रमाणद्वयं भवेत् ॥ १२१६ ॥
नीलादावेव तन्मानं यदि तत्रैव निर्णयात् ।
प्रागेवाधिगमे तस्मान्निर्णयः किमपेक्ष्यते ॥ १२१७ ॥
फलं तदेव तस्यापि निष्पन्नं तच्च दर्शनात् ।
निष्पन्ने ऽपि व्यपेक्षायां व्यपेक्षा नावतिष्ठते ॥ १२१८ ॥
परतो ऽधिगमे तस्मात् दर्शनात्स पृथग् भवेत् ।
ततश्चेदं विरुध्येत तेनानर्थान्तरं फलम् ॥ १२१९ ॥ इति ।
तत्साधकतमत्वञ्च निर्णयस्यैव युज्यते ।
सत्येव तस्मिंस्तद्भावात्र सारूप्याद्विपादिवत् ॥ १२२० ॥
**"तस्मात्प्रमेयाधिगतेः साधनं मेयरूपता ।"**
विदुषा न तु वक्तव्या वक्तव्या निर्णयात्मता ॥ १२२१ ॥
निर्णयात्मनि चाध्यक्षे पृथगेवार्थभासनात् ।
उपचारात् परिच्छित्तिः कथं तत्रोपकल्प्यताम् ॥ १२२२ ॥ इति ।

शब्दार्थः कथ्यते–**परम्** इत्यस्यानन्तरम् **'अपि च'** इत्येतद् द्रष्टव्यम् । तदयमर्थः– **प्रत्यक्षम्** उक्तरीत्या निर्णयरूपं स्पष्टं ज्ञानम्, तत् **आत्मानं** स्वरूपं **प्रतिभासयेत्** प्रतिभासमानं कुर्वीत । न केवलं तमेवापि तु **परमपि च** बहिरर्थमपि च **प्रतिभासयेत्** । कथम् ? **सत्यम्** अवितथम्, तत्त्वञ्च मुख्यतयैव तत्र तत्करणात् । उपचारेण तत्करणे हि वितथमेव तद् भवेत् । एवमपि सत्यं तत्करणं परस्मिन्नेव वक्तव्यम् नात्मनि विवादाभावादिति चेत्; न; दृष्टान्तार्थत्वात् तद्वचनस्य । यथा आत्मनि तत्करणं सत्यमेवं परस्मिन्नपीति । केनैवम् ? इत्याह–**परिस्फुटम्** अनुभवारूढं येन ।

प्रसिद्धानुभवं हीदं यन्नीलादि बहिर्गतम् ।
प्रत्यक्षे प्रतिभातीति सर्वप्रमाणभृतामपि ॥ १२२३ ॥
अर्थसारूप्यवादो ऽयं यदि तत्रोपकल्प्यते ।
प्रत्यक्षेण स बाध्येत पावकानुष्णवादवत् ॥ १२२४ ॥

---

१ आरोप्येण आ०, ब०, प० । २–यत्कस्ते आ०, ब०, प० । ३ प्र० वा० २।३०६ । ४–पत्तञ्च मु– आ०, ब०, प० । ५ "प्रतिभासमानत्वकरणात्"–ता० टि० । ६ चेन्नैवमि–आ०, ब०, प० ।

तत्रानाकार एवेयं प्रतिकर्मस्थितिर्यथा ।
संकेतानियमो हेतोरन्यथैव निरूपितम् ॥ १२२५ ॥
तत स्वरूपतो मानं प्रत्यक्षमिति युक्तिमत् ।
निर्णयानर्थवास्य प्रमाणत्वव्यवस्थितेः ॥ १२२६ ॥

तदाह–**तथा** तेन परिस्फुटेन निर्णयप्रकारेण **प्रामाण्यमश्नुते** व्याप्नोति प्रत्यक्षमिति ततो युक्तं प्रत्यक्षवत् स्वविषयनिर्णयरूपमनुमानं प्रमाणत्वादिति साधनात् साध्यविज्ञानमित्युक्तम् ।

तत्र साधनं प्राग्व्याख्यातत्वात् पश्चान्निरूपयिष्यतीदानीं साध्यं निरूपयन्नाह–

**साध्यं शक्यमभिप्रेतमप्रसिद्धं**[1] **[ ततोऽपरम् ]** । इति ।

ननु साधनार्हं[2] साध्यं तच्च शक्यादिरूपमेव । न ह्यशक्यस्य तदर्हत्वम् अशक्यत्वविरोधात् । साध्यत्वाभिप्रेतस्य प्रसिद्धस्य वा, अतिप्रसङ्गात् । ततः साध्यलक्षणस्य व्युत्पत्तिवशादेव प्रतिपत्तेः किं तत्प्रणयनेनेति चेत् ? न ; तथा तत्प्रतिपत्तेर्गरीयस्त्वात्, व्युत्पत्तेर्बहुधाभावेन सम्मोहसम्भवाच्च । प्रसिद्धादन्यद् **अप्रसिद्धम्** तदेव साध्यम्, न प्रसिद्धम् तत्र साधनवैफल्यात्, प्रसिद्धिरेव हि फलं साधनस्य सा च प्रागेव सिद्धेति । का पुनरियं प्रसिद्धिः ? निश्चयशून्यमधिगतिमात्रमिति चेत् ; न ; क्षणिकत्वादेरसाध्यत्वप्रसङ्गात् । अधिगत्यैव प्रसिद्धिस्तद्विशिष्टैवेयमिति चेत् ; किमिदानीं साध्यम् ? न यत्राधिगतिरिति चेत् ; न ; स्वभावलिङ्गविषये सर्वत्र तद्भावात् । कार्यलिङ्गविषये नेति चेत् ; न ; तत्रापि व्याप्तिज्ञानेन तद्भावात्, अन्यथा अनुमानस्यैवानुपपत्तेः । ततो न किञ्चिदनधिगतमस्ति यत्साध्यं सम्भवेदिति तल्लक्षणवर्णनं सौगतस्य प्रयासमात्रमाकाशचर्वणवत् । यदि चाधिगतमसाध्यम्, किमिदानीं तत्रानुमानेन ? समारोपव्यवच्छेद इति चेत् ; सोऽपि प्रध्वंसनम्, [3]मिथ्यात्वज्ञापनं वा भवेत् ? न तावत्प्रध्वंसनम् ; तस्य स्वरसभाविनोऽनुमानकार्यत्वानुपपत्तेः । अथ न साक्षात्तस्य तत्कार्यत्वम्, अपि त्वनुमानसहितात् समारोपादुत्तरस्य तस्यासमर्थस्य ततोऽप्यसमर्थतरस्य तस्मादप्यत्यन्तासमर्थस्योत्पत्तौ ततः परस्यानुत्पत्तेः, तस्य च स्वरसभङ्गुरत्वेन विनाशात् पारम्पर्येणैवेति ; तन्न ; यस्मात्–

समर्थकरणे शक्तिः समारोपस्य चेत्ततः ।
उत्तरोऽपि समारोपः समर्थः किन्न जायते ? ॥ १२२७ ॥
अनुमानेन तच्छक्तेर्विनाशादिति चेदसत् ।
निर्हेतुकत्वात्तस्यापि[4] तत्कार्यत्वाव्यवस्थितेः ॥ १२२८ ॥
स्वभावस्तादृशस्तस्य सानुमानात्ततो यतः ।
असमर्थादिरूपः स्यादारोप इति चेदयम् ॥ १२२९ ॥
स्वहेतोस्तस्य [5]चेद् व्यर्थमनुमानं प्रसज्यते ।
अनुमानाच्च नेवासौ समकालतया स्थितेः ॥ १२३० ॥

---

१ न्यायवि० श्लो० ३३ । २ 'अल्पतरत्वमादौ वक्तव्यमिति न्यायात् ।'–ता० टि० । ३ मिथ्याज्ञानं आ०, ब०, प० । ४ शक्तिविनाशस्यापि । ५ प्र० वा० ३।२८९ ।

किञ्च, सानुमानात् समारोपादशक्त्यादिसमुद्भवे ।
सहकारिसहायात्किं नित्यात्कार्यभिदा न यत् ॥ १२३१ ॥
"अपेक्ष्येत परः कार्यम्" इत्यादि वदता त्वया ।
सहकारिप्रतीक्षत्वं नित्यस्य प्रतिषिध्यते ॥ १२३२ ॥
तस्मान्नास्ति समारोपप्रध्वंसस्तद्व्यवच्छिदिः ।
मिथ्यात्वज्ञापनं सा चेन्नातत्त्वज्ञे तदत्ययात् ॥ १२३३ ॥

न हि तत्त्वज्ञापनमतत्त्वज्ञानात्सम्भवति, तत्त्वज्ञानादेव मरीचिकाविषयाज्जलारोपे तज्ज्ञापनस्योपलम्भात्, तद्वदनुमानादपि तत्त्वज्ञानादेव तज्ज्ञापनमिति साध्यमेव क्षणक्षयादिकम् । न चेदमधिगतिमात्रेण प्रसिद्धौ उपपन्नम्; क्षणभङ्गादेरपि प्रसिद्धिप्रसङ्गात् । प्रसिद्धस्य च "स्वरूपेणैव निर्देश्यः" [ प्र० वा० ४।७८ ] इत्यत्र स्वरूपग्रहणेन साध्यत्वप्रत्याख्यानात् । तस्मान्निर्णीतिरेव प्रसिद्धिः । तदभावेऽधिगतमात्रस्यापि साध्यत्वोपपत्तेः । कथमेवमनेकान्तस्य साध्यत्वं बहिरन्तश्च प्रत्यक्षतः प्रसिद्धत्वादिति चेत्? सत्यमिदं यदि तत्र विपरीतारोपेणानुपहतिः । निर्णयात्मनि प्रत्यक्षे स एव कथं तस्य तद्विरोधित्वादिति चेत्? न; दृष्टत्वात् । दृश्यते हि दुरागमाभ्यासविपर्यासितचेतसां तद्विषयेऽपि बहिर्भावादौ तदारोपः—कस्यचिदसन्निति अन्यस्य बोध इति अपरस्योपप्लव इति । न च दृष्टस्यापह्नवो दर्शनादेव तत्प्रतिषेधात् । ततस्तदारोपविकला निर्णीतिरेव प्रसिद्धिः । अत एव प्रशब्दोपादानम्, प्रकर्षेण तद्वैकल्यलक्षणेन सिद्धं निश्चितं प्रसिद्धमिति, प्रसिद्ध्यतिशयप्रतिपत्त्यर्थम् । यद्येवं प्रत्यक्षमपि कथमनेकान्तमतिपत्तये परं प्रत्युपदर्श्यते—

"जात्यन्तरं तु पश्यामस्ततोऽनेकान्तसाधनम्" [ सिद्धिवि० परि० २ ] इति ।

न हि तस्मादारोपवतः तत्प्रतिपत्तिः, आरोपस्य तेन तदविरोधित्वेनानिवर्त्तनात्, तन्निवर्तनरूपत्वाच्च तत्प्रतिपत्तेः । अनारोपवतस्तु तदुपदर्शनमकिञ्चित्करमविवादादिति चेत्; नायं नियमोऽपरस्तत्त्वमवबोधयितव्य इति । अयन्तु नियमः—प्राश्निकाः प्रतिपादयितव्या इति । ते च वादिवचनात् प्रत्यक्षव्यापारं परामृशन्तोऽनेकान्तविषयमेव प्रतियन्ति, प्रतिपुरुषमेव तद्व्यापारस्यानुभवोपारूढत्वात् । न हि तेषां विपरीताभिनिवेशो यतः प्रसिद्धमप्यनुभवमपलपेयुः तत्कारणाभावात् । तदागमाभ्यास एव तेषामपि तत्कारणमिति चेत्; न; तस्यापि मन्दप्रज्ञ एव तत्त्वान्न महाप्राज्ञे । न ह्यपथ्याहार इत्येव दुर्बलवद् बलवतोऽपि ततः प्रत्यवायः । प्रज्ञातिशयवन्तश्च प्राश्निकास्ततो न तेषामनुभवव्यापारपरिपन्थी कुतश्चिदप्यभिनिवेश इति यथानुभवमेव तत्त्वमवबुद्ध्यन्ते । तदनुमत्या प्रतिवाद्यपि यदि तथैवावबुद्ध्येत सुतरां फलवत् तदुपदर्शनम् । यदि नावबुद्ध्येत तथाऽपि न दोषः; प्राश्निकप्रत्यायनमात्रेणैव वादिपक्षव्यवस्थितेः । अप्रसिद्धस्य साध्यत्वे तादृशस्य साधनस्यापि तत्प्रसङ्ग इति चेत्; किमेवं सति विहन्येत? साधनत्वमेव, साध्यस्य सतस्तत्त्वानुपपत्तेरिति चेत्; न; साध्यान्तरापेक्षया तस्याप्यव्याघातात् । कथमेकस्य रूपद्वयमिति चेत्? कथं रूपत्रयम्? तदपि नेति चेत्; नेदानीं साध्यं

१–मतत्त्वज्ञापना–आ०, ब०, प० । २ विपरीतारोपः । ३ शून्यवादिनः । ४ विज्ञानवादिनः । ५ तत्त्वोपप्लववादिनः । ६–चोपतस्त–आ०, ब०, प० । ७ प्रत्यपाय आ०, ब०, प० ।

नाम किमपि तस्य साधनापेक्षत्वात्, साधनस्य च त्रैरूप्याभावेऽनुपपत्तेः। फलितं त्रैरूप्यमिति चेत्; त्रैरूप्यमपि तादृशं किन्न स्यात्? यतः साधनस्यापि साध्यत्वन्न भवेत्। तत्र तद्व्यवच्छेदाय रूपेणेवे-त्यवधारणमुपपन्नम्।

अप्रसिद्धमप्युक्तमेव साध्यम्, नार्थावगतमिति कश्चित्; तन्न; अभीष्टस्य साध्यत्वात्, उक्तमेव यदभीष्टं तदेव साध्यम्। अथार्थावगतम् तदेव नापरम्। तदाह–अभिप्रेतम् इति।

सत्यमिदम्, मयाऽप्यभीष्टस्यैव साध्यत्वोपगमादिति सौगतः; तन्न; क्षणिकत्वस्येष्टस्यापि तेनासाधनात्। तदेव शब्दादौ कृतकत्वादिना साध्यमनित्यशब्देनापि तस्यैवाभिधानादिति चेत्; चक्षुरादावात्मार्थत्वमेव संहतत्वादिना किमेवं न साध्यम् पारार्थ्यशब्देनापि तस्यैवाभिधानात्। दृष्टान्ते तस्याभावेन हेतोस्तदन्वयस्याग्रहणादिति चेत्; क्व पुनः क्षणिकत्वेनापि तस्य तद्ग्रहणम्? प्रदीपादाविति चेत्; कुत एतत्? प्रत्यक्षत एव तत्र क्षणिकत्वस्य प्रतिपत्तेरिति चेत्; न; शब्दवत्तत्रापि ततस्तत्प्रतिपत्तेर्विवादात्। अनुमानत एव तत्प्रतिपत्तौ तदन्यत्र तदन्वयग्रहणं लिङ्गस्याङ्गीकर्तव्यम्। तत्रापि तत एव तत्प्रतिपत्तौ तदन्यत्र तद्ग्रहणं तस्याङ्गीकर्तव्यमित्यनवस्थापत्तिः। यत्पुनरेतत्–प्रदीपादे-रक्षणिकत्वे परापरस्तैलादिव्यापारो व्यर्थः। न हि तस्य तदुत्पत्तिरर्थः, प्रथमतद्व्यापारादेव तद्भावात्। नाप्युपकारः, तस्याप्यभिन्नस्य करणायोगात्। भेदे सम्बन्धाभावात् तस्येति व्यपदेशानुपपत्तेः। तेनापि तदन्तरकरणेऽनवस्थानुषङ्गात्। ततोऽपरापर एव तत्प्रभवः प्रदीपादिरिति; तदपि न शोभनम्; ततोऽप्यप्रमाणात् तत्प्रतिपत्तेरयोगात्। प्रमाणत्वञ्च न प्रत्यक्षत्वेन; तत्रैव क्षणिकविषये विवादात्, अन्यथा शब्देऽपि तत एव तत्प्रतिपत्तेः किमनुमानेन? अस्ति हि तत्राप्येवं परामर्शः–यदि शब्दो-ऽप्यक्षणिको व्यर्थस्तत्रापरापरस्ताल्वादिव्यापारः, तदुत्पत्तौ तदुपकारे च पूर्ववदस्यानुपयोगात्। ततोऽ-परापर एव शब्दोऽपि तत्प्रभवः ततः क्षणिक एवेति। तत्र सतोऽपि ततस्तदभिव्यक्तिवादिनां न तत्प्रतिपत्तिः, एकत्वारोपानिवृत्तेरिति चेत्; प्रदीपादावपि भवेत्, तदभिव्यक्तिवादिनामपि साङ्ख्यानां भावात्, तेषु तदारोपस्याप्यनिवृत्तेः। तन्न प्रत्यक्षत्वेन तत्प्रामाण्यम्। नाप्यनुमानत्वेन; तल्लिङ्गस्यापि क्षणिकत्वेनान्यत्रान्वयग्रहणे तत्क्षणिकत्वस्याप्यपरापरतत्कारणव्यापारादनुमानतया प्रमाणात्प्रतिपत्तौ अनवस्था-पत्तेः। तन्न वह्निस्तेनाप्यन्वयग्रहणं यतस्तत्साध्यम्।

भवतु तर्ह्यनित्यत्वमेव साध्यम्, तस्य प्रदीपादावपि प्राक्प्रध्वंसाभावमध्यवर्तिभावात्मनः प्रत्यक्षत एव प्रतिपत्तेः, न क्षणिकत्वं तस्यातिसूक्ष्मसमयपर्यन्तमायिभावस्वभावस्य तत्र ततोऽप्रतिपत्तेरिति चेत्; किमेवं साङ्ख्यस्यापि पारार्थ्यमेव साध्यं न भवेत्? तस्यापि शयनादौ प्रसिद्धत्वात्। आत्मा-र्थत्वस्याभीष्टस्यासाधने स्वपक्षसिद्धेरभावात्, तदुपकल्प्य तद्विपरीतसाधने साधनस्य विरुद्धत्वदोषात्। तद्विपरीतस्यैवोपकल्प्य साधने निर्विवादत्वेन साधनवैफल्यात्। तदुक्तम्–

---

१ "अभीष्टमिति पदमत्रापि सम्बन्धनीयम्।"–ता० टि०। २ क्षणिकत्वमेव। ३ "चक्षुरादिः परार्थः संहतत्वात् शयनासनादिवत्–इदमनुमानं साङ्ख्यमतप्रसिद्धं बौद्धं प्रति आत्मास्तित्वसाधकम्।"–ता० टि०। ४ "शयनासनादौ"–ता० टि०। ५ "कृतकत्वादिहेतो"–ता० टि०। ६ प्रत्यक्षत क्षणिकत्वप्रतिपत्तेर्विवादसद्भावात्। ७ "उक्तप्रकारात् परामर्शात्"–ता० टि०। ८ क्षणिकत्वस्य त– आ०, ब०, प०।

"साधनं यद्विवादेन न्यस्तं तच्चेन्न साधयेत् ।
किं साध्यमन्यथाऽनिष्टं भवेद्वैफल्यमेव वा ॥" [ प्र० वा० ४।३२ ]

इति चेत् ; तन्न; क्षणिकत्वमुपक्रम्यानित्यत्वसाधनेऽप्येवं दोषात् । न दोषः, तत्साधनादेव तस्यापि तत्प्राप्तेरिति चेत् ; कथमन्यसाधनादन्यस्य तत्प्राप्तिः अन्यथेष्टवदनिष्टस्यापि तत्प्राप्तिः, तथा च सर्वो हेतुर्विरुद्धो दृष्टान्तश्च साध्यविकलः स्यात् । परस्परविरुद्धस्य साध्यसन्दोहस्य क्वचिदसम्भवादयमपि न दोषः, कुतश्चित् प्रत्यासत्तेरिष्टस्यैव सिद्धेरिति चेत् ; न तर्हि पारार्थ्यसाधनादेवाऽऽत्मार्थत्वसिद्धिमन्विच्छतः साङ्ख्यस्याप्ययं दोषः, प्रत्यासत्तिविरहादेवानिष्टसिद्धेर्निवारणात् । ततो नेदं तत्र दूषणं प्रज्ञाकरस्य–

"यद्यन्यस्मिन् साध्यमानेऽन्यसाध्यं सिद्ध्येदिष्टं सर्वसिद्धिस्ततः स्यात् ।
प्रत्यासत्तेस्तारतम्यं विनाऽपि सिद्ध्येत् किञ्चिन्नान्यदेतत् कुतः स्यात् ॥"

[ प्र० वार्तिकाल० ४।३२ ] इति ।

कथं पुनः प्रत्यासत्तावप्यन्यसाधनादन्यस्य सिद्धिः, प्रत्यक्षतो हेतुसाधनादेव साध्यसिद्धेरनुमानवैफल्यमाप्तेः । ततोऽन्यैव तत्कृता तत्सिद्धिरिति चेत् ; ततोऽपि कथमात्मार्थत्वस्य साधनम् अनन्वयात् ? प्रत्यासन्नस्य कस्यचिदन्वयिन एव ततोऽपि साधनमिति चेत् ; न ; अनवस्थादोषात् । इत्यपि दूषणमनित्यत्वसाधनात् क्षणिकत्वसिद्धावप्यनुबध्यमानमात्मनो न वैमुख्येन सख्यं प्रख्यापयति । तत्र बहिः क्षणिकत्वस्याप्यन्वय आत्मार्थत्ववत् । भवतु पक्ष एव स[3] तस्येति चेत् ; न ; आत्मार्थत्वेऽपि प्रसङ्गात् ।

कः पुनरात्मनः चक्षुरादिभिरर्थः ? न तावदुत्पत्तिः ; नित्यत्वात् । नापि विषयानुभवः ; तस्यापि तदव्यतिरेकात्, अन्यथा न तस्येति व्यपदेशः, सम्बन्धाभावात् । तेनापि तदनन्तरकल्पनेऽनवस्थानप्राप्तेः । एतेन तदभिव्यक्तिः प्रत्युक्ता । तन्न कूटस्थस्य तैः कश्चिदप्यर्थः सम्भवति यस्तेषां तादर्थ्यम्, पक्ष एव च तस्यान्वयः स्यात् । अपरापरानुभवस्वभावस्य सम्भवत्येव. तैरर्थ इति चेत् ; स तर्हि बौद्धप्रसिद्धः सन्तान एवेति तत्साधने विरुद्ध एव हेतुः स्यादिति चेत् ; उच्यते–किमिदं क्षणिकत्वमपि ? पूर्वापरपर्यायविच्छेद इति चेत् ; न ; तस्य नीरूपस्याप्रतिपत्तिविषयत्वात् । कालापकर्षपर्यन्तपर्यवसितं वस्त्वेवेति चेत् ; कथं तस्य वस्तुत्वम् ? न प्रतिभासात् ; व्यभिचारात् । नाप्यर्थक्रियासामर्थ्यात् ; तत्र तस्य निषेधात् । तन्न तस्यापि सम्भवो यस्य पक्ष एवान्वयः स्यात् । सान्वयविच्छेदरूप तत्सम्भवत्येव तत्र तत्सामर्थ्यस्यानिषेधादिति चेत् ; तर्हि जैनसिद्धमनेकान्तमेवेति तत्साधनेऽपि कथं न विरुद्धो हेतुः । तदुक्तम्–

"पारार्थ्यं चक्षुरादीनां यथाऽनिष्टं प्रसाधयेत् ।
सङ्घातत्वं तथा सत्त्वं शब्दानित्यत्वसाधने ॥" [ ] इति ।

तत्र सामर्थ्योपनिपातिनः साध्यत्वप्रतिपादनार्थं बौद्धस्येष्टग्रहणमुपपन्नम्, अनिष्टापत्ते. । न चैवमभिप्रेतं साध्यमिच्छतो जैनस्य काचिच्चदापत्तिः ; तदभिप्रेतस्य बहिरन्वये सत्यसत्यपि अन्तर्व्याप्ति-

१ "साधनप्राप्तेः"–ता० टि० । २ साध्यसिद्धिरनु–आ०, ब०, प० । ३ अन्वयः ।

बलात् साध्यत्वेन भानात्। कथमेवमप्रकृतामिप्रायस्य पावकादेर्भेदेति धूमादिप्रतिपत्त्या साध्यत्वमिति चेत्। न; योग्यतया तस्यापि तत्रातिरोधात्। अभिप्रेतमपि न सर्वं साध्यम्, अपि तु सम्भवत्साधनमेवेत्याह–शक्यमिति।

तदेवं विधिमुखेन साध्यं निश्चित्य तदन्यव्यवच्छेदमुखेनापि तदेव निश्चेतुं साध्याभास निरूपयति–

ततोऽपरम्।

**साध्याभासम् [ विरुद्धादि साधनाविषयत्वतः। ] ॥३॥** इति।

सुनोपमेतत्। किं तदपरमित्याह–**विरुद्धादि**। विविध रुद्ध निराकृत प्रत्यक्षादिना विरुद्धम्, अनेनाशक्यमुक्तम्। न हि प्रत्यक्षादिनिराकृत शक्य साधयितुम्। **"न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः।"** [ ] इति न्यायात्। आदिशब्देनानभिप्रेतं प्रसिद्धञ्च। कुतस्तस्य न साध्यत्वमेव? इत्याह–**साधनाविषयत्वतः** इति। साधनं वक्ष्यमाणं तस्याविषयत्वमगोचरत्वम्, तस्मात्तत इति। तदविषयत्वञ्च निराकृतस्याशक्यत्वात् अनभिप्रेतस्यातिप्रसङ्गात् प्रसिद्धस्य च वैफल्यात्।

तत्र प्रत्यक्षनिराकृतमेकान्तक्षणक्षयादि तद्विपर्ययस्यैव प्रत्यक्षतः प्रतिपत्तेः। तस्यैव तत प्रतिपत्ति, तद्विपर्यये तज्जन्मनो व्यवसायस्यैव व्यापारादिति चेत्; न; व्यवसायादन्यस्य प्रत्यक्षस्याप्रतिवेदनात्। अस्त्येवेद् केवलं तदेकत्वाभिमानान्न पृथगवसीयत इति चेत्, नन्वेवं पावकानुष्णत्वमपि न प्रत्यक्षनिराकृतं भवेत् प्रत्यक्षतस्तस्यैव परिज्ञानात्, तद्विपर्ययेऽपि व्यवसायस्यैव व्यापारात्। अतोऽपि तद्व्यतिरिक्तप्रत्यक्षप्रतिवेदनस्य तदेकत्वाभिमानादेव पृथगनवसायात्। अभिमतञ्चैतद् ब्रह्मविदाम्–तत्प्रत्यक्षस्य विधिमात्रविषयत्वेन शीतोष्णादिभेदाविषयत्वात्। तद्विषयत्वे हि निषेधविषयत्वमपि भवेत् तद्भेदस्येतरेतराभावात्मकत्वेन निषेधात्मकत्वात्। अनवसित तत्प्रत्यक्ष कथमस्तीति चेत्? भवत्प्रत्यक्षमपि कथम्? एकत्वादिविकल्पसंहारे तस्यैव निर्व्याकुलमनुभवादिति चेत्, न, भेदविकल्पसंहारे तस्यापि निर्व्याकुलमनुभवात्; तथा च श्रूयते–**"यद्वैतं न पश्यति पश्यन्वैतद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्।"** [ बृहदा० ४।३।२३ ] इति, श्रान्यत एव केवल तत्संहारो न कदाचिदपि दृश्यत इति चेत्, न; इतरसंहारस्याप्यदर्शनात्। ततो यथा न निर्भेदसामान्यविषय प्रत्यक्षम् अपि तु भेदविषयमेव तथैव प्रतीतेः, तद्विरुद्धत्वात् पावकानुष्णत्व साध्याभासम्, तथा नासाधारणस्वलक्षणविषय तैत्, अपि त्वनुवृत्तव्यावृत्ताद्विरूपजात्यन्तरगोचरमेव तथैव प्रसिद्धत्वात्, प्रमाणितत्वाच्चेति तद्विरुद्धत्वादेकान्तक्षणिकादिकमपि साध्याभासमेव। अत एवैकान्तनित्यत्वादेरपि तदाभासत्व प्रतिपत्तव्यम्।

तद्वदेव चानुमाननिराकृतम्, अनुमानेनापि जात्यन्तरस्यैव बहिरन्तश्च वस्तुतानिरूपणात्। एवमागमनिराकृतमपि, आगमस्यापि तद्विषयस्यैव प्रामाण्यात् तदन्यविषयस्य तत्प्रतिक्षेपात्। अनभिप्रेतं तु साध्याभास पारार्थ्यमात्रम्, साङ्ख्यस्य तत्सिद्धान्तप्यात्मसिद्धेरभावात्। सौगतादेरप्यनित्यत्वादिक तत्प्रतिपत्तावप्यभीष्टस्य क्षणभङ्गादेरनिश्चयात्। प्रसिद्ध तु जैन प्रति सौगतादेर्जात्यन्तरम्। तत

१ उष्णत्वे। २ प्रत्यक्षम्।

स्थितम्–'**ततोऽपरम् । साध्याभासं विरुद्धादि साधनाविषयत्वतः ।**' इति ।

यद्यप्रसिद्धं साध्यं धर्मिणो विद्यमानत्वमपि साध्यं भवेत् तत्रापि विप्रतिपत्तेः सम्भवात्, तदाह–

**जातेर्विप्रतिपत्तीनां सत्ता साध्याऽनुपज्यते** । इति ।

सुगममेतत् । विप्रतिपत्तीनामिति बहुवचनं संशयादिभेदेन तासां बहुत्वात् । न च साधयितुं शक्यत इति चोद्यस्याभिप्रायः । तत्रोत्तरमाह–

**तथेष्टत्वाददोषोऽयम् [ हेतोर्दोषत्रयं यदि ] ॥४॥** इति ।

**तथा** तेन सत्ता साध्येति प्रकारेण **इष्टत्वात्** जैनस्याभिमतत्वाद् **अदोषो** दोषो न भवति **अयम्** अनन्तर इति ।

पर इदानीमशक्यसाध्यतां तस्यां दर्शयन्नाह–**हेतोर्दोषत्रयं यदि** इति । दोषाणामसिद्धत्वादीनां त्रयं **दोषत्रयं हेतोः** सत्तासाधनस्य **यदि** चेत् । तथा हि–यदि भावधर्मो हेतुः, कथमसिद्धे भावे सिद्धः ? सिद्धश्चेद्; भावोऽपि सिद्ध एवाव्यतिरेकात् । न हि तदव्यतिरिक्तं धर्मं प्रतिपद्यमानस्तमेव न प्रतिपद्येत व्याघातात् । ततो न तस्य साध्यत्वं प्रसिद्धस्यैव तत्त्वोपपत्तेः । अथोभयधर्मः; तदा व्यभिचारः, तस्य भाववदभावेऽपि भावात्, न तादृशो हेतुरतिप्रसङ्गात् । कथं पुनर्भावधर्मस्याभावे सम्भवो यतो व्यभिचारः ? परस्य वचनादिति चेत्; न; वचनात् तत्सम्भवे अतिप्रसङ्गात् । असम्भवन्तमपि ब्रुवाणो दृश्यत इति चेत्; स तर्हि मिथ्यावादित्वेनैव निगृहीतव्यो न व्यभिचारेण असम्भवतस्तदभावात्, अभूतमुद्भावयतश्च स्वयं निग्रहावाप्तेः । सम्भवत्येव कल्पितः स तत्रापि अमूर्तित्ववत् । अमूर्तित्वं हि मूर्तित्वप्रतिषेधमात्रमाकाशादाविव अभावेऽपि खरविषाणादावस्ति–अमूर्तमाकाशादि अमूर्तं खरविषाणमिति च व्यपदेशात्, तद्वदन्योऽपि कल्पितभाववदन्यत्रापि सम्भवन्न विरुध्यत इति चेत्; न; तस्य भावधर्मत्वाभावात्, अतत्स्वभावत्वात् अतत्कार्यत्वाच्च, अन्यथा कल्पितत्वानुपपत्तेः । व्यवहारमात्रात्तस्यापि तद्धर्मत्वे वस्तुतः पक्षधर्मत्वाभावात् स एव दोषो वक्तव्यो न व्यभिचारः, तस्यावस्तुसत्यसम्भवात् । "वस्तुन्येष विकल्पः स्याद् विधेर्वस्त्वनुरोधतः ।" [ ] इति स्वयमेवाभिधानात् । तत्र व्यभिचारोद्भावनमनुपपन्नमिति चेत्; आस्तामेतत्, वक्ष्यमाणोत्तरत्वात् । यदि पुनरभावधर्मः; तदा विरुद्धः, भावसाधनार्थमुपनीतेनाभावस्यैव साधनात् । तत्र सत्तायाँ साध्यत्वं तत्साधनस्य दोषत्रयानतिवृत्तेः । तदुक्तम्–

**"नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ।**
**धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ॥"** [ प्र० वा० ३।१९० ] इति ।

विरुद्धत्वं विरुद्धसाधनत्वात् । तच्च नासिद्धस्यैवाभावधर्मस्य चाक्षुषत्वादिवत् । नापि सिद्धस्य; तत्सिद्धावेवाभावस्यापि सिद्धेरव्यतिरेकात् । व्यतिरेके हि न तस्य तद्धर्मत्वमसम्बन्धात् । तत्कार्यत्वं

---

१ मानमपि–आ०, ब०, प० । २ बहुत्वं न च–आ०, ब०, प० । ३ कल्पितो भावभाववद–आ०, ब०, प० । ४–त्तायामसा–आ०, ब०, प० ।

धर्मात् साध्यस्यैव भावात्। कथमेवमप्रकृताभिप्रायस्य पावकादेरिति धूमादिप्रतिनियत्या साध्यत्वमिति चेत्? न; योग्यतया तस्यापि तत्त्वाविरोधात्। अभिप्रेतमपि न सर्वं साध्यम्, अपि तु सम्भवत्साधनमेवेत्याह–शक्यमिति।

तदेवं विधिमुखेन साध्यं निश्चित्य तदन्यव्यवच्छेदमुखेनापि तदेव निश्चेतुं साध्याभासं निरूपयति–

ततोऽपरम्।
**साध्याभासम् [ विरुद्धादि साधनाविषयत्वतः। ]** ॥ ३ ॥ इति।

सुबोधमेतत्। किं तदपरमित्याह–**विरुद्धादि**। विविधं रुद्धं निराकृतं प्रत्यक्षादिना विरुद्धम्, अनेनाशक्यमुक्तम्। न हि प्रत्यक्षादिनिराकृतं शक्यं साधयितुम्। **"न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः।"** [ ] इति न्यायात्। आदिशब्देनानभिप्रेतं प्रसिद्धं च। कुतस्तस्य न साध्यत्वमेव? इत्याह–**साधनाविषयत्वतः** इति। साधनं वक्ष्यमाणं तस्याविषयत्वमगोचरत्वम्, तस्मात् इति। तदविषयत्वञ्च निराकृतस्याशक्यत्वात् अनभिप्रेतस्यानिष्टत्वात् प्रसिद्धस्य च वैफल्यात्।

तत्र प्रत्यक्षनिराकृतमेकान्तक्षणक्षयादि तद्विपर्ययस्यैव प्रत्यक्षतः प्रतिपत्तेः। तस्यैव तत्र प्रतिपत्तिः, तद्विपर्यये तज्जन्मनो व्यवसायस्यैव व्यापारादिति चेत्; न; व्यवसायादन्यस्य प्रत्यक्षस्यासंविदनात्। अस्त्येवेदं केवलं तदेकत्वाभिमानान्न पृथगवसीयत इति चेत्; नन्वेवं पावकानुष्णत्वमपि न प्रत्यक्षनिराकृतं भवेत् प्रत्यक्षतस्तस्यैव परिज्ञानात्, तद्विपर्ययेऽपि व्यवसायस्यैव व्यापारात्। मनोऽपि तद्व्यतिरिक्तप्रत्यक्षप्रतिवेदनस्य तदेकत्वाभिमानादेव पृथगनवसायात्। अभिमतश्चैतद् ब्रह्मविदाम्–तत्प्रत्यक्षस्य विधिमात्रविषयत्वेन शीतोष्णादिभेदाविषयत्वात्। तद्विषयत्वे हि निषेधविषयत्वमपि भवेत् तद्भेदस्येतरेतराभावात्मकत्वेन निषेधात्मकत्वात्। अनवसितं तत्प्रत्यक्षं कथमस्तीति चेत्? सत्प्रत्यक्षमपि कथम्? एकत्वादिविकल्पसंहारे तस्यैव निर्व्याकुलस्यानुभवादिति चेत्; न; भेदविकल्पसंहारे तस्यापि निर्व्याकुलस्यानुभवात्; तथा च श्रूयते–**"यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्।"** [ बृहदा० ४।३।२३ ] इति; श्रूयत एव केवलं तत्संहारो न कदाचिदपि दृश्यत इति चेत्; न; इतरसंहारस्याप्यदर्शनात्। ततो यथा न निर्भेदसामान्यविषयं प्रत्यक्षम् अपि तु भेदविषयमेव तथैव प्रतीतेः, तद्विरुद्धत्वात् पावकानुष्णत्वं साध्याभासम्, तथा नासाधारणस्वलक्षणविषयं तत्, अपि त्वनुवृत्तव्यावृत्तद्विरूपजात्यन्तरगोचरमेव तथैव प्रसिद्धत्वात्, प्रमाणितत्वाच्चेति तद्विरुद्धत्वादेकान्तक्षणिकादिकमपि साध्याभासमेव। अत एवैकान्तनित्यत्वादेरपि तदाभासत्वं प्रतिपत्तव्यम्।

तद्वदेव चानुमाननिराकृतम्, अनुमानेनापि जात्यन्तरस्यैव बहिरन्तश्च वस्तुतानिरूपणात्। एवमागमनिराकृतमपि, आगमस्यापि तद्विषयस्यैव प्रामाण्यात् तदन्यविषयस्य तत्प्रतिक्षेपात्। अनभिप्रेतं तु साध्याभासं पारार्थ्यमात्रम्, साङ्ख्यस्य तत्सिद्धावप्यात्मसिद्धेरभावात्। सौगतादेरप्यनित्यत्वादिकं तत्प्रतिपत्तावप्यभीष्टस्य क्षणभङ्गादेरनिश्चयात्। प्रसिद्धं तु जैनं प्रति सौगतादेर्जात्यन्तरम्। ततः

१ उष्णत्वे। २ प्रत्यक्षम्।

स्थितम्—'**ततोऽपरम् । साध्याभासं विरुद्धादि साधनाविषयत्वतः ।**' इति ।

यद्यप्रसिद्धं साध्यं धर्मिणो विद्यमानत्वमपि साध्यं भवेत् तत्रापि विप्रतिपत्तेः सम्भवात्, तदाह—

**जातेर्विप्रतिपत्तीनां सत्ता साध्याऽनुपज्यते ।** इति ।

सुगममेतत् । विप्रतिपत्तीनामिति बहुवचनं संशयादिभेदेन तासां बहुत्वात् । न च साधयितुं शक्यत इति चोद्यस्याभिप्रायः । तत्रोत्तरमाह—

**तथेष्टत्वाददोषोऽयम् [ हेतोर्दोषत्रयं यदि ]** ॥४॥ इति ।

**तथा** तेन सत्ता साध्येति प्रकारेण **इष्टत्वात्** जैनस्याभिमतत्वात् **अदोषो** दोषो न भवति **अयम्** अनन्तर इति ।

पर इदानीमशक्यसाध्यता तस्यां दर्शयन्नाह—**हेतोर्दोषत्रयं यदि** इति । दोषाणामसिद्धत्वादीनां त्रयं **दोषत्रयं हेतोः** सत्तासाधनस्य **यदि** चेत् । तथा हि—यदि भावधर्मो हेतुः, कथमसिद्धे भावे सिद्धः ? सिद्धश्चेद्; भावोऽपि सिद्ध एवाव्यतिरेकात् । न हि तदव्यतिरिक्तं धर्मं प्रतिपद्यमानस्तमेव न प्रतिपद्येत व्याघातात् । ततो न तस्य साध्यत्वं प्रसिद्धस्यैव तत्त्वोपपत्तेः । अथोभयधर्मः; तदा व्यभिचारः, तस्य भावबदभावेऽपि भावात्, न तादृशो हेतुरतिप्रसङ्गात् । कथं पुनर्भावधर्मस्याभावे सम्भवो यतो व्यभिचारः ? परस्य वचनादिति चेत्; न; वचनात् तत्सम्भवे अतिप्रसङ्गात् । असम्भवन्तमपि ब्रुवाणो दृश्यत इति चेत्; न तर्हि मिथ्यावादित्वेनैव निगृहीतव्यो न व्यभिचारेण असम्भवतस्तदभावात्, अभूतमुद्भावयतश्च स्वयं निग्रहावाप्तेः । सम्भवत्येव कल्पितः स तत्रापि अमूर्तित्ववत् । अमूर्तित्वं हि मूर्तित्वप्रतिषेधमात्रमाकाशादाविव अभावेऽपि खरविषाणादावस्ति—अमूर्तमाकाशादि अमूर्तं खरविषाणमिति च व्यपदेशात्, तद्वदन्योऽपि कल्पितभावबदन्यत्रापि सम्भवन्न विरुध्यत इति चेत्; न; तस्य भावधर्मत्वाभावात्, अतत्स्वभावत्वात् अतत्कार्यत्वाच्च, अन्यथा कल्पितत्वानुपपत्तेः । व्यवहारमात्रात्तस्यापि तद्धर्मत्वे वस्तुतः पक्षधर्मत्वाभावात् स एव दोषो वक्तव्यो न व्यभिचारः, तस्यावस्तुसत्यसम्भवात् । "**वस्तुन्येष विकल्पः स्याद् विधेर्वस्त्वनुरोधतः ।**" [ ] इति स्वयमेवाभिधानात् । तत्र व्यभिचारोद्भावनमुपपन्नमिति चेत्; आस्तामेतत्, वक्ष्यमाणोत्तरत्वात् । यदि पुनरभावधर्मः; तदा विरुद्धः, भावसाधनार्थमुपनीतेनाभावस्यैव साधनात् । तन्न सत्तायां साध्यत्वं तत्साधनस्य दोषत्रयानतिवृत्तेः । तदुक्तम्—

"**नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ।**
**धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ॥**" [ प्र० वा० ३।१९० ] इति ।

विरुद्धत्व विरुद्धसाधनत्वात् । तच्च नासिद्धस्यैवाभावधर्मस्य चाक्षुषत्वादिवत् । नापि सिद्धस्य; तत्सिद्धावेवाभावस्यापि सिद्धेरव्यतिरेकात् । व्यतिरेके हि न तस्य तद्धर्मत्वमसम्बन्धात् । तत्कार्यत्वं

---

१ मानमपि—आ०, ब०, प० । २ बहुत्व न च—आ०, ब०, प० । ३ कल्पितो भावभावबद्—आ०, ब०, प० । ४—त्वायमसा—आ०, ब०, प० ।

सम्बन्ध इति चेत् ; न ; अभावात्मनस्तदभावात्, भावात्मनश्च तद्धर्मस्यासम्भवात्। सम्भवन्तोऽपि न तत्कार्यत्वम्, अभावस्याहेतुत्वात्। तत्र व्यभिचारस्य विरोधस्य चोद्भावनमुपपत्तिमदिति चेत्; सत्यम्, अस्त्ययमुद्भावयितुर्दोषः, शास्त्रकारस्तूभयाभावधर्मयोरनभ्युपगमं परिहारं मन्यमानः परिहारान्तरमनुक्त्वा भावधर्मस्यासिद्धत्वमेव परिहरन्नाह–

**भ्रान्तेः पुरुषधर्मत्वात् [ यथा वस्तुबलागमम् ]।** इति।

अत्र 'अदोषोऽयम्' इत्यनुवर्तनीयम्। तदयमर्थः–यदुक्तम्–"**यो हि भावधर्मं तत्र हेतुमिच्छति स कथं भावं नेच्छेत्**" [ प्र० वा० स्ववृ० १।१९३ ] इत्ययमदोषो दोषो न भवति, **भ्रान्तेः** भावधर्ममिच्छतोऽपि भावानिच्छासम्भवात्, तस्याश्च **पुरुषे** तद्धर्मत्वेन **सम्भवात्**। एतदेवोदाहरणेन दर्शयन्नाह–

**यथा वस्तुबलागमम्।**
**प्रपेदे सर्वथा सर्ववस्तुसत्तां प्रतिक्षिपन् ॥ ५ ॥** इति।

**यथा** इत्युदाहरणोपदर्शनार्थम्। **प्रपेदे** प्रपन्नवान्। किम् ? **वस्तुबलागमम्** वस्तु तात्त्विकं बलमभिमतसाधनसामर्थ्यं यस्य स वस्तुबलः स चासावागमश्च, आगमो ज्ञानं वचनं वा आगच्छत्यनेन आगमयत्यनेन वेति व्युत्पत्तेः, गमेश्च बोधार्थत्वात् वस्तुबलागमः तमिति। अनेन भावधर्ममिच्छन्नपीति दर्शितम्। प्रसिद्धश्चैतद् बौद्धस्य–"**इदं वस्तुबलायातं यद्वदन्ति विपश्चितः।**" [ प्र० वा० २।२०९ ] इति वचनात्। क एवं प्रपेदे ? इत्याह–**सर्वथा** सर्वेण पररूपादिप्रकारेण स्वरूपादिप्रकारेण च **सर्वस्य** चेतनस्येतरस्य च **वस्तुनः सत्तां प्रतिक्षिपन्** निराकुर्वन् इति। अनेनापि भावं नेच्छतीति प्रतिपादितम्। इदमपि प्रसिद्धमेव–

"**यथा यथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥**" [ प्र० वा० २।२०९ ]

इत्यभिधानात्। विविच्यन्ते इति च न नानात्वस्य वचनम् अपि तु विशरणस्यैव। तथा च व्याख्यानम्–"**तस्माद्यथा यथा वस्तु चिन्त्यते तथा तथा विशीर्यत एवेति किमत्र कुर्मः।**" [ प्र० वार्तिकाल० २।२०९ ] इति। कुतः पुनस्तदागमस्य भावधर्मत्वमिति चेत् ? अभावधर्मस्य वस्तुबलत्वाभावेन ततो भावप्रतिक्षेपायोगात्। तद्बलत्वमपि व्यवहारत एव तस्येति चेत्; न; तथाविधात्ततो भावप्रतिष्ठानस्यापि भावात् कथमेकान्तिकस्तत्प्रतिक्षेपो यत इदं सूक्तम्–"**विज्ञानं विज्ञानरूपतयापि शून्यमिति सकलधर्मशून्यतैव न्याय्या।**" [ प्र० वार्तिकाल० २।२०९ ] इति। ततः प्रतिष्ठापरिहारेण प्रतिक्षेपमेव कुर्वता तात्त्विकमेव भावधर्मत्वं तस्याभ्युपगन्तव्यम्। तदाह–

**भावनादभ्युपैति स्म भावधर्ममवस्तुनि।** इति।

**भावनात्** भावप्रतिक्षेपस्य स्वपरबुद्धौ भवतः करणात् **अभ्युपैति स्म** सौगतो वस्तुबलागममिति सम्बन्धः। कीदृशम् ? **भावधर्मं** तदन्येन तद्भावनानुपपत्तेः। कस्मिन् ? **अवस्तुनि** भावप्रतिक्षेपे। ततो युक्तं भावमनिच्छतोऽपि भावधर्मस्येष्टत्वात्तस्य हेतुत्वमसिद्धत्वाभावात्। तदयमत्र

---

१–पगमपरि–ता०। २–च्छतो भा–आ०, ब०, प०। ३ विज्ञानतयापि आ०, ब०, प०।
४ तथाह आ०, ब०, प०।

प्रयोग.—अस्ति चेतनाचेतनात्मकं वस्तु वस्तुबलागमसद्भावात् । धर्मो हि सिध्यन् धर्मिणमवबोधयति अन्यथा तदनुपपत्ते । ततो यदुक्तम्—

**"भावोपधानमात्रे तु साध्ये सामान्यधर्मिणि ।**
**न कश्चिदर्थः सिद्धः स्यादनिषिद्धश्च तादृशम् ॥"** [ प्र० वा० ३।१८७ ] इति ।

तत्प्रतिक्षिप्तम् ; भावोपधानमात्रस्य सत्ताविशेषणमात्रस्य सामान्यधर्मिणो वस्तुमात्रस्यापि विप्रतिपत्तिविषयत्वे तत्सिद्धित एव स्वार्थसिद्धे. **'न कश्चिदर्थः सिद्धः स्यात्'** इत्यस्यायोगात् । कथञ्चायम् **"इदं वस्तुबलायातम्"** [ प्र० वा० २।२०९ ] इत्यादिना भावोपधानमात्रमपि साध्यं प्रतिषेधन्नेव **"अनिषिद्धं च तादृशम्"** इति ब्रूयात् न चेत् प्रतिक्षणोपक्षीणबुद्धि. । अथ व्यवहारे तस्यानिषिद्धत्व निषिद्धत्वं तु परमार्थे, ततो मार्गभेदात् न तद्वचनयो· परस्परतो विरोध इति चेत् ; व्यवहारतोऽपि तन्निषेधे किं नश्यति ? साध्यत्ववत् साधनत्वमपि नश्येत्, अस्ति च तत् शब्दे नित्यत्वस्य सत्येव ( सतैव ) शुद्धाशुद्धरूपेण साधनादिति चेत ; न तर्हि परमार्थतोऽपि तन्निषेधो भावप्रतिक्षेपस्यापि सतैव केनापि साधनोपपत्ते. । असतापि तत्साधने तदनित्यत्वसाधनमपि स्यात् । तन्न व्यवहारेऽप्यनिषिद्धमित्याद्युपपन्नमिति कथं न तद्वचनयोर्विरोधः ? कथं वा निषिद्धस्य साधने सिद्धसाधनत्वम् ।

तदेवं निरुपाधिकं सत्त्वं प्रसाध्य सोपाधिकं साधयन्नाह—

**असिद्धधर्मिधर्मत्वेऽप्यन्यथानुपपत्तिमान् ॥६॥**
**हेतुरेव यथा सन्ति प्रमाणानीष्टसाधनात् ।** इति ।

**असिद्धस्य** अनिश्चितस्य **धर्मिणो धर्मत्वेऽपि** शब्दान्न केवल सिद्धधर्मिधर्मत्वे, **हेतुरेव** गमक एव तद्धर्मत्वेऽप्यसिद्धिदोषाभावस्य निरूपितत्वात् । कीदृश. ? **अन्यथा** साध्याभावप्रकारेण **अनुपपत्तिमान्** असम्भववान् । अत्रोदाहरणम्—**'यथा'** इत्यादि । यथेत्युदाहरणप्रदर्शने । **सन्ति** विद्यन्ते **प्रमाणानि** । बहुवचन प्रतिपत्तृभेदेन तद्बहुत्वात् । कुत सन्ति ? **इष्टसाधनात्** इष्टस्य भावनैरात्म्यस्य साधनात् । क पुन प्रमाणोपाधिक सत्त्व प्रतिपन्नं येन तदन्वयदृष्टिरिष्टसाधनस्येति चेत् ? न, तददृष्टावपि अन्यथानुपपत्तिमत्त्वेन गमकत्वात् । मा भून्नामान्यथानुपपत्तिमतोऽन्यथा गमकत्व, तथा गमकत्वम्, तथोपपत्त्यभावे कथमिति चेत् ? न ; अन्यथानुपपत्तेरेव पर्युदासवृत्त्या तथोपपत्तित्वात्, तस्या· प्रसज्यप्रतिषेधरूपाया अप्रातीतिकत्वात् । हेतुस्वरूपे तत्प्रतिपत्तिरेव च तथोपपत्तेरपि प्रतिपत्तिः, बहिस्तदभावेऽपि दोषाभावात् । ततो नेदमत्र दूषणम्—

**"उपात्तभेदे साध्येऽस्मिन् भवेद्धेतुरनन्वयः ।"** [ प्र० वा० ३।१८८ ] इति ।

बहिरनन्वयेऽपि क्षतेरभावात् अन्तरनन्वयस्यासिद्धत्वात् । कुत पुनरिष्टसाधनं प्रमाणादेव न तद्विपर्ययादपीति चेत् ? न ; ततोऽनिष्टस्यापि साधनात्, प्रतिपक्षस्य व्यवच्छेदानुपपत्तेः । साधयता

---

१ 'भावोपादानमात्रे"—प्र० वा० । २ भावोपादानमा—प० । ३ सत्येव के—आ०, ब०, प० । ४ असतोऽपि आ०, ब०, प० । ५—हारे तस्यानि—आ०, ब०, प० । ६—धनस्य चेत् आ०, ब०, प० । ७ तथानुग—ता० । ८ अन्यथानुपपत्तिप्रतिपत्तिरेव । ९—स्तदा मा—आ०, ब०, प० ।

हि स्वपक्षं प्रतिपक्षो व्यवच्छेत्तव्यः, स्वपक्षसाधनस्यैवान्यथानुपपत्तेः। ततो वस्तुषु भावव्यवच्छेदेनाभावं साधयता प्रमाणादेव तत्साधनमनुमन्तव्यम्। भावनैरात्म्यवादिनः तत्साधनमपि नास्त्येव तत्कथमन्यथानुपपत्तिमत्त्वम् असिद्धस्य तदनुपपत्तेरिति चेत्? न; "इदं वस्तुबलायातम्" [ प्र० वा० २।२०९ ] इत्यादेस्तद्वचनादेव तत्साधनस्य श्रवणात्। तदपि स्वप्नवदेव न तत्त्वत इति चेत्; किमनेन कर्त्तव्यम्। इष्टसाधनस्याभावसाधनमिति चेत्; सिद्धमिष्टसाधनं तदभावसाधनस्यैव तत्त्वात्। इदमपि स्वप्नवदेव न तत्त्वत इति चेत्; न; अत्रापि 'किमनेन' इत्यादेः प्रसङ्गादनवस्थादोषाच्च। ततो दूरमनुसृत्यापि किञ्चिद् युक्त्या तात्त्विकमेव तच्च तत्प्रयोजनञ्च वक्तव्यमिति कथमिष्टसाधनस्यासिद्धिः यतोऽन्यथानुपपत्तिर्न भवेत्? प्रमाणादिष्टसाधने प्रमाणस्यापि तदन्यतः साधनं तस्यापि तदन्यतः साधनमित्यनवस्थानम्। स्वतस्तत्साधने भावनैरात्म्यस्यापि तत एव तदिति किं प्रमाणेन यतस्तत्साधनात् तद्व्यवस्थाप्यत इति चेत्? अत्राह–

**इष्टसिद्धिः परेषां वा [ तत्र वक्तुरकौशलम् ] ॥७॥** इति।

परं ब्रह्म तस्यैव परत्वेन ब्रह्मविदा प्रसिद्धत्वात् तदिच्छन्तीति **परेषां 'वा'** इति समुच्चये तेषामपि न केवलं बौद्धानाम्। किम्? **इष्टस्य** ब्रह्मणः **सिद्धिर्भवेदिति** शेषः। तात्पर्यम्–

स्वत एव यथा भावनैरात्म्यं न प्रसिद्ध्यति।
न प्रमाणात्प्रमाणे तन्नैरात्म्यस्यानवस्थितेः ॥ १३४ ॥
सर्वभेदात्मकं तद्वत् ब्रह्म सिद्धं स्वतो भवेत्।
प्रमाणान्नान्यतस्तस्मिन् तद्भेदानवस्थितेः ॥ १३५ ॥

ततः किम्? इत्याह–**'तत्र वक्तुरकौशलम्'** इति। तत्र तस्यां परेषामपीष्टसिद्धौ **वक्तुः** सर्वाभाववादिनः **अकौशलं** स्वपक्षस्य तत्प्रत्यनीकव्यवच्छेदेनाव्यवस्थापनादनिपुणत्वम्। ननु तदिष्टसिद्धिरप्यभावरूपैव **"नेह नानास्ति किञ्चन"** [ बृहदा० ४।४।१९ ] इति **"स एष न"** [ बृहदा० ३।९।२६ ] इति च भेदप्रतिषेधस्यैव तदाम्नायेन श्रवणादिति चेत्; न; तेनापि तस्य पर्युदासस्यैव श्रवणात् न तुच्छस्य। अन्यथा **"एतदात्म्यमिदं सर्वम्"** [ छान्दो० ६।८।७ ] इत्यादिना तदसात्म्यप्रसङ्गात्। ततः सत्त्वैव सर्वभेदात्मिका तदिष्टसिद्धिः। इदमेवाह–

**अतीतानागतादीनामपि सत्ता [ अनुषङ्गवत् ]।** इति।

**आदि**शब्दाद्वर्तमानानाम्। **अपि**शब्दात् स्वभावदेशभिन्नानाञ्च भावानां **सत्ता** विद्यमानता। 'इष्टसिद्धिः परेषाम्' इति सम्बन्धः। कीदृशी सा? इत्याह–**अनुषङ्गवत्** इति। अनुषङ्गो देशकालादिभिरव्यवच्छेदः, तेन वर्तते दीप्यत इत्यनुषङ्गवत्, वर्तेः दीप्त्यर्थस्य विधि सत्येवरूपात्। कथमिष्टसिद्धिरीदृश्यपि स्वतः परेषाम्? **"दृश्यते अग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः।"** [ कठोप० ३।१२ ] इति बुद्धिकृताया एव तस्याः श्रवणादिति चेत्; भवदिष्टसिद्धिरपि न स्वतो भवेत् **"यथा यथार्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा।"** [ प्र० वा० २।२०९ ] इति

---

१–पि किमनेनकर्त्तव्यमिष्टसाधन तदभावसाधनस्यैव तत्त्वात्, इदमपि स्वप्नवदेव न तत्त्व इति चेन्नात्रपि किम–आ०। २ "दृश्यते त्वग्र्यया"–कठोप०।

चिन्ताकृतताया एव तस्या अप्याकर्णनात् । अभावरूपैव चिन्तेति चेत्; बुद्धिरपि भावरूपैवेति समः समाधिः । अतो न प्रमाणाभावे परस्येवात्मनोऽपीष्टसिद्धिः । अस्तु तर्हि संवृत्यैव प्रमाणमिति चेत्; किमिदं संवृत्येति ? स्वरूपेणेति चेत्; वस्तुसदेव तर्हि प्रमाणं स्वरूपभावात् । तथा च परेषां जैनानामेवेष्टसिद्धिः सिषाधयिषितप्रमाणप्रतिष्ठानां न सौगतानाम्, सति तस्मिन् सर्वाभावस्याप्रतिष्ठितेः । तदाह–**इष्टसिद्धिः** इष्टस्य साधयितुमभिप्रेतस्य प्रमाणस्य सिद्धिः निर्णीतिः **परेषां वा** जैनानामेव वेत्यस्यावधारणार्थत्वात् । दूषणान्तरमाह–**तत्र** तस्मिन्स्वरूपे संवृत्यर्थे **वक्तुः** संवृत्याऽस्ति प्रमाणमिति ब्रुवाणस्य **अकौशलं** वचनवैदग्ध्याभावः । प्रसिद्धार्थं स्वरूपपदं परित्यज्य तद्विपरीतस्य संवृतिशब्दस्योपादानात् यथा 'तरुपङ्क्तिरसङ्कैव मुनेः' इत्यनुक्त्वा 'तेर्वाल्युर्वेवर्षः'[1] इति ब्रुवाणस्य । तत्र संवृत्येति स्वरूपेणेत्यर्थः । न पररूपेणेत्यपि; तत्रापि वस्तुतः प्रमाणसिद्ध्या परेषामेवेष्टसिद्धेर्वचनकौशलाभावस्य च तदवस्थत्वात् । अपि च, यदि पररूपम्; कथं तेन[3] भावः ? स चेत्; कथं पररूपं व्याघातात् । अव्याघातेऽप्याह–**अतीतानागतादीनामपि सत्ता** इति । तेषामपि सत्त्वं पररूपेण प्राप्नुयादित्यर्थः, न केवलं प्रमाणस्यैवेत्यपिशब्दः । तथा च–

> भावावबोधरूपेणैवातीतेन भवेदयम् ।
> भावनैरात्म्यबोधस्ते भाविकाल्समन्वयी ॥ १२३६ ॥
> तेनैव भावबोधः स्यादतीतो भावनाऽथवा ।
> तद्गोचरो विचारश्च सर्वोऽप्येवं वृथा भवेत् ॥ १२३७ ॥
> सत्तापि तेन पूर्वस्मिन् भावग्राहनिवर्तनात् ।
> परत्रापि विना तेन भावनैरात्म्यनिर्णयात् ॥ १२३८ ॥
> प्रतिपाद्यो न कश्चित्स्यादेवमन्यत्र कथ्यताम् ।

तत्र पररूपेणेत्यपि तदर्थः । अयं तर्हि स्यात् संवृत्या स्वपरविकल्पनिर्मुक्तयेति चेत्; न ? तन्निर्मुक्तेरप्यस्य स्वरूपत्वेन तत्रापीष्टसिद्धिरित्यादेर्दोषस्याविशेषात् । तदाह–**अनुषङ्गवत्** अनुषञ्जनं पूर्वदोषस्यानुगमोऽनुषङ्गः स विद्यतेऽस्येति **अनुषङ्गवत्** । तन्निर्मुक्तिः संवृतिरिति परमतं तस्यानु[5]क्तस्य प्रक्रमवशात् आगमात् । यदि पुनस्तुच्छैव तन्निर्मुक्तिः; तर्हि स्पष्टमभिधातव्यम्–'न कथञ्चिदप्यस्ति प्रमाणम्' इति, किं संवृत्याऽस्तीति ? प्रथमत एव तदभावाभिधाने तत्त्वगवेषिणामुद्वेगात् न तत्त्वमतिपत्ताविभिमुख्यं भवेत्, ततो मा भूत्तथोद्वेग इति प्रच्छादिताभावस्य प्रमाणस्येदमभिधानं संवृत्याऽस्तीति । तदुक्तम्–

"**सर्वमस्तीति वक्तव्यमादौ तत्त्वगवेषिणा**" [ ] इति ।

न चैवं वदतः किमप्यकौशलमनुद्वेगवचनादेव कौशलोपपत्तेरिति चेत्; न; एवं नित्येश्वरप्रधानादेरपि वचनप्रसङ्गात्, तदभावस्याप्रच्छादितस्य वचने लोकस्योद्वेगाविशेषात् । उद्विजतां वा लोको मा वा यथावस्थितमेव तु तत्त्वं तत्त्वविदा वक्तव्यम्, अन्यथा वञ्चकत्वप्रसङ्गादिति चेत्; न;

---

१ तर्वाद्युर्वेवर्षं इ–आ०, ब०, प० । तर्वालिः तरुपङ्क्तिः ऊर्वेव विशालैव ऋषेः मुने. । २–द्विर्व–आ०, ब०, प० । ३ तेनाप्य–आ०, ब०, प० । ४–सिद्धेरि–आ०, ब०, प० । ५–नुयुक्त–आ०, ब०, प० ।

प्रमाणतत्त्वस्यापि तथैव वक्तव्यत्वापत्ते । अथ तत्त्व पश्चात् सवृत्त्यर्थपर्यालोचनपाटवाल्लोक स्वयमेव प्रत्येति । यदुक्तम्–

"पश्चादवगतार्थस्य भावग्राहो निवर्तते ।" [ ] इति ;

ततो न पूर्वमेव तद्वचनेनोद्वेग क्रियत इति चेत्, ईश्वरादितद्वचनेनापि न कर्तव्य तस्यापि तथैव प्रतीते । तत सवृत्त्या प्रमाणादिवत् ईश्वरादिकमपि सौगतेन सिद्धान्तीकर्तव्यम् । तत्राह–**इष्टसिद्धिः परेषां वा** इति । **इष्टस्य** लोकप्रतीतस्येश्वरस्य **सिद्धिः** सवृत्त्या स्यात् **परेषां** प्रमाणादीनामिव 'वा' इत्यस्येवार्थत्वात् । तत किम् ? इत्याह–'**तत्र**'इत्यादि । तत्रेति तस्येत्यस्यार्थे द्रष्टव्य । तदयमर्थ –सैव तस्येष्टस्य वस्तुसंवदत बौद्धस्य । कथ वस्तु ? **अनुषङ्गवत्** । अनुषङ्गो दोषोऽनुषज्यमानत्वात् तद्वत् यथा भवति, एव न कौशलम् अकौशलमभिमतस्यैव दोषवत्त्वेन वचनात् । अपरमप्यतिप्रसङ्गमाह–'**अतीत**' इत्यादि । अतीताना घटादीना कपालादिषु तेषाञ्चानागताना मृदादिषु आदिशब्दाद्वर्तमानाना दण्ड चक्रादीना परस्परात्मनि **सत्ता** शक्तिरूपेण साङ्ख्यसिद्धा **सापि** न केवलमिष्टसिद्धिरेव सवृत्त्या सौगतस्य भवेत् । 'तत किम्' इति प्रश्ने पूर्ववदत्रापि '**तत्र**' इत्यादि वक्तव्यम् । तत्र सवृत्त्याऽस्तित्व प्रमाणाना यतस्तत्साधन सिद्धसाधन भवेत् ।

अभावैकान्ते विरोध एवोद्भावयितव्य –'यदि तदेकान्तो न किञ्चित्तत्साधनम्, तच्चेत् न तदेकान्त' इति किं सत्तासाधनेन ? तावता तद्वादिन पराजयादिति चेत्, उच्यते– विरोधो नाम हेतोरेव विपक्षगोचरो व्यापार स कथमसतस्तस्य स्यात् ? सतश्चेत्, सिद्ध तदुद्भावन भावसाधन तस्य तन्नान्तरीयकत्वात् । अस्तीद किन्तु तेन तदेकान्तनिषेध एव कर्तव्यो भाव साधयतापि तस्यावश्यकर्तव्यत्वात्, अन्यथा परस्यापरिक्षीणपक्षताप्राप्तेरिति चेत्, न, तन्निषेधस्य नीरूपस्य करणेऽपि तत्प्राप्तेरविशेषात् । भावरूपस्य तु करण भावसाधनमेव । न चायमप्येकान्त, यस्मान्न हि तस्य स्वत प्रतिपत्ति, निष्प्रतिपत्ते । नापि परत तदेकान्ते परस्याभावात् । भावे तद्विरोध, परस्पराव्यवच्छेदस्यापि भावात् । अवस्त्वेव परम् अविद्याकल्पितत्वात्, न हि तेन तदेकान्तो विरुध्यते "चन्द्रमस्येकत्वैकान्तवत् द्वित्वेनेति चेत् ? न, अभावैकान्तस्याप्येव परत प्रतिपत्तिप्रसङ्गात् । सति तस्मिन् कथ तदेकान्त इति चेत् ? न, तत्सत्त्वस्य सावृतत्वात् । वस्तुसता हि तेन तद्विरोधो न सावृतेन तदनुकूलत्वात् । सावृतात् कथं प्रतिपत्तिरिति चेत् ? अविद्योपकल्पितात् यथम् ? न ततोऽपि तत्प्रतिपत्ति भेदारोपस्यैव निवृत्ते । परं हि परैराम्नाय ज्ञानमुच्यते, तच्च "अस्थूलमनल्पमह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" [ बृहदा० ३।८।८ ] इति स्थूलादिभेदप्रपञ्चदासप्रतिभासितयोपनायमानमखिलमपि भेदारोपमभ्यासपाटवादिनि- वर्त्य स्वयमपि निवर्तते विषवत् । 'इष्टं हि विष विषान्तरमुपशमय्य पुनरात्मानमप्युपशमयतीति,

१–दि त–आ०, ब०, प० । २–ति सर्वस्येत्य–आ० । ३ तत्रेष्टस्य प० । ४ दोषत्वेन आ०, ब०, प० । ५–मस्य स्या–आ०, ब०, प० । ६–णप्रेक्षत –आ०, ब०, प० । अगण्डितरूपता । ७ चन्द्रस्यैक– आ०, ब०, प० । ८ विषं हि आ०, ब०, प० ।

तन्निवृत्तौ च निराकुलो भावैकान्तः परनिःश्रेयसरूप इति चेत् ; न ; तद्वदभावैकान्तस्याप्यव्याकुलत्वापत्ते, तत्रापि हि परं [1]परैर्विचारज्ञानं[2]मूरीक्रियते । तदपि न चित्रमेकं वस्तु ; विरोधात् । नापि निष्कलस्वलक्षणरूपम् ; अपरिबोधगोचरत्वादिति भावप्रतिषेधपरतयोपजायमानमशेषमपि भावारोपमपसार्य गरलनिदर्शनबलेनात्मानमप्यपसारयदभावैकान्तमेव तन्निःश्रेयसमव्याकुलमवकल्पयेत् । कथं तादृशेनाप्यतद्विषयेण तदवकल्पनमिति चेत् ? आम्नायज्ञानेनापि कथम् ? न हि तस्यापि तद्विषयत्वम् । **"य[3]ः सर्वेषु वेदेषु तिष्ठन् सर्वेभ्यो वेदेभ्योऽन्तरो यं सर्वे वेदाः न विदुर्यस्य सर्वे वेदाः शरीरं यः सर्वान् वेदानन्तरो यमयति स त्वन्तर्याम्यमृतः ।"** [ बृहदा० ३।७।१५ ] इति श्रुत्यैव तस्य तदविषयत्वनिवेदनात् । स्वसंवेदनादेव तस्य तत्त्वावकल्पनमिति चेत् ; न ; विवादात् । तदवस्थागतस्य न विवाद इति चेत् ; तदपि कथं तस्यापरिज्ञाने ? सति हि तत्परिज्ञाने तद्गतं निर्विवादत्वमन्यद्वा सुपरिज्ञातं भवति नान्यथा । न चान्यतस्तत्परिज्ञानं भवतः सम्भवति, **"विज्ञानान्तरमरे (विज्ञातारमरे) केन विजानीयात्"** [ बृहदा० ४।५।१५ ] इति तदनन्यवेद्यताया एव श्रवणात् । तत्र भावाभावैकान्तयोः परस्परतोऽविशेषो यत एकत्र विरुद्धमिष्टसाधनं परस्य[4] सत्त्वं साधयेत् तत्रापि तदभावात्, स्वपर[5]भावाभ्यां भावाभावात्मकस्य साधयत्येव तत्र तस्य प्रतीतेः । ततो युक्त विरोधादपि सत्त्वसाधनम् ।

विज्ञानवादी प्राह–मा भूदभावैकान्तः, तथापि विज्ञानमेवास्तु न बहिरर्थः तस्य तद्व्यतिरेकेणाप्रतीतेरिति ; सोऽपि न प्रातीतिकवादी ; यतः–

अविवेके हि नीलादिज्ञानयोरवकल्पिते ।
बहिरेव भवेद्देहाद् बोधो नीलादिरूपवत् ॥ १२३९ ॥
तज्ज्ञानरहिताद्देहात्कथमेवं ततो वचः ।
**"दर्शनं नीलनिर्भासं नार्थो बाह्यः"** इति स्फुटम् ॥ १२४० ॥
तद्ज्ञानरहितोऽप्यन्यो[8] यद्यन्यावगतं वदेत् ।
सुगतावगतं तत्त्वं किन्न वक्ति कृषीवलः ॥ १२४१ ॥
अन्तः शरीरमेवायं नीलादिर्यदि बोधवत् ।
अन्तर्गतगिरिः कायो गिरेरपि पृथूभवेत् ॥ १२४२ ॥
अन्तर्गतः कुतश्चायं [9]बहिष्ठेनावभासताम् ।
वासनाप्रकृतेः [10]तद्वयसंस्तद्बहिर्भासताम् ॥ १२४३ ॥
तथा च शून्यवादाप्तेः ज्ञानवादो विभज्यते ।
न च ज्ञानं निराकारं सौगतैरुपगम्यते ॥ १२४४ ॥

---

१ बौद्धैः । २–मुररीक्रि–आ०, ब०, प० । ३ "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तर ......"–बृहदा० । ४–स्य तत्त्वं सत्त्वं सा–आ०, ब०, प० । ५–परभावाभावाभ्या–आ०, ब०, प० । ६ प्र० वा० २।३३५ । ७ 'देहः'–ता० टि० । ८ "देहबहिर्गतबोधशतम्"–ता० टि० । ९ बहिश्चेन्नाव–आ०, ब०, प० । १०–स्तद्वदसंशद्वहि–आ०, ब०, प० ।

यत्र शून्यवादस्य प्रत्याख्यानं प्रकल्प्यताम् ।
सतोऽपि ग्रहणस्तस्य विशेषः कल्प्यतां कुतः ॥ १२४५ ॥
अनित्यत्वाविभुत्वादेरिति चेन्नेदमुत्तरम् ।
नीलादेरिव तस्यापि वासितस्येव भासनात् ॥ १२४६ ॥
सन्नेव यदि नीलादिर्निर्भासत्वेन बुध्यते ।
बहिर्भावोऽपि सन्नेव तथा किन्नावबुध्यते ॥ १२४७ ॥
न हि तत्रान्यथा ज्ञानं कदाचिदपि दृश्यते ।
बाधितो येन सोऽपि स्याद् बहिर्भावः प्रतीतिमान् ॥ १२४८ ॥

स्यान्मतम्–शरीरनीलादितदन्तरालप्रतिभासमेकमेव ज्ञानम्, न तत्कस्यचिदन्तर्नापि कुतश्चिद् बहिः स्वरूपं एवानस्थानात् तदयमदोष इति, [1]तन्न, 'दूरादेवाहमत्रस्थो नीलादिकमवलोकयामि' इति नीलादितद्वेदनयोः भेदस्यैवानुभवतः प्रतीतेः । तस्याश्च भेदानवगमे बुद्धिचैतन्ययोर्भेदप्रतीतेरप्यभेदावगमो मा भूत्, तथा च यथा साङ्ख्यं प्रत्येतस्योच्यते–

"अभिन्नवेदनस्यैक्ये यद्येवं वह्निभेदवत् ।
[3]सिद्ध्येद्साधनत्वेऽस्य न सिद्धं भेदसाधनम् ॥" [प्र० वा० २।२७८] इति ।

तथा च भवन्तं प्रत्यस्माभिरिदमुच्यते–

विभिन्नवेदनाद् भेदे यद्येव तदभेदवत् ।
सिद्ध्येद्साधनत्वेऽस्य सिद्धं नाभेदसाधनम् ॥ १२४९ ॥ इति ।

कथं पुनर्नीलादेः तद्वेदनाद् भेदे 'नीलादि प्रतिभासते' इति प्रतिभाससामानाधिकरण्येन प्रतिपत्तिः, अप्रतिभासात्मनि तदनुपपत्तेरिति चेत्; अभेदेऽपि 'नीलादि' इत्येव[4] 'प्रतिभास' इत्येव वा भावात् कथं तथा प्रतिपत्तिः? अन्वयव्यतिरेकाभ्यां भेदपरिकल्पनात्, अन्वितो हि प्रतिभासः तस्य पीतादावपि भावात्, व्यतिरिक्तश्च नीलादिर्विपर्ययात् ।

तदनेन विरुद्धधर्माध्यासेन भेदपरिकल्पनमुपस्थाप्यमानं सामानाधिकरण्यव्यवहाराय कल्पते इति चेत्, उच्यते–

विरुद्धधर्माध्यासोऽयं तत्त्वतो यदि विद्यते ।
नीलतज्ज्ञानभेदः स्यात् तात्त्विकः कल्पितः कथम् ॥ १२५० ॥
कल्पितश्चेत्तदध्यासः कुतस्तत्कल्पनं मतम् ।
अन्यतश्चेत्तदध्यासादनवस्था प्रसज्यते ॥ १२५१ ॥
तद्भेदकल्पनादेव प्राच्यात्तद्भेदकल्पनम् ।
प्राच्यस्यापि तत प्राच्यात्र चेद्दोषोऽनवस्थितिः ॥ १२५२ ॥

---

१–यत्रापि–प० । २ तत्र प० । ३ सिद्धे साधनचेऽस्य न सिद्धि भेदसाधनम् । ता० । ४–व भाव तेरित्येवाभा–आ०, ब०, प० ।

अनादेस्तत्प्रबन्धस्य प्रवृत्तेरिति चेत्तथा ।
भेदस्तात्त्विक एवासौ किन्न तत्कल्पितो मतः ॥ १२५३ ॥
अभेदस्यैव संवित्तेः स्वतश्चेन्नीलवेदनम् ।
तद्भेदकल्पनं चेतद्द्वयं केनावगम्यताम् ॥ १२५४ ॥
तद्व्यापारं कथं विद्यादजानानश्च तद्द्वयम् ।
एकत्वं दर्शनाभेदः कल्पनादिति यद्वदेत् ॥ १२५५ ॥
केनापि तद्द्वयज्ञाने जानीयादर्थमप्यसौ ।
ज्ञानस्यैवान्यवेद्यत्वं नार्थस्येत्यव्यवस्थितेः ॥ १२५६ ॥

तदाह–

**अतश्च बहिरर्थानामपि सत्ता प्रसाध्यते ॥ ८ ॥** इति ।

**अतः** अस्मादनन्तरसाधितात् प्रमाणात्, सामान्योक्तावपि प्रत्यक्षादिति प्रतिपत्तव्यम् । अनुमानस्य वक्ष्यमाणत्वात् । चशब्दः सौष्ठवे । **बहिरर्थानां** जडनीलादीनाम् **अपि**शब्दान्न केवलं विज्ञानानां **सत्ता** विद्यमानता **प्रसाध्यते** प्रकर्षेण सिद्धिं नीयते । कथं पुनः प्रत्यक्षतस्तत्साधनम्, तस्य तदभावेऽपि तन्निर्भासिनो दर्शनात्[1] तैमिरज्ञानवदिति चेत्; स्वरूपसाधनमपि न भवेत्, तदभावे तन्निर्भासिनोऽपि दर्शनात् भ्रान्तस्य विभागवेदनवत्[2] । न तद्विभागस्य प्रत्यक्षतः साधनं तद्विवेकस्यैव साधनादिति चेत्; न तर्हीदमुपपन्नम्–

"ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ।" [ प्र० वा० २।३५४ ] इति ।

तद्भेदविवेकवेदिन एव तल्लक्षणानुपपत्तेः । प्रत्यक्षजन्मनो विकल्पादेव तल्लक्षणमिति चेत्; न; ततोऽपि व्यतिरिक्तस्यार्थवेदलक्षणात्[3] । अव्यतिरेके तदात्मा तत्त्वतः सविभागः स्यात् तत्प्रत्यक्षास्यापीति न सूक्तमेतत्–"अविभागोऽपि बुद्ध्यात्मा" [ प्र० वा० २।३५४ ] इति । तदात्मन्यपि तल्लक्षणमन्यत एव विकल्पादिति चेत्; न; पूर्वकप्रसङ्गादनवस्थितेश्च । ततो यस्यापि दूरं स्वत एव कुतश्चित्तल्लक्षणमनुमन्तव्यम् । एवञ्च यथेदमर्थग्रहापेक्षयोच्यते–

"यथाकथञ्चित्तस्यार्थरूपं मुक्त्वावभासिनः ।
अर्थग्रहः कथं सत्यं न जानेऽहमपीदृशम् ॥" [ प्र० वा० २।३५३ ] इति ।

तथेदं स्वग्रहापेक्षया वक्तव्यम्–

यथा कथञ्चित्तस्यात्मरूपं मुक्त्वावभासिनः ।
आत्मग्रहः कथं सत्यं न जानेऽहमपीदृशम् ॥ १२५७ ॥ इति ।

विभागग्रहस्य सबाधत्वादसत्यत्वेऽपि सत्यत्वमेव विपर्ययात्[4] संवित्तिमात्रग्रहस्येति चेत्; न; अर्थग्रहस्यापि सत्यत्वापत्तेः । न हि तद्ग्रहोऽपि सर्वः सबाध एव; बाधस्यैवाभावप्रसङ्गात्, सत्येव निर्बाधमरीचिग्रहे जलग्रहस्य बाधोपलम्भात् । वास्तवञ्च मरीचौ [5]तज्ज्ञानस्य निर्बाधत्वं न वासनास्थैर्यात्,

१ दर्शनादिविभा–आ०, ब०, प० । २ "ग्राह्यग्राहकसंवित्तिविभागवेदनवत् ।"–ता० टि० । ३ –र्थस्य सविचित्वदिति चालक्षणात् आ०, ब०, प० । ४ "निर्बाधत्वात्"–ता० टि० । ५ मरीचिज्ञानस्य ।

एवं स्वरूपेऽपि प्रसङ्गात् । ततो मरीचिरर्थ एव । जलं तर्हि किं स्यादिति चेत् ? भ्रान्त्यादिविभागवत् किञ्चिदिति ब्रूमः । ततः प्रत्यक्षादर्थसाधनोपपत्तेः स्थितमेतत्– '**अतश्च**' इत्यादि ।

यदि चायं निर्बन्धो न ततस्तत्साधनमिति तथापि तदाह–

**तदभावेऽपि तद्वादस्यान्यथानुपपत्तितः ।** इति ।

**तदभावेऽपि** तस्य प्रत्यक्षस्यार्थविषयस्याभावेऽपि न केवलं तद्भावे **बहिरर्थानामपि सत्ता प्रसाध्यत** इति सम्बन्धः । कुत एतत् ? **तद्वादस्य** तस्मिन् विज्ञाने वादः तत्साधनस्य यथा **"दर्शनोपाधिरहितस्य"** [ प्र० वा० २।३३५ ] इत्यादि[1], तस्मिन् वा बहिरर्थे वादः तद्दूषणस्य यथा **"यथा कथञ्चित्"** [ प्र० वा० २।३५३ ] इत्यादि, तस्य **अन्यथा** बहिरर्थसद्भावप्रकारेण **अनुपपत्तितो** घटनाभावात् । अयमत्र प्रयोगः–'सन्ति बहिरर्थाः, साधनदूषणप्रयोगान्यथानुपपत्ते' इति ।

अभावे सर्वथार्थस्य तद्विशेषः कथं भवेत् ।
तत्प्रयोगो यतो ज्ञानसाधनं वाऽर्थदूषणम् ॥ १२५८ ॥
व्यवहारप्रसिद्ध्या चेत्प्रयोगोऽनुमन्यते ।
कः पुनर्व्यवहारार्थः ? कल्पना यदि; कल्पितात् ॥ १२५९ ॥
कुतश्चित्सिद्धिरर्थस्य बुद्धेर्वा क्वेव दूषणम् ? ।
न हि कल्पनया कल्याप्यस्ति वस्तुर्व्यवस्थिता ॥ १२६० ॥
विपक्षमव्यवच्छिन्दंस्तत्प्रयोगस्तथा सति ।
एकान्तेन स्वपक्षस्य कथं नामास्तु साधकः ? ॥ १२६१ ॥
तत्र कल्पितरूपोऽयं परमार्थो भवन्नपि ।
बोध एवेति चेत्तस्य परार्थत्वं कथं भवेत् ? ॥ १२६२ ॥

यदि [2]तत्प्रयोगः प्रतिपादकस्यैव बोधः; कथमसौ परार्थः ? परस्य ततस्तद्विषयप्रतिपत्तेरसम्भवादतिप्रसङ्गात् । प्रतिपाद्यस्यैवेति चेत्; कुतोऽसौ तस्य ? स्वत एवेति चेत्; न; प्रतिपादकस्य वैफल्यात् । तत एवेति चेत्; न; तस्याप्यप्रयोगात्तदनुपपत्तेः । प्रयोगश्चेत् इति चेत्; न; तत्प्रयोगस्यापि [3]तद्बोधत्वे परार्थत्वासम्भवात् । प्रतिपाद्यबोधत्वे तु पूर्ववत्प्रसङ्गः 'कुतोऽसौ तस्य' इत्यादिः, अनवस्था च । भवतु स्वार्थ एवायं न परार्थः परस्यैवाभावादिति चेत्; कुतस्तदभावः ? त्वयाऽनुपलम्भाच्चेत्; परेणानुपलम्भात्तवाप्यभावः । स्वयमुपलम्भान्नेति चेत्; तत एव परस्यापि न भवेत् । सतोऽपि परस्याविनेयत्वान्न तदर्थोऽयमिति चेत्; न; विनेयस्यापि लोके सम्भवात् ।

**"विनेयराजहंसास्ते सन्त्येव हि जगन्मताः ।**
**निरस्य जडसम्पर्कं ये गृह्णन्ति [4]वचोऽमृतम् ॥"** [ ]

इत्युक्तत्वात् । तत्र स्वार्थ एवायम् । स्वार्थोऽपि कुतोऽयमुत्पन्नः ? स्वशक्तित इति चेत्; न

---

१ "दर्शनोपाधिरहितस्याग्रहेऽग्रहात् तद्ग्रहे ग्रहात् । दर्शनं नीलनिर्भासं नार्थो बाह्योऽस्ति केवलम् ॥"–प्र० वा० । २ साधनदूषणप्रयोग । ३ प्रतिपादकबोधत्वे । ४ वचो धृतम् आ०, ब०, प० ।

तर्हीदं सुभाषितम्–**"ज्ञानवान् मृग्यते"** [ प्र० वा० १।३२ ] इति, स्वत एव बोधात् तदन्वेषणस्य वैयर्थ्यात्। ज्ञानवत एव बुद्धस्योपदेशादिति चेत्; स[1] तर्हि बहिरर्थरूप एव, बोधरूपत्वे पूर्वदोषात्। साधनदूषणात्मा च स इति कथन्न तत्प्रयोगान्यथानुपपत्त्या बहिरर्थसत्तासाधनम्? अथ तत्प्रयोग एव कस्यचिन्नास्ति तत्प्रतिभासस्तु विप्रलम्भ एव स्वप्नवत् तदयमसिद्धो हेतुरिति चेत्; न; अस्यैव असिद्धतोद्भावनस्य तत्प्रयोगत्वप्राप्तेः। अयमपि नास्त्येव, एतत्प्रतिभासस्यापि विप्रलम्भत्वादिति चेत्; न; अत्रापि तथैव प्रसङ्गादनवस्थादोषाच्च। तत्र तत्प्रतिभासो विप्रलम्भः स्वरूपप्रतिभासेऽपि प्रसङ्गाच्च।

भवतु तत्त्वं विभ्रम एव बहिरन्तश्चासत एव प्रतिभासात् स्वप्नवदिति चेत्; नेदानीमसिद्धो हेतुः तत्प्रयोगत्वात्। नापि विरुद्धो बहिरर्थत्वादन्यत्र तदभावात्। न हि विभ्रमत्वे तद्भावः; विभ्रमाद्विभ्रमसिद्धेर्निषेधात्। तत एव न व्यभिचारी चेति युक्तमतो बहिरर्थसत्तासाधनम्। ततः स्थितं **'तदभावेऽपि'** इत्यादि। साम्प्रतं सौत्रान्तिकं प्रति सत्तासाधनमाह–

**अक्षादेरप्यदृश्यस्य तत्कार्यव्यतिरेकतः ॥ ६ ॥** इति।

**अक्ष**मिन्द्रियं चक्षुरादि, तद**आदि**र्यस्य [2]भूतादेस्तस्यापि न केवलं प्रमाणादेः। **'सत्ता प्रसाध्यते'** इत्यधिकृत्याभिसम्बन्धः। कुत एतत्? तस्याक्षादेः **कार्यं** रूपादिज्ञान-कार्यविकारादिकं तस्य **व्यतिरेकः** कारणान्तरसाकल्येऽप्यभावः ततः। कार्यव्यतिरेको हि कारणव्यतिरेकं गमयत्यन्यथा तदनुपपत्तेः। यच्च गम्यमानव्यतिरेकं कारणं तदक्षादि, इत्युपपन्नं ततस्तत्साधनम्। किं तत्साधनेन प्रत्यक्षादेव तत्सिद्धेः, गोलकादिकमेवाक्षादि तत एव तत्कार्यदर्शनात्, तच्च प्रत्यक्षत एव प्रतिपन्नमिति चेत्; न; तस्य[3] तद्धेतुत्वेऽविशेषेण प्रसङ्गात्। न चैवम्, सत्यपि तस्मिन्[4] कस्यचित्तदभावात्। तदपि सशक्तिकमेव कारणं नापरमिति चेत्; तत्तर्हि कथं दृश्यं शक्तेरतीन्द्रियत्वात्? नन्वेवं न किञ्चिदपि कारणं दृश्यं स्यात् सर्वशक्तेरतीन्द्रियत्वात्, तत्कथं जलादौ तत्कार्यार्थिनः प्रवृत्तिः तच्छक्तेरपरिज्ञाने तदनुपपत्तेः? कार्याच्च तत्प्रतिपत्तौ परस्पराश्रयात्–तत्परिज्ञाने कार्यम्, ततश्च तत्परिज्ञानमिति। क्वचिदभ्यासादिसहायात् प्रत्यक्षादेव तत्प्रतिपत्तौ गोलकादावपि स्यादविशेषादिति चेत्; न; जलादिवत्तत्राकारविशेषस्यानवधारणात्। यादृशो हि शक्तिमदभिमतस्याकारस्तादृशस्यैव त[5]द्विपरीतेऽपि तस्मिन्नवलोकनात्। तत्र तत्प्रतिपत्तौ प्रत्यक्षमवलम्बनं हेतोरेवावलम्बनत्वात्। न चायमसिद्धो हेतुः; [6]रूपादिकारणान्तरे तस्य प्रसिद्धत्वात् पिहितलोचनादिवत्। तत्रापि रूपादेः परिणतिविशेषव्यतिरेकादेव तद्व्यतिरेको न लोचनादिव्यतिरेकादिति चेत्; न; अपिहितलोचनादेः तत एव तत्कार्यदर्शनात्। न हि परिणतिविशेषविकलादेव कस्यचित्कार्यमपरस्य तद्व्यतिरेक इत्युपपन्नम्। अतो लोचनादिव्यतिरेकादेव तद्व्यतिरेक इति कथं न स तत्प्रतिपत्तावालम्बनम्? भवत्येवालम्बनं त[7]तस्तु नाक्षादेः सत्त्वं साधयितव्यं परकीयस्यापि तत्प्रसङ्गात्, अपि तु [8]कार्यस्यैव तदपेक्षत्वमिति चेत्; तदपि परकीयेन[9] किन्न साध्येत? आत्मीयेनैवाविनाभावादिति चेत्; न; सत्तासाधनेऽप्यस्यैव परिहारत्वात्। अपि च;

---

१ उपदेश-। २ "भूतशब्दोऽत्र व्यन्तरविशेषवाची"–ता० टि०। ३ गोलकस्य रूपादिज्ञानहेतुत्वे। ४ गोलके। ५ शक्तिशून्येऽपि गोलके। ६ रूपादिः कारणान्तराद्व्यतिरेकस्य प्र–आ०, ब०, प०। ७ तदस्तु आ०, ब०, प०। ८ "रूपादिज्ञानस्यैव"–ता० टि०। ९ "प्रत्यक्षेण"–ता० टि०।

अक्षादेस्तदपेक्षत्वमन्यच्चेत्तस्य सिद्धितः ।
नाक्षादिसिद्धिस्तस्यां वा कथं नातिप्रसज्यते ॥ १२६३ ॥
तत्सिद्धिरेव तत्सिद्धिरविनाभावतो यदि ।
हेतुसिद्धिर्भवेत्साध्यसिद्धिरित्यनुमा वृथा[1] ॥ १२६४ ॥
ततोऽपि तदपेक्षत्वात्[2] कार्यधर्मान्तरस्य चेत् ।
सिद्ध्या तत्सिद्धिरुच्येत प्रादुप्यादनवस्थितिः ॥ १२६५ ॥
साक्षात्तत्साधने व्यर्थं तदपेक्षत्वसाधनम् ।
हेतोरेवोदितात्तस्य तथा साधननिर्णयात् ॥ १२६६ ॥
अक्षादेस्तदपेक्षत्वस्याभेदे भिद्यते वचः ।
तत्सत्त्वं तदपेक्षत्वमिति साध्यं न वस्तुतः ॥ १२६७ ॥

यदि तदपेक्षत्वमक्षाद्येव न तर्हि तदपेक्षं तत्कार्यमिति सामानाधिकरण्यं व्यतिरेकात्, अन्यथा हेतुफलभावायोगादिति चेत्; सत्यमिदं वस्तुवृत्तेन, वचनं तु केवलमपेक्षकप्राधान्येनापेक्ष्यमेव दर्शयत् सामानाधिकरण्यमुपदर्शयति । तस्मादुपपन्नम्–अक्षादेस्तत्कार्यव्यतिरेकात् सत्त्वसाधनम् अविनाभावनिश्चयात् । एवमदृश्यस्यापि सत्त्वं प्रसाध्य तत्र परोक्तं दूषणं प्रत्याचक्षाण आह–

**एतेनातीन्द्रिये भावकार्यकारणतागतेः ।**
**तत्सत्ताव्यवहाराणां प्रत्याख्यानं निवारितम् ॥१०॥** इति ।

**निवारितं** निराकृतम् । किम्? **प्रत्याख्यानं** प्रतिषेधवचनम् । केषाम्? **तत्सत्ताव्यवहाराणां** तेषामतीन्द्रियाभावादीनां सत्ता विद्यमानता तद्व्यवहाराः तन्निर्णयादिरूपास्तेषामिति । अस्ति तत्प्रत्याख्यानं बौद्धस्य "अन्येषामदृश्यानां हेतुफलभावाभावविरोधासिद्धेः" [ ] इति वचनात् । कुतस्तन्निवारितम्? इत्याह–**अतीन्द्रिये** अदृश्ये[3] **अभावश्च कार्यकारणता** च तयो[4], उपलक्षणमिदं तेन विरोधस्यापि **गतेः** प्रतिपत्तेः । केन तद्गतिः? **एतेन** अनन्तरन्यायेन । तथा हि–

इन्द्रियादि हि तत्कार्यात् साधितं साधयत्यलम् ।
हेतुमन्यं स्वनिष्पत्तेस्तदभावे तदत्ययात् ॥ १२६८ ॥
तयोरदृश्ययोरेव कार्यकारणतागतेः ।
न हेतुफलनिर्णीतिस्तत्रास्ति प्रतिषेधनम् ॥ १२६९ ॥
रूपज्ञानाद्यभावाच्च यदाक्षादेरभाववित् ।
अभावोऽयमदृश्यस्य कथन्नेवं प्रसिद्धिमान् ॥ १२७० ॥

---

१ "मा भूत्तदपेक्षत्वसिद्धिरेवाक्षादिसिद्धिरुक्तदोषात्, अपि तु प्रागनन्तरवचनात्तदपेक्षत्व सिद्धयदक्षादिकं साधयतीति साधनभेदात् सिद्धिभेदसिद्धेर्नोक्तदोष इति चेत् ।" –ता० टि० । २ "मनु तदपेक्षत्वसाधनादक्षादिसिद्धिस्तदपि तत्साधयद्रूपादिकार्यगतधर्मान्तरं साधयति, तद्धर्मान्तरमक्षादिकं साधयतीति परम्परया तत्सिद्धेर्वा साक्षाद्वा? न तावत्परम्परयेत्याह ।" –ता० टि० । ३–याविद्धि–आ०, ब० । ४–दये भाव–आ० ब० प० ।

कार्याभावात्प्रसिद्धश्च[1] हेतुशक्तिनिषेधनम् ।
परस्याप्यनलाभावं धूमाभावेन जल्पतः ॥ १२७१ ॥
नयनादिगुणस्यास्ति दोषेणानुमितेन यत् ।
विरोधावगतिस्तस्माददृश्ये ऽप्यस्तु तद्गतिः ॥ १२७२ ॥
गुणवान्नात्र नेत्रादिर्मिथ्याज्ञानोपलम्भनात् ।
इत्थं विरुद्धकार्योपलम्भस्याप्युपपत्तितः ॥ १२७३ ॥
अदृश्यानुपलम्भस्य संशयार्थेव कल्पनम् ।
[2]वर्णयन्ति कथं नाम निपुणा वस्तुनिर्णये ॥ १२७४ ॥

इदानीमतीन्द्रिये भावेत्यादिकमेव व्याचिख्यासुराह–

**व्याधिभूतग्रहादीनां विप्रकर्षेऽपि गम्यते ।**
**कुतश्चित्सदसद्भावविरोधप्रभवं तथा ॥ ११ ॥** इति ।

**गम्यते** बुध्यते । किम् ? सदसतोर्भावश्च विरोधश्च प्रभवश्च हेतुफलभावः **सदसद्भावविरोधप्रभवम्** । कुतः ? **कुतश्चित्** आकारविशेषादेः । कथम् ? **तथा** तेनाऽन्यथानुपपत्तिप्रकारेण । केषाम् ? **व्याधिभूतग्रहादीनाम्**, आदिशब्दात् परचैतन्यानामपि । **विप्रकर्षेऽपि** अदृश्यत्वेऽपि । तथा हि–

अदृश्यस्यापि रोगादेर्हेतुत्वं कार्यजन्मनि ।
ततोऽपि तस्य सद्भावमसद्भावं विपर्ययात् ॥ १२७५ ॥
आरोग्यादिविरोधञ्च विप्रकर्षेऽपि तत्त्वतः ।
प्रतियन्तः प्रतीयन्ते निर्विवादं परीक्षकाः ॥ १२७६ ॥

यत्पुनरुक्तं धर्मोत्तरेण[3]–"न घटे पिशाचस्य भिन्नस्याभावः साध्यते यतो दृश्यानुपलब्धिः स्यादपि त्वभिन्नस्य । एतदुपलभ्यमानं रूपं न भवति पिशाच इति तत्रोपलभ्यमानत्वमभ्युपगम्य प्रतिषेधः क्रियते पिशाचस्येति दृश्यानुपलब्धिरेव यथा घटस्य दृश्यत्वमभ्युपगम्य यद्यत्र घटः स्यात् दृश्य एव भवेत्, तथा यद्ययं पिशाचः स्यात् दृश्यः स्यादित्येवं दृश्यमानरूपत्वमभ्युपगम्य नित्यत्वं निषिध्यत इति दृश्यानुपलब्धिरेव ।" [ ] इति । तत्र; पर[4]च्छरीरेऽपि तस्याभिन्नस्यैव प्रतिषेधप्रसङ्गात् । न चैवम्, भिन्नस्यैव तत्र तत्कार्यानुपलब्ध्या परीक्षकैः प्रतिक्षेपात् ।

---

१ शक्तिहेतु–भा०, ब०, प० । २ द्रष्टव्यम्–प्र० वा० ४।३७७ । ३ "एवं प्रतिषेध्यस्य नित्यत्वञ्च दृश्यमानात्मत्वमभ्युपगम्य प्रतिषेधः कृतो भवति । वस्तुनोऽप्यदृश्यस्य पिशाचादेर्यदि दृश्यघटात्मत्वनिषेधः क्रियते दृश्यात्मत्वमभ्युपगम्य कर्तव्यः । यद्ययं दृश्यमानः पिशाचात्मा भवेत् पिशाचो दृष्टो भवेत् । न च दृश्यतरमानः पिशाच इति दृश्यात्मत्वाभ्युपगमपूर्वको दृश्यमाने घटादौ वस्तुनि वस्तुनऽवस्तुनो वा दृश्यस्यादृश्यस्य च तादात्म्यनिषेधः । तथा च सति यथा घटस्य दृश्यत्वमभ्युपगम्य प्रतिषेधो दृश्यानुपलम्भादेव तद्वत् सर्वस्य परस्परपरिहारवतोऽन्यत्र दृश्यमाने निषेधो दृश्यानुपलम्भादेव ।" –न्या० बि० टी० पृ० ५१ । ४–च त –भा०, ब०, प० ।

अपि च, एवं परचैतन्यस्यापि शरीरादभिन्नस्यैव प्रतिषेधो न भिन्नस्येति [1]कथं मृतप्रतिपत्तिः यतो नास्त्येव अदृश्यत्वेन संशयविषयत्वात्। नित्यत्वस्यापि यदि भावादभिन्नस्यैव प्रतिषेधो भिन्नमप्रतिषिद्धं भवेत्। अस्तु कल्पितमेव तत्र वस्तुत इति चेत्; कुत एतत्? अप्रतिपत्तेश्चेत्; अस्ति तर्ह्यदृश्यानुपलब्धेरप्यभावगतिरिति न युक्तम् 'एवम्' इत्यादि।

किञ्च, परमाणूनामपि घटेऽभिन्नानामेव प्रतिषेधः पिशाचवत्, शक्यो हि तत्रापि दृश्यत्वमभ्युपगम्य निषेधो यद्ययं परमाणुरूपः स्याद् दृश्यः स्यादिति।

एवञ्च परमाणुभ्यो घटस्यान्यस्य सिद्धितः।
नैयायिकमतं सुस्थमवयव्यनिराकृतेः॥ १२७७॥
घटोऽणुसञ्चयात्मैव नैकः स्थूलोऽस्ति चेदसत्।
एकश्चायं[2] ज्ञानसन्निवेशीत्येवं विनिश्चयात्॥ १२७८॥
संवृत्या स न तत्त्वाचेत् स कथं दृश्यतां यतः।
तदभेदात्पिशाचादेर्दृश्यत्वमुपगम्यताम्॥ १२७९॥

न हि सांवृतस्य दृश्यत्वम्; दर्शनस्य वस्तुविषयत्वात्, सांवृतस्य चावस्तुत्वात्। न चाणुसञ्चयो दर्शनविषयः स्थूलस्यैकस्यैव तद्विषयत्वेनानुभवात्, 'एकश्चायं ज्ञानसन्निवेशीत्येवं विनिश्चयात्' इत्युक्तेः। ततो यदि तदभेदेन दृश्यत्वोपगमान् पिशाचे दृश्यानुपलब्धिः परमाणुष्वपीति तेषामपि तदभिन्नानां प्रतिषेधात् कथं नावयविसिद्धिः? तदभेदेनापि तत्रादृश्यत्वस्यैवोपगमे स एव पिशाचेऽपीति न तस्याभिन्नस्यापि घटादौ प्रतिषेधो दृश्यानुपलब्धेरभावात्, अन्यतश्च तदनुपगमात्। इदमेवाकलय्य देवैरन्यत्रोक्तम्—

"अदृश्यानुपलम्भादे[3]रेकान्तोऽयं न लक्षयेत्।
पिशाचो नाहमस्मीति दृश्यादृश्याविवेकधीः॥" [ सिद्धिवि० पृ० ३४८ ] इति।
अदृश्यानुपलम्भादेवाभिन्नस्य प्रतिषेधे भिन्नस्यापि स्यात् व्याध्यादौ तथा तत्प्रतिपत्तेः।

इत्युपपन्नम्—अदृश्यानुपलम्भस्याप्यभावसाधनत्वम्। व्याधीत्यादि अन्तरश्लोकः।

कथं पुनरनुमानात् सत्तासाधने तस्यावस्तुविषयत्वात्? अवस्तु हि सामान्यं तस्य विषयो निदर्शनसमानस्यैव पावकादेस्तत्र प्रतिभासनात्। सामान्यस्य च विचार्यमाणस्य वस्तुत्वेनानवस्थानात्। सत्तायाश्च वस्तुरूपत्वादिति चेत्; कथमिदानीं [4]तस्य प्रामाण्यम्? वस्तुनि प्रवर्तनात्, तदपि तद्विषयस्य वस्त्वेकत्वेनाध्यवसायादिति चेत्; उच्यते—तदेकत्वं यदि वस्तुरूपमेव; सिद्धमनुमानस्य [5]तद्विषयत्वम्? अवस्तुरूपं चेत्; कथं ततोऽपि तत्र प्रवर्तनमतिप्रसङ्गात्? तस्यापि तदेकत्वेनाध्यवसायादिति चेत्; न; तत्रापि पूर्ववत्प्रसङ्गादनवस्थापत्तेश्च। किञ्चेदं सामान्यस्यावस्तुत्वम्? सर्वशक्तिवैकल्यम्, तच्च विचारादिति चेत्; सोऽपि[6] न तदेवानुमानम्; तेन तत्र वस्तुत्वस्यैवाध्यवसायात्, तस्यापि

---

१ कथममृतप्रति–आ०, ब०, प०। २ "घट"–ता० टि०। ३–मादेकैका–आ०, ब०, प०।
४ अनुमानस्य। ५ वस्तुविषयत्वम्। ६ विचारोऽपि।

तल्लिङ्गस्येवातल्लिङ्गस्यापि तदेकसाध्यत्वे वस्तुत्वाध्यवसायस्यैव भावात्, भिन्नसाध्येन च तस्याविषयीकरणात्। न चाविषयीकृतमवस्तु वस्तु वेति शक्यमवगन्तुम्। नापि प्रत्यक्षं विचारः; तस्यापि स्वलक्षणनियतत्वेन तत्राप्रवृत्तेः, प्रवृत्तौ वा प्रमेयाभावान्नानुमानं भवेत्। नाप्यन्यत्प्रमाणम्; तद्द्वयनियमव्याघातात्। नाप्यप्रमाणम्; ततः कस्यचित्स्वनिर्णयायोगात्, प्रमाणचिन्तावैफल्यात्। तत्र तस्यावस्तुत्वं कुतश्चिदपि सुनिश्चयम्। निश्चयेऽपि न तस्य वस्त्वेकत्वाध्यवसायो येन प्रवर्तकत्वात् प्रामाण्यमनुमानस्य निगदितोत्तरत्वात्।

भवतु तर्हि संवादादेव वस्तुनि तस्य प्रामाण्यम्, सोऽपि तस्मादात्मलाभादिति चेत्; स कुतोऽवगन्तव्यः? नानुमानात्; वस्तुनस्तेनावेदनात्। नापि वस्तुप्रत्यक्षेण; अनुमाने तस्याप्रवृत्तेः। न च तद्द्वयोरेकविषयत्वे तत इदमिति प्रतिपत्तः संवादः। संवादाच्च प्रामाण्ये अतिप्रसङ्गमाह—

**प्रमाणमर्थे संवादाद् भ्रान्तिरध्यवसायतः।** इति।

**भ्रान्तिः** अतस्मिंस्तद्ग्रहो मणिप्रभामणिज्ञानादिः, **प्रमाणम्**। कुतः? **अर्थे** मण्यादौ **संवादाद्** अविप्रतिसारात्। स एव कस्मात्? **अध्यवसायतः**। अध्यवसायो य एव दृष्टः स एव प्राप्तः इत्यभिप्रायः तस्मात्त इति। प्रसिद्धश्चैतत् परस्मात्-(परस्यापि) **"अविसंवादनमभिप्रायनिवेदनात्"** [ प्र० वा० १।३ ] इति वचनात्। इष्टमेव तत्र प्रामाण्यं प्रत्यक्षत्वेन तत्कथमतिप्रसङ्ग इति चेत्? न; भ्रान्तेस्तत्त्वानुपपत्तेः। अप्रतिपत्त्यभिचारस्य न तत्र भ्रान्तिबुद्धिरपीति चेत्; न तर्हीमं प्रत्यनुमानप्रामाण्ये तन्निदर्शनम्। भ्रान्तमपि यथेदं प्रमाणं तथानुमानमपीति भ्रान्तिविदं प्रत्येव तत्तत्र निदर्शनमिति चेत्; इतरं प्रति तन्निरपेक्षमेव यदि तत्सिद्ध्यतीति तथैव तद्विदं प्रत्यपि सिद्ध्यतीति व्यर्थमेतत् **"मणिप्रदीपप्रभयोः"** [ प्र० वा० २।५७ ] इत्यादि। तद्विदं प्रत्यपि नानुमानत्वेन निदर्शनं विप्रतिपत्तिविषयत्वेन साध्यान्तःपातित्वात्, अतः प्रमाणान्तरमेव सेति कथमतिप्रसङ्गः? तन्न संवादादपि प्राामाण्यमनुमानस्य अपि तु वस्तुविषयत्वादेव।

यद्येवं तदेवं स्पष्टावभासित्वमपीति कथमनुमानत्वम्? लिङ्गजत्वादिति चेत्; न; तथापि परोक्षलक्षणस्यावैशद्यस्याभावेन तत्त्वानुपपत्तेः। परोक्षं च जैनस्यानुमानम्। एतदेवाह—

**प्रत्यक्षाभेऽप्रसङ्गश्चेत् [ तथाऽनभिनिवेशतः ] ॥१२॥** इति।

प्रत्यक्षमिव स्पष्टत्वेनाभातीति **प्रत्यक्षाभ**मनुमानं तस्मिन् **अप्रसङ्गः** प्रसङ्गाभाव प्रकृतादनुमानत्वस्य। ततो वस्तुविषयत्वं तस्य ब्रुवतां तदेव निर्लुप्तमिति परस्याकूतम्। **चेदि**ति तद्द्योतने। तत्रोत्तरमाह—**'तथानभिनिवेशतः'** इति। **तथा** तेन स्पष्टप्रकारेण **अनभिनिवेशतः** अनध्यवसायात् **प्रसङ्ग** इति। प्रसङ्गाप्रसङ्गयोः संहितायां समानत्वात् पूर्वत्राप्रसङ्गस्य अत्र च प्रसङ्गस्य सम्बन्धः। न हि वस्तुविषयत्वात् तद्गतत्वमपि अन्तरङ्गादेव कारणविशेषात्, अन्यथा दूरे क्वचिन्नरस्य दूरतरे गृध्रादेः दूरतमे च योगिनोऽवस्थितस्य एकवस्तुविषयमेकप्रतिभासमेव विज्ञानं भवेत्, न चैवम्, स्पष्ट-स्पष्टतर-स्पष्टतमभेदेन तद्भावात्। न च तत्र प्रतिप्रतिभासं विषयस्य भेदः; तस्यासाधारणत्वो

१ बौद्धस्यापि। २ भ्रान्तिविदम्। ३ वस्तुविषयत्वमेव। ४ तत्तत्प्रतिभासज्ञानविषयतया अनन्यवेद्यत्व स्यात्, तथा च अहिरर्थताभाव।

बहिरर्थत्वाभावप्रसङ्गात्। अन्तरङ्गात्तु तदाभत्वे नाय दोष, एकविषयस्यापि तद्विशेषात् प्रतिभासविशेषो पपत्ते। एतदेवाह–

**दूरदूरतरादिस्थैरेकं वस्तु समीक्ष्यते।** इति।

सुगममेतत्। कथ समीक्ष्यते? इत्याह–

**[ नानाभं स्यात्तथासत्यं न चेद्वस्त्वनुरोधि किम्? ॥१३॥ ]**

**नानाभं** वैशद्यतारतम्ये नानेकप्रतिभास वस्तुविषयत्वात्। तदाभत्वे दूषणान्तरमाह–'**स्यात्तथाऽसत्यं न**' इति। **तथा** तेन प्रत्यक्षाभप्रकारेण **असत्यम्** अविद्यमान कामिन्यादि **न स्यात्**। अस्ति चाविद्यमानस्यापि तस्य तदाभत्वम्। परस्यापि "**अभूतानपि पश्यन्ति**" [ प्र०वा० २।२८२ ] इति ब्रुवाणस्य प्रसिद्धत्वात्। तन्न वस्तुविषयत्वात्तदाभत्व यतोऽनुमानेऽपि ततस्तदाभत्वा प्रत्यक्षत्वप्रसङ्ग इति भाव।

कथ पुन कामिन्यादेरसत्यत्व ज्ञानरूपतया तस्यापि सत्यत्वात्? '**अभूतानपि**' इति वचन बाह्यस्वापेक्षयैव। न चेव पुरतोभावस्य विरोध तस्य ग्राहकान्तरापेक्षत्वात्, स्वात्मनि च ग्राहके तदनुपपत्तेरिति मन्तव्यम्, तस्यापि वेद्यवेदकभेदकल्पनादुपपत्ते। ज्ञानात्मकत्वञ्च तस्य 'प्रतिभासमानत्वात् सुखादिवत्' इत्यनुमानात्। न च सत्यकामिन्यादिना व्यभिचार, तस्यापि पक्षीकरणात्। ततो ज्ञानमेवास्ति न बाह्यमिति चेत्, एतदेवाह–'**न चेद्वस्तु**' इति। नञो मध्यदीपकत्वेनात्रापि सम्बन्धात्। **न यदि वस्तु** बाह्य प्रक्रमात्। अत्र दूषणमाह–'**अनुरोधि किम्**' इति। अनुरोध स्वीकार सोऽस्मिन्नस्तीत्यनुरोधि पराभिमत ज्ञानम्। तत्किम्? **नैव**। तथा हि–न तन्नीलमेव तस्य बाह्यस्याप्यविरोधात्। अपरोक्षत्वेन विशिष्टमिति चेत्, तदपि यदि नीलमेव कथ तदेव तेन विशिष्टं नाम? कथ वा तद् बाह्य न भवेत्? अन्यदेव चेत्, तदेव ज्ञान स्यात् न नीलम्। भवत्वसदेव तदिति चेत्, न, प्रतिभासात्। सोऽप्यसत एवेति चेत्, न, स्वतस्तदयोगात्। ज्ञानादिति चेत्, न, "**नान्योऽनुभाव्यो बुद्ध्यास्ति**" [ प्र०वा० २।३२७ ] इत्यस्य विरोधात्। विभ्रमादिति चेत्, न, तस्यापि विज्ञानत्वे तदयोगात्। तत्रापि विभ्रमान्तरकल्पनायामनवस्थापत्ते। अज्ञानत्वे तु न तत तत्प्रतिभासो विरोधात्, बहिर्भावप्रसङ्गादनाच्च। तत्रासत्त्वे तस्य प्रतिभास। तदभावे ज्ञानमपि न भवेत् तस्यापि निर्भेदस्याप्रतिवेदनात् इत्युपपन्नमेतत्–'**अनुरोधि किम्**' इति। यदि तु न ज्ञान नीलमात्रम् अपरोक्षत्वमात्र वा तदुभयरूपतावस्थेति, तदा स्वपरविषयतयापि द्वैरूप्यापत्ते कथ बाह्यस्य सतोऽसतो वा न तत प्रतिपत्ति यतो '**दूर**' इत्यादि न स्यात्, '**तथा सत्य न**' इति च सूक्त न भवेत्। तन्न वस्तुविषयत्वादेवानुमानस्य स्पष्टत्व दूरस्थादिज्ञानाना तद्विशेषाभावप्रसङ्गात्, अवस्तुविषये च तदभावापत्ते।

अथवा यदस्पष्टावभासित्वादनुमानमवस्तुविषय प्रत्यक्षमपि कथञ्चित्तथा भवेदित्याह–'**दूर**' इत्यादि। **दूरदूरतरयोः आदि**शब्दादासन्नासन्नतरयोस्तिष्ठन्तीति तत्स्थास्तै **एकं** पादपादिलक्षणं **वस्तु समि**त्यविप्रतिसारेण **ईक्ष्यते** दृश्यते। कथम्? **नानाभं** दूरादावस्पष्टादित्वेन आसन्नादौ स्पष्टादित्वेनानेकप्रतिभासमेकमिति। आसन्नादिप्रतिभासमेव सत्य नेतरदिति चेत्, उत्तरम्–**तथा** तेन नानाभमिति प्रकारेण **सत्यमवितथ** वस्तु। यथैव दूरादिव्यासन्नादावपि स्पष्टादितया तत्र दृश्यत

१ प्रत्यक्षमविरोधन। २ अविरादितया।

इति चेत् ? नः संसारिज्ञानस्यासकलग्राहित्वात् , अन्यथा परमाणूनां नीलादिनेव परस्परविवेकेनापि दर्शनात् न क्वचित् स्थूलप्रतिभासः स्यात् । न च तदपह्नवः, सर्वत्र तत्प्राप्तेः । अपह्नुतोऽपि विकल्पादेवासौ न दर्शनादिति चेत् ; न; ततोऽप्यतदाकारात्तदयोगात् । तदाकारत्वे वस्तुतः परमाणुस्वलक्षणवादव्यापत्तिः । भ्रान्त्या तस्यापि तदाकारत्वमिति चेत्; न; ततस्तद्विवेकस्य दर्शने भ्रान्तेरयोगात् । अदर्शने सर्वात्मनाप्यदर्शनप्रसङ्गात् । असकलदर्शने तु सिद्धं परमाणुविवेकस्याप्यदर्शनम् । तद्वदासन्नादावस्पष्टेरपि । विकल्पेऽपि विकल्पान्तरादेव तत्प्रतिभासो न स्वत इति चेत् ; न ; तत्रापि पूर्वदोषादनवस्थापत्तेश्च । ततो दूरमुपसरतो दृश्येतरात्मकत्वस्याशक्यपरित्यागत्वादुपपन्नं तद्वदेव क्वचिदस्पष्टेतरस्वभावमपि । कथं पुनरस्पष्टस्येतरेण क्वचित्समुच्चयो बाधनस्यैवोपपत्तेर्विरोधात् ? अन्यथा चन्द्रमसि द्वित्वस्याप्येकत्वेन समुच्चयात्तदपि तात्त्विकमेवेति मिथ्याज्ञानविलोपः स्यात् , न चैवम् , अतो द्वित्ववदसत्य एवास्पष्टस्वभाव इतरेण बाधनात्; इत्यपि न सङ्गतम् ; दृश्येतरेण समुच्चयेऽपि समानत्वात् । न हि स्वलक्षणेषु विवेकः कुतश्चिदवस्थाप्यमानः स्थूलस्वभावमबाधित्वा अवस्थातुमर्हति । सत्यम्, असत्य एव स[1] इति चेत्; क्व इदानीं सत्यस्वभावः स्यात् ? नीलादिरिति चेत्; न; तस्यापि स्थूलादभेदेन प्रतिपत्तेः, तदसत्यत्वे सत्यत्वानुपपत्तेः । अन्यथा—

स एव सत्योऽसत्यश्च नीलादिरिति ते कथम् ? ।
समुच्चयप्रवादोऽयमनिष्टोऽपि प्रवर्तताम् ॥ १२८० ॥
सत्य एव स चेत्स्थूले तदभेदेन सत्यता ।
परमाणुप्रवादं ते भद्र भद्राकरोत्यलम् ॥ १२८१ ॥
असत्य एव नीलादिर्यदि प्रत्यक्षवेद्यता ।
कस्येदानीं प्रवृत्तस्य यतः स्यादीहितस्थितिः ? ॥ १२८२ ॥

[2]एतदेव दर्शयति—**न चेत्** न यदि । सत्यम् , अस्पष्टादिप्रतिभासं वस्तुतत्त्वम् **अनुरोधि** स्वीकारविषयः । किम् ? **न** किञ्चित् , उक्तनीत्या नीलादेरप्यसत्यत्वात् ततो नीलादावसत्यस्येतरेण समावेशो वक्तव्यः, तद्वदस्पष्टस्येतरेण अविशेषात् । नीलस्येतरेण किन्न स इति चेत् ? न; तत्र लोकाभिप्रायेण बाधनस्यैव भावात् । न चैवमस्पष्टादौ तदभिप्रायः—'स एव दवीयस्तया दृष्टोऽधुना अधिष्ठितो वृक्षः' इति तद्भावात् । ननु पूर्वमन्तरङ्गनिबन्धनत्वेनावस्तुरूपत्वमस्पष्टत्वादेरुक्तम्, इदानीं तु स्वभावत्वम् , तत्कथन्न विरोध इति चेत् ? न; इदानीमपि परानुरोधादेव तद्वचनात् । परो हि बाह्यस्यासतोऽपि लोकबुद्ध्या वस्तुत्वमन्विच्छन्नस्पष्टस्याप्यन्वेष्टुमर्हति तदविशेषात् । एवमपि कथं तज्ज्ञानस्य प्रत्यक्षत्वं विस्पष्टज्ञानस्यैव तदुपगमादिति चेत् ? न; तस्यापि परापेक्षयैवाभिधानात् । न तावत्तज्ज्ञानमप्रमाणम् ; अविप्रतिसारात् , तल्लक्षणत्वादन्यत्रापि प्रामाण्यस्य । नाप्यनुमानम्; लिङ्गाभावात् । तदेव लिङ्गमिति चेत्; न; तज्ज्ञानस्य ज्ञानान्तरस्याप्रवेदनात् । प्रवेदनेऽपि न तत्स्पष्टम्; अनुमानत्वात् । अस्पष्टमपि कथं प्रमाणम् ? साध्यं प्रत्यविनाभावादिति चेत् ; न ; लिङ्गस्यैव तत्त्वप्रसङ्गात् । तज्ज्ञानजनकत्वाच्चेत् ; न ; अनुमानान्तरस्योपनिपातात् । तद्विषयत्वाच्चेत् ; सिद्धो न

१ स्थूलस्वभाव । २ यत एव आ०, ब०, प० ।

सिद्धान्त —प्रथमस्यापि तत एव तत्त्वोपपत्तेः । तथा च प्रत्यक्षमेव तद् गत्यन्तराभावादिति सिद्धं तस्य स्पष्टज्ञानेनैकविषयत्वम् । ततो यदुक्तम्–"यद्यस्माद् भिन्नप्रतिभासं न तत्तेनैकविषयं यथा रूपज्ञानाद्रसादिज्ञानम्, भिन्नप्रतिभासं चानुमानं प्रत्यक्षात् ।" [ ] इति, तन्निषिद्धम्, दूरवृक्षवेदनेन व्यभिचारात्, तस्यास्पष्टप्रतिभासित्वेन आसन्नतद्वेदनात् भिन्नप्रतिभासित्वेऽपि तदेकार्थत्वात् । एतदेव दर्शयन्नाह—

**तस्मादनुमितेरर्थविषयत्वनिराकृतिः ।**
**प्रतिभासभिदायाः किमेकस्यानेकतो ग्रहात् ॥१४॥** इति ।

**अनुमितेः** अनुमानस्य **अर्थविषयत्वनिराकृतिः** वस्तुप्रतिभासनत्वप्रत्याख्यानम् । कुतः ? **प्रतिभासभिदायाः** प्रतिभासस्य तदाकारस्य भिदा भेदो स्पष्टतालक्षणः तस्याः । **किम्** नैव । कस्मात् ? **तस्मात्** अनन्तरोक्तात् । कस्मात् ? **एकस्यानेकतो ग्रहात् ।** एकस्य पादपादेरनेकतोऽनेकेनास्पष्टास्पष्टतरादिरूपेण अनेकेन वा ज्ञानेनास्पष्टादिप्रतिभासिना ग्रहणं ग्रहस्तस्मात् । एतदुक्तं भवति–दूरभूरुहादिज्ञानेन प्रतिभासभेदस्य व्यभिचारात् न ततः तन्निराकृतिरिति । यदि प्रत्यक्षैकार्थमनुमानं गृहीतग्राहित्वात् कथं प्रमाणम् ? क्षणक्षयादेरतद्विषयस्यापि ग्रहणादिति चेत्, न, तस्यातद्विषयत्वे तद्विपर्ययस्य[2] तद्विषयत्वं स्यात् गत्यन्तराभावात्, तथा च सुतरामप्रामाण्यमनुमानस्य तेन[3] बाधनात्, प्रत्यक्षस्य वा तमाप्त्[4] तेन[5] बाधनात् । न चैतन्न्याय्यं तदप्रामाण्ये तस्यैवाभाव प्रसङ्गात् तत्पूर्वकत्वात्[6] । तन्न क्षणक्षयादेरतद्विषयत्वं यतोऽपूर्वार्थत्वमनुमानस्येति चेत्, मा भूत्, तथापि नाप्रामाण्यं यथार्थत्वात् । अपूर्वार्थमेव ततोऽपि[7] प्रमाणं नापरमिति चेत्, कुत एतत् ? तत एव प्रयोजनादिति चेत्, किं तत्प्रयोजनम् ? अधिगमश्चेत्, न, तस्यानुमानेऽपि भावात् । परितोषोऽनेन व्याख्यातः । प्रवृत्तिरिति चेत्, न तर्हि स्वसंवेदनं प्रमाणम्, ततोऽपि तदभावात्[8] । क्व चेयं प्रत्यक्षात् प्रवृत्तिः ? न क्षणे, तस्य प्रवृत्तिकालेऽनन्वयात् । नापि सन्ताने, तस्य तेनाग्रहणात् । ग्रहणेऽपि नापूर्वार्थत्वम्; पूर्वमपि तस्यान्यतोऽधिगमात् इत्यपूर्वार्थं प्रमाणयतः प्रत्यक्षमप्यप्रमाणं प्राप्तम् । अथाधिगमात्तु प्रामाण्यं नानुमानेऽपि प्रातिकूल्यमुद्घोपयति ।

किञ्च, यथञ्चिदपूर्वार्थमेवानुमानं तद्विषयस्य क्षणक्षयादेः प्रत्यक्षेणाग्रहणात्, न तावता तद्विपर्ययस्य[9] तेन ग्रहणं तदुभयधर्मसाधारणस्य नीलादेरेव ग्रहणात् सदसत्त्वसाधारणस्येव भ्रान्त्या । न हि तया तद्विषयसत्त्वग्रहणम्, भ्रान्तित्वापत्तेः । नाप्यसत्त्वस्य वेदनम्; अप्रवृत्तिप्रसङ्गात् । न हि तत एव तद्विषयस्यासत्त्वं प्रतिपद्यमानः तदर्थितया प्रवर्तितुमर्हति । प्रतिपद्यमानोऽपि सत्त्वसमारोपात् प्रवर्तत इति चेत्, न तस्यावेदनात्[10] । प्रवेदनेऽपि तद्विषयस्याप्यसत्त्वं यदि तत एवावगम्येत स एव प्रवृत्त्यभावः । तत्रापि तत्समारोपकल्पनायामनवस्थापत्तिः । ततः सदसत्त्वसाधारणं नीलधवलादिकमेव भ्रान्तेर्विषयः तद्वत् प्रत्यक्षस्यापि क्षणभङ्गतद्विपर्ययसाधारणमिति

१ क्षणक्षयादेः प्रत्यक्षाविषयत्वं । २ नित्यत्वादेः । ३ नित्यत्वादिग्राहिणा प्रत्यक्षेण । ४ अप्रामाण्यम् । ५ क्षणिकत्वादिग्राहिणा नुमानेन । ६ प्रत्यक्षपूर्वकत्वात् । ७ यथार्थत्वादेः । ८ प्रवृत्त्यभावात् । ९ नित्यत्वादेः । १० सत्त्वसमारोपस्य ।

कथं तदधिगतार्थमनुमानं यत: प्रामाण्यं न भवेत् ? असाध्यविषयत्वे प्रत्यक्षस्य कथं ततो व्याप्तिग्रहणमिति चेत् ? न, विपक्षे बाधकसामर्थ्यादेव तद्ग्रहणात् । साध्यविषयत्वे तु तस्य किमर्थमनुमानम् ? समारोपव्यवच्छेदार्थमिति चेत्, तदभावे किं न भवेत्ततो विषयपरिज्ञानमिति चेत्, व्याप्तिवेदनं कथम् ? तदपि तद्व्यवच्छेदादेवेति चेत्, न, चक्रकात्–सति तद्व्यवच्छेदे तद्वेदनम्, ततोऽनुमानम्, ततस्तद्व्यवच्छेद इति । ततो नीलादे: प्रत्यक्षावगतस्यैव क्षणभङ्गादिविशिष्टतया अनुमानतो निर्णयादुपपन्नं तस्य तदेकार्थत्वमपूर्वार्थत्वञ्चेति वस्तुविषयमेवानुमानम् । कथमेतत् ? कथं च न स्यात् ? सम्बन्धापरिज्ञानात् । तथा हि–न साध्यसाधनयोरपरिज्ञाने सम्बन्धपरिज्ञानम्, तस्य तत्पूर्वकत्वात् । परिज्ञानेऽपि न निर्विकल्पेन तत्परिज्ञानम्, 'इदमत्र प्रतिबद्धम्' इत्यपरामर्शात् । नापि तज्जन्मना विकल्पेन, तत्काले साध्यसाधनयोस्तद्दर्शनस्य च व्यपगमात् । विकल्पोपनीतयोस्तत्परिज्ञाने कथं वस्तुगत: सम्बन्ध:, तदुपनीतयोरवस्तुत्वात् ? भवदपि तत्परिज्ञानं न सामस्त्येन, साध्यसाधनवस्तूनामानन्त्यात् अनन्तेनापि कालेन तदसम्भवात् । नाप्येकदेशेन, फलाभावात् । अनुमानं हि तत्फलम्, न च यत्रैव तत्परिज्ञानं तत्रैवानुमानं सम्बन्धज्ञानादेव साध्यसिद्धे: । नाप्यन्यत्र, तत्र तत्साधनादेरभावात्, अन्यतश्च तदनुपपत्ते: । सम्बन्धप्रतिपत्तिनिबन्धनस्य च प्रकारान्तरस्याभावादिति चेत्, किमिदानीमनुमानमेव नेच्छेत् ? तथा चेत्, न कुतश्चिदभिमतसिद्धि: । निवेदितश्चैतत् । इच्छतोऽपि तदवस्तुविषयमेवेति चेत्, न, अवस्तुन्यपि सम्बन्धापरिज्ञाने तदनुपपत्ते: । तत्परिज्ञानस्य चोक्तनीत्या तत्राप्यसम्भवात् । किमर्थं वा तदनुमानम् ? व्यवहारार्थमिति चेत्, न, व्यवहारस्यावस्तुन्यसम्भवात् मरीचिकातोयादिवत् । वस्तुन्येवासौ तत्रानुमानस्य प्रतिबन्धादिति चेत्, न, तत्परिज्ञानेऽपि पूर्ववद्दोषात् । न दोष:, देशकालादिविशेषपरामर्शमन्तरेणापि 'ईदृशमीदृशप्रतिबद्धम्' इति कुतश्चित्प्रतिपत्ते: । नापि वैकल्यमनुमानस्य पुनस्तादृशादेव विशेषालिङ्गितालिङ्गाल्लिङ्गिविशेषस्य प्रतिपत्तेरिति चेत्, सिद्धं तर्हि वस्तुन्येव प्रतिबन्धपरिज्ञानमनुमानस्य च साफल्यम् । एतदेवाह–

**समानपरिणामात्मसम्बन्धप्रतिपत्तित: ।**
**तत्राशक्तिफलाभावौ न स्यातां लिङ्गलिङ्गिनो: ॥ १५॥** इति ।

**समान:** सदृश: स चासौ **परिणामश्च** विवर्त: स एवात्मा स्वभावस्तेन **सम्बन्ध**स्याविनाभावस्य **प्रतिपत्तित:** परिज्ञानात् । [1]कयोस्तत्प्रतिपत्तित: ? इत्याह–**लिङ्गलिङ्गिनो:** लिङ्गस्य धूमादे: लिङ्गिनश्च पावकादे: । तत: किम् ? इत्याह–**तत्र** तस्या: प्रतिपत्तौ **तत्रा**नुमाने चा**शक्तिश्च फलाभावश्च न स्यातां** न भवेताम् । **समान**ग्रहणेनात्यन्तवैलक्षण्यं स्वलक्षणानां प्रत्युक्तम्, तथाविधानां तेषामप्रतिपत्ते: । निरूपितं चैतत् । **परिणाम**ग्रहणेन समानाकारस्य कौटस्थ्यम्, तस्याप्यपरिज्ञानाद्वैफल्याच्च । तत्र सम्बन्धप्रतिपत्ति: फलमिति चेत्, न, तस्यैवानुमानविषयत्वप्रसङ्गात्, तथा च कथं विशेषे तत: प्रवृत्ति: ? तस्य तत्र सम्बन्धादिति चेत्, लिङ्गस्यैव तत्र किन्न स्यात् तत्परिज्ञानाशक्तेरन्यत्रापि तुल्यत्वात् । प्रवृत्तिरपि सामान्य एवेति चेत्, न;

१–नुमानस्य ता० । २–पाशिलिगलाल्लिगा– आ०, ब० प० । ३ तया–आ० ब० प० ।
४ 'प्रयुक्तमिति प्रागुक्तमत्रापि सम्बन्धनीयम् । –ता० टि० । ५ सामान्ये । ६ सामान्यस्य । ७ विशेषे ।

विशेषकल्पनावैफल्यानुषङ्गात् । **आत्मपदेन** च तत्परिणामस्य कल्पितत्वम्[1] ; कल्पितस्य वस्तुस्वभावत्वानुपपत्तेः, कल्पनानुपपत्तेश्च । तथा हि–

कल्पना सदृशाकारा न चेत्तत्कल्पनं कथम् ? ।
वस्तुतः सदृशाकारा सा चेद्वस्तु न किं तथा ? ॥१२८३॥
यदि कल्पनयैवासौ तदाकारा तदा कथम् ।
अनवस्थानदोषोऽयमनुषङ्गी निषिध्यताम् ? ॥१२८४॥
ततो दूरं गतेनापि सादृश्यं कल्पनागतम् ।
वस्त्वेव प्रतिपत्तव्यं तथा वस्तुषु धीमता ॥१२८५॥

तेन **सम्बन्ध** इत्यनेनाप्यात्मान्तरेणं सम्बन्धव्याख्यानम्[2] ; न हि सम्बन्धस्यात्मान्तरमन्यत्र सन्निधिरूपात् । संयोगादिरात्मान्तरमेवेति चेत् ; सोऽपि कथं तदन्तरम् ? पावकादौ सम्बन्धप्रत्ययजननादिति चेत्, तदपि सर्वत्र कस्मान्न भवति ? तस्य तत्रासम्बन्धादिति चेत् ; पावकादावपि न भवेत् तदविशेषात् । तत्र सम्बध्यत इति चेत् ; यदि स्वतः ; पावकादिरपि धूमादिना तथैव सम्बध्येतेति पर्याप्तं संयोगादिपरिकल्पनया । तस्य सम्बन्धत्वादुपपन्नं स्वतः सम्बन्धो न पावकादेर्विपर्ययादिति चेत् ; तदेव कुतः ? स्वतः सम्बन्धादिति चेत्, सोऽपि कस्मात् ? सम्बन्धत्वाच्चेत् ; न ; परस्पराश्रयात् । सम्बन्धस्य तथा प्रतीतेरिति चेत् ; नन्वियमेव तत्र दुर्लभा पावकादिव्यतिरेकेण तस्यैवाप्रतिपत्तेः । यदि न तत्प्रतिपत्तिर्न कश्चित्सम्बन्ध इति कथं 'सम्बन्धी पावकादिः' इति प्रत्ययः ? विशिष्टप्रत्ययस्यासति विशेषणेऽनुपपत्तेरिति चेत्, न, स्वयं तथा तस्य परिणामादेव तदुपपत्तेः 'सम्बन्धः संयोगादिः' इति प्रत्ययवत् । न हि तत्र व्यतिरिक्तं सम्बन्धत्वमस्ति, तस्य द्रव्यादावनन्तर्भावेन सप्तमपदार्थत्वप्रसङ्गात् । न हि तद्विलक्षणं तत्रान्तर्भवति तदा पदार्थभेदाभावापत्तेः । तन्न स्वतस्तस्य तत्र सम्बन्धः । नापि तदन्तरेण, तत्कल्पनायामनवस्थादोषात् । नायं दोषः ; समवायस्य तदन्तरत्वात्, तस्य चानाश्रितत्वेन तदन्तरनिरपेक्षत्वात् । न चैवं तस्यासम्बन्धत्वम्, सम्बन्धबुद्धिकरणात् सम्बन्धत्वोपपत्तेः । न च पारतन्त्र्यात्सम्बन्धत्वं तद्बुद्धिकरणं वा ; द्रव्यगुणादावपि तत्प्रसङ्गात् । ततः स्वाभाव्यादेव तस्य तस्य तत्करणञ्चेति किं पारतन्त्र्येण यतोऽनवस्थानमिति चेत् ? उच्यते–

समवायस्य नित्यत्वव्यापकत्वोपकल्पनात् ।
एकत्र वृत्तः संयोगः सर्वत्रापि ततो भवेत् ॥ १२८६ ॥
न हि तत्रापि तद्भावे तस्मादन्यन्निबन्धनम् ।
[5]स चेत्सर्वत्र सर्वत्र संयोगोऽपि नियोगतः ॥ १२८७ ॥
ततोऽग्नावित्र संयोगः धूमोऽन्यत्राप्युपव्रजन् ।
व्यभिचारात्कथं नाम पावकस्यानुमापकः ॥ १२८८ ॥

१–नविक–आ०, ब०, प० । २ प्रयुक्तमिति सम्बन्ध'–ता० टि० । ३ स्वरूपान्तरेण ।
४ प्रयुक्तमिति सम्बन्ध । ५ संयोगादिति प्र–ता० । ६ न चेत्स–आ०, ब० प० ।

न च स्वभावनानात्वं समवायस्य यद्बलात् ।
विषयेषु नियामोऽयं संयोगस्य प्रकल्प्यताम् ॥१२८९॥
तन्नानात्वादभेदश्चेत् समवायोऽपि भिद्यते ।
तथा च "तत्त्वं भावेन व्याख्यातम्" इति[1] दुष्यति ॥१२९०॥
भेदश्चेत् तत्कथं तस्य तत्र चेत्समवायतः ।
तस्याप्येकस्वभावत्वे तत्तन्नियमः कथम् ? ॥१२९१॥
तत्र स्वभावनानात्वे दोषः पूर्वोऽभिलक्ष्यताम् ।
समवायान्तराक्षेपस्त्वाक्षिपत्यनवस्थितिम् ॥१२९२॥
कथञ्चिदेवाभेदश्चेत्स्वभावसमवाययोः ।
सम्बन्धस्तद्वद्रूपः स्यादेको भावस्तथा न किम् ? ॥१२९३॥
यतः सम्बन्धिनोऽन्यस्य सम्बन्धस्य प्रकल्पना ।
भेदावस्थाविलोपाय भवतो नावकल्पते ॥१२९४॥

तत्रापरः संयोगादिः सम्बन्धः । नाप्युपकार्योपकारकभावादिः;[2] तस्यापि भावादर्थान्तरत्वे कुतः स तस्येति व्यपदेशः ? सम्बन्धादुपकार्योपकारकभावादेरिति चेत्; न; तत्रापि तथैव प्रसङ्गादनवस्थोपनिपाताच्च । ततः स्थितम्–'**समान**' इत्यादि ।

'**प्रतिपन्नितः**' इत्यनेन तदात्मनः सम्बन्धस्य निरवद्यसंवेदनविषयतामवद्योतन् स्वमनीषिकया तत्कल्पनं परिहरति । प्रतिपादिता च तत्प्रतिपत्तिर्बहुशः पूर्वमिति नेदानीं प्रतन्यते । ननु यथा धूमस्य तदन्तरसदृशस्य पावकसम्बन्धः तथा मशकवर्तेरपि, पावकस्यापि यथा तादृशस्य धूमप्रतिबन्धस्तथा मणिविशेषादेरपीति मशकवर्तेः पावकस्य धूमाच्च मण्यादेरनुमानमापद्यत इति चेत्; एवमेतद्, यदि समानपरिणाममात्रेण तद्भावः । न चैवम्; तद्विशेषेण तदुपकल्पनात्, तस्य च धूमपावकभेदेष्वेव भावात् न मशकादिभेदेषु । कथं पुनस्तत्परिणामो विशिष्टश्चाविशिष्टश्चेति चेत् ? कथं सामान्यं तादृशं यतो यथोक्तदोषस्तत्रापि न भवेत् ? तथा प्रतीतेरिति समानमन्यत्र । नन्वेवं सामान्यस्यैव समानपरिणाम इति शब्दान्तरमिति चेत्; न; प्रतिव्यक्तिपर्यवसितस्यैव परिणतिविशेषस्य तेनाभिधानात्, सामान्यस्य तद्विपरीतत्वात् ।

भवतु तत्परिणाम एव सामान्यम्, तस्य तु व्यक्तिभ्यो भेद एवेति योगाः । अभेद एवेति साङ्ख्याः । तत्राह–

**न भेदोऽभेदरूपत्वान्नाभेदो भेदरूपतः** । इति ।

**न भेदो** न व्यतिरेकः तत्परिणामस्य विशेषेभ्यः । कुत एव तद् (एतद्)? **अभेदरूपत्वात्** अभेदस्तस्य तैस्तादात्म्यं रूपं यस्य तस्य भावात् **अभेदरूपत्वात्** । एतदपि कुत इति चेत् ! तथा प्रतीतेरेव । तथा च वक्ष्यति–'**तथासंवित्तिसम्भवात्**' इति । संवेद्यते हि तत्परिणामस्य तदभेदरूपत्वं 'सदृशो देवदत्तः' इति देवदत्तविशेषसामानाधिकरण्येन तस्य संवित्तेः ।

---

१ वैशे० सू० ७।२।२८ २ –दि स–ता० । ३ समानपरिणामशब्देन ।

न हि सामानाधिकरण्यमन्यदभेदरूपत्वात् । समवायरूपमेव तत्राभेदरूपत्वमिति चेत् , न 'समवाय सम्बन्ध' इत्यादावभेदरूपतयैव भवतोऽपि तत्प्रसिद्धे । **नाभेदो** नाप्येकान्तेन तस्य तैस्तादात्म्यम् । कुत एतत् ? **भेदरूपः [ यतः ]** तस्य तद्व्यतिरेकस्वभावत्वात् । एतदपि तथाप्रतीतेरेव । किं पुनर्भेदस्याभेदस्य च पृथक्प्रतिपत्तिरस्ति ? तथा चेत् ; न, **"न पश्यामः क्वचित् किञ्चित्"** [ सिद्धिवि० पृ० १२१ ] इत्यादिविरोधात् , तद्विषययोरन्योन्यासम्पृक्तयोरेव सिद्धिप्रसङ्गाच्च । न हि तत्प्रतीत्योरन्योन्यविषयासंस्पर्शे तत्संसर्गकल्पनमुपपन्नं प्रतीतिनिबन्धनत्वात् प्रमेयव्यवस्थाया । तयोरसंस्पर्शे वा जात्यन्तरप्रतिपत्तिरेवास्ति नाभेदप्रतिपत्ति भेदप्रतिपत्तिर्वा पृथगिति चेत् ; सत्यमिदम् , प्रमाणतो भेदाभेदप्रतिपत्तेरेव भावात् , भावस्य च ततो भेदाभेदात्मन एव प्रसिद्धे न पृथग्भेदात्मनो नाप्यभेदात्मनश्च, किन्तु तत एव जात्यन्तरप्रतिपत्तेरपोद्धारपरिकल्पनया भेदस्येतरस्य च पृथक् प्रतिपत्तिमवस्थाप्य तद्विषयसद्भाव तदपरैकान्तप्रतिपत्ते हेतुरुक्त । तत एवाह–

**सामान्यं च विशेषाश्च तदपोद्धारकल्पनात् ॥१६॥** इति ।

**सामान्यं** च चशब्दात् तत्प्रतिपत्तिश्च । **विशेषाश्च** चशब्दात्तत्प्रतिपत्तिश्च । तस्माज्जात्यन्तरात् तस्यास्तत्प्रतिपत्तेश्च **अपोद्धारो** निष्कर्षणं भेदस्य तत्प्रतिपत्तेश्चाभेदस्य तत्प्रतिपत्तेश्च तस्य **कल्पनमभिप्रायाधिरोहणम्** , तस्मात् 'व्यवस्थाप्यन्ते' इति शेष । यदि पुन सदृश परिणाम सामान्य तर्हि भेदेन भवितव्य तस्य तन्निष्ठत्वेन इतरत्रासम्भवात् । न चायं सम्भवति, अभेदस्यैव सर्वभावेषु **"सदेव सौम्येदम्"** [ छान्दो० ६।२।१ ] इति, **"सर्वं खल्विदं ब्रह्म"** [ छान्दो० ३।१४।१ ] इति, **"एतदात्म्यमिदं सर्वम्"** [ छान्दो० ६।८।७ ] इति चाम्नायात् प्रतिपत्ते । भेदप्रतिपत्तेश्चाविद्योपरचितत्वेन गन्धर्वनगरादिप्रतिपत्तिवत् भ्रान्तत्वादिति [१]कश्चित् । भेद एव भावाना तात्त्विको न कथञ्चिदप्यनुगम तत्प्रतिपत्तेरारोपितविषयत्वेन वितथा (थ) त्वादित्यपर । तत्रोत्तरमाह–

**संसर्गो नास्ति विश्लेषाद्विश्लेषोऽपि न केवलः ।**
**संसर्गात्सर्वभावानां तथा संवित्तिसम्भवात् ॥१७॥** इति ।

**संसर्गं** ऐक्यापत्तिरपरनामा । केषाम् ? **सर्वभावानाम्** सर्वेषां चेतनेतरात्मना भावाना पदार्थानाम् । स किम् ? **नास्ति** न विद्यते । कुत ? **विश्लेषात्** व्यावृत्ते विभ्रमापर नाम्न ससारादिति गम्यते, विश्लेषस्य विश्लेष्याविनाभावात् , अन्यस्य विश्लेष्यस्य तत्रासम्भवात् । ससर्गे हि [३]भावानामात्मनो विभ्रमेणापि तद्भावाद्विभ्रम एव स्यात्तस्माद आत्मना वा तस्य तद्भावादात्मैव न विभ्रमवाद । तदभ्युपगमे च निर्विषयमेतत् **"इन्द्रो मायाभि पुरुरूप ईयते"** [ ऋग्० ४।७।३३ ] इति । **"एकधानेकधा चैव दृश्यते जलचन्द्रवत्"** [ ब्रह्मबि० १२ ] इति च । विभ्रमादन्यस्य तद्विषयस्याभावात् । तस्मादस्ति विभ्रमो विश्लिष्टश्चात्मन इति वक्तव्यम् । अविश्लेषे तस्य ससारित्वापत्ते नित्यमुक्तत्वप्रतिज्ञाव्याघातो विभ्रमरूपत्वात् ससारस्य । भवतु ससारस्य तस्माद विश्लेष तथापि न तत्प्रतिज्ञाव्याघात , आत्मनस्तस्माद्विश्लेषस्यैव भावादिति चेत् , न , अविश्लिष्टा

१ ब्रह्मवादी । २ बौद्ध । ३ भावानाम-आ०, ब० प० । ४ -धानेक-आ० ब०, प० ।

दविश्लेपस्यैवोपपत्तेस्तस्य द्विष्ठत्वात् । कथमिदानीं[1] रुचकादेः सुवर्णादविश्लेषेऽपि सुवर्णस्य ततो विश्लेषः ? अन्यथा रुचकाद्यपक्रमे तस्याप्यपक्रमप्राप्तिः, न चैवम्;[2] असत्यपि तस्मिन् तदवस्थितेरुपलम्भादिति चेत्; रुचकादेरपि कथमवस्थायिनः सुवर्णादविश्लेषेऽनवस्थायित्वं विरोधादिति न किञ्चिदेतत् ।

स्यादाकूतम्–वस्तुन्ययं भवति विकल्पः संश्लेषो विश्लेष इति[3] च । न च विभ्रमस्य वस्तुत्वम्, तत्त्वविरोधात्, अतस्तत्र सत्त्वासत्त्वाभ्यामिव संश्लेषविश्लेषाभ्यामनिर्वचनीयत्वमेव तत्त्वमिति; तदपि दुराकृतमेव; नित्यमुक्तिप्रतिज्ञाव्याघातस्य तदवस्थत्वात् । तथा हि–

निश्चिते सति विश्लेषे नित्यमुक्तत्वसम्भवः ।
ताद्रूप्यात्तस्य विश्लेषावाच्यत्वे स कथं भवेत् ॥१२९५॥
आत्मविभ्रमयोस्तस्माद्विश्लेषं वक्तुमर्हसि ।
तथा चेदन्यभावानामप्यसौ किन्न कथ्यते ? ॥१२९६॥
कुतोऽसाविति चेदात्मभ्रमयोरप्यसौ कुतः ।
तथासंवित्तिभावाच्चेदन्यत्रापि स दृश्यते ॥१२९७॥

तदाह–'**तथासंवित्तिसम्भवात्**' इति । **तथा** तेन विश्लेषप्रकारेण सर्वभावानां **संवित्तेः** सम्यग्बुद्धेः **सम्भवात्** विश्लेषो विश्लेषाच्च संसर्गो नास्तीति संग्रहणेन तत्संवित्तेरविचोपरचितत्वं प्रत्याख्यातम्; तद्रचितत्वे सम्यक्त्वानुपपत्तेः । समीचीना च तत्संवित्तिः बाधकाभावात् । 'भ्रान्ता तत्संवित्तिः भेदविषयत्वात् मायातोयादिसंवित्तिवत्' इत्यनुमानं बाधकमिति चेत्; न; तस्य विभ्रमात्मभेदसंवित्त्या व्यभिचारात् । ततः स्थितम्–'**संसर्गो नास्ति**' इति ।

तथा **विश्लेषोऽपि न केवलः** संसर्गरहितः । कुतः ? **संसर्गात्** समाश्लेषात् **सर्वभावानाम्** । तदपि कुतः ? **तथा संवित्तिसम्भवात्** । **तथा** तेन संसर्गप्रकारेण **संवित्तेः** गौरयम् गौरयमित्यनुगमवत्या बुद्धेः **सम्भवात्** । संसर्गश्चात्र न मिश्रीभावो मतान्तरसिद्धिप्रसङ्गात्, अपि तु सदृशपरिणामः तस्यैवोक्तसंवित्तौ प्रत्यवभासनात्, संसर्गशब्देन च तदभिधानोपपत्तेः समः सर्गः संसर्ग इति । न च तत्संवित्तेर्विभ्रमत्वं विश्लेषसंवित्तावपि तत्प्रसङ्गात्, बाधकाभावस्योभयत्रापि समानत्वादिति । एतावन्तरश्लोकौ, 'समानपरिणाम' इत्यादेराभ्यां व्याख्यानात् ।

कुतः पुनः समानपरिणाम एव सामान्यमभिमतं न नैयायिकादिकल्पितमेवेति ? अत्राह–

**तद्व्याप्तिव्यतिरेकाभ्यां मतं सामान्यदूषणम्** । इति ।

**तत्** अनन्तरोक्तं सामान्यं **मतम्** इष्टं जैनस्य । कुतः ? सामान्यस्यान्यकल्पितस्य दूषणं **सामान्यदूषणं** मत इति । तदपि कुतः ? व्याप्तिश्च सामान्यस्य स्वव्यक्तिवत् व्यक्त्यन्तरेष्वपि भावः, व्यतिरेकश्च स्वव्यक्तिष्वेव भावस्ताभ्यां **व्याप्तिव्यतिरेकाभ्याम्** । तथा हि–यदि सामान्यं व्यापि; खण्डादिवत् कर्कादावपि गोत्वस्य भावाद् वाहादयर्थी तत्रापि किन्न प्रवर्तेत ? तत्र तस्यानुपलम्भादिति चेत्; खण्डादावुपलम्भः कुतः ? तत्र तस्य तत्करणशक्तेरिति चेत्; कर्कादावपि स्यात् ।

---

१ "रुचक मङ्गलद्रव्ये ग्रीवाभरणदन्तयोरिति विश्वप्रकाशिका ।" –ता० टि० । २–२ ० –भा०, ब०, प० । ३ इति वचनात्–भा०, ब०, प० ।

न हि तस्यैव क्वचिच्छक्तिरशक्तिरन्यत्रेत्युपपन्नम् भेदापत्तेः । शक्तिः क्वचिदन्यत्राशक्तिर्नापरेति चेत्; न, विधिनिषेधयोरभेदस्यानभिमतस्य प्रसङ्गात् । ततः क्वचिच्छक्तावन्यत्रापि शक्तिरेव, अशक्तौ न क्वचिदपि शक्तिरित्येकान्तः । तत एवोक्तम्–

"आत्मनि ज्ञानजनने यच्छक्तं शक्तमेव तत् ।
अथाशक्तं कदाचिच्चेदशक्तं सर्वदैव तत् ॥" [प्र० वा० २।२१] इति ।

शक्तमपि सहकार्यभावान्न कर्कादौ तदुपलम्भं जनयतीति चेत्, खण्डादौ कः सहकारी ? स एव खण्डादिरिति चेत्, कुत एतत् ? तत्र तस्य समवायात्, कर्कादिरपि स्यात्तदविशेषात् । गतत्वस्य न च तदपेक्षणं सहकारिणोऽपि तत्प्रसङ्गात् अनवस्थापत्तेः । गोत्व (त्व) तत्सहकारिसमुदायस्यैव शक्तिर्न पृथगिति चेत्, पृथक्तर्हि गोत्वमवस्त्वेव स्यादशक्तत्वात् । ततः व्याप्तौ तस्य क्वचिदुपलम्भोऽन्यत्रानुपलम्भश्चोपपन्नः । तथा तस्य कालव्याप्तौ आश्रये असतीव प्रध्वस्तेऽपि तस्मिन्नुपलम्भः स्यात् तज्जननस्वभावत्वात् । आश्रयः तस्य सहकारी, तदभावान्नेति चेत्, न, तदभावेऽपि तस्य तत्स्वभावत्वाप्रच्युतेः अनित्यत्वप्रसङ्गात् । अत एवोक्तम्–

"तस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता ।
नित्यत्वादचिकित्स्यस्य कस्तां क्षपयितुं क्षमः ॥" [प्र० वा० २।२२] इति ।

शक्तिरपि तस्य सहकार्येव नापर इति चेत्, न, तस्य सामान्यादिव व्योमकुसुमादपि कार्यप्रसङ्गात्, स्वतः शक्त्यभावेनासत्त्वस्य तद्वत्सामान्येऽपि सहकारिशक्तिकृतस्य च सत्त्वस्य सामान्यवत् त्रैरूप्यनिवारणात् । तत्र व्यापि सामान्यम् ।

एतेन मीमांसकोऽपि सर्वगतसामान्यवादी प्रत्युक्तः । स्यान्मतम्–न तत्सामान्यस्य सर्वगतत्वेऽपि सर्वत्रोपलम्भः सर्वत्र तदभिव्यक्तावशक्तेः । खण्डादौ भवत्युपलम्भस्तस्य तच्छक्तिभावात्, तस्य च कार्यादेव तदुपलम्भादवगतेः । कर्कादावपि किन्न तच्छक्तिरित्यपि न पर्यनुयोगः, 'दाहशक्तिर्दहनवदाकाशेऽपि किन्न स्यात्' इत्यपि तत्प्रसङ्गात् । न चैकस्योपलम्भेतरात्मकत्वं विरुद्धम्, उभयात्मकत्वाद्वस्तुन इति । तत्रोच्यते–

सामान्यरूपा शक्तिश्चेत्तदभिव्यक्तिकारणम् ।
तस्याः सर्वत्र सद्भावात्तद्व्यक्तिः सर्वतो भवेत् ॥१२९८॥
शक्तेरपि च तद्व्यक्तिर्व्यक्तायाः एव नान्यतः ।
तद्व्यक्तिरपि खण्डादावेव नान्यत्र चेत्तदा ॥१२९९॥
शक्तौ तद्व्यक्तिकारिण्याः प्रसङ्गः पूर्ववद्भवेत् ।
पुनस्तद्व्यक्तिचिन्तायामापतत्यनवस्थितिः ॥१३००॥
विशेषात्मापि शक्तिश्चेन्न समा खण्डमुण्डयोः ।
मुण्डात्कर्कादिव व्यक्तिर्गोत्वस्येह कथं भवेत् ? ॥१३०१॥

१ समवायाविशेषात् । २ गतत्वस्य । ३ व्योमकुसुमवत् । ४ व्योमकुसुमे...।

शक्तिसाम्यं च सामान्यात्कुतश्चित्कल्प्यते यदि ।
तस्य सर्वत्र सद्भावात्समाः स्युः सर्वशक्तयः ॥१३०२॥
व्यस्तं तत्साम्यहेतुस्तद्व्यक्तिश्च समशक्तितः ।
यदि तत्साम्यचिन्तायामन्या स्यादनवस्थितिः ॥१३०३॥
स्वत एव समत्वञ्चेच्छक्तीनामवकल्प्यते ।
भावानामपि तद्वत्स्याद् वृथा सामान्यकल्पनम् ॥१३०४॥
गौरयं गौरयं चेति कथमन्वयिनी मति ।
सामान्यं यदि नास्त्येव गोत्वलक्षणमन्वितम् ? ॥१३०५॥
इत्यप्यचोद्यमेवेदं समानपरिणामिषु ।
तथासङ्केतसामर्थ्याच्चन्मतेरनुपद्रवात् ॥१३०६॥
इयं शक्तिरियं शक्तिरित्यप्यन्वयिनी मतिः ।
शक्तिष्वपि कथन्नाम सामान्यविरहोऽन्यथा ॥१३०७॥

तत्र मीमांसकस्यापि सर्वगतं सामान्यमुपपन्नम् । ततो निराकृतमेतत्—

"यद्वा सर्वगतत्वेऽपि व्यक्तिः शक्त्यनुरोधतः ।
शक्तिः कार्यानुमेया हि व्यक्तिदर्शनहेतुका ॥
तेन यत्रैव दृश्येत व्यक्तिः शक्त तदेव तु ।
तेनैव च न सर्वासु व्यक्तिष्वेतत्प्रतीयते ॥
भिन्नत्वेऽपि हि कासाञ्चिच्छक्तिः काश्चिदशक्तिकाः ।
न च पर्यनुयोगोऽस्ति वस्तुशक्तेः कदाचन ॥
अग्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम् ।"

*[ मी० श्लो० आकृ० २६–२९ ]* इति ।

सत्येव सामान्ये वक्तुमेवमुचितत्वात् । अपि च,

सर्वत्र विद्यमानत्वाद् ब्राह्मणत्वस्य गोत्ववत् ।
शूद्रस्याप्यधिकारित्वं किल यज्ञादिकर्मसु ॥१३०८॥
तद्व्यक्तावेव तत्त्वं स्यान्न च शूद्रेऽस्ति सा यदि ।
कौण्डिन्यादावपि व्यक्तिर्नाकृत्या तस्य विद्यते ॥१३०९॥
आकृत्या तदभिव्यक्तौ गोत्ववत्संशयः कथम् ?
यतस्तत्प्रतिपत्त्यर्थमुपायान्तरमिष्यते ॥१३१०॥
तदन्तराच्च सामान्यरूपात्तत्प्रतिवेदने ।
शूद्रेऽपि तत्परिज्ञानं किल सर्वगतात्ततः ॥१३११॥
तस्याप्यभिव्यक्तिराकृत्या यदि सामान्यरूपतः ।
उपायान्तरतो व्यक्तिरनवस्था प्रवर्तते ॥१३१२॥

तदन्तर क्रियारूपं यद्यन्योन्यसमाश्रय ।
तदन्तरेण तद्विचेस्तद्विचेश्च तदन्तरात् ॥१२१३॥
ब्राह्मणत्वपरिज्ञान सम्प्रदायात्क्वचिद्यदि ।
शूद्रेऽपि किन्न भट्टस्य सम्प्रदायात्तदिष्यते ॥१२१४॥
शूद्रत्वस्यापि कौण्डिन्ये गतेस्तत्सम्प्रदायत ।
तस्यापि नाधिकार स्यात्तत्कर्मस्वन्यशूद्रवत् ॥१२१५॥

तन्न व्याप्ति सामान्यस्य ।

भवतु व्यतिरेक एव स्वव्यक्तिष्वेव वर्तनात् न तदभावे नापि तदन्तरेष्विति चेत्, तर्हि व्यक्तीना विनाशे चोत्पादे च कस्तस्य विधि ? न विनाशोत्पादौ, नित्यत्वात्, व्यक्तिरहिते च तदभावे कथ तद्देशजन्मनि[1] तद्भाव ? तस्य तत्र पूर्वमभावात्, व्यक्त्यन्तराच्चातदात्मनोऽनागमनात् । तदुक्तम्–

"सामान्यं समवायश्चाप्येकैकत्र समाप्तितः ।
अन्तरेणाश्रयं न स्यान्नाशोत्पादिषु को विधिः ?"

[ आप्तमी० श्लो० ६५ ] इति ।

तन्न व्यतिरेकेऽपि सामान्यमुपपन्नम् । ततो निषिद्धमेतदपि–

"व्यक्तिष्वेव हि सामान्यं नान्तरा गृह्यते यतः ।
न ह्याकाशवदिच्छन्ति सामान्य नाम किञ्चन ॥"

[ मी० श्लो० आकृ० श्लो० २५ ] इति ।

यस्य तु मत स्वाश्रयादपि तद्व्यतिरिक्तमिति; तत्र कथ तस्य ? तेनोपकाराद्राजपुरुषवदिति चेत्, न, उपकारस्याव्यतिरिक्तस्यासम्भवात्, तस्य कौटस्थ्येनानाधेयातिशयत्वात् । व्यतिरिक्तश्च कथ तस्य ? ततोऽप्युपकारादिति चेत्; न; तस्याप्यव्यतिरिक्तस्यासम्भवात् । व्यतिरेके पूर्ववद्दोषादनवस्थानुषङ्गाच्च । नोपकारात्तत्तस्य अपि तु तदाधेयत्वादिति चेत्; तदपि कुत ? स्वशक्तितश्चेत्, तया तर्हि तदात्मकमेवास्तु तथैव प्रतीते, आश्रयाव्यतिरेकेण हि सामान्यस्य प्रतीति खण्डो गौ कर्कोऽश्व इति । चेन्न ततो[2] विश्वास स्वरूपेऽपि न स्यादविशेषादिति सामान्यमेव न किञ्चित् सामान्यकल्पनावैफल्योपनिपातात् । तथा हि–

समानशक्त्या सामान्यं बिभ्रते यान्तदाश्रया ।
समानप्रत्ययं तावत्किन्न कुर्वन्ति ते तथा ॥१२१६॥
एव हि न भवत्यत्र पारम्पर्यप्रकल्पनम् ।
सामान्यभरणं शक्तेस्तस्मादपि च तन्मति ॥१२१७॥ इति ।

तन्नाश्रयशक्तितोऽपि तस्य तदाधेयत्वम् । आश्रयव्यङ्ग्यत्वादिति चेत, न, तदभिव्यक्तिकृतस्तच्च्युते वैलक्षण्येतरपक्षयो पूर्ववद्दोषात । आश्रयादपि नाव्यक्तादेव तद्व्यक्ति, अन्धकारेऽपि तत्प्रसङ्गात । व्यक्तिरपि न सामान्यरूपेण, एकत्र व्यङ्ग्यव्यञ्जकभावानुपपत्ते । अन्यदेव तत्सामान्यं

१ तदभावेन क–आ० । २ विशेषे । ३–त्वमपि तत्र –प० । ४ प्रतीतित ।

यद्रूपेण तस्याभिव्यक्तिः तदप्यन्यदेव यस्य ततोऽभिव्यक्तिरिति चेत् ; न ; तत्राप्येवं प्रसङ्गादव्यवस्थितेश्च । नापि[1] विशेषरूपेण ; तस्यैव स्वतो भावविलक्षणस्याभावात् । स्वतोऽसतः सत्तासम्बन्धस्याप्यनुपपत्तेः व्योमकुसुमवत् । तत्र तद्व्यङ्ग्यत्वादपि तस्य तदाधेयत्वम् । तत्र वृत्तेरिति चेत् ; सापि यदि स्वतन्त्रा ; कथमसौ सामान्यतदाश्रययोः ? स्वतन्त्रा च तयोश्चेति व्याघातात् । [2]वृत्त्यन्तरापेक्षैव (क्ष एव) सम्बन्धः स्वतन्त्रत्वान्न भवति न [3]स्वभावत इति चेत् ; सोऽपि यद्येकः ; कथमनेकसम्बन्धित्वं ततस्तस्याः[4] ? कारणस्वभावादप्येकस्मादेव निरवशेषकार्यविशेषोत्पत्ते [5]प्रधानवादस्याप्रतिक्षेपप्राप्तेः । अनेकश्चेत् ; न ; तद्भेदे वृत्तेरपि भेदप्रसङ्गात् । भिन्नैव ततो वृत्तिरपीति चेत् ; कथमसौ वृत्तेः ? तस्यास्तत्र सम्बन्धादिति चेत् ; न ; तत्राप्यनेकस्वभावकल्पनायामनवस्थितेः । तत्कार्यत्वादित्यप्यनेनापास्तम् । तस्मादसम्बन्ध एव सामान्यसमवाययोरर्थस्य च ताभ्यामभ्युपगन्तव्यः । न च तथाविधं तत्त्रितयं कुतश्चिदपि प्रमाणान्निश्चितवपुरिति खपुष्पकल्पितमेव तदनल्पमतयः प्रतिपद्यन्ते । तदुक्तम्–

"सर्वथा न हि सम्बन्धः सामान्यसमवाययोः ।
ताभ्यामर्थो न सम्बद्धः तानि त्रीणि खपुष्पवत् ॥"

[ आप्तमी० श्लो० ६५ ] इति ।

कुतः पुनः समानपरिणामेऽपि न सामान्यदूषणमिति चेत् ? अत्राह–

**समानपरिणामे न तदेकस्यानुपायतः ॥१८॥** इति ।

**समानपरिणामो** व्याख्यातः तत्र, **न** सामान्यदूषणम् । कुतः ? **तस्य** तत्परिणामस्यै**कस्य** व्यक्तिष्वनुस्यूतस्य **अनुपायतः** अनभ्युपगमात् । नन्वेवं सामान्येऽपि व्यक्तिनियते न दूषणं स्यात्, तस्यापि व्यक्त्यन्तराले विच्छेदेनैकत्वाभावादिति चेत् ; न ; सत्यपि तस्मिन्नेकस्यैव परैस्तस्याभ्युपगमात् । व्याहतमेतत्–'विच्छिन्नं चैकं च' इति, एकत्वस्याविच्छेदरूपत्वात्तस्य चेतरविरोधादिति चेत् ; भवतु परेषामेवायं दोषः । न दोषः ; तन्नियतस्यापि तस्यैकप्रत्ययादेकत्वस्यैवोपपत्तेः । एकत्वे कथमाश्रयभेद इति चेत् ? आश्रयस्य कथं कालभेदः ? सति [6]तस्मिंस्तस्यापि नैकत्वमिति चेत् ; न ; क्षणक्षयवादापत्तेस्तस्यानिषेधात् । ततो यथा कालभेदेऽपि व्यक्तिरेकैव तथा प्रतिपत्तेः, एवमाश्रयभेदेऽपि जातिरिति प्रतिपत्तव्यम् । तदुक्तम्–

"प्रत्येकसमवेतत्वं दृष्टत्वान्न विरोत्स्यते ।
तथा सत्यपि नानात्वं नैकबुद्धेर्भविष्यति ॥
न हि सम्बन्धिभेदेन स्वरूपैकत्वबाधनम् ।
विभुत्वावयवाभावौ प्रतिपाद्यौ च शब्दवत् ॥
यथा च व्यक्तिरेकैव दृश्यमाना पुनः पुनः ।

---

१–पि दोष– सा० । २ यः सम्बन्धः संयोगादिरूपः सम्बन्धान्तरसापेक्षः तस्मिन्नेव स्वतन्त्रत्वात् सम्बन्धाभाव आपादयितुं शक्यः न तु स्वभावतः सम्बन्धरूपे समवाये इति भावः । ३ स्वभाव इ– भा०, ब०, प० । ४ वृत्तेः । ५ साङ्ख्याभिमतस्य । ६ कालभेदे ।

**कालभेदेऽप्यभिन्नैवं जातिर्भिन्नाश्रया सती ॥"**

[ मी० श्लो० वन० श्लो० ३०-३२ ] इति चेत्;

उच्यते—

व्यक्तीनामेवमेकत्वं कस्मान्न परिकल्प्यते ।
तथा सति न सामान्यमेकव्यक्तौ तदिष्यते ॥१३१८॥
मिथो न तासामेकत्वं व्यतिरेकेण चेद्गवाद् ।
इति चेन्ननु जातावप्यस्त्येव व्यतिरेकधीः ॥१३१९॥
अन्तरालेषु विच्छेदस्तस्याः कथमिवान्यथा ।
नाप्युपायान्तरं यस्मात्तद्विच्छेदव्यवस्थितौ ॥१३२०॥
[1]विच्छेदवदविच्छेदोऽप्येकप्रत्ययतो यदि ।
विच्छिन्नेतररूपत्वे जातेर्निर्भागता कथम् ॥१३२१॥

कथं चासौ स्वाश्रयेषु वर्तेत ? एकदेशेनेति चेत्, न तर्हि तत्र समानप्रत्ययः तस्यं जातेरेवाभावात्, एकदेशस्य चाजातित्वात् जातिबहुत्वापत्तेः । सर्वात्मना चेत्, न, तदैवान्यत्र तत्प्रत्ययाभावापत्तेः । न ह्येकत्रैव सर्वात्मना वृत्ता सती तदैवान्यत्र सम्भवति यतस्तत्रापि तत्प्रत्ययः स्यात् । नन्ववयवशो वृत्तिः सावयवस्य यथा भूतकण्ठे स्रक्सूत्रादेः, परिसमाप्त्या च वृत्तिरविभोः यथा प्रतिपिण्डं गुणादेः । न च जातेः [3]सावयवत्वमविभुत्वं वा यतस्तत्रैवंविधा वृत्तिरवकल्प्येत । तस्मादन्यादृगेव तद्वृत्तिस्तस्या अपि तत्रैव दृष्टत्वात् । तदुक्तम्—

**"कार्त्स्न्यैकदेशयोर्वृत्तिः प्रष्टुं जातौ न युज्यते ।**
**न हि भेदविनिर्मुक्ते कार्त्स्न्यभागविकल्पनम् ॥**
**या चावयवशो वृत्तिः स्रक्सूत्रादिषु दृश्यते ।**
**भूतकण्ठे गुणादेश्च प्रतिपिण्डं समाप्तितः ॥**
**तत्रावयवयोगित्वमविभुत्वञ्च कारणम् ।**
**आकृतेस्तदभावेन न प्रसक्तमदो द्वयम् ॥**
**न च द्वैविध्यमेवेति वृत्तेरस्ति नियामकम् ।**
**त्रिविधापि हि दृष्टत्वात् सम्भवेद् द्विविधा यथा ॥"**

[ मी० श्लो० वन० श्लो० ३३-३७ ] इति चेत्,

अत्रोच्यते—तृतीयोऽपि वृत्तिप्रकारो नापरः स्वरूप[त]मात्रनिष्ठत्वात्, तत्प्रतीतेः । स्वरूपं च यदि तावदेव यावदेकत्र दृश्यते, कथं व्यापकत्वम् ? न तावदेव, व्यापकत्वादिति चेत्, तस्य तर्हि निरवशेषव्यक्तिप्रतिपत्तावेव सम्भवति प्रतीतिः व्यापकप्रतिपत्तेः व्याप्यप्रतिपत्तिनान्तरीयकत्वात् ।

तथा च सति सत्त्वादिसामान्यप्रतिवेदिनः ।
सर्वे भवेयुः सर्वज्ञास्तत्कथं तन्निषेधनम् ॥१३२२॥

---

१ विच्छेदं स्यादपि -ता० । २ प्रत्ययस्य । तस्याजा-ता० । ३ समवायत्वमपि-ता० ।

व्याप्याग्रहेऽपि गृह्येत यदि तु व्यापकं तदा ।
विज्ञेयाग्रहणेऽपि स्यात्तज्ज्ञानग्रहणं न किम् ? ॥१३२३॥

ततो दुर्व्याहृतमेतत्

"सर्वज्ञोऽयमिति ह्येवं तत्कालेऽपि बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥"

[ मी० श्लो० सू० २ श्लो० १३४ ] इति ।

अथ व्यापकतया तन्न गृह्यते ; तर्हि न गृह्यत एव, तत्स्वभावस्यान्यथा ग्रहणासम्भवात् तद्विभ्रमापत्तेः । तन्न सामान्यं नाम किञ्चित् । तदभावे कुतस्तत्प्रयोजनं समानप्रत्ययादिकमिति चेत् ? न ; समानपरिणामादेव तद्भावात् । तदाह—

**सदृशात्मनि सम्बन्धग्रहे भूयस्तथाविधे ।**
**प्रत्यभिज्ञाविना सिद्ध्येत् प्रायो लोकव्यवस्थितिः ॥ १९ ॥** इति ।

**सदृशः** समान **आत्मा** स्वभावो यस्य तस्मिन् धूमादौ **सम्बन्धस्य** पावकाद्यविनाभावलक्षणस्य **ग्रहः** परिज्ञानं **भूयो**ऽनेकवारम् । सकृत् तद्ग्रहे तस्मिन् विस्मरणस्य व्यभिचारस्य च सम्भवात् , सति तस्मिन् **सिद्ध्येत्** निष्पद्येत । किम् ? **लोकव्यवस्थितिः** लोकस्य व्यवहर्तुर्जनस्य विशिष्टा प्रवृत्त्यादिलक्षणा व्यवस्थितिः परिणतिः । क्व ? **तथाविधे** सदृशात्मनि पावकादौ । केन सा सिद्ध्येत् ? **प्रत्यभिज्ञादिना** तादृशमिदमिति ज्ञानं प्रत्यभिज्ञा, सादिर्यस्य तर्कादेस्तेन । प्रत्यभिज्ञासामर्थ्यादत्र दर्शनस्मरणयोरपि प्रतिपत्तिः तदभावे तदनुत्पत्तेः । तदयमर्थः—भूयोवृत्त्या क्वचित् प्रतिपन्नसम्बन्धस्य पुनस्तादृशवस्तुदर्शने संस्कारप्रबोधादनुस्मृतौ तत्सदृशमिदमिति प्रत्यभिज्ञानम् , ततोऽपि 'इदमत्रैव नान्यत्र' इति व्याप्तिवितर्के साध्यपरिज्ञानाल्लोकव्यवस्थितिरिति । तदुक्तम्—

"अक्षज्ञानैरनुस्मृत्य प्रत्यभिज्ञाय चिन्तयन् ।
आभिमुख्येन तद्भेदान् विनिश्चित्य प्रवर्तते ॥" [सिद्धिवि० पृ० ९७] इति ।

यद्येवम् 'पुनर्दर्शनादिना सिद्ध्येत्' इति स्पष्टमेव निर्देष्टव्यं किं प्रत्यभिज्ञाग्रहणेन ? ततो[1] दर्शनाद्याक्षेपे प्रतिपत्तिगौरवादिति चेत् , सत्यम् , तथापि लोकव्यवस्थित्या तद्भिन्ननिवेदनार्थं तद्ग्रहणं तस्यास्तन्नान्तरीयकत्वात् । प्रत्यभिज्ञानाभावे हि व्याप्तिवितर्कानुत्पत्तेरनुमानासम्भवात् कुतस्तद्व्यवस्थितिः ? अस्ति चेयं प्रज्ञाकरस्यापि तस्मात्तेनापि साऽभ्युपगन्तव्या । ततो न युक्तमिदम्—"**स इति स्मरणमयमिति प्रत्यक्षं न च तयोरेकत्वं प्रतिभासभेदात् । न च ततोऽपरं प्रतिभाति यत्प्रत्यभिज्ञानमुच्यते ।**" [　　] इति तद्व्यवस्थितिरपि मा भूदिति चेत ; किमिदानीं तत्त्वम् ? सर्ववस्तुनैरात्म्यमद्वैतं वेति चेत् ; न, तस्यापि प्रतिपाद्यलक्षणया तद्व्यवस्थित्यैव सिद्धेर्निरूपितमिदं प्रागिति न प्रतन्यते । तद्व्यवस्थित्या प्रत्यभिज्ञोपकल्पने किं "**प्रत्यभिज्ञा द्विधा काचिद्**" इत्यादिना[3] वक्ष्यमाणेनेति चेत् ? न , तस्य तद्भेदप्रति-

१ प्रत्यभिज्ञाशब्दतः । २ लोकव्यवस्थितिरपि । ३ न्यायवि० श्लो० ३१९ ।

पादनार्थत्वात् । सदृशात्मत्वे वस्तुनस्तस्य कुतश्चित्प्रत्ययादभिधानतो वा प्रतिपत्तौ तदन्तस्य वैफल्यं स्यात्, अनधिगतस्य तद्विषयस्याभावात् । अधिगतविषयत्वे च प्रयोजनाभावादिति चेत्; सत्यमिदम्; यद्येकस्वभावो भावः स्यात् । न चैवम्, सदृशरूपस्येव विसदृशस्यापि रूपस्य विचित्रस्य तत्र भावात् । न चैवं कुतश्चित् कस्यचिदधिगमेऽपि तदन्तरवैफल्यम्, अनधिगतस्य तद्विषयस्य भावात् कथं पुनः सदृशस्येतरदितरस्य वा सदृशं रूपं विरोधात् तापहिमस्पर्शयोरिति चेत् ? उपपन्नं तावेतरस्पर्शयोः विरोधवत्त्वं तदेकस्येतरपरिहारेणैव प्रतिपत्तेः, न चैवं सदृशेतरयोः, परस्परात्मतयैव सर्वदा संवेदनात् । संविदिते च न विरोधो वस्तुमात्रेऽपि प्रसङ्गेन शून्यत्वापत्तेः । निरूपितं चैतत् पूर्वम् ।

अपि च, सदृशेतरयदेकानेकरूपयोरपि विरोधाविशेषात् कथमेकत्रानेकोपाधिसम्भवो यतस्तैस्तद्वान् व्यपदिश्येत ? अर्थान्तरभूतैरेव स तैर्व्यपदिश्यत इति चेद्; अत्राह–

**तद्वतोऽनुपकारेऽपि भेदे कथमुपाधयः ।** इति ।

**उपाधयो** विशेषणानि गोत्वशुक्लत्वादीनि **तद्वत** उपाधिमतः **कथम्** न कथञ्चित् भवेयुरित्युपस्कारः । कदा ? **भेदे** तद्वतस्तेषामर्थान्तरत्वे घटस्येव पटादय इति भावः । भेदेऽपि सम्बन्धात्ते तस्येति चेत्; न; तस्य निषेधात्, अनिषेधे दण्डादेरिवात्मादेरपि ते भवेयुः तस्य सर्वत्र भावात् । उपकारादिति चेत्; न; नित्यानामनुपकारात् । उपकारेऽप्यतिप्रसङ्गात् । न ह्युपकारादेव ते तस्य, महेश्वरस्यापि तत्प्रसङ्गात्, तस्य सर्वोपकारकारित्वेन प्रसिद्धेः । एतदेवाह– **अनुपकारेऽपि** । अपिशब्दादुपकारेऽपीति । यदि चोपकर्ता तेद्वाँस्तदा स केनचिदुपाधिना प्रतीयमानः स्वोपकार्यानुपाधीनपि सर्वान् प्रत्याययति उपकार्याप्रतीतावुपकर्तृत्वाप्रतिपत्तेः । तथा च न तत्र प्रमाणान्तरप्रवृत्तिः अनधिगतस्य तद्विषयस्याभावात् । प्रमाणसम्प्लवस्याभिमतत्वान्न दोष इति चेत्; एवमपि कथं परप्रतिपादनं तस्यापि तत्राविप्रतिपत्तेः । न हि प्रतीयमाने पक्षा-नित्यत्वादौ विप्रतिपत्तिः धर्मिणि शब्देऽपि तत्प्रसङ्गेन हेतोराश्रयासिद्धत्वापत्तेः । एकोपाधि-द्वारेण प्रतीयमानस्तदुपकारकस्यैव प्रतीयते न तैरन्तरोपरागशक्तिभिरिति चेत्; न, शक्तीनां तद्वतोऽनर्थान्तरत्वात् । अर्थान्तरत्वेऽपि कथं तस्येति व्यपदिश्यन्ताम् ? उपकारादिति चेत्, अनिवृत्तो व्याघातः । तदुपकारशक्तिरूपतया तत्प्रतीतौ तच्छक्तीनां तदुपाधीनाञ्चावश्यन्तया प्रतिपत्तेः, पुनस्तच्छक्तीनां तदर्थान्तरत्वकल्पनायामनवस्थापत्तिः । तन्नोपाधितद्वतां भेदे तद्व्यवहारः ।

भवत्वभेद एवेति चेत्; अत्राह–

**तत्रैकत्वप्रसङ्गाच्चाभेदे कथमुपाधयः ॥ २० ॥** इति ।

**तत्र** तस्मिन् विवादगते । **कस्मिन्** ? अभेदे शब्दादेरुपाधिमतः कृतकत्वादीनामनर्थान्तरत्वे **कथं** नैव **उपाधयः** तदा शब्दादेर्धर्मिण एवावशेषात् । तथा च न स्वभावलिङ्गजमनुमानं साध्यसाधनभेदस्याभावात् । कल्पितस्तद्भेद इति चेत्; न, कल्पनस्यैवास्मिन् पक्षे निर्विकल्पेतरोपाधिद्वयाधिष्ठानस्यासम्भवात् । कल्पनातत्त्वसम्भवे अनवस्थादोषात् । । एवं ब्रह्मणो जीवानामभेदे तदेवं न तं इति कथं तद्विशिष्टतया तत्प्रतिपत्तियेन एवमाम्नायते–"अनेन जीवेनात्मना"

१ उपाधयः । २ उपाधिमान् । ३ तदनन्तरो–आ०, ब०, प० । ४ ब्रह्मेव । ५ जीवादय- ।

[ छान्दो० ६।३।२ ] इति ? सत्यं वस्तुवृत्त्या तदभेदिन एव ते भेदस्तु कल्पनात इति चेत्, न, भेदेऽप्युपाधित्वस्य निषेधात्। कुतो वा तत्कल्पना ? न तावद् ब्रह्मण एव, तस्य सत्यज्ञानत्वात्। "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २।१।१ ] इत्याम्नायात्, तस्य च मिथ्याप्रतीतेरसम्भवात्, कल्पनायाश्च तत्प्रतीतिरूपत्वात्। नाप्यन्यतः तदभावात्। कल्पनातस्तद्भावे स एव प्रसङ्गः 'न तावत्' इति। अस्याप्यन्यतः कल्पनायाम् अनवस्थापत्तिः। नायं दोषः, कल्पनायास्तादृक्-प्रबन्धस्यानादित्वादिति चेत्; न, तस्यापि ब्रह्माभेदेनाभावात्। पुनरन्यतस्तत्प्रबन्धात् तत्परिकल्पनायाम् अनवस्थापत्तेरप्रतिपत्तेश्च। न हि परापरस्य तत्प्रबन्धस्य प्रतिपत्तिः। कुतो वा तस्य व्यवस्थितिः ? न तावद् ब्रह्मणः; तन्निषेधात्। नापि स्वतः, स्वयं प्रकाशरूपत्वे ब्रह्मवत् परमार्थत्वापत्तेः। ब्रह्मसम्पर्कात्तस्य तद्रूप्यं घटस्येव प्रतिसम्पर्कात्, न स्वत इति चेत्, न; सत्यपि तस्मिन् स्वयमतद्रूपस्य तद्रूपत्वानुपपत्तेः। घटस्य तु न तन्मात्रात्तद्रूप्यमपि तु स्वयं तथा परिणामादेव, अन्यथा परमाण्वादेरपि तत्प्रसङ्गात् तत्सम्पर्कस्य तत्राप्यविशेषात्। तन्न तद्वत उपाधीनामभेदे तद्भावः। नाप्युपाधिमत उपाध्यभेदे; तत्र हि तस्याभाव एव स्यात् तत्र च नोपाधयस्तेषां तदपेक्षत्वात्। एतदेवाह–'**एकत्वप्रसङ्गाच्च**' इति। उपाधीनामुपाधिमदभेदे तद्वदेकत्वस्य उपाधिमतश्चोपाध्यभेदे चशब्दात्तद्वन्नानात्वस्य च **प्रसङ्गान्नोपाधय** इति। कथं पुनर्भेदाभेदाभ्यामुपाधितद्वद्भावनिराकरणं जैनस्य स्वयमपि तदभ्युपगमादिति चेत् ? अत्राह–

**नोपधयो न तद्वन्तो भिन्नाभिन्ना अपि स्वयम्।** इति।

**अपि स्वयम्** आत्मनो जैनस्य **नोपधयो** न विशेषणानि कृतकत्वादीनि सन्ति **न तद्वन्त** उपाधिमन्तः शब्दादयः। कीदृशाः ? **अभिन्नाः** परस्परमेकान्तेनाव्यतिरिक्ताः सांख्यवत्। तथा **भिन्ना अपि** व्यतिरिक्ता अपि यौगवत्, उक्तन्यायादिति भावः। तत्रैवोपपत्त्यन्तरमाह–

**जात्यन्तरे तथाभूते सर्वथा दर्शनादपि ॥ २१ ॥** इति।

ऐकान्तिकाद्भेदाभेदादन्या जातिः **जात्यन्तरं** भेदाभेदात्मकं वस्तु तत्र **दर्शनात्** उपाध्युपाधिमद्भावस्योपलम्भात्, न केवलं पूर्वोक्तन्यायादित्यपिशब्दः। भवति चात्र प्रयोगः– यो यस्य विरुद्ध एव दृश्यते न तत्तत्र विद्यते तथा कृतकत्वादिकं नित्यत्वादौ, दृश्यते चैकान्तविरुद्धे जात्यन्तर एवोपाध्युपाधिमद्भाव इति। न चेदं तत्रैव तद्दर्शनमसिद्धम्, कृतकश्शब्द इत्युपाधितद्वतोः कथञ्चिदव्यतिरेकस्य प्रतिपत्तेः। न चात्र कुतश्चिद्विरोधः; प्रतिपन्ने तदयोगात्। प्रतिपत्त्यपह्नवे च न किञ्चित् स्यात्, तदन्यस्य वस्तुव्यवस्थानिबन्धनस्याभावात्। भवतु सर्वनैरात्म्यमेवेति चेत्, न, तद्वादे तदसम्भवाद् विरोधात्। नापि तादृशात्; तस्यापि तादृशात् सिद्धावनवस्थानात्। नाप्यतादृशात्, तद्वादे तदसम्भवाद् विरोधात्। कथं पुनरव्यतिरेकाविशेषे शब्दस्योपाधिमत्त्वमेव नोपाधित्वमिति चेत्; न, 'पौद्गलिकः शब्दः' इत्युपाधिमत्त्ववत् 'शब्दः पुद्गलः' इत्युपाधित्वस्यापि तत्र प्रतीतेः। एकोपाधिप्रतिपत्तौ किन्न सर्वोपाधिप्रतिपत्तिरिति चेत् ? न, एकान्ताभेद एव दोषात्–

१ कल्पनाप्रबन्धस्य। २ कल्पनाप्रबन्धस्य। ३ प्रदीपादिसम्पर्कात्। ४ प्रदीपादिसम्पर्कमात्रात्। ५ उपाधिमत्। ६ उपाधिमदपेक्षत्वात्। ७ यथाहिर-आ०, ब०, प०। ८ प्रतीतिव्यतिरिक्तस्य।

तथा हि—

शब्दाच्चेत्तदनित्यत्वमेकान्ताव्यतिरेकवत् ।
तद्ग्रहे ग्रहणात्तस्याप्यनुमानेन किं फलम् ॥ १३२४ ॥
निश्चयश्चेन्न तस्यापि तन्निश्चित्यैव निश्चयात् ।
निश्चितानिश्चितत्वेन तद्भेदोऽप्यन्यथा भवेत् ॥ १३२५ ॥
निश्चिते च समारोपो विरोधान्नावकल्पते ।
यतस्तस्य व्यवच्छेदः फलं स्यादानुमानिकम् ॥ १३२६ ॥

तथा यौगस्य—

अर्थान्तरत्वमेवात्मा भागेभ्यो यदि भागिनः ।
तथैवासौ प्रतीयेत नानुस्यूततया जनैः ॥ १३२७ ॥
अस्ति चायमनुस्यूतप्रत्ययस्तत्तयो हि ते ।
परोऽयमिति लोकस्य भवाद्भ्रमवादिनः ॥ १३२८ ॥
न चायं विभ्रमोऽत्रैव निश्चिते तदसम्भवात् ।
सुप्रसिद्धं च योगस्य प्रत्यक्षं निश्चयात्मकम् ॥ १३२९ ॥
न तन्निश्चितभेदस्याप्यभेदविषया मतिः ।
निवेदितमिदं देवैः स्वयमन्यत्र तद्यथा ॥ १३३० ॥
"प्रत्यक्षं सविकल्पं चेत्सामान्यसमवायिनाम् ।
अनुस्यूतधियो न स्युरेकस्यात्र विनिश्चयात् ॥" इति ।
सामान्यगुणकर्मस्वन्येयं तद्वद्भिभेदिषु ।
तथैवावगमात्तेषु विवादो विदुषां कथम् ॥ १३३२ ॥
तद्व्यवच्छित्तये तस्माद्व्यर्थं शास्त्रोपकल्पनम् ।
एकान्तव्यतिरेकस्तन्नोपाधीनां परस्परम् ॥ १३३३ ॥

तस्मादुपपन्ना जात्यन्तरे कस्यचित्प्रतिपत्तावपि उपाधेस्तदन्तरस्याप्रतिपत्तिः कथञ्चिदेव तयोरव्यतिरेकात् । जात्यन्तरं विशिनष्टि—**तथा** तेनोपाध्युपाधिमद्भावप्रकारेण **भूते** स्वहेतोरेवोत्पन्ने इति । न हि स्वहेतोरनुपजातमन्यतो भवति । समवायाद्भवत्येवेति चेत्; न; तस्य निषिद्धत्वात् । कथं तत्र तद्दर्शनमिति चेत् ? **सर्वथा** सर्वेण परमार्थप्रकारेण चेति । न हि कल्पना नाम जात्यन्तरमन्तरेण, तस्या अभिलाप्येतरस्वरूपतया तदात्मत्वात् । अन्यथा तदसम्भवस्य निवेदितत्वादित्यलं प्रसङ्गेन ।

परस्यं तु मतम्—न शब्दाल्लिङ्गाद्वोपाधिमतः प्रतिपत्तिर्यतस्तस्य निरवशेषोपाधिशबलितस्यैकस्मादेव शब्दादेरवगमात् तदन्तरस्य तत्र वैफल्यं स्यात्, अपि तूपाधीनामेव । तत्र चैकतम-

१ सिद्धिविनिश्चये ( परि० २ ) । २ "मीमांसकस्य"—वा० टि० । "अनन्तधर्मके धर्मिण्येकधर्मावधारणे । शब्दोऽनुपायमात्र स्यादात्माध्यारोपकारणम् ॥"—मी० श्लो० ११।१४ श्लो० १०८ ।

विषयेणान्येषामनवगमात् न तदन्तरवैयर्थ्यमिति । तत्राह—

**तद्वत्यचोदिते शक्तेऽशक्ताः किं तदुपाधयः ।**
**चोद्यन्ते शब्दलिङ्गाभ्याम् [समं तैस्तस्य लक्षणे] ॥ २२ ॥** इति ।

ते उपाधयो विद्यन्तेऽस्येति **तद्वान्** खण्डादिस्तस्मिन् । कीदृशे ? **शक्ते** वाहदोहादिप्रयोजननिर्वर्तनसमर्थे । **किं** न किञ्चित् तदर्थिनां तत्र प्रवृत्त्यादिकम् । यदि स तत्र समर्थः कथं न प्रवृत्त्यादिकमिति चेत् ? आह—**अचोदिते** बुद्धिविषयत्वेनाप्रेरिते । **शब्दलिङ्गाभ्यां** शब्देन गवादिना लिङ्गेन ककुद्मत्वादिना । न हि शक्त इत्येव कश्चित् कस्यचित् प्रवृत्तिरतिप्रसङ्गात्, अपि तु प्रतिपन्ने । न च शब्दादेस्तद्वतः प्रतिपत्तिः। अस्तूपाधिष्वेव प्रवृत्तिः तेषां ततः प्रतिपत्तेः, तदाह—'**तदुपाधयश्चोद्यन्ते शब्दलिङ्गाभ्याम्**' इति । तत्रोत्तरम्—**किं** न किञ्चिद् वाहादिप्रयोजनं तदुपाधिभिरिति विभक्तिपरिणामेन सम्बन्धः। कुतः? **अशक्ताः** ते तत्रासमर्था यत इति ।

उपाधयश्चेत्ते तत्र समर्थाः परिकल्पिताः ।
उपाधिमान् परः कस्मात् कल्प्यते निष्प्रयोजनः ? ॥ १३३४ ॥
तस्मादशक्तितस्तेषां चोदितैरपि तैः फलम् ।
न किञ्चिद्व्यवहर्तृणां व्यर्था तच्चोदना ततः ॥ १३३५ ॥

यदि चोपाधिमतो न चोदना कुत इदानीं 'खण्डादेर्गोत्वादिः' इति प्रतिपत्तिः ? प्रमाणान्तरादिति चेत् ; यत्र तर्हि नोभयविषयं तदस्ति तत्र कथं यथा 'श्रेयःसाधनत्वं द्रव्यादेः' इति । न ह्यत्र द्रव्यादेरिव तदुपाधेः श्रेयःसाधनत्वस्यापि प्रमाणान्तरात् प्रतिपत्तिः, आगमादेव तद्भावात् । अत एवोक्तम्—"**धर्मे चोदनैव प्रमाणम्**" [　　] इति । न च तत्साधनत्वस्येव द्रव्यादेरपि तद्वतः शब्दादेव प्रतिपत्तिः 'उपाधय एव चोद्यन्ते' इत्यस्य विरोधात् । न चोभयविषयमन्यदस्ति यतोऽयमस्येति सङ्कलनम् । आत्मास्तीति चेत्, न ; ततोऽन्यप्रमाणान्तरयोगात् प्रमाणकल्पनावैफल्यात् । प्रमाणत्वेऽपि नोभयविषयत्वम् ; प्रत्यक्षादित्वे द्रव्यादावेव, शाब्दत्वे च तत्साधनत्व एव पर्यवसानात् । न चैकैकमात्रपर्यवसित इदमस्येति सङ्कलयितुमर्हति, सत्येवोभयविषयत्वे तद्दर्शनात् यथा देवदत्तस्य कमण्डलु इति । ततो न युक्तमिदम्—

"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
[ मी० श्लो० १।१।२ श्लो० १३ ] इति ।

तत्र उपाधिमतोऽचोदनायामसङ्कलनं प्रवृत्तिर्वा । तत्रोपाधिभिस्तत्परिज्ञानात् प्रवृत्तिरिति चेत् ; शब्दादिनैव किन्न तत्परिज्ञानं यतः पारम्पर्यं परिकल्प्येत ? तद्वतामानन्त्यात् तत्र शब्दसम्बन्धस्य दुरवबोधत्वादिति चेत् ; न, उपाधिसम्बन्धस्यापि तदविशेषात् । न ह्युपाधयोऽप्यपरिज्ञातसम्बन्धा एव तमवगमयन्ति अतिप्रसङ्गात् । कथं वा तत्र शब्दान्तरादिप्रवृत्तिः ? एकोपाधिद्वारेणैव्यत् तद्वतः सकलोपाधिशबलितस्य प्रतिपत्तेः । तदाह—'**समं तैस्तस्य लक्षणे** ।' इति । **समं** सदृशं दूषणम् । तैरुपाधिभिः तस्य तद्वतः लक्षणे परिज्ञाने इति ।

---

१ "वाहदोहादिप्रयोजने"—ता० टि० । २ शब्दतश्च आ०, ब०, प० । ३ उपाधिमपरिज्ञानात् । ४ उपाधिमतः परिज्ञानम् । ५ तद्वता नून स्यात्—आ०, ब०, प० । ६ तदुपगम—आ०, ब०, प० ।

तदुपाधिभिरप्युपाधिरूपतयैव तस्य लक्षणाददोष इति चेत्; न, अन्यरूपतयाऽन्यस्य लक्षणायोगादनवस्थाप्रसङ्गाच्च । कथञ्चोपाधेरपि चोदनम्, कथञ्च न स्यात् ? सम्बन्धापरिज्ञानात् । न ह्यपरिज्ञातसम्बन्धाल्लिङ्गाल्लिङ्गिनस्तत्परिचोदनम्, अतिप्रसङ्गात् । तत्परिज्ञानञ्च सिद्ध एव गोत्वादा उपाधौ भवति नासिद्धे खरविषाणवत् । सिद्ध एवायं 'खण्डो गौर्मुण्डो गौः' इत्यनुगमप्रत्ययादिति चेत्, ततः पूर्वं कीदृशस्तत्स्वभावः ? सिद्ध एव तेनापि तत्प्रत्ययादिति चेत् ? न, ततोऽपि पूर्वं तत्प्रत्ययात्तत्सिद्धौ तत्प्रसङ्गात्, तस्य चाप्रतिपत्तेः, विषयान्तरसञ्चारव्यतिरेकाच्च असिद्ध एवेति चेद्, उच्यते–

तत्प्रत्ययेऽपि तस्यासौ स्वभावश्चेन्न नश्यति ।
स कथन्नाम सिद्धः स्यात्तावदन्यपदार्थवत् ॥ १३३६ ॥
स एव प्रत्ययस्तस्य सिद्धिश्चेत् सर्ववस्तुनः ।
स एव सिद्धिरेव च विफलं प्रत्ययान्तरम् ॥ १३३७ ॥
प्रतीतिस्तस्य सर्वस्य न परिस्फुरतीति चेत् ।
अत्यक्तासिद्धरूपस्य प्रकृतस्यापि तत्समम् ॥ १३३८ ॥
यदि तस्य परित्यागे सति तत्प्रत्ययो भवेत् ।
कथं नित्यस्वभावत्वं गोत्वादेरुपवर्णितम् ॥ १३३९ ॥
न चानेकान्तवादेऽस्ति परस्याभिरुचिर्यतः ।
उत्पत्तिस्थितिसंहारस्वभावोऽयं प्रकल्प्यताम् ॥ १३४० ॥

किञ्च, अयमनुगमरूपतया कुतश्चित्सिध्यन् विशेषाद्व्यतिरिक्तश्चेत्, विशेषस्यैवानुगमः स्यात् अव्यतिरेकस्यैव रूपत्वात् । न चैवम्, खण्डादिरेव मुण्डादिरित्यप्रतिपत्तेः, वस्तुसाङ्कर्यदोषाच्च । नैकान्तेनाव्यतिरेकः व्यतिरेकस्यापि भावादिति चेत्, न, उभयस्वभावतया सावयवत्वापत्तेः । न चेदमुचितम्–"विभुत्वावयवाभावौ प्रतिपाद्यौ च शब्दवत् ।" [ मी० श्लो० वन० श्लो० ३१ ] इत्यस्य विरोधात् । व्यतिरिक्तश्चेत्, न,

"सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
जायते द्व्यात्मकत्वेन विना सापि न युक्तिमत् ॥" [मी० श्लो० आकृति० श्लो० ५]

इत्यस्य व्यापत्तेः, अनेनाव्यतिरेकस्य प्रतिपादनात् । नन्वं गोत्वादेः सिद्धिर्यत्र सम्बन्धपरिज्ञानं लिङ्गस्य । भवतु विशेषेष्वेव तस्य तदिति चेत्, न, तेषामानन्त्येनाशेषतः तत्र तदसम्भवादित्यभाव एवानुमानस्य । इदमेवाह—

**सम्बन्धो यत्र तत्सिद्धेरन्यतोऽप्रतिपत्तितः ।**
**अनुमानमलं [ किं तदेव देशादिभेदवत् ] ॥२३॥** इति ।

---

१ उपाधिमत । २ गोत्वादि । ३ तथापि आ०, ब०, प० । ४ अनुगतप्रत्ययात् । ५ असिद्ध स्वभाव । ६ कथन्नाम भवेत्सिद्धस्ता– आ०, ब०, प० । ७ सिद्धश्चे– आ०, ब०, प० । ८ अत्यन्ता– आ०, ब०, प० । ९ गोत्वादि । १०–स्यैव रूपत्वात् आ०, ब० । ११ तत्र सम्ब– आ०, ब०, प० ।

**सम्बन्धो** लिङ्गस्याविनाभावः सिद्ध्येदिति शेषः । कुतः ? **यत्र** यस्मिन् साध्ये गोत्वादौ स मतः **तत्सिद्धेः** । न च तत्सिद्धिरुक्तान्यायादिति भावः । ततश्च **अनुमानमलम् अनुमानस्य मलं** दूषणमभावलक्षणमित्यर्थः । सम्बन्धप्रतिपत्तिपूर्वकत्वेन तस्य तदभावेऽनुपपत्तेः । अतश्च तन्मलम् , **अन्यतः** अन्येषु विशेषेषु **अप्रतिपत्तितः** । सम्बन्धस्येति विभक्तिपरिणामेन सम्बन्धः ।

भवतु विशेषेषु देशत एव तत्परिज्ञानं न साकल्येनेति चेत् ; अत्राह--**सम्बन्ध** इत्यादि । **यत्र** यस्मिन् विशेषरूपे लिङ्गे साध्ये च **सम्बन्धो** ज्ञातस्तयोस्तज्ज्ञानादेव सिद्धिः **तत्सिद्धिः** तस्याः सम्बन्धसिद्धेः सम्बन्धसिद्धित एवोपपत्तेः **अनुमानमलं** पर्याप्तं निष्प्रयोजनत्वात् । अन्यत्र सप्रयोजनमिति चेत् ; न ; **अन्यतः** अन्यस्मादप्रतिपन्नसम्बन्धाल्लिङ्गाद् **अप्रतिपत्तितः** साध्यस्यापरिज्ञानादतिप्रसङ्गादनुमान**मलं** कल्पयित्वेति शेषः । नायं दोषः, सामान्ये सम्बन्धज्ञानात् , तस्य च निदर्शनवदन्यत्रापि भावेन अनुमानोपपत्तेरिति चेत् ; न ; दत्तोत्तरत्वात् । अपि च, सामान्यं यदि प्रतिव्यक्ति भिन्नम् ; कस्तस्य विशेषेभ्यो विशेषो यतस्तत्र सम्बन्धग्रहणम् ? अथाभिन्नमेव निदर्शनगतस्यैवान्यत्रापि भावात् ; तर्हि निदर्शनस्थान एवान्यत्र गतस्यापि किन्न प्रतिपत्तिः ? न हि प्रतिपन्नादभिन्नमप्रतिपन्नमुपपन्नं नाम विरोधात् । अस्त्येव तस्यापि प्रतिपत्तिरिति चेत् ; न ; तदधिकरणानामपि तत्प्रसङ्गात् । न हि तदप्रतिपत्तौ तन्निष्ठस्य प्रतिपत्तिः । मा भूत्तन्निष्ठतया तस्य सेति चेत ; न ; तस्य तत्स्वभावत्वात् , प्रतीतस्य चेतरस्वभावानुपपत्तेः । नासौ तस्य स्वभावः समवायत्वेनार्थान्तरत्वादिति चेत् , तेन कथं तन्निष्ठं नाम ? अनभिमतव्यक्तिनिष्ठताया अप्यनुपङ्गात्तदविशेषात् । तथापि स्वगतात्कुतश्चिद्विशेषात् नियतविशेषनिष्ठमेव तदिति चेत् , स तर्हि विशेषः प्रतीयमानः तद्विशेषानपि प्रत्याययति, अन्यथा स्वयमप्रतिपत्तेः । न हि तदभिमुखस्य तदप्रतिपत्तौ सम्भवति प्रतिपत्तिः । न च तस्यापि तदर्थान्तरत्वं पूर्वप्रसङ्गादनवस्थापत्तेश्च । दृश्यमानव्यक्त्यभिमुखस्यैव तस्य ज्ञानं न तदन्याभिमुखस्येति चेत् , किमिदानीं प्रतिव्यक्ति तस्य भेदः ? तथा चेत ; न , तदनन्यत्वेन सामान्यस्यापि तत्प्रसङ्गात् , 'भिन्नादभिन्नं भिन्नमेव' इति न्यायात् । तदाह— '**किं तदेव देशादिभेदवत्**' इति । **तदेव** एकमेव । किम् ? नैव । सामान्यम् । कीदृशम् ? देशस्तदंशो व्यक्त्यभिमुखस्वभाव आदिर्यस्याश्रयादेः सोऽस्यास्तीति **देशादिभेदवत्** इति । तन्न सामान्यं नाम किञ्चित् , यत्र प्रतिबन्धग्रहणं लिङ्गस्य ।

भवतु वा तत् , तथापि किं तत्प्रतिपत्त्या ? तदनुमानमिति चेत् , तेनापि किम् ? अर्थक्रियार्थिनस्तत्र प्रवृत्तिरिति चेत् , न , तत्र तस्यासामर्थ्यात् विशेषकल्पनावैयर्थ्यापत्तेः । विशेषेष्वेव तदनुमानात्प्रवृत्तिरिति चेत् , कथमन्यानुमानादन्यत्र[10] प्रवृत्तिः[11], अतिप्रसङ्गात् । अनुमितादनुमानादिति चेत् ; न, प्रतिबन्धापरिज्ञाने तदनुपपत्तेः । तत्परिज्ञानञ्च न साकल्येन, अस्मदादेरशेषविशेषप्रतिपत्तेरभावात्, देशत इति चेत् ; न , तत्रापि प्रतिबन्धज्ञानविषयस्य तत

१–रुक्तान्या–आ०, ब०, प० । २ सम्बन्धसि–आ०, ब०, प० । ३ भावे अ–आ०, ब०, प० । ४ प्रतिपत्तिप्रसङ्गात् । ५ समवायेन । ६ तदभिमुखत्वस्यापि । ७ तदन्यत्वेन आ०, ब०, प० । ८–तु तथापीति तत्र तत्प्र–आ०, ब०, प० । ९ "प्रतिबन्धप्रतिपत्त्या"– ता० टि० । १० विशेषे । ११ प्रतिपत्तिः आ०, ब०, प० ।

एव सिद्धेः, अतद्विषयस्य चानुमानादप्रतिपत्तेः तस्यैवानवतारात्। एतदेवाह–'**सम्बन्ध**' इत्यादि। व्याख्यानं पूर्ववत्। एकत्र विशेषे सम्बन्धग्रहणमेव सामान्यस्यान्यत्रापि तद्ग्रहणं तदयमदोष इति, स्यादेव यदि विशेषाणामेकत्वं भवेत्, न चैवम्, देशादिभेदाभावापत्तेः। तदाह–'**किम्**' इत्यादि। तदेव सम्बन्धज्ञानगोचरमेव विशेषरूपम्, किम्? नैव भवति। कीदृशं न भवति? **देश आदिर्यस्य** कालादेस्तेन **भेदवदिति**।

सामान्यादपि सामान्यमनुमेयं यदीष्यते।
यस्तेनानुमितेनार्थो यदेवमुपकल्प्यते॥ १३४१॥
वाह्दोहादिरर्थश्चेत् सामान्यात्प्रथमादयम्।
असम्भवी कथन्नाम सामान्यान्तरतो भवेत्॥ १३४२॥
तदन्तराच्च सामान्यमन्यच्चेदनुमीयते।
अनुमानानवस्थैव चेतःखेदाय ते भवेत्॥ १३४३॥

किं वा प्रयोजनं सामान्यात्? तत्र लिङ्गस्य प्रतिबन्धनिर्णय इति चेत्, विशेषेष्वेव किन्न भवति? तेषामानन्त्येन दुरवबोधत्वादिति चेत्, सामान्यस्यापि न भवेत्, दृष्टविशेषे तस्य निर्णय एवान्यत्रापि तन्निर्णयो दृष्टसमानत्वात्तस्येति चेत्, न, लिङ्गस्याप्येवं तन्निर्णयप्रसङ्गात्। कुतो वा तस्य दृष्टसमत्वम्? तत्र सामान्यभावात्। सोऽपि कुतः? तत्र तत्प्रतिबन्धस्य निर्णयात्। अयमपि कस्मात्? तस्य दृष्टसमानत्वादिति चेत्, न, चक्रकदोषात्। यदि पुनः स्वत एव तस्य तत्समत्वं तर्हि सामान्यप्रयोजनस्य तत एव भावाद् व्यर्थमर्थान्तरतत्कल्पनम्। यदि सामान्यमप्रतिपन्नम्, कथं तस्य प्रतिषेधः पिशाचादिवत्? प्रतिपन्नं चेत्, तथापि कथम्? तत्प्रतीत्यैव बाधनादिति चेत्, कथमिदानीं प्रत्यनीकस्यावच्छेदेन स्वपक्षस्थापनम्? अस्य हि वक्तुम्–

प्रतीतिः प्रत्यनीकस्य न चेन्नास्ति निषेधनम्।
प्रतीतिः प्रत्यनीकस्य यदि नास्ति निषेधनम्॥ १३४४॥
अनिषेधे च तस्य स्यात् कथमन्यः पराजयी?
तदभावे कथन्नाम योगो विजयमुद्वहेत्॥ १३४५॥
परोक्षस्याविदितस्यापि युक्तिसाद्गुण्यवर्जनात्।
निषेधनस्य चेदेव सामान्यस्याप्यसौ भवेत्॥ १३४६॥

साम्प्रतमुक्तन्यायेन सौगतमपि प्रतिक्षिपन्नाह–

**एतेन भेदिनां भेदसंवृतेः प्रतिपत्तितः।**
**तत्रैकं कल्पयन् वार्यः [ समाना इति तद्ग्रहात् ] ॥२४॥** इति।

**तत्र** तेषु भेदिषु[3] **एकम्** अनुगतमाकारम् **कल्पयन्** सौगतो **वार्यो** निवारयितव्यः। कुतस्तत्कल्पयन्? **प्रतिपत्तितः** प्रतीतेरेकस्याकारस्य। कुतः प्रतिपत्तितः? **भेदसंवृतेः** संव्रियते प्रच्छाद्यतेऽनयेति संवृतिर्विकल्पिका बुद्धिः। भेदस्य परस्परव्यावृत्तेः संवृतिः भेदसंवृतिस्तत इति। केषां स भेदो यस्य संवृतिरिति चेत्? **भेदिनां** विना-

1 ग्रहणविशेषस्य। 2–समत्वादि–आ०, ब०, प०। 3 भेदेषु आ०, ब०, प०।

तीयव्यावृत्तिमता खण्डादीनाम्। '**भेदिनाम्**' इत्यस्यापेक्षणेऽपि गमकत्वात् '**भेदसंवृत्तेः**' इति वृत्तिः[1]। केन स वार्यत इति चेत् ?[2] **एतेन** मीमांसकादिदूषणेन। तथा हि–संवृतिविकल्पितस्याकारस्य भेदिभ्यो भेदे तस्यैव लिङ्गादेः प्रतिपत्तेः प्रवृत्तिरपि तत्रैव स्यात् न भेदेषु। न चेदमुचितम्; अशक्तत्वात्। न हि तस्य वाहादौ शक्तिः, भेदिकल्पनावैफल्योपनिपातात्। भवतु भेदिष्वेव प्रवृत्तिस्तेषां तदाकारेण लक्षणादिति चेत्; न; लिङ्गादिनैव तत्प्रसङ्गात्, तदाकारस्येव तस्यापि तत्र प्रतिबन्धपरिज्ञानोपपत्तेः। तेनापि सामान्यरूपेणैव तल्लक्षणे अनवस्थापत्तेश्च। ततः '**तद्वचत्यचोदिते**' इत्याद्यत्रापि समानम्। तेभ्यस्तस्याभेदे तु तद्वदेव वस्तुसत्त्वान्न संवृत्या प्रतिपत्तिः। कथं वा तया तत्प्रतिपत्तिः, कथञ्च न भवेत् ? अतदाकारत्वे साकारवादविनिपातेन तदयोगात्। तदाकारत्वे कथं तस्याः क्षणिकनिरंशत्वं तद्वदेव देशकालाभ्यां दैर्घ्यात्। तथा तदाकारस्यैव दैर्घ्यं न तस्या इति चेत्; न; अविष्वग्भावे तदनुपपत्तेः। विष्वग्भूतैव सा ततः केवलमन्यैव संवृतिस्तदविष्वग्भावमाविर्भावयतीति चेत्; न; तथापि तस्याः परिज्ञाने तदयोगात्। तदाकारतया परिज्ञानेऽपि स एव प्रसङ्गः तस्याः कथं क्षणिकनिरंशत्वमित्यादिः। तस्या अपि ततो विष्वग्भावकल्पनायामनवस्थापत्तिः। तन्न कुतश्चिदप्येकाकारप्रतिपत्तिः। ततो निर्विषयमिदम्—

> "**पररूपं स्वरूपेण यया संव्रियते धिया।**
> **एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः॥**"[प्र० वा० ३।६७] इति।

'**एकार्थप्रतिभासिन्या**' इत्यस्यासम्भवात्। यदपीदमन्यत्—

> "**तया संवृतनानात्वाः संवृत्या भेदिनः स्वयम्।**
> **अभेदिन इवाभान्ति भावरूपेण केनचित्॥**" [प्र० वा० ३।६८] इति।

तत्र 'भेदिनः' इति न तावत्तद्बुद्ध्यपेक्षम्; तया तन्नानात्वस्यावरणात्। न हि तद्वावृण्वत्येव तद्भेदमुपदर्शयति विरोधात्। बुद्ध्यन्तरापेक्षमिति चेत्; कुतः सङ्कलनम्–भेदिनः स्वयमभेदिन इव इति ? न नानात्वसंवृतेः; तया भेदिनामप्रवेदनात्। नापि भेदिबुद्धेः, तयापि संवृतिविषयस्यापरिज्ञानात्। उभयविषयाद् बुद्ध्यन्तरादिति चेत्; न; तदसम्भवात्। न हि किञ्चिद्वेदनं कचिद्भेदमुपदर्शयदेव तद्विपर्ययमुपदर्शयितुं समर्थं नीलत्वमुपदर्शयतैव कचित्पीतत्वस्याप्युपदर्शनप्रसङ्गात्। तन्न सामान्याकारव्यवयप्रतिपत्तिकृत इति न तत्र नापि विशेषे सम्बन्धपरिज्ञाने लिङ्गस्येति प्रलीन एवानुमानव्यवहारः। तत इदमप्यत्र समानम्–'**सम्बन्धो यत्र**' इत्यादि[3]। तत सूक्तम् '**एतेन**' इति।

इतश्च वार्य इत्याह–'**समाना इति तद्ग्रहात्**' इति। खण्डादिभिर्मुण्डादयः समानाः **सदृशा इति**। '**तेषां** भेदिनाम् **ग्रहात्** प्रतिपत्तेः। '**तत्रैकं कल्पयन् वार्यः**' इति। खण्डादय एव मुण्डादय इति प्रतिपत्तौ हि तत्राभेदकल्पनमुपपन्नं न समाना इति प्रतिपत्तौ, ततस्तेषु समानताया एव प्रसिद्धेर्नाभेदस्य। न च त एव ते इति प्रतिपत्तिरेकस्य, एवं व्यवहारादृष्टेः। ननु च धर्मकीर्तिनाप्येतदभिहितम्—

---

1 समास। २ न्यायवि० श्लो० २।२२। 3 न्यायवि० श्लो० २।२५

"प्रतिभासो धियां भिन्नः समाना इति तद्ग्रहात् ।" [प्र० वा० ३।१०६] इति । तत्कथं स एव तदेकं संवृतिनिबन्धनमभिदध्यादिति चेत् ? स एवेदं प्रष्टव्यो य एवं स्ववाग्विरुद्धमवरुणद्धि ।

स्यान्मतम्–नासौ संवृतिवेदनेऽप्येकमनेकसाधारणमाह यतः स्ववचनविरोधः । किं तर्हि ? खण्डादीनामतद्धेतुफलापोहमेव, तस्यैव तेषु समानत्वेन सामान्यव्यवहारगोचरत्वात् । तस्यापि तेभ्यो भेदे तदपोहशब्देन सामान्यमेव यौगप्रसिद्धमभिहितं भवेत् । अभेदेऽपि मीमांस[क]परिकल्पितम् । तदुक्तम्—

"अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्वमेव च तैरुक्तमगोऽपोहगिरा स्फुटम् ॥" [मी० श्लो० अपोह० श्लो० १]

इत्यपि न चोद्यम्; तेभ्यस्तस्य तत्त्वान्यत्वाभ्यामवाच्यत्वात् । अवस्तुरूपा हि खण्डादयस्तत्सामान्यञ्च, उभयेषामप्यपोहकल्पितत्वात् । न च तेषामन्योन्यं तत्त्वमन्यत्वं वा; वस्तुष्वेव तद्विकल्पोपपत्तेः । "वस्तुन्येष विकल्पः स्यात्" [ ] इत्यादिवचनात् । ततस्तत्र भेदाभेदाभ्यां दोषोपकल्पनं परमतानभिज्ञानं पिशुनयतीति । तदेवाह—

अतद्धेतुफलापोहः सामान्यं चेदपोहिनाम् ।
सन्दर्श्यते तथा बुद्ध्या [ न तथाऽप्रतिपत्तितः ] ॥ २५ ॥ इति ।

हेतुश्च फलञ्च हेतुफले तद्विवक्षिते खण्डादिवाहादिलक्षणे हेतुफले येषामन्येषां खण्डादीनां ते तद्धेतुफला न तद्धेतुफला अतद्धेतुफलाः कर्कादयस्तेषामपोहः सामान्यं गोत्वादि नापरम् । केषाम् ? अपोहिनाम् विजातीयविशेषवतां खण्डादीनाम् । कुत एतत् ? सन्दर्श्यते सम्यगबाधितत्वेन प्रकाश्यते सामान्यम् । तथा तेन तदपोहप्रकारेण, बुद्ध्या विकल्पविस्यो यत । चेत् शब्दः पराकूतद्योतने । तत्रोत्तरमाह–न तथाऽप्रतिपत्तितः इति । न नास्ति परोक्तम् । कस्मात् ? तथा तेन तदपोहरूपप्रकारेण । अप्रतिपत्तितोऽपरिज्ञानात् सामान्यस्य । तथा तत्प्रतिपत्तिर्हि न तत एव सामान्यज्ञानात्; सर्वथाऽनिश्चयात् । न हि तदेव तद्विषयस्यापोहरूपतां निश्चिनोति; निर्विवादापत्तेः । विचारात्तस्य तद्रूप्यमिति चेत्; कुत एतत् ? तस्य निश्चयरूपत्वात्; न तज्ज्ञानस्यापि सविकल्पत्वेन तदविशेषात् । निश्चितस्यापि निश्चयान्तरापेक्षणे अनवस्थानं तत्रापि तदन्तरापेक्षणात् । विचारश्च सामान्यज्ञानस्यान्यतोऽसम्भवादेव अवतरति । न चासावस्ति सादृश्यविशेषादपि तदुपपत्तेः । सोऽपि नैयायिकादिसामान्यवत् भेदाभेदाभ्यां परिचिन्त्यमानो न सम्भवत्येवेति चेत्; उच्यते—

अपोहो यदि कर्कादेर्न समः खण्डमुण्डयोः ।
असमानात् कथं तस्मात् समानप्रत्ययो भवेत् ॥१३४७॥

१–रुपमति–आ०, ब०, प० । २ च शब्द आ०, ब०, प० । ३–व तचिन्त्य–आ०, ब०, प० । ४–स्यान्निश्चि–आ०, ब०, प० । ५ सामान्यस्य । ६ अपोहरूपत्वम् । ७ एतस्य आ०, ब०, प० । ८–तद्विचा– आ०, ब०, प० । ९ सामान्यज्ञानस्य अन्यतोऽसम्भवा । १० सादृश्यविशेषोऽपि । ११ कर्कादि आ०, ब०, प० ।

समानश्चेत्कथं भद्र, सादृश्यं दूषितं त्वया ।
अपोह एव सादृश्यं भावानामिति चाकुलम् ॥ १३४८ ॥
तस्य वस्तुष्वसद्भावात् कल्पनारोपितात्मनः ।
एकत्वाध्यवसायाच्चेत् तस्य वस्तुषु सम्भवः ॥१३४९॥
नैकत्वस्याप्यसद्भावात्तेष्वारोपितरूपिणः ।
तस्याप्येकत्वनिर्णीतिरन्यतस्तत्र सम्भवे ॥ १३५० ॥
अनवस्थालतापाशबन्धनान्मुच्यते कथम् ।
तन्न व्यावृत्तिसामान्यं विचारक्षममीक्षते ॥ १३५१ ॥
अविचार्यैव चेदिदं व्यवहाराय तत्परैः ।
मीमांसकादिसामान्यं तथैव न किमिष्यते ॥ १३५२ ॥
अविचारितरम्यत्वाविशेषेऽपि क्वचित् कथम् ।
पक्षपातः सतां युक्तो न्यायनिर्मलचेतसाम् ॥ १३५३ ॥



मा भूत् कल्पनागतस्तदपोहः सामान्यं विचारासहत्वात्, खण्डादिगतस्तु भवत्येव विपर्ययात् । न हि ते खण्डादयः कर्कादिभिरात्मानं मिश्रयन्ति स्वरूपप्रच्युतिप्रसङ्गात् । ततः स एव तेषां सामान्यमिति चेत्; न; एवमप्यतिप्रसङ्गात् । तथा हि— यथा खण्डादयः कर्कादिव्यावृत्त्या गोव्यपदेशविषयास्तथा तृणवनगुल्मतूलोपलादयोऽपि स्युः; तेषामपि तदविशेषात् । न हि तेऽपि तैरात्मानं मिश्रयन्ति तद्भेदापरिज्ञानप्रसङ्गात्, तथा च गामानयेति चोदितेन तत्रापि प्रवर्त्तितव्यम् । तदविशेषेऽपि खण्डादय एव गावः तत्रैव वाहदोहादेरेककार्यस्य भावात् , न तृणादयो विपर्ययादिति चेत्; तत्रैव कुतस्तद्भावः ? तदपोहादिति चेत ; न; तृणादावपि तत्प्रसङ्गात् । शक्तिसाम्यादिति चेत् ; तदेव तर्हि सामान्यं न तदपोहः, सतोऽपि तस्य वनगुल्मादौ ताद्रूप्याभावात् । तदाह—'न तथा' इत्यादि । न तदपोहः सामान्य तथा तेन सामान्यरूपप्रकारेण अप्रतिपत्तितो वनतृणादौ तस्यापरिज्ञानात् । कथं पुनः शक्तिसाम्यमपि सामान्यम् ? कथं च न स्यात् ? तस्य वस्तुष्वेकस्याभावात् शक्तिमदभेदात् सामान्यस्य चैकरूपत्वादिति चेत्; कथमिदानीं तत एकं कार्यम् ? शक्तिभेदे तद्भेदस्यैवोपपत्तेः । मा भूदिति चेत्; कथमिदमुक्तम् —

"एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने ।" [प्र० वा० ३।७२] इति ?

तदपि वस्तुतो भिन्नमेव, अभेदस्तु तत्राप्यन्यस्मादेवैककार्यादिति चेत् ; न; तस्यापि तद्भेदे भेदस्यैवोपपत्तेः । तस्याप्यन्यस्मात् तत एकत्वकल्पनायामनवस्थादोषात् । न जैनस्यैकरूपत्वादेव सामान्यम्, अपि तु तत्प्रयोजनात्, तच्चानेकत एव सदृशादुपपन्नम् । अत एव वक्ष्यति—"नानेकत्र न चैकत्र वृत्तिः सामान्यलक्षणा" [न्यायवि० श्लो० २००] इति । अपि च, के नामापोहिनो येषां तदपोहः सामान्यमुपकल्प्येत ? प्रसिद्धा एव खण्डादय इति चेत्; न; तेषां तत्त्वतोऽसम्भवात्, अवयविशदप्रतिषेधात् । संवृत्या सम्भव इति चेत् ; न तर्हि तदपोहः; तेषामवस्तुत्वाद् वस्तुसतामेव क्वचित्तत्त्वान्यत्वयोरु-

१ तस्याव-आ०, ब०, प० । २-यन्तीति त-आ०, ब०, प० । ३ तृणगुल्मादिषु । ४-सामान्यादि-आ०, ब०, प० । ५-सामान्यमपि आ०, ब०, प० । ६ शक्तिमदभेदे । ७ सम्भवत्यप-आ०, ब०, प० ।

पपत्ते "वस्तुन्येव विकल्पः" [ ] इत्यादि वचनात्। वस्त्वेकत्वावसायात्तेऽपि वस्तुसन्त एवेति चेत्, न, तस्य निषिद्धत्वात्। तदेवाह—'न' इत्यादिना। अपोहिनामिति। कुतः? तथा तेनापोहिनामिति प्रकारेण खण्डादीनाम् 'अप्रतिपत्तितः' इति। भवन्तु स्वलक्षणरूपा एवापोहिन इति चेत्, कुतस्तत्परिज्ञानम्? निर्विकल्पाद्दर्शनादिति चेत्; न, तस्यापि व्यवहारिष्वभावात्। न हि ते तद्दर्शनं विकल्पयन्तो दृश्यन्ते, निश्चयस्यैव बहिरन्तश्च स्थूलाकारगोचरस्य तैरवकल्पनात्। विकल्पैकत्वावसायात्तस्यैव तैरनवकल्पनं नामावादिति चेत्, न, पृथगनवगतस्य तदवसायानुपपत्तेः। तदवगमे सन्नप्यसत्कल्प एव निर्विकल्पत्वादिति चेत्, न तर्हि ततस्तस्यास्तित्वं व्यवहारविषयं सुप्तस्येव तद्वेदनात्। अनुमानात्तदस्तित्वं तद्विषय इति चेत्, न, प्रत्यक्षतो बहिरन्तश्चासम्भवतोऽनुमानादप्यप्रतिपत्तेः, तस्य तत्पूर्वकत्वात्। तदुक्तम्—

"ब्रुवन् प्रत्यक्षमभ्रान्तं बहिरन्तरसम्भवम्।
अनुमानबलाद् व्यक्तमनात्मज्ञस्तथागतः॥" [सिद्धिवि० परि० १] इति।

तत्र अपोहिनः स्वलक्षणरूपा अपि। तदाह—'न' इत्यादि। न परमत तथा तेन परोक्तासाधारणप्रकारेण। अप्रतिपत्तितः अपोहितां [ ना ] खण्डादीनामिति। ततो यदुक्तम्—

"स च सर्वपदार्थानामन्योन्याभावसंश्रयः।
तेनान्यापोहविषयो वस्तुलाभस्य चाश्रयः॥" [प्र० वा० ३।७९] इति,

तत्प्रतिविहितम्; वस्तुन एव परपरिकल्पितस्याभावात्। सति हि तस्मिन् समानाकारविकल्पपारम्पर्येण तस्मादात्मलाभात् तल्लाभस्याश्रयो भवेन्नासति खरविषाणवत्। तत्र अतद्धेतुफलापोहसामान्यम्, सदृशपरिणामस्यैव तत्त्वोपपत्तेः।

कुतः पुनस्तत्परिणामो भावानाम्? विशेषपरिणामः कुतः? तत्प्रत्ययात्, परोऽपि तत एवास्तु विशेषाभावात्। ततः समानेतरपरिणामात्मानो भावास्तथैव प्रतिपत्तेरिति न्याय्यम्। प्रत्यक्षतो न तस्य प्रतिपत्तिः, ततो बहिरन्तश्चासाधारणस्यैवाकारस्य प्रतिपत्तेः, तत्प्रतिपत्तिस्तु वासनापरिपाकजन्मनो विकल्पादेव, तस्य चावस्तुविषयत्वान्न ततस्तद्व्यवस्थापनं न्याय्यमिति चेत्, अत्राह—

यन्न निश्चीयते रूपं जातुचित्तस्य दर्शनम्। इति।

यत् पराभिमतं रूपं दृश्यस्य दर्शनस्य च, न निश्चीयते न सत्त्यपरिच्छेदेनावसीयते। जातुचित् प्रतिसंहारवेलायामन्यदा वा। न हि तस्य तद्वेलायां निश्चयः, निश्चयस्यैव तदा विकल्पत्वेनासम्भवात्। नाप्यन्यदा, अनुमानवैफल्यापत्तेः, निश्चिते समारोपाभावाच्च। तस्य रूपस्य। दर्शनमुपलम्भनम्। 'न' इत्यावृत्त्या सम्बन्धः। न ह्यनिश्चितं दृष्टं नाम, अन्यथा 'सत्तामात्रस्यैव दर्शनं सर्वत्र, भेदप्रतिपत्तिस्तु तदविद्यापरिपाकजन्मनो विकल्पादेव' इति विकल्प्येत। भवतु निश्चितस्यैव तस्य दर्शनमिति चेत्, अत्राह—

१ भवत स्व–आ०, ब०, प०। २ तस्याप्यप्रहा–आ०, ब०, प०। ३ निर्विकल्पस्य। ४ तैरवक– आ०, ब०, प०। ५–या स्युस्तस्य आ०, ब०, प०। ६ अनुमानस्य। ७ स्वलक्षणप्रकारेण –ता० टि०। ८ अपोहितानां आ०, ब०, प०। ९ न हि तदभिमतस्य आ०, ब०, प०।

**यथानिश्चयनं तस्य दर्शनं तद्वशात्किल ॥ २६ ॥** इति ।

निश्चयनस्यानतिक्रमात् **यथानिश्चयनम्**, पञ्चम्यन्तमेतत् । **तस्य** रूपस्य । **दर्शनं किल** इति यावत् । किलशब्दस्यारुचिवाचिनो निषेधपरत्वात् । कीदृशात्ततस्तद्दर्शनं न रुच्यत इति चेत् ? **तद्वशात्** सदृशेतरात्मकवस्तुवशात् । न ह्यन्यवशान्निश्चयादन्यदर्शनम्, नीलनिश्चयात् पीतादेरपि तत्प्रसङ्गात् । कुतः पुनस्तद्वशत्वं निश्चयस्येति चेत् ? स्वतस्तस्य बहिरन्तश्च जात्यन्तरविषयतयैव प्रसिद्धेः । असाधारणविषयत्वे तु निश्चय एव न भवेद्दर्शनवत् । तत्र चोक्तम्—"अनिश्चितस्य न दर्शनम्" [　　] इति । पुनर्निश्चयान्तरपरिकल्पनायामनवस्थानं पूर्वप्रसङ्गानतिवृत्तेः । ततस्तद्वश एवायं तथाप्रसिद्धेः । एतदेव किलशब्देन प्रसिद्धिवाचिना दर्शयति । तद्वशत्वेऽपि निश्चयस्य कथं दर्शनस्य तत्त्वम् ? न हि तदनुसार्येव निश्चयो विपरीतस्यापि दर्शनात् । मरीचिदर्शनात्तोयनिश्चयवदिति चेत्; भवतु तत्रैवं यत्र बाधकप्रत्ययः, न चेहासावस्ति । जात्यन्तरविलक्षणविषयस्य कस्यचिदपि तस्यानुपलम्भात् । जात्यन्तरविषयमपि न किञ्चिदुपलभ्यत इति चेत्; न; निश्चयस्यैव दर्शनात्, तस्य विकल्पेतरात्मकतया विकल्पान्तरसदृशेतरात्मकतया च स्वत एवोपलम्भात् । दर्शनं तद्विषयं नोपलभ्यते यदनुसारी निश्चय इति चेत्; न; तस्यापि संस्कारमात्रभाविनः अवायस्योपदर्शनात् । निश्चयरूपत्वे तस्य किं संस्कारेण तद्रूपेणेति चेत् ? निश्चयतारतम्यात् प्रयोजनविशेषाच्च । विचारितमेतत् प्रथमप्रस्ताव इति नेह विचार्यते । ततः समानपरिणाम एव सामान्यं निर्बाधप्रत्ययत्वान्नापरं विपर्ययात् । तत्परिणामोऽपि यद्यनेकवृत्तिरेकः; कथं तस्य ग्रहणम् ? अनेकविशेषदर्शनादिति चेत्; न; सन्निहितवर्तमानविशेषदर्शनस्य तदन्यत्राप्रवृत्तेः, तद्वतो विश्ववेदित्वोपपत्तेः, तथा च किं तस्य शब्देनानुमानेन वा ? यतस्तदर्थेन परिणामिनि सम्बन्धपरिकल्पनेन किं क्लिश्येत ? न च तदनुपलम्भे तद्गतस्य तत्परिणामस्य प्रतिपत्तिः; व्यापकप्रतिपत्तेर्व्याप्यप्रतिपत्तिं विना[6]ऽनुपपत्तेः । भवतु दृष्टे तस्य ग्रहणम्, अग्रहणञ्चान्यत्रेति चेत्; न; विरुद्धधर्माध्यासेन [8]भेदे स्वरूपविरहापत्तेः । सत्यपि तस्मिन् गृहीतेतरात्मना तस्याभेदे विशेषाणामपि परस्परं तत्प्रसङ्गः; तथा चासन्निहितवदव्यतिरेकात् सन्निहितस्यापि तस्य दर्शनम् । दर्शने वा तत एवासन्निहितस्यापि सर्वस्य दर्शनमिति प्रतीतिप्रत्यनीकमापद्येत । विशेषेभ्यो भिन्न एव तत्परिणामः, ततो न दर्शनादर्शनाभ्यां तत्र तत्कल्पनमुपपन्नमिति चेत्; अस्तु नामैवं तथापि कथं स [9]कश्चित् खण्डादीनामेव न कर्कादीनामपि । तैरेवोपकारादिति चेत्; न; तस्य बहुभिरेकस्यासम्भवात् । अनेकत्वे तु तत्परिणामस्यापि तदव्यतिरेकादनेकत्वं कार्यत्वञ्चेति कथमसावेको नित्यश्चोपगम्येत ? व्यतिरेके स एव प्रसङ्गः कथं स तस्येति ? तेनापि तदपरस्य करणादिति चेत्; न; तत्रापि तथा प्रसङ्गादनवस्थादोषाच्च । नोपकारवशात् स तेषाम्, अपि तु तदभिव्यङ्ग्यत्वात् तत्रावस्थानात्, तैस्तस्यातप्रतिषेधाद्वेति चेत्; न; अभिव्यङ्ग्यत्वादीनामप्युपकारविशेषत्वेनानुपकारिभिरसम्भवात् । तन्नैकस्तत्परिणामः सम्भवति यस्य दर्शनं यतो वा सामान्यप्रयोजनमुपकल्प्येत । तदेवाह—

---

१ किलेति आ०, ब०, प० । २ निश्चयरूपप्रत्यक्षस्य । ३ यथायस्य । ४ समानपरिणामोऽपि । ५-दिताप-आ०, ब०, प० । ६ विना कृत्यानुप-आ०, ब०, प० । ७ भेदस्व-आ०, ब०, प० । ८ विरुद्धधर्माध्यासे । ९ कथमसौ यः क-आ०, ब०, प० ।

**समानपरिणामश्चेदनेकत्र कथं दृशिः ।** इति ।

**समानपरिणामः** सादृश्यपर्याय, एकवचनादेकत्वस्य प्रतिपत्तेः । **चेत्** यदि । **अनेकत्र** बहुषु विशेषेषु । **कथं** न कथञ्चित् **दृशिः** दृष्टि उक्तन्यायात् । भवतु प्रतिविशेष भिन्न एव स इति चेत्, कथमिदानीमसौ सामान्यम् असाधारणत्वात् विशेषवदसम्भवाच्च विशेषाव्यतिरेकात् । व्यतिरेके सम्बन्धाभावात् तस्येति व्यपदेशानुपपत्ति । तत्राह—

**न चेद् विशेषाकारो वा कथं तद्व्यपदेशभाक् ॥ २७ ॥** इति ।

**न चेत्** न यदि **समानपरिणामोऽनेकत्र,** कथं न कथञ्चित् , स एव सामान्यमिति व्यपदेशः तस्य वा विशेषस्य स इति व्यपदेशस्तद्व्यपदेशस्तं भजतीति **तद्व्यपदेशभाक्** । अत्र निदर्शनम्–**विशेषाकारो वा** विशेषाकार इव । 'वा' शब्दस्येवार्थत्वात् । यथा तदाकारस्यासाधारणत्वात् तत्र सामान्यमिति व्यपदेशो नाप्यसौ तदपरस्येति ततो भिन्नत्वात् तथा समानपरिणामेऽपीति परो मन्यते । प्रतिविधानमत्राह—

**सदृशासदृशात्मानः सन्तो नियतवृत्तयः ।** इति ।

**सदृशश्चासदृशश्च** सदृशासदृशौ समानासमानपरिणामौ **आत्मानौ** येषां खण्डादीनां ते तथोक्ता । सदृशात्मान इति बहुवचनमनेकवर्तिन एकस्य तत्परिणामस्य निषेधार्थम्, असदृशात्मान इति तु निदर्शनार्थम् । यथैव तेष्वसदृशात्मसु नैकोऽनेकवर्तितत्स्वभाव तथाप्रतीत्यभावात् तथा सदृशात्मस्वपि तत्स्वभाव इति[1] । ततः '**समानपरिणामश्चेत्**' इत्यादि न दूषणमनभ्युपगमादिति भाव ।

यद्येवं भेदाविशेषात्कथमसौ सामान्यमितरवदिति चेत् ? न, तत एव सामान्यप्रयोजनस्य भावात्, अनेकवर्तित्वेऽपि तत एव तदनुपपत्ते, अन्यथाऽतिप्रसङ्गस्य वक्ष्यमाणत्वात् । आत्मग्रहणं तयो परस्परम् भेदार्थम् । तद्भेदे तदात्मन खण्डादेरपि तत्प्रसङ्गात् । न चैवमप्रतीते । **नियतवृत्तयः** नियता सङ्करव्यतिकरविकला वृत्तिरात्मलाभो येषां ते तथोक्ता । अनेन "**चोदितो दधि**" [प्र० वा० ३।१८] इत्यादि चोद्यं प्रत्युक्तम्, दधिद्रव्यस्य स्वगतैरेव सदृशपर्यायैरात्मलाभात् करभगतं तथैव प्रतीते । न च तादृशास्ते बुद्धिपरिकल्पिता एव अपि तु **सन्तः** परमार्थतो विद्यमाना । कुत एतत् ? दृशिर्यत, दृशिरित्यस्यानुवर्तनात् । निदर्शनमपि तेषामत्यन्तविसदृशत्वमेवेति चेत्, न, नीलतज्ज्ञानयो सदृशतयापि तद्भावात्, "**सारूप्यमस्य प्रमाणम्**"[4] [ न्यायवि०पृ०२५ ] इति वचनात् । न च तत्र कल्पितमेव तत्, ज्ञानस्य प्रत्यक्षत्वव्यापत्ते । तत्र प्रत्यक्षादत्यन्तविसदृशाभावप्रतिपत्ति । नापि[5] विकल्पात्, तस्यातद्विषयत्वात् । नातद्विषयेण तत्प्रतिपत्ति, अतिप्रसङ्गात् । नायं दोष, प्रतिबन्धविषयस्यैव तत सिद्धेरिति चेत्, न, प्रतिबन्धस्य प्रत्यक्षतोऽप्रतिपत्ते तस्यासाधारणविषयस्याभावात् । न हि तदविषयात्तत्र कस्यचित्प्रतिबन्धपरिज्ञानम् । नापि विकल्पान्तरात्तत्प्रतिपत्ति, तस्यापि तदविषयत्वात् । प्रतिबन्धेन तद्विषयत्वेऽनवस्थापत्ति, तत्राप्यन्यतो विकल्पात् प्रतिबन्धपरिज्ञानात् । ततो न युक्तम्–"**स्वस्वभावव्यवस्थितयो भावाः**"[6] [ ] इति, अत्यन्तविसदृशस्वभावव्यवस्थितेरपरिज्ञानात् । सदृशाकारस्यापि कथं परिज्ञानम् ?

१ तयाभिन्नत्वात्तया आ०, ब० । २ अनेकवर्ती नैक इत्यन्वय । ३ तत्रोपपत्ते आ०, ब० प० । ४ अर्थसारूप्यमस्य प्रमाणम् –न्यायवि० । ५ नाविक आ० ब० प० । ६ सर्वं एव हि भावा स्वरूपस्थितयो नाभाव परेण मिश्रयति । –प्र० वा० स्ववृ० ३।४२ ।

कथं च न स्यात् ? शाबलेयप्रत्यक्षेण बाहुलेयादेरप्रतिपत्तेः । न हि तदप्रतिपत्तौ तत्प्रतियोगितया तदाकारस्य सम्भवति प्रतिपत्तिरिति चेत्; किमिदानीं प्रत्यर्थनियता एव बुद्धयः ? तथा चेत्; तद्बहुत्वमपि न भवेत्, अप्रतिपत्तेः । मा भूत्, एकव्यक्तिकस्यैव संवेदनस्याभ्युपगमादिति चेत्; न; तस्यापि निष्कलपरमाणुरूपस्याप्रतिवेदनात् । नानाकारमेकं तदिति चेत्; सिद्धं नः समीहितम् । एकेनानेकस्य व्याप्तिवत् ग्रहणस्याप्युपपत्तेः । ततः शाबलेयदर्शनेन बाहुलेयादेरप्युपलम्भादुपपन्नं परस्परप्रतियोगितया ततस्ततसदृशाकारस्य परिज्ञानं विसदृशाकारवत् । कथं पुनः स एव सदृशो विसदृशश्चेति चेत् ? न, दृष्टत्वात्, दृष्टे चानुपपत्तिपरिप्रश्नायोगात्[1] । ततः सूक्तम्–'सन्तस्ते दर्शयन्तः[2]' इति । अतश्च ते सन्त इत्याह–

**तत्रैकमन्तरेणापि सङ्केताच्छब्दवृत्तयः ॥ २८ ॥** इति ।

**तत्र** इत्यत्रावधारणं द्रष्टव्यम् । **तत्रैव** तेषु सदृशासदृशात्मस्वेव । **शब्दवृत्तयो** वचनव्यापारा यतस्ततः **ते सन्तः** इति । न हि निर्भागे भावे तत्सम्भवः । यदि[3] स्यात् एक इव सा[4] स्यात् न बहवः[5] । [6]बहवश्च दृश्यन्ते शब्द इत्यनित्य इति कृतक इति च । न हि शब्दत्वादिसदृशेतरधर्मबहुत्वमन्तरेण एकत्रानेकतत्प्रवृत्तिः पर्यायत्वापत्तेः । तदभावेऽपि व्यावृत्तिभेदात्[7] तत्प्रवृत्तिरिति चेत्; न; [8]तद्भेदस्य वस्तुसत्त्वे निरंशवादव्याघातात् । अवस्तुसतश्च प्रत्यक्षेणानवगमात् । विकल्पेनावगम इति चेत्; न; ततोऽपि वस्तुपराङ्मुखत्वेन वस्तुगतत्वेनाऽनवगमात् । अवस्तुगतत्वेनावगमस्यापि वैफल्याद् व्यवहारानुपयोगात् । वस्त्वेकत्वाध्यवसायात्तस्य तदुपयोग इति चेत्; न; तस्य निषिद्धत्वात् । तत्र एकत्रानेकशब्दवृत्तिः[9]असद्भावे सम्भवति । एतदर्थमेव '**शब्दवृत्तयः**' इति बहुवचनम् । कथं पुनर्वस्तुवशत्वे [10]तत्प्रवृत्तेः [11]देवदत्तादावेकत्रैव 'आत्मानमात्मना वेत्ति' इति कारकभेदस्यापोद्धारा इति, कलत्रे जलबिन्दौ[12] च बहुत्वस्य वचनमिति चेत् ? अत्रोत्तरम्–**एकमन्तरेण** एकधर्मं विना अनेकधर्मभावेनेत्यर्थः । भवति हि तत्र [13]शक्तिभेदरूपोऽवयवनानात्वादिलक्षणश्च धर्मभेद इत्युपपन्नैव तद्वाच्ये[14] तद्वचनप्रवृत्तिः । न चैवम्, तत्र देवदत्त इति जलमिति कलत्रमिति चैकवचनस्याप्रयोगः, एकस्यापि शक्तिम[15]दादिरूपस्य तद्वाच्यस्य भावात् । एतत् अपिशब्देनैकत्वसद्भावं समुच्चिन्वता दर्शयति । यद्येवं किन्न कलत्रादिपदवद् दारादिपदेनाप्येकार्थकथनं यतस्तत्रैकवचनं न भवेदिति चेत् ? न; प्रायशस्तस्य बहुत्व एव सङ्केतात् । न हि शब्दाः स्वसामर्थ्यादेव वस्तुवाच्यमावेदयन्ति, यतो दारादिभिरेकत्वमप्यावेद्येत, अपि तु सङ्केतवशात् । सङ्केतश्च वृद्धानां यत्र यथा तत्र तथैव तन्मार्गप्रवृत्तेरनुसर्तव्यः, तद्व्यतिक्रमे प्रयोजनाभावात् । तच्चोक्तम्–'**सङ्केतात्**' इति ।

१ 'प्रत्यक्षेण प्रतीतेऽर्थे यदि पर्यनुयुज्यते । स्वभावैरुत्तरं वाच्यं दृष्टे काऽनुपपन्नता ॥' इति सौगतैः स्वयमेवाभिधानात् ।–'ता० टि० । २ सन्तो यच्छब्द-ता० । ३ यात्रैकार्थेकसाध्यस्याक्ष बहवश्च प० । ४ शब्दवृत्ति । ५ वैदिकिनां द्वौ ( शा०सू० १।३।५८ ) इत्यनुवर्तने सति वह्वादे (शा०सू० १।३।६ ।) इति सूत्रेण विकल्पेन द्वीप्रत्यय तेन बहवः बह्वय इति रूपद्वयम् ।"–ता० टि० । ६ शब्दप्रवृत्तय । ७–दात्प्र–आ०, ब०, प० । ८ व्यावृत्तिभेदस्य । ९ सदृशेतरधर्मबहुत्वाभावे ।–चित्तद्भावे आ०, ब, प० । १० शब्दप्रवृत्ते । ११ देवदत्तादावनेकत्रैव आ०, ब०, प० । १२–न्दौ ब–ता० । १३ भक्ति–आ०, ब०, प० । १४–च्ये वस्तुनि बहुवचनप्रवृ–आ०, ब०, प० । १५ 'आदिशब्देन अवयव्यादि ।' –ता० टि० ।

शब्दप्रवृत्तिसङ्केतात् सदृशासदृशात्मसु ।
विचित्ररूपा दृष्टेयं न नित्या विपश्चिताम् ॥ १३५४ ॥

तत इदं प्रत्युक्तम्—

"न चादृष्टार्थसम्बन्धः शब्दो भवति वाचकः ।
तथा चेत्स्यादपूर्वोऽपि सर्वः सर्वं प्रकाशयेत् ॥"

[ मी० श्लो० शब्दनि० श्लो० २४२ ] इति ।

सङ्केतादत्र शब्दस्यार्थप्रतिबन्धपरिज्ञानात् । ततोऽपि कथमनित्यस्य तत्परिज्ञानम्, उपलब्धस्य सङ्केतकालेऽनवस्थानात्? अवस्थितस्य तत्परिज्ञानसिद्धो नित्यत्वमेव तस्य कालान्तरावस्थितिलक्षणत्वात् । सत्यपि कथञ्चित्तत्परिज्ञाने न प्रयोजनं परिज्ञातप्रतिबन्धस्य व्यवहारेऽनन्वयात्, तत्कालभाविनश्च ततोऽन्यत्वात् । न चान्यस्य तत्परिज्ञाने तदन्यस्य वाचकत्वम्, गोशब्दस्य तत्प्रतिपत्तौ अश्वशब्दस्यापि तत्त्वापत्तेः । गोशब्दाद् गवाश्वशब्दयोर्भेदेऽपि गोशब्द एव स्वाभाव्याद्वाचकः खण्डादीनां तथाप्रतीतेः, नाश्वशब्दो विपर्ययात् । दृष्टं चैतत् तेजसः कस्यचित् रूपसम्बन्धपरिज्ञानेऽपि तदपरस्यापि तेजस एव रूपप्रकाशकत्वं नापरस्येति चेत्, भवेदेवं यदि तत्र किञ्चिन्निबन्धनम्, तदभावे कोऽसाविति तन्निश्चयानुपपत्तेः । भवतु प्रतीतिरेव तत्र निबन्धनम्—यस्मिन्नुच्चारिते सत्यसौ भवन्ती व्यवहारमवकल्पयति स एवाभिधित्सितस्य वाचको नापर इति तन्निश्चयोपपत्तेरिति चेत्, इत्थं भवतु वा श्रोतुस्तदुपपत्तिर्न तु वक्तुः, उच्चारणात् पूर्वं तन्निबन्धनाभावात् । अनुत्पन्नतन्निश्चयश्च कथमसौ शब्दं नियतोऽर्थोपदर्शनार्थमुच्चारयेत्? अथ सोऽपि जानात्येव 'अयमेवास्य वाचकः' इति, यद्येवं प्रागपि तेनायमवधारित एव तत्क्षणमभ्युत्पन्नशरीरे तथापरिज्ञानानुपपत्तेः, एवञ्च नित्य एवायम् । यदुक्तम्—'दृष्टं चैतत्' इत्यादि, तदपि न युक्तम्, न हि तेजसः सम्बन्धपरिज्ञानात् प्रकाशकत्वम्, अपि तु चक्षुरादीनां सन्निधिमात्रेण सहकारित्वात् । ततो यदुक्तम्—"प्रतिनवस्यापि तस्य तत्त्वं न शब्दस्य ।" [ ] तत्र तत्परिज्ञानस्यावश्यापेक्षत्वात् । तस्य चानित्यशब्दवादिनामुक्तन्यायेनासम्भवात् । उक्तञ्चैतत्—

"सम्बन्धदर्शनञ्चास्य नानित्यस्योपपद्यते ।
सम्बन्धज्ञानसिद्धिश्चेद् ध्रुवं कालान्तरस्थितिः ॥१॥
अन्यस्मिन् ज्ञातसम्बन्धे न चान्यो वाचको भवेत् ।
गोशब्दे ज्ञातसम्बन्धे नाश्वशब्दो हि वाचकः ॥२॥
अथान्योऽपि स्वभावेन कश्चिदेवावबोधकः ।
तत्रानिबन्धने न स्यात्कोऽसाविति विनिश्चयः ॥३॥

१ सङ्केतितात् गोशब्दात् । २ रसादे । ३ तु हि आ–आ० ब०,प० । ४ वक्ता । ५–र्थमुपदर्श आ०, ब०, प० ।

यतः प्रत्यय इत्येवं व्यवहारोऽवकल्पते ।
श्रोतॄणां स्यादसावित्थं वक्तॄणां नावकल्पते ॥४॥
अज्ञात्वा कथमसौ शब्दमादावेव विवक्षितम् ।
जानाति चेदवश्यञ्च पूर्वं तेनावधारितः ॥५॥
तेजःप्रत्यक्षशेषत्वान्नूनेऽपि प्रकाशकम् ।"
[ मी० श्लो० शब्दनि० श्लो० २४२–४७ ]

इति चेत्; अत्राह—

**तत्रैकमभिसन्धाय समानपरिणामिषु ।**
**समयस्तत्प्रकारेषु प्रवर्त्तेतेति साध्यते ॥२९॥** इति ।

**समय** ईदृश ईदृशस्य वाच्यो वाचकश्चेति संवित्तिः प्रतिपाद्यस्य । **साध्यते** निष्पाद्यते गणधरदेवादिभिः । किं कृत्वा ? **तत्र** तेषु पूर्वं निरूपितेषु **समानपरिणामिषु** सदृशविवर्त्तनशीलेषु वाच्येषु वाचकेषु च **एकं** वाच्यं वाचकञ्च **अभिसन्धाय** दर्शनस्मरणाभ्यां प्रत्यवमृश्य । तथाप्युपलब्धशब्दानुस्मरणेनाभिसन्दधानः तथाविधस्यैव प्रतिपाद्यस्य संकेतयति—'योऽसौ त्वयाऽभिसन्धीयते तादृशादीदृशः प्रत्येतव्य.' इति । ततो न युक्तम्—'सम्बन्ध' इत्यादि, कालान्तरानवस्थितावप्यभिसन्धानविषयस्य सम्बन्धज्ञानसिद्धेः । 'अन्यस्मिन्' इत्याद्यपि न सङ्गतम्; अन्यस्यापि प्रतिपन्नसम्बन्धसदृशस्यैव वाचकत्वान्नापरस्य । 'अथ' इत्याद्यपि न साधीय; सादृश्यस्य तन्निश्चयनिबन्धनस्य भावात् । प्रत्ययस्य तु तत्त्वं नेष्यत एव, यतो 'यतः प्रत्यय' इत्यादि ब्रूयात् । एवम् 'अज्ञात्वा' इत्यादिकमपि तज्ज्ञानस्य निषेधितत्वात् । न चायं जानन्नप्येकत्वेन जानाति सदृशतयैव प्रतिपत्तेः । ततो 'जानाति चेत्' इत्याद्यपि दुर्व्याहृतमेव, नित्यत्वप्रसङ्गाभावात् ।

सादृश्याद्वाचक इत्ययुक्तम्, तस्यैव दुरवगमत्वेनाभावात् । भावेऽपि कस्य सादृश्यादुत्तरस्य वाचकत्वमनुकल्प्येत ? अनर्थकस्येति चेत्, न, तस्योत्तरानिशेषात् । अर्थवतश्चेत्; कुतस्तस्य तावान् क्षणो यावताऽर्थवत्त्वंप्रतिपत्तिः । न हि द्वित्रादिक्षणानवस्थितस्यार्थवत्त्वं शक्यावसायम्, इत्यप्यचोद्यम्, सादृश्यपरिज्ञानस्य सुलभत्वात्, अनर्थकसादृश्यस्य चानभ्युपगमात्, द्वित्रिप्रतिपत्तिकत्वेऽर्थवत्त्वप्रतिपत्तेर्निरूपितत्वात् । तत इदमपि दुर्भाषितमेव—

"सदृशत्वात्प्रतीतिश्चेत्तद्द्वारेणाप्यवाचकः ।
कस्य चैकस्य सादृश्यात् कल्प्यतां वाचकोऽपरः ॥१॥
अदृष्टसङ्गतित्वेन सर्वेषां तुल्यता यदा ।
अर्थवान् पूर्वदृष्टश्चेत्तस्य तावान् क्षणः कुतः ॥२॥

---

१–नशरीरेषु आ०, ब०, प० । २ सङ्केतो यदि आ०, ब०, प० । ३ इतीति त–आ०, ब०, प० । ४ इत्येतदपि आ०, ब०, प० । ५ ततो आ०, ब०, प० । ६ तानप्येक– आ० ब०, प० । ७ –र्थत्वप्र– आ०, ब०, प० । ८ द्वि प्रवृत्तिक– आ०, ब०, प० ।

द्विस्त्रिर्वानुपलब्धो हि नार्थवान् सम्प्रतीयते ।”

[मी० श्लो० शब्दनि० श्लो० २४८-५०]

‘अर्थवान्’ इत्यादेः पुनरुक्तत्वाच्च तदर्थस्य ‘सम्बन्धदर्शनञ्चास्य’ [ ] इत्यनेनापि प्रतिपादितत्वात् ।

[1]सादृश्यादर्थवत्त्वमशब्दान्तरवेदिनं प्रति न भवेत्, तेन तत्सादृश्यस्यापरिज्ञानात् । भवतु [2]तदन्तरवेदिनं प्रत्येवेति चेत्; अद्भुतमेतत्—स एवार्थवानन्यथा च, इति विरोधात् । अतद्वेदिनं प्रत्यर्थवत्त्वेनाय स्वत एव केवलमुपायाभावान्न जानातीति चेत्, उत्तरोऽपि तर्हि स्वत एव वाचक इति किं तत्र सादृश्याद्वाचकत्वकल्पनया ? तन्नानन्यश्रुतिं प्रत्युत्तरस्यार्थवत्त्वमुपपन्नम् । अनर्थकत्वे तु पूर्वस्यापि स्यात्, तत्राप्यनन्यश्रुतिसद्भावात्, इत्यनर्थकत्वमेव सर्वस्यापि शब्दप्रबन्धस्य प्राप्तम् ।

अपि च, शब्दान्तरवेदिनामर्थवत्सदृशत्वेन योऽसावभिमतः स एवातद्वेदिना मुख्यो भवेत्, तत्रैव प्रथमं तैरर्थवत्त्वप्रतिपत्तेः, तथा चाय पूर्वस्मान्मुख्याद्भिन्न एव भवेत् मुख्यत्वाद्रूपवदिति न शब्दे नित्यत्वप्रतिक्षेपः, इत्यपि न चोद्यम्, अनेकान्तवादिनं क्वचिदर्थवत्त्वेतरयोरपेक्षाभेदेनाऽविरोधात्, दृश्येतरत्ववत् । नहि [3]चक्षुरन्यतोऽप्यदृश्यमेव, तद्ग्राह्यस्य निर्लेपापत्तेः । न च स्वशक्तिः पूर्वस्यार्थवत्त्वं यत उत्तरस्यापि [4]तथैव वाचकत्वात् ‘सादृश्याद्वाचकः’ इति कस्यचन न भवेत्, अपि तु सङ्केतादेव सादृश्यविशेषावलम्बनात्, तद्वदुत्तरस्यापि । न चानन्यश्राविणं प्रत्यनर्थकत्वेऽपि [5]वचनप्रबन्धस्य सर्वथाऽनर्थकत्वम्, प्रतिपन्नसङ्केतं प्रत्यर्थवत्त्वप्रतिपत्तेः । न च ‘मुख्य’ इत्येव पूर्वस्मादुत्तरस्य भेदः, कालविच्छेदेन तयोर्भेदाध्यवसायात् । तन्न तत्र नित्यत्वमसक्तिः । तत इदमप्यपर्यालोच्य जल्पितम्—

“अप्रतीतान्यशब्दानां तत्काले[6]ऽसावनर्थकः ।
प्रतीतान्यश्रुतीनां स्यादर्थवानिति विस्मयः ॥१॥
अथास्य विद्यमानोऽपि कैश्चिदर्थो न गृह्यते ।
तत्तुल्यमुत्तरस्येति किं सादृश्येन वाचकः ॥२॥
अनर्थकत्वमस्य स्यादथानन्यश्रुतीन् प्रति ।
पूर्वस्मिन्नपि तत्सत्त्वात् सर्वस्यानर्थता भवेत् ॥३॥
[8]अर्थवत्सदृशत्वेन यो वा मुख्यतया मतः ।
मुख्योऽसाव[7]श्रुतीनां [9]स्यान्नित्यत्वेन प्रयुज्यते ॥४॥”

[ मी० श्लो० शब्दनि० श्लो० २५०-५४ ] इति ।

धूमादौ हेतावप्यस्य समानत्वाच्च । नहि तस्यापि सादृश्यादन्यतो गमकत्वम् । तत इदं तत्र वक्तव्यम्—

१ -दवत्त्वम- आ०, ब०, प० । २ तदनन्तरवे- आ० ब०, प० । ३ चक्षुष्मता दृ- आ० ब०, प० । ४ तथापि च एव । ५-वचनप्रबन्धस्य प्रति-आ०, ब०, प० । ६ -ले ऽसाव- मा० । ७ ‘स एवान्यश्रुतीनाम् – मी० श्लो० । ८ अर्थवत् स- आ० ब०, प० । ९ ‘स्यादेकत्वेन युज्यते’- मी० श्लो० ।

न सादृश्येन धूमादिर्गमकस्तदवेदनात् ।
कस्य चैकस्य सादृश्याद्गमक कल्प्यता पर ॥१३५५॥
अदृष्टसङ्गतत्वेन सर्वेषा तुल्यता यदा ।
गमक पूर्वधूमश्चेत्तस्य तावान् क्षण कुत ॥१३५६॥
द्विस्त्रिर्वानुपलब्धो हि गमको नावगम्यते ।
अप्रतीतान्यधूमाना न चाय गमकस्तदा ॥१३५७॥
प्रतीतापरधूमानां भवेदित्येष विस्मय ।
गमकत्व सदप्यस्य यदि कैश्चिन्न गृह्यते ॥१३५८॥
तत्तुल्यमुत्तरस्येति सादृश्याद्गमक कथम् ।
अथास्यागमकत्व स्यादनन्यगमकं प्रति ॥१३५९॥
पूर्वस्मिन्नपि तत्सत्त्वात् सर्वोऽप्यगमको भवेत् ।
गमयन् सदृशत्वेन यो वा तद्भेदिना मत ॥१३६०॥
मुख्योऽसावपरेषा स्यान्नित्यत्वेन प्रयुज्यते ।
न चादृष्टार्थसम्बन्ध इत्याद्यपि पुरोदितम् ॥१३६१॥
एवमत्रापि वक्तव्य समानन्यायवेदिभि । इति ।

भवतु नित्यत्वमेव हेतुष्विति चेत्; न; व्यक्तितस्तदभावात् । सामान्यत इति चेत्, न ततो विशेषप्रतिपत्ति, तत्प्रतिबन्धस्य दुरवबोधत्वात् । प्रतिपत्तिरपि सामान्यस्यैवेति चेत्, न तर्हि ततो विशेष तदर्थिना प्रवृत्ति अपरिज्ञानात । लक्षितलक्षणे चानवस्थानात् । निरूपितश्चैतत् '**तद्ग्रहणचोदिते**' इत्यादिना । ततो व्यक्तीनामेव सदृशरूपतया हेतुत्वमिति कथन्न तत्राप्ययं प्रसङ्गो यदनुमानमप्याकुलं भवेत् ।

लिङ्गं न चेत् प्रसङ्गोऽय न शब्देऽप्यविशेषत ।
तत्र प्रलाप एवायमनालोचितकल्पन ॥१३६२॥
तुल्यकक्ष्यत्वमेवैवं भवतु शब्दलिङ्गयो ।
अनुमानाधिकारेऽपि कृत शब्दनिरूपणम् ॥१३६३॥

यदि न शब्दस्य कालान्तरावस्थिति किमिति तत्र समय साध्यते व्यवहारानुपयोगादिति चेत् । अत्रोत्तरम्—

'**तत्प्रकारेषु**' तस्य साध्यमानसमयस्येव प्रकार परिणतिविशेषो येषा तेषु शब्देषु । तैस्तदर्थप्रतिपादनाय तदर्थेषु च तैस्तत्प्रयोजनाय **प्रवर्त्तेन** प्रवृत्तिं कुर्वीत लोक **इति** एवं स तत्र साध्यते न पुनस्तेनैव तस्यैव पुनरपि प्रतिपत्त्यर्थम् । लिङ्गमेवात्रोदाहरणम् ।

---

१ सर्वोऽस्य ग– आ०, ब०, प० । २ इति विशेषे प्र– आ० ब० प० । ३ न्यायवि० श्लो० .... । इति न आ० ब० प० । ४ सादृश्यम्य– ता० ।

धूमादिकं यथा किञ्चिदभिसन्धाय कुत्रचित् ।
सम्बन्धस्तत्प्रकारेषु प्रवर्तेतेति साध्यते ॥१३६४॥
तथा वच कचित्किञ्चिदभिसन्धाय सूरिभिः ।
सम्बन्धस्तत्प्रकारेषु प्रवर्तेतेति साध्यते ॥१३६५॥

उपसंहरन्नाह—

तज्जातीयमतः प्राहुर्यतः शब्दा निवेशिताः । इति ।

अतोऽनन्तरोक्तान्न्यायात् । आ (प्रा) हुः प्रतिपादयन्ति गवाध्यादय । किम् ? तज्जातीयं तत्प्रकारम् । यतो यस्मिन् खण्डकर्णादौ निवेशिताः स्थापिताः शब्दा इति । किं पुनरिदं शब्दानां तत्र निवेशनम् ? सम्बन्धकरणमेव । सर्गादावीश्वरेण तत्करणस्य प्रसिद्धेरिति चेत्, न, नित्यत्वे तदयुक्ते "तदुक्तम्" [ शावरभा० १।१।१८ ] इत्यनेन भाष्येण प्रतिपादनात्। अनित्यत्वेऽपि विशेषत सम्बन्धस्य दुष्करत्वात् । न हि शब्दस्यासत्युच्चारणे तदनन्तरनाशे वा तत्करणं निर्विषयत्वापत्ते प्रयोजनविरहाच्च । तत्र पूर्वस्यासम्बद्धस्यैव नाशादुत्तरस्य चाकृतसम्बन्धत्वाद् विज्ञानमेवार्थं यत्त्वम् । न चैकदैवोच्चारणं सम्बन्धकरणं व्यवहारश्च सम्भवति, तत्क्रियाणां क्रमस्वभावत्वेन युगपत्करणायोगात् । भवत्वपि वक्तृमुखनिष्क्रान्तः शब्दः कृतसम्बन्धो नैकः श्रोतॄणां सिद्ध्यति, तेषां देशकालादिभिन्ने शब्दान्तरस्यैव श्रवणात्, अन्यथा तस्य नित्यव्यापित्वापत्तेः । तत्र सम्बन्धस्य करणं निवेशनम् । नापि कथनम्, तस्याप्येव निराकृतेः । न हि तदपि नष्टे सति वर्तमाने वा सम्भवति उक्तायापत्तेः । उक्तञ्चैतत्—

"सम्बन्धकरणे युक्तिस्तदुक्ताभाव कथ्यते ।
शब्दानित्यत्वपक्षे हि विशेषेण स दुष्करः ॥१४॥
शब्दं तावदनुच्चार्य सम्बन्धकरणं कुतः ।
न चोच्चारितनष्टस्य सम्बन्धेन प्रयोजनम् ॥२॥
तेनासम्बद्ध्य नष्टत्वात् पूर्वस्तावदनर्थकः ।
उत्तरोऽकृतसम्बन्धो विज्ञायेत यथार्थं कथम् ॥३॥
शब्दोच्चारणसम्बन्धकरणव्यवहारिकाः ।
क्रियाः क्रमस्वभावत्वात् कः कुर्याद्युगपत्कचित् ॥४॥
देशकालादिभिन्नानां पुंसां शब्दान्तरश्रुतेः ।
पूर्वं कृत्रिमसम्बन्धोऽप्येकः शब्दो न सिद्ध्यति ॥५॥

१ 'कस्यचित्पूर्वस्य कृत्रिमसम्बन्धो भविष्यतीति चेत् तदुक्तं सदृश इति चावगते व्यामदा... शावरभा० १।१।१८। २ –सम्बन्धिनि यो- ...गो व्यावर्तेत शाब्दादाब्दामालाप्रत्यय इव ।'– शाबरभा० ...पृ० ५०। ३ – सम्बन्धेत्येतदपि सम्बन्धनीयम् ।'– बृ० टि० ।

सम्बन्धकथनेऽप्यस्य स्यादेषैव निराक्रिया ।
नष्टासद्वर्तमानेषु नाख्यानस्य हि सम्भवः ॥६॥"

[ मी० श्लो० शब्दनि० श्लो० २५४-५९ ]

इति चेत्; न, शब्दस्योच्चारणानन्तरनाशेऽपि सङ्कलनबुद्ध्यवस्थापितत्वेन तत्र सम्बन्धकरणतत्कथनयोरुपपत्तेरभिहितत्वात् ।

यत्तूक्तम्—'देशकालादिभिन्नानाम्' इत्यादि, तदपि न समीचीनम्; वक्तृमुखनिष्क्रान्तस्यैव शब्दपर्यायिणः पुद्गलस्कन्धस्यानेकधाराकारेण प्रतिश्रोतृ श्रोत्रप्रदेशं[4] प्रवेशाद् देवदत्तस्यायं शब्द इति प्रतीतेरस्खलनात् । उच्चारणानन्तरविनाशस्यापि तत्प्रवेशानन्तरभङ्गाभिप्रायेणैवाभिधानात् । कथञ्चैवं ध्वनीनामपि वर्णसम्बन्धो यतस्तदभिव्यक्तये तदुपादानं क्रियेत ? शक्यं हि वक्तुम्—

सम्बन्धकरणे युक्तिस्तदुक्तमिति कथ्यते ।
ध्वन्यनित्यत्वपक्षेऽपि विशेषेण न दुष्करः ॥१३६६॥
ध्वनिं तावदनुत्पाद्य सम्बन्धकरणं कुतः ।
न चोत्पादितनष्टस्य सम्बन्धेन प्रयोजनम् ॥१३६७॥
तेनासम्बद्ध्य नष्टत्वात् पूर्वस्तावद्ध्वनेर्वशात् ।
उत्तरोऽकृतसम्बन्धो वर्णवान् वेद्यते कथम् ॥१३६८॥
ध्वन्युत्पादनसम्बन्धकरणव्यापारकारिकाः ।
क्रियाः क्रमस्वभावत्वात् कः कुर्याद्युगपत्क्वचित् ॥१३६९॥
देशकालादिभिन्नानां पुंसां ध्वन्यन्तरश्रुतेः ।
न प्राक्कृत्रिमसम्बन्धो ध्वनिरेकोऽपि सिध्यति ॥१३७०॥
सम्बन्धकथनेऽप्यस्य स्यादेषैव निराक्रिया ।
नष्टासद्वर्तमानेषु नाख्यानस्य हि सम्भवः ॥१३७१॥इति

यच्चेदमपरमपरस्य[5] वचनम्[6]—

"अर्थवान् कतरः शब्दः[7] श्रोतुर्वक्त्रा च कथ्यताम् ।
यदपूर्वश्रुतं शब्दं नासौ शक्नोति भाषितुम् ॥
न तावदर्थवन्तं स ब्रवीति सदृशं वदेत् ।
नार्थवत्सदृशः शब्दः श्रोतुस्तत्रोपपद्यते ॥
अर्थवद्ग्रहणाभावान्न चासावर्थवान् स्वयम् ।
वक्तुः श्रोतृत्ववेलायामेतदेव प्रसज्यते ॥

---

१ -णानाशो- आ०, ब०, प० । २ -लनाबु- आ०, ब०, प० । ३ -धारा- आ०, ब०, प० । ४ प्रदेशादो दे- आ०, ब०, प० । ५ -पर प- आ०, ब०, प० । ६ "सादृश्यादर्थवान् स्वतो वेति विकल्पद्वय मनसिकृत्याह"- ता० टि० । ७ श्रोत्रे आ०, ब०, प० ।

एवञ्च सर्ववक्तॄणां न शब्दः कश्चिदर्थवान् ।"

[ मी० श्लो० शब्दनि० २६०–६३ ] इति

तदप्यत्र समानम् । तथाहि—

वर्णवान् कतरो नादः श्रोतुर्वक्त्रा निवेद्यताम् ।
यदपूर्वोद्भवं नादं नासौ शक्नोति भाषितुम् ॥१३७२॥
न तावद्वर्णवन्तं स ब्रवीति सदृशं वदेत् ।
न वर्णवत्समो नादः श्रोतुस्तत्रोपपद्यते ॥१३७३॥
वर्णवद्ग्रहणाभावान्न चासौ वर्णवान् स्वयम् ।
वक्तुः श्रोतुस्त्ववेलायामेतदेव प्रसज्यते ॥१३७४॥
एवञ्च सर्ववक्तॄणां न नादः कोऽपि वर्णवान् ।

इति कृतं प्रसङ्गेन ।

साम्प्रतमुक्तार्थस्मरणार्थम् 'सदृशासदृशात्मानः' इत्यादि व्याचक्षाण आह—

**नानेकत्र न चैकत्र वृत्तिः सामान्यलक्षणम् ॥३०॥** इति ।

**अनेकत्र** अनेकस्मिन् खण्डादौ **वृत्तिः** वर्तनं समवायो **न सामान्यस्य** गोत्वादे-**र्लक्षणम्** । **न च** नापि । **एकत्र** एकस्मिन्निति । अत्र हेतुमाह—

**अतिप्रसङ्गतः [ तत्त्वादन्यत्रापि समानतः]** । इति ।

कार्यद्रव्यसंयोगादेरनेकवृत्तित्वेन कर्मणश्चैकवृत्तित्वेन सामान्यरूपत्वापत्तेरिति दोषात्, मीमांसकमतेऽनेकवृत्तेरसम्भवाच्च । तदाह—'**तत्त्वात्**' इति तत्त्वं सामान्यस्य व्यक्तिभ्योऽनर्थान्तरत्वं तत, न तस्यानेकत्र वृत्तिस्तनश्च न तल्लक्षणम् । तथा हि—

व्यक्तिवत्तदभिन्नस्य तस्यानेकत्र वर्तनम् ।
कथं स्यादन्यथा तस्य तद्भेदः कथं भवेत् ॥१३७५॥
सामान्यं तद्विशेषेभ्यो भिन्नाभिन्नं मतं यदि ।
कथं सावयवं न स्याद्येनेदमभिलप्यते ॥१३७६॥
"**कार्त्स्न्यावयवशो वृत्तिः प्रभु जातौ न युज्यते ।**
**नहि भागविनिर्मुक्ते कार्त्स्न्यावयवकल्पनम् ॥ १३७७॥** इति ।
द्रव्याद्रव्यात्मकञ्च स्याद् भिन्नाभिन्नात्म तद्यदि ।
तथा सत्यन्तरालेषु नाग्रहात्तन्निषेधनम् ॥१३७८॥
"**व्यक्तिष्वेव च सामान्यं नान्तरा गृह्यते यतः ।"**
इति सर्वत्र तद्वृत्तेः प्रागेवोत्तरमीरितम् ॥ १३७९ ॥

---

१ श्रोतुरसमर्थ– आ०, ब०, प० । २ –वक्तृश्रो– आ०, ब०, प० । ३ –वर्चेरतिव्याप्ते मी– आ०, ब०, प० । ४ सामान्यस्य । ५ मी० श्लो० वन० श्लो० ३३ । ६ मी० श्लो० आकृति० श्लो० २९ ।

तस्मादेकस्वभावं तयद्भिन्नं विशेषतः ।
तत्रैव न परत्रेति सामान्यं तन्न युज्यते ॥ १३८० ॥

कथं तर्हि सामान्यम् ? इत्याह—**'अन्यत्रापि समानतः'** इति[1] । अन्यत्र खण्डवत् मुण्डादावपि **समानतः** सदृशपरिणामात् सामान्यमिति । सर्वतः सर्वस्य व्यावृत्तत्वेन विलक्षणत्वात् कथं तत्परिणाम इति ? अत्राह—

**व्यावृत्तिं पश्यतः कस्मात् सर्वतोऽनवधारणम् ॥ २१ ॥** इति

**सर्वतः** सजातीयाद्विजातीयाच्च **व्यावृत्तिं** स्वलक्षणानां विच्छेदं **पश्यतः कस्मात् अनवधारणम्** अनिश्चयनम् । एवं[2] मन्यते—दर्शनविषयत्वे व्यावृत्तेर्निश्चयेन भवितव्यं नीलादिवत्, तथा च व्यर्थमनुमानं निश्चिते समारोपाभावादिति । न दृष्टमित्येव निश्चयः, तत्रापि भ्रान्त्यादिभ्रमोपपत्तेः मायागोलकवदिति चेत्; अत्राह—

**सादृश्याद्यदि साधूक्तं [ तत्किं व्यावृत्तिमात्रकम् ]** । इति ।

**सादृश्याद्यदि** अनवधारणं व्यावृत्तेस्तर्हि **साधूक्तं** जैनेन **'अन्यत्रापि समानतः'** इति । सादृश्यमपि व्यावृत्तिरूपमेवेति चेत्; आह—**'तत्किं व्यावृत्तिमात्रकम्'** इति । **तत्** सादृश्यम् । किं नैव, **व्यावृत्तिरेव** तन्मात्रकम् अपि त्वन्यदेव । एवं मन्यते—यद्यन्यव्यावृत्तिरेव हेतुफलयोर्घटक्षणयोः सादृश्यं घटकपालक्षणयोरपि तद्भावान्नान्यक्षणेऽपि व्यावृत्तिनिश्चय इति । "अन्ते क्षयदर्शनादादावपि क्षयः" [ ] इति प्लवेत । ततो यद्भावात् सत्यामपि तद्व्यावृत्तौ अन्यक्षणे[3] तन्निश्चयस्तदेव सादृश्यं न तन्मात्रमिति । परमाशङ्कते परिहर्तुम्—

**एकान्ते चेत्तथाऽदृष्टेरिष्टं [ वक्तुरकौशलम् ] ॥ २२ ॥** इति ।

**एको**ऽसहायो**ऽन्तः** स्वभावो यस्य तस्मिन् वस्तुनि **तथा** तेन जैनोक्तेन[4] प्रकारेण **अदृष्टेः** *अदर्शनात् सादृश्यस्य* **इष्टम्** *अभ्युपगतम् 'व्यावृत्तिमात्रकं तत्' इति । अत्रायमभिसन्धिः*—वस्तु तावदेकस्वभावमेव । स्वभावान्तरकल्पनायां तत्स्वभावप्रच्युतेः । न ह्यप्रच्युततत्स्वभावं तदन्तरवद् भवति, तथापि तदेकस्वभावमेव पुनस्तदन्तरकल्पनायामव्यवस्थापत्तेः । एकश्चान्तो वैलक्षण्यमेव अन्यथा सङ्करापत्तेः । अतो नान्यस्य सादृश्यस्य दर्शनमिति व्यावृत्तिमात्रकमेव तत् इति । चेत् इति पराकूते । अत्रोत्तरमाह—**'वक्तुरकौशलम्'** इति । एकान्तं वदतो न कौशलं तत्र प्रमाणाभावात् प्रत्यक्षादेरप्रवेशात् । तथा हि—वैलक्षण्यैकान्ते परत इव स्वतोऽपि तस्यैव भावादभाव एव भावानामिति ॥ तद्वादिनः कौशलमव्यवस्थितवस्तुवादित्वात् । उदाह—

**सर्वैकत्वप्रसङ्गो हि [ तद्दृष्टं भ्रान्तिकारणम् ]** । इति ।

---

१ इति अन्यस्मादन्यत इत्यन्यत्र आ०, ब०, प० । २ "अकलङ्कदेवस्याभिप्रायमाह – ता० टि० । ३-णे म- ता० । ४-जैन त- आ०, ब०, प० । ५ जैनोक्तप्रका- आ०, ब०, प० । ६-गन्तव्यम् आ०, ब०, प० ।

**सर्वैकत्वम्** अभावमात्रत्वेनाभिन्नत्वं तस्य **प्रसङ्गः** प्रसञ्जनं हि यतस्ततः प्रागुक्तम्। अथ न स्वतो वैलक्षण्यं न तर्हि तदेकान्त इति तत्कल्पन विभ्रमात्। एतदेवाह—'**तद्दृष्टं भ्रान्तिकारणम्**' इति। **तस्य** वैलक्षण्यैकान्तस्य **दृष्टं** दर्शनं कल्पनारूपं **भ्रान्तिः** दुरागमजनितो विभ्रमस्त**त्कारणं** तन्निबन्धनम्। यदि पुनर्न (यदि च न) सादृश्यं वस्तुतः कुतस्तत्प्रतिभासः? व्यावृत्तिवशादेवेति चेत्; न; तस्य सर्वत्र भावात्, गवादिव्यवहारसाङ्कर्यापत्तेः। ततोऽपि विशिष्टादेवेति चेत्, कस्तद्विशेषोऽन्यत्र वस्तुभूतात्सादृश्यात्। सोऽप्यतात्त्विक एव अन्यस्ततोऽतत्कल्पनादिति चेत्, न, तत्राप्यविशेषविशेषयोः[1] पूर्ववत्प्रसङ्गादनवस्थोपनिपाताच्च। ततो वस्तुभूतमन्यदेव व्यावृत्तेः सादृश्यं निर्बाधप्रतीतिगोचरत्वात्। तथापि तदवस्तुत्वे वैलक्षण्येऽप्यनाश्वासात् सर्वैकत्वमेव तात्त्विकं प्रसज्येत। तदाह '**सर्व**' इत्यादि। तत्प्रसङ्गाद्वैलक्षण्यं वदतो न कौशलं तदव्यवस्थितेरिति भावः। सति वैलक्षण्यप्रतिभासे कथं सर्वैकत्वमिति चेत्? सति सादृश्यप्रतिभासे वैलक्षण्यमपि कथम्? तस्य भ्रान्तिकारणत्वादिति चेत्, न, अन्यत्रापि तुल्यत्वात्। तदाह—'**तद्**' इत्यादि। **तस्य** वैलक्षण्यस्य **दृष्टं** दर्शनं [2]कल्पनारूपं **भ्रान्तिकारणम्**—अविद्यानिबन्धनं विभ्रमादेव परमात्मापरिज्ञानरूपात् प्रतिभासः स्रगाद्यपरिज्ञानात् सर्पादिप्रतिभासवत् सर्पादिरूपेण स्रगादिवच्च भेदरूपेण तदात्मैवाविद्यावृतामवभासत इति च ब्रह्मवादिभिरभिधानात्। तथा च तदीयं वार्तिकम्—

"सर्वैकत्वं परं ब्रह्म परमात्मेति यद्विदुः।
तन्मोहभाजां सर्वेषां न तत्त्वं परमार्थतः॥ १॥
तद्ब्रह्मानेकवैचित्र्यात्मनैव परमात्मना।
तदन्यान्यात्मवन्ति स्युः सर्पादीनि स्रजो यथा॥ २॥
व्यक्तात्मव्युतदृष्टीनां तदबोधैकहेतुतः।
आब्रह्मस्थाणुभेदोऽयं नामरूपक्रियात्मकः॥ ३॥
अविद्याकृत एव स्यात् न यथावस्तुघोषितः॥"

[बृहदा०वा० १।४।११३८-४१] इति

ननु चाविद्यैव सर्वैकत्वे तद्व्यतिरिक्ता न सम्भवति तद्वादविलोपात्। न च तदेवाविद्या; तस्य सत्यज्ञानत्वेनोपगमात् "सत्यं ज्ञानमनन्तं ब्रह्म" [तैत्ति० २।१।१] इति श्रवणात्। कथन्ततो भेदप्रतिभास इति चेत्? न; तस्या अवस्तुत्वेन भेदेतराभ्यामनिर्वचनीयत्वात्। अवस्तुनः कथं प्रतिभासकारणत्वमिति चेत्? न; प्रतिभासस्यापि तादृशत्वात्। नहि स्वप्नादवस्त्वन्तरानुत्पत्तिः दृष्टत्वात्। अथैवं "नेष्यते न कश्चिदप्यन्यथा प्रतिभासहेतुर्भवेत् चौद्यानादीनामपि निरंशवादिनामसम्भवात्। मा भूदिति चेत्; एतदेवाह—

१ सर्वभा– आ०, ब०, प०। २ –विशेषयोः। ३ कल्पन भ्रा– आ०, ब०, प०। ४ ये नि– आ०, ब०, प०। ५ तन्मोहभाजां आ०, ब०, प०। ६ सकल आ०, ब०, प०। ७–कहेतुत्वान्नैव आ०, ब०, प०। ८ स्रजो यथा आ०, ब०, प०। ९ अविद्याया। १० प्राग्वदनु– आ०, ब०, प०। ११ तथैव ने –आ०, ब० प०।

**नो चेद्विभ्रमहेतुभ्यः प्रतिभासोऽन्यथा भवेत् ॥ ३३ ॥** इति ।

तेषामेवाभावादिति भावः । बहुवचनं नौयानादिभेदेन तेषां बहुत्वात् । अत्रोत्तरमाह–

**तदकिञ्चित्करत्वं न निश्चिनोति स किं पुनः ।** इति ।

**स** धर्मकीर्तिः **पुन**रिति शिरःकम्पे **किं** कस्मात् **न निश्चिनोति** । किम् ? **तदकिञ्चित्करत्वं** तेषां[1] विभ्रमहेतूनामकिञ्चित्करत्वमन्यथाप्रतिभासं प्रत्यकारणत्वम्, न च निश्चितवान् स्वशास्त्रे 'तेषां तत्कारणत्वस्यैव तेन निश्चयात्[2], अन्यथा[3] अभ्रान्तपदवैयर्थ्यापत्तेः । संवृत्यैव तन्निश्चयो न वस्तुत इति चेत्; जीवन्तु ब्रह्मविदस्तेषामप्यविद्याया तथैव तदुपपत्तेः । भवत्वेवं तथापि किम् ? इत्यत्राह–

**तथा हि दर्शनं न स्याद्भिन्नाकारप्रसङ्गतः ॥ ३४ ॥** इति ।

**तथा** तेनाविद्यानिबन्धनभेदप्रतिभासप्रकारेण **ही**ति सौष्ठवे **दर्शनं** सौगतस्य विलक्षणमेव सर्वमिति मतं **न स्यात्** न भवेत् । अत्र हेतुः– **भिन्न**स्तन्मताद्विलक्षण **आकारः** स्वरूपं यस्य अद्वैतात्मनस्तस्य **प्रसङ्गतः** प्राप्तेः, भेदस्य भ्रान्तत्वे तदन्यप्राप्तेरवश्यम्भावात् । विशेष एव परमार्थसंज्ञः तस्यैव दृष्टेः नाविशेषः परमार्थो विपर्ययादिति चेत्; अत्राह–

**न च दृष्टेर्विशेषो यः प्रतिभासात् परो भवेत् ।** इति ।

**न च** नैव **दृष्टे**र्दर्शनाद् **विशेषः** परस्परविलक्षणरूपः सिद्ध्यतीति शेषः । कीदृशो न सिद्ध्यति ? **यो** विशेषः **प्रतिभासात्** परमात्मनः "तमेव भान्तमनुभाति सर्वम्" [ कठो० ५।१५ ] इति तस्य प्रतिभासरूपत्वश्रवणात् **परो** विभिन्नो **भवेत्**, स दृष्टेन सिद्ध्यति तस्या एव तत्राभावादिति भावः । भवतु तर्हि यथादर्शनं वस्तुव्यवस्थेति चेत्; अत्राह–

**प्रतिभासभिदैकत्र तदनेकात्मसाधनम् ॥ ३५ ॥** इति ।

**तत्** तस्माद्[4]विशेषवत् विशेषस्यापि तद्दर्शनबलाद्व्यवस्थानात् एकत्र एकस्मिन् घटादौ **अनेकस्य** समानेतरस्थूलेतरादेः **आत्मनः** स्वभावस्य **साधनं** सिद्धिः **'भवतु'** इत्याहृत्य सम्बन्धः । कया तत्साधनम् ? **प्रतिभासस्य दृष्टेर्भिदा** विशेषेण एकान्तवैमुख्यरूपेण । अनेकान्तेऽपि दुर्लभैव दृष्टिरिति चेत्; आह–

**अदृष्टिकल्पनायां स्यादचैतन्यमयोगिनाम् ।** इति ।

अनेकान्तस्यादृष्टिरनुपलब्धिस्तत्**कल्पनायां स्यात्** भवेत् **अचैतन्यं** चैतन्यवैकल्यम् **अयोगिनां** संसारिणाम् । तेषां तदन्यदृष्टेरभावात् तद्दृष्टेश्चापलापात् । भवतु तेषां तद्दृष्टि[5], न तावता तत्सिद्धिः योगिभिरन्यथा दर्शनात् "व्याख्यातारः खल्वेवं विवे-

१ नौयानादीनाम् । २ न्यायबि० पृ० १६ । ३ प्रत्यक्षलक्षणे । ४ तस्य एव आ०, ब०, प० । ५ –दपि वि–आ०, ब०, प० ।

चयन्ति" [ प्र० वा० स्व० १।७२ ] इति वचनात् । योगिदृष्टस्यैव परमार्थसत्त्वोपपत्तेरिति चेत् ; न ; अत्र प्रमाणाभावात् ।

योगिनः परिपश्यन्ति सौगतोक्तं स्वलक्षणम् ।
किं वा तदन्यदेवेति प्रमाणान्नात्र दृश्यते ॥ १३८१ ॥
वाङ्मात्राच्चेत्तु तद्दृष्टावतद्दृष्टिस्ततो न किम् ?
तामवस्थां गतानां तु न विद्मः किं भविष्यति ॥ १३८२ ॥

उपसंहरन्नाह—

**तस्मादभेद इत्यत्र समभावं प्रचक्षते ॥ ३६ ॥** इति ।

**तस्मात्** उक्तन्यायाद् **अभेदः** तिर्यक्सामान्यम् **इति** एवम् **अत्र** विचार्यमाणे **समभावं** सदृशपरिणामं **प्रचक्षते** तद्रूपत्वेन तत्त्ववेदिन. । कथं पुनस्तं प्रचक्षीरन् तस्य विसदृशपरिणामे सति विरोधेनासम्भवादिति चेत् ? तदाह–

**नेक्षते नाविरोधोऽपि [ न समानाः स्युरन्यथा ]** । इति ।

समभावमित्यनुवर्तते तं **नेक्षते न** किन्तु वीक्षत एव । कस्तन्नेक्षते ? **नाविरोधः** तत्परिणामयोः परस्परापरिहारः कथञ्चिद् वस्तुषु तस्य सद्भावात्, अन्यथा वस्तुत्वहानेरिति भावः । केवलमविरोध एव तन्नेक्षते न इति **अपि**शब्दः ।

तयोः कथञ्चित्तादात्म्यादविरोधस्तमीक्षते ।
यथा तथैव नानात्वाद्विरोधोऽपि समीक्षते ॥ १३८३ ॥

तदनभ्युपगमे दोषमाह–'**न समानाः स्युरन्यथा**' इति । **अन्यथा** अन्येनाविरोध एव विरोध एव वा समीक्षत इति प्रकारेण **समानाः** सदृशा **न स्युर्**भावाः । तथा हि–यदि भावेषु विसदृशा एव धर्मा नापरे विरोधात् ; कथं तत्र समानप्रत्ययो विषयाभावात् ? विभ्रमादिति चेत् ; न ; तन्निषेधात् । तथा यदि सदृशा एव, तदापि सर्वथा सादृश्येन भेदाभावात् कथं तत्प्रत्ययः ? तस्य भेदोपाधित्वेन प्रतीतेः । भवन्ति च समानास्तत्प्रत्ययाः । ततः सूक्तम्–'**नेक्षते न**' इत्यादि । '**नानेकत्र**' इत्यादयो व्याख्यानश्लोकाः सदृशपरिणामस्य प्रागुक्तस्यैव तैरभिधानात् ।

कथं पुन. शब्दानामर्थवत्त्वं तदभावेऽपि प्रवृत्तेः प्रधानादिशब्दानाम् ? तेषामपि तत्त्वे न कश्चिदप्यनृतवादी तीर्थकर इति प्रामाण्यमेव सर्वप्रवादानाम् । न च तदुपपन्नं परस्परविरुद्धार्थत्वात् । ततः प्रधानेश्वरादिशब्दवदन्येऽप्यनृतार्था एवेति चेत् ; अत्राह–

**अक्षज्ञानेऽपि तत्तुल्यम् [ अनुमानवदिष्यते ] ॥ ३७ ॥** इति ।

**अक्षाणां** चक्षुरादीनां कार्यं रूपादिविषयं ज्ञानम् **अक्षज्ञानं** तत्राऽपि न केवलं शब्दे **तद्** अनृतार्थत्वं **तुल्यं** सदृशम्, तस्याऽपि केशमशकादावनृतार्थत्वाऽवगमात् । अस्तु बहिस्तद्-

---

१ –रप– आ०, ब०, प० । २ –च न के– आ०, ब०, प० । ३ सर्वदा सा– आ०, ब०, प० । ४ अक्षज्ञानस्यापि ।

नृतार्थं नान्त ,अन्यथा तदसत्यत्वस्याप्रतिपत्तेरिति चेत् ; तर्हि तत एव बहिरपि तत् किञ्चित् सत्यार्थमङ्गीकर्तव्यम् । सत्यार्थमेकचन्द्रादिज्ञानमन्तरेण द्विचन्द्रादावज्ञानस्यापि मिथ्यार्थत्वानवगमात् । भवत्वेव तत्प्रामाण्यस्योपगमादिति चेत् ; कथमिदम् इतरस्मादविशेषात् ? नाविशेष तस्यार्थकार्यत्वात् इतरस्य विपर्ययादिति चेत् ; सिद्ध न समीहितम्— शब्दस्यापि तत्कार्यस्यार्थवत्त्वोपपत्ते । विवक्षात एव शब्दो नार्थादिति चेत् , न, परम्परया ततोऽपि भावात् 'यथा धूमश्चायम्' इत्यस्य । अत्र हि धूमस्य दर्शन ततो विवक्षा ततोऽप्ययशब्द , एवमन्योऽपि । यदि पुनरस्यापि तत्कार्यत्व नेष्यते कथमतो धूमप्रतिपत्ति परस्य, यतोऽनुमानम् ? अप्रतिपत्त्राचदनुपपत्तेरिति कदर्थित एव परार्थानुमानव्यवहार । ततो युक्त पारम्पर्येणार्थादुत्पत्तेस्तद्वत्त्व शब्दानाम् । अतीतानागतयोस्तर्हि कथं तेषा प्रतिबन्ध , तयोरेकस्य नष्टत्वेनान्यस्यानुत्पन्नत्वेनावस्तुत्वात् । अवस्तुनि च प्रतिबन्धानुपपत्तेरिति चेत् , आह—'**अनुमानवदिष्यते**' इति । **अनुमानमत्र** लिङ्ग तन्निमित्तत्वात्, तस्येव तद्वत्, **इष्यते** अतीतादौ तेषा प्रतिबन्ध इत्यर्थ । नहि लिङ्गमतीतादावप्रतिबन्धमेव तद्गमयत्यतिप्रसङ्गात् । गमयच्च दृश्यते—कृत्तिकोदयादतीतस्य भरण्युदयस्य अनागतस्य च शकटोदयस्याविनाभावेन प्रतिपत्ते । ततो यथा लिङ्गस्य तत्र प्रतिबन्धस्तथा शब्दानामपि, भाविकार्यत्वस्यापि लिङ्गवत्तत्रोपपत्ते । योग्यत्वादेवास्य तत्र प्रतिबन्धो न तत्कार्यत्वादित्यपि न वाच्यम् , शब्देष्वपि सदृशत्वात् । सत्यपि प्रतिबन्धे ततस्तत्प्रवृत्तिर्मिथ्यैवास्पष्टत्वादिति चेत् ; न, अनुमितावपि तुल्यत्वात् । सापि तथैवेति चेत् ; किमिदानीं प्रमाणम् ? प्रत्यक्षमिति चेत् ; न, तस्यापि प्रवृत्तिविषये भाविनि स्नानादावस्पष्टत्वात् । सन्निहिते त्वप्रवर्तकत्वेन प्रामाण्यानभ्युपगमात् । व्यवहर्त्रभिप्रायात् प्रत्यक्षानुमानुमानयो प्रामाण्ये शब्दस्यापि स्यात् , तदन्तरेण क्षणमपि व्यवहर्तॄणामाश्वासोऽनु( सानु ) पपत्ते । तथा च कस्यचित् सुभाषितम्—

> "इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
> यदि शब्दाह्वयं ज्योतिरासंसाराम्न दीप्यते ॥" [ ] इति ।

तदेवाह—

**ततः सम्भाव्यते शब्दः सत्यार्थप्रत्ययान्वितः ।** इति ।

**ततस्तस्मान्न्यायात् सम्भाव्यते** अवकल्प्यते **शब्द** । कीदृश ? **सत्यश्चासावर्थप्रत्ययश्चार्थज्ञान तेनान्वित** सम्बद्ध इति । अवश्य चैतदभ्युपगन्तव्यम् "**नार्थान् शब्दाः स्पृशन्त्यमी**" [ ] इत्यादेरप्यनर्थकत्वेन तद्वादिनो निग्रहापत्ते । अपि

१ द्विच द्रादावज्ञा— आ० ब०, प । २ तत्प्रामाण्यम् । ३ एकचन्द्रज्ञानस्य । ४ परार्थानुमान— आ०, ब०, प० । ५ अनुमान तदीय— आ०, ब०, प० । ६ नापि त— आ० ब० प० । अनुमितिरपि । ७ इद मन्द तमः आ० ब० प० । ८ जायते आ० ब०, प० । ९ –चप प्र– आ०, ब०, प० । १० "उद्धृतमिदम्–विकल्पयोनय शब्दा विकल्पा शब्दयोनय । तेषामन्योन्यसम्बन्धो नार्थान् शब्दा स्पृशन्त्यमी ॥–' न्यायकुमु० पृ० ५३७ टि० ७॥

न यथार्थं निर्बन्धः "विवक्षाजन्मानः शब्दास्तामेव गमयेयुर्न बहिरर्थम्" [ ] इति । तत्राह-

**सत्यानृतार्थताऽभेदो विवक्षाव्यभिचारतः ॥ ३८ ॥** इति ।

**सत्यानृतार्थौ** ययोस्तयोर्भावस्तत्ता तयाऽ**भेदो** भेदाभावः सत्यार्थं सुगतवचनम्, अनृतार्थं वेदादिवचनमित्ययं भेदो न भवेत्, सर्वस्य सत्यार्थत्वेन स्यादित्यर्थः । कुत एतत् ? **विवक्षा** वक्तुमिच्छा तस्याम् **अव्यभिचारतः** अविप्रतिसारतः शब्दस्य । शब्द इत्यागतस्य विभक्तिपरिणामेन सम्बन्धात् । नहि तस्य तद्व्यभिचारे तत्कार्यत्वम्, अतिप्रसङ्गात् ।

शब्दार्थश्चेद्विवक्षैव तस्यामव्यभिचारतः ।
अर्थवानेव सर्वोऽपि शब्दः स्यान्न निरर्थकः ॥ १३८४ ॥
एवञ्च सौगतं वाक्यं प्रमाणं नान्यदित्ययम् ।
विभागो न भवेदेव विवक्षावाच्यवादिनाम् ॥ १३८५ ॥

नहि विवक्षाया भावाभावाभ्यां शब्दस्य सत्यार्थत्वमन्यत्वं वा येनायं प्रसङ्गः किन्तु विवक्षितस्यार्थस्य, तद्भावश्च सुगतवचन एव तदर्थस्यानित्यादेरुपपत्तिमत्त्वात्, नान्यत्र तद्विषयस्य नित्यादेविपर्ययात्, ततो भवत्येव तद्विभाग इति चेत् ; न; अर्थस्यातद्विषयत्वात् । न ह्यर्थः शब्दस्य विषयो यतस्तद्भावाभावाभ्यां सत्यानृतविभागस्तत्र कल्प्येत । अविषयधर्माभ्यां तु ताभ्यां तत्कल्पने अतिप्रसङ्गात् । तद्विवक्षाया विषय एवार्थ इति चेत्, तत्रैव तर्हि स विभागोऽस्तु कथं शब्दे ? विवक्षागतस्य तत्राप्यारोपादिति चेत्; अनृतार्थमेव स्यात्, विवक्षायामप्यर्थासंस्पर्शित्वेन तस्यैव भावात् । नायं दोषः तद्धेतोर्विकल्पस्यार्थवत्त्वात्, तस्य च तस्यामध्यारोपादिति चेत् ; न, तस्याप्ययथार्थत्वात् । प्रतिपत्त्रभिप्रायाद् यथार्थ एव विकल्पः, प्रतिपत्तृभिर्दृश्यविकल्प्ययोरेकीकारेण व्यवहारादिति चेत्; न; तदेकीकारस्य दर्शनादसम्भवात्, तस्य विकल्प्याविषयत्वात् । विकल्पाच्च; तस्यापि दृश्यागोचरत्वात् । उभयवेदिनश्च प्रत्ययस्यानभ्युपगमात् । सत्यमेतत्, केवलम् 'इदमेव दृश्यम्' इति विकल्प एव स्ववासनाप्रकृतेः स्वाकारमदृश्यमपि दृश्यतया व्यवस्यन्नुत्पद्यते, ततस्तदभिप्रायभावाभावाभ्यां सत्यानृतार्थत्वयोर्विकल्पे सम्भवात्-तज्जन्मनि विवक्षायां तत्प्रभवे शब्देऽपि तदुभयोपपत्तिरिति चेत्; न; विकल्पस्य स्वाकारे प्रत्यक्षत्वेन अन्यथाध्यवसायासम्भवात्, विविक्तसम्भ्रमस्यैव[13] तत्त्वोपपत्तेः । विकल्पान्तरात्तत्र तदध्यवसाय इति चेत्; न; तेनापि तदाकारस्याग्रहणात्, ग्रहणेऽपि अनिश्चयात् । अथ निश्चयेऽप्यतदाकारतया ग्रहणे [14]स्वमतविरोधात् । तदाकारे तु स्वाकार एव तदध्यवसायो नान्यत्र । चाक्षुष एव उत्कोचरत्वात् । विकल्पान्तरात्तत्रापि तदध्यवसायेऽनवस्थापत्तेः । तत्र

१ "नान्तरीयकताभावाच्छब्दानां वस्तुभिः सह । नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः ॥"... ते हि वक्तुर्विवक्षासूचनात् तथान्तरीयकतया तत्रैव गमकाः स्युः ।"– प्र० वा० स्व० १ । २१६ । तत्त्वसं० पृ० ७०२ । तर्कभा० मो० पृ० ४ । २ तयोर्भेदो आ०, ब०, प० । ३ सत्यार्थमन्यद्वा ... ४ विवक्षितार्थसद्भाव । ५-वचनमेन । ६ विवक्षायामेव । ७ अनृतार्थ- आ०, ब०, प० । ८ न नापित- आ०, ब०, प० । ९-करत्वात्- आ०, ब०, प० । १० 'असम्भवात्' तस्यैव । ११ शब्दे तदु -आ० । १२ अन्यथा व्यव- आ०, ब०, प० । १३ भेदे विभ्रमस्त इति सम्बन्धः । १४ स्वमतविरो- आ०, ब०, प० ।

तदभिप्रायः। सत्यपि तस्मिन् कथन्नाम स्वतोऽनर्थकस्य तद्वशादर्थवत्त्वम् ? गुडस्यापि पिपासाभिप्रायाद्विपत्वापत्तेः। अतिप्रसङ्गाच्च–तदभिप्रायस्य नित्यत्वादिविकल्पेष्वपि तद्भावादिनां भावात्। भावेप्यनित्यादिविकल्पानामेवाविसंवादकत्वेनार्थवत्त्वं न तेषां विपर्ययादिति चेत्, गतमिदानीं [1]तद्वशात्तद्वत्त्वकल्पनम्। अविसंवादोऽपि तेषामेवेति कुतः ? वस्तुनि प्रतिबन्धादिति चेत्, वस्तुदर्शनाद् विकल्पस्ततो विवक्षा ततोऽपि शब्द इति प्रणालिकया शब्दस्यापि तत्र[2] प्रतिबन्ध इति कथं नियमेनातत्प्रतिबन्धत्वं तस्योपकल्प्येत ? भवतु प्रतिबन्धः, तथापि तस्य विकल्पाकारे सामान्य एव सङ्केतात्, तस्य चावस्तुत्वान्न वस्तुविषयत्वमिति चेत्; तदेव[3] तस्य कस्मात् ? दर्शनेनाग्रहणात्, तद्गृहीतस्यैव वस्तुत्वोपपत्तेरिति चेत्, कथमतद्विषयस्य[4] विकल्पेनापि तज्जन्मना प्रतिपत्तिः ? अन्यथा नीलादेरप्यतद्गोचरस्यैव ततः[5] प्रतिपत्तेर्निराकारमेव[6] दृश्यं तद्दर्शनञ्च प्राप्तम्। नीलादेः दर्शनेऽपि प्रतिभासनमुपलभ्यत इति चेत्; न; एकान्तविसदृशस्य तदप्रतिवेदनात्। कथञ्चित् सदृशात्मन इति चेत्, तर्हि विकल्पेनापि तस्यैव ग्रहणात् कथमवस्तुसत्त्वं दृष्टे तदनुपपत्तेर्नीलादिवत् ? वस्तुविषयत्वे विकल्पस्य वैशद्यमेव स्याद् दर्शनवत्, न चैवम्, दर्शनस्यैव तत्प्रतीतेः, ततो दर्शनाद्भिन्नविषय एव विकल्पः तद्भिन्नप्रतिभासित्वात्[7] रूपदर्शनाद्रसादिज्ञानवदिति चेत्, न; हेतोर्व्यभिचारात्–आसन्नपादपदर्शनात् दूरतद्दर्शनस्याविशदत्वेन भिन्नप्रतिभासत्वेऽपि एकविषयत्वप्रवृत्तेः। निरूपितञ्चैतत्– "दूरदूरतरादिस्थैः" इत्यादौ[9]। ततस्तयोरिव दर्शनविकल्पयोरप्यावरणमलविश्लेषविशेषादेकविषयत्वेऽपि विशदेतरभावोपपत्तेः उपपन्नमेव वस्तुविषयत्वं विकल्पस्य, एवं शाब्दज्ञानस्यापि। शब्दस्य [10]सत्यर्थे प्रयुक्तस्य तदभावेऽपीच्छया प्रयोगदर्शनात् कथमर्थविषयत्वमिति चेत् ? विवक्षाविषयत्वमपि कथम् ? तदभावेऽपि गोत्रस्खलनादौ तत्प्रयोगस्यापि प्रतिपत्तेः। तत्र विवक्षाविशेषस्याभावेऽपि तन्मात्रमस्त्येवेति चेत्; न, अन्यत्राप्यर्थमात्रस्यानिवारणात्। तन्मात्रे न शब्दविशेषस्य प्रयोग इति चेत्, विवक्षामात्रेऽपि न भवेत्। ततो विवक्षाया अपि तदर्थत्वानुपपत्तेः ताल्वादिपरिस्पन्द एव तदर्थः स्यात्, तत्र शब्दस्याव्यभिचारात्। विवक्षायां तु व्यभिचारः; योगिनः[11] [12]तन्मात्राभावेऽपि तत्प्रवृत्तेः। कथं पुनः शब्दज्ञानेऽनवभासमानस्य तस्य तदर्थत्वमिति चेत् ? अभिप्रायस्य कथम् ? श्रवणे वक्तुरयमभिप्राय इत्यवगमादिति चेत् ? न; तस्यानुमानत्वेनाशाब्दत्वात्, अनुमानस्य च परिस्पन्देऽप्यविशेषात्। ततो न कश्चिदपि शब्दार्थ इति प्राप्तम्।

एवमेतत्, तद्व्यवहारस्तु विभ्रमादेव स्वप्नवत्। अस्ति हि स्वप्ने तदभावेऽपि तद्व्यवहारः– 'ममायमाह, मया चैतद्वचनात् प्रतीयते' इति तद्दर्शनादिति चेत्; न; अतो वचनात्प्रकृतार्थप्रतिपत्तौ[13] अर्थवत एव शब्दस्योपपत्तेः। अप्रतिपत्तौ किमस्योच्चारणं वैफल्यात्। तदपि विभ्रमादेव न वस्तुत इति चेत्; न; अस्यापि तुल्यचोद्यत्वात्। पुनर्विभ्रमकल्पनायामनवस्थापत्तेः। ततः कस्यचित् किञ्चित्

---

१ अभिप्रायवशादर्थवत्त्वकल्पनम्। २ अर्थे। ३ अवस्तुत्वमेव। ४ दर्शनाविषयस्य। ५ विकल्पात्। ६ प्रत्यक्षाग्राह्यत्वेन। ७– भासत्वात् आ०, ब०, प०। ८ दूरदर्श– आ०, ब०, प०। ९ न्यायवि० श्लो० २।१३। १० सत्यार्थे ता०। ११ सामान्यविवक्षाऽभावेऽपि। १२ ताल्वादिपरिस्पन्दस्य। १३– तार्थवत एव शब्द–आ०, ब०, प०।

निरूपयता शब्दस्य तद्विषयत्वमङ्गीकर्तव्यम् अन्यथा तदनुपपत्तेः। कथं पुनर्विषयवत्ते तदभावेऽपि प्रयोग इति चेत्? न, तस्य ततोऽन्यत्वात्। गुणनिबन्धनो हि शब्दो विषयवान्न तस्य तदभावे प्रयोगः। यस्य तु प्रयोगः स तस्माद् भिन्न एव दोषोपनीतत्वात्। सोऽपि स एव, स एवायमिति प्रत्यभिज्ञानादिति चेत्; न; तस्य सादृश्यमात्रभावित्वेन विभ्रमत्वात् केशनखादिप्रत्यभिज्ञानवत्। गुणदोषविवेक एव वक्तरि दुष्करो वीतदोषस्यापि सदोषवत् सदोषस्य वीतदोषवच्चेष्टासम्भवादिति चेत्; न, परीक्षया तस्यापि सुकरत्वात्, अन्यथा चेष्टाव्यत्यासस्याप्यनवबोधे "नैवीतदोषस्य" [ प्र० वार्तिकाल० २।२८६ ] इत्यादेरवचनप्रसङ्गात्।

तस्माद्नर्थकत्वेऽपि शब्दाना दोषजन्मनाम्।
अर्थवत्त्वं भवत्येव गुणालङ्कृतजन्मनाम् ॥ १३८६ ॥

साम्प्रत 'तत्रैकमभिसन्धाय' इत्यादि प्रपञ्चेन श्लोकैर्व्याचिख्यासु सङ्केतनिबन्धनं प्रत्यभिज्ञानम् एकत्र स इति अयमिति च स्मरणदर्शनरूपयोर्विरुद्धाकारयोरनुपपत्त्या निराकुर्वन्त प्रत्याह—

**सहशब्दार्थदृष्टावप्यविकल्पयतः कथम्।**
**समयः [ तत्प्रमाणत्वे क्व प्रमाणे विभाव्यताम् ] ॥ ३९ ॥** इति।

**सह** युगपत् शब्दाश्च गौरित्यत्र गकारादयो वर्णा अर्थाश्च रूपादयः तेषां **दृष्टौ** दर्शने, न केवलमदर्शने इत्यपिशब्दः, **अविकल्पयतो** विकल्पमनाचक्षाणस्य। तात्पर्यमत्र-यथा न प्रत्यभिज्ञानमयमाचष्टे विरुद्धधर्माध्यासात् तथा विकल्पमप्यभिलाप्येतराकारमिति तस्य कथं न कथञ्चित् **समयो**ऽनुगमो गकारादिगोरूपादिसमुदायवेदनं यतो गौरित्युच्चारयेत् खण्डादिरिति वा व्यवहरेत्, अस्ति च समयः, भवितव्यं ततो विकल्पेन तथा प्रत्यभिज्ञानेनापीति। एवं भवन्नपि विकल्पो न प्रमाणं तथा प्रत्यभिज्ञानमपीति चेत्, न, ततः समयायोगात्। सोऽपि प्रत्यक्षादेवेति चेत्; न, वक्ष्यमाणत्वात्। प्रमाणत्वे तु प्रत्यभिज्ञानस्यापि तद्वत्प्रामाण्यात् युक्तस्तद्विषये सङ्केतः। किञ्च, प्रत्यभिज्ञानस्य भवत्यस्माकं परोक्षेऽन्तर्भावः, भवतस्तु क्व विकल्पस्य? न प्रत्यक्षे, विकल्पत्वात्। नानुमाने, अलिङ्गजत्वात्। प्रमाणान्तरत्वे तु न प्रमाणद्वयनियमः। इदमेवाह—'**तत्प्रमाणत्वे क्व प्रमाणे विभाव्यताम्**' इति। **तस्य** विकल्पस्य **प्रमाणत्वे क्व** स **विभाव्यताम्**? न क्वचित् प्रत्यक्षानुमानयोस्तदनुपपत्तेः। प्रमाणान्तरत्वे क्व **प्रमाणे द्वे**? न क्वचित् तृतीयस्यापि भावात्। किं पुनर्विकल्पेन समुदायपरिज्ञानस्य प्रत्यक्षादेव भावादिति चेत्? अत्राह—

**तदर्थदर्शनाभावात् [ मिथ्यार्थप्रतिभासिषु ]।** इति।

**तस्य** समुदायात्मनोऽर्थस्य **दर्शनं** तस्याभावात्। नहि क्रमभाविषु गकारादिष्वेकं दर्शनम्, तन्नित्यत्वापत्तेः। नापि नानादेशेषु रूपादिषु, देशव्याप्त्या निरंशत्वाद्व्यपत्तेः। दर्शनसमुदा

१ शब्दस्य। २ निरर्थकत्वेऽदस्य। ३ गुणनि- आ०, ब०, प०। ४ न वीतरागस्य बुद्धौ यो विद्यालिङ्गनादिजम्। वीतद्वेषस्य तु दृश्य शत्रुघ्नादिनिर्देशम् ॥' – प्र० वार्तिकाल०। ५– समय सत्र आ०, ब०, प०। ६– व्यवहार न आ०, ब०, प०। ७– चेत द- आ०, ब०, प०। ८ एव दर्शनं नहि तस्य।

यात् तत्परिज्ञानमित्यपि न युक्तम्, तत्समुदायस्याप्येकदर्शनागोचरत्वात्। दर्शनान्तरसमुदायस्य च तद्विषयस्यानभ्युपगमात्। ततो विकल्पादेव तत्परिज्ञानम्, तस्य च स्वविषयेणार्थवत्त्वे प्रत्यभिज्ञानस्यापि तदुपपत्तेः। अर्थ एव सङ्केतो न ज्ञानाकारेषु इत्याह–

**मिथ्यार्थप्रतिभासिषु।**
**ज्ञानाकारेषु सङ्केत इति केचित्प्रचक्षते ॥४०॥** इति।

**मिथ्या** वितथो **यो**ऽ**र्थ** एकत्वसादृश्यलक्षणस्तत्**प्रतिभासिषु ज्ञानाकारेषु** ज्ञानं प्रत्यभिज्ञानं तदाकारेषु **सङ्केत इति** एवं **केचित्** कुत्सिताः, कुत्सितत्वञ्च तदर्थस्य सत्यार्थस्यैव मिथ्यार्थत्वप्रतिपादनात्, **प्रचक्षते** कथयन्ति शाक्याः, तन्न; तदाकारेष्वेवं सङ्केतशक्तेः, तद्वचनाद्बहिरप्रवृत्तिप्रसङ्गाच्च एकत्वाध्यवसायस्य प्रतिक्षेपात्। क्व तर्हि सः? इत्याह–

**वागर्थदृष्टिभागेषु गृहीतग्रहणेष्वपि।**
**सत्याकारावबोधेषु सङ्केतमपरे विदुः ॥४१॥** इति।

**वाक्** च शब्दः **अर्थ**श्च वाच्यो **दृष्टि**श्च तत्प्रत्ययः त एव **भागा** वचनविषयस्य तेषु **सङ्केतं** शब्दसमयम् **अपरे** जैना **विदुः** जानन्ति न ज्ञानाकारमात्रे दोषवचनात्। कीदृशेषु? **सत्याकारः** सत्यनिश्चयः **अवबोधो** येषां तेषु अपिशब्दस्यात्रापि सम्बन्धात् 'असत्याकारावबोधेषु' इत्यपि द्रष्टव्यम्, ततश्च शब्देषु सत्यानृतार्थत्वविभागोपपत्तिः। केषु तेषां तदवबोधत्वम्? **गृहीतानां** दर्शनविषयीकृतानां **ग्रहणानि** परामर्शरूपाणि तेषु सत्सु। बहुवचनं विषयभेदेन तेषां बहुत्वात् **अपि**शब्दाद् अगृहीतग्रहणेष्वपि। ततो गृहीतग्रहणेषु सत्याकारावबोधत्वम्, इतरत्र तदन्यावबोधत्वमित्युक्तं भवति।

भवतु तर्हि वागादिभेदेष्वेव समय इति चेत्; न तत्र समयविषयस्यान्यतः प्रतिपत्तिः, भेदान्तरे च समयस्याभावेन फलाभावात्। नापि तेष्वेव सामान्यवत्सु, तत एव। अभिहितञ्चैतत्–'**सम्बन्धो यत्र**' इत्यादिना। नापि केवले सामान्ये; तस्यार्थक्रियायामशक्तेः, 'विशेषे वैयर्थ्यात्। लक्षितलक्षणया ततो विशेषाधिगमेऽप्युक्तम्—'**तद्वत्यचोदिते**' इत्यादिना। न च भेदाभेदाव्यक्तियः सम्बन्धः; तस्यैवैकान्तरूपस्य प्रमाणाविषयत्वात्। निरूपितश्चैतत्। एतदेवाह—

**न भेदेषु न सामान्ये केवले न च तद्वति।**
**फलाभावादशक्तेश्च समयः सम्प्रवर्तते ॥ ४२ ॥** इति।

सुबोधमेतत्। किन्निबन्धनः पुनः सङ्केतोऽयमपरे विदुरिति चेत्? अत्राह—

**स एवायं समश्चेति प्रत्ययस्तन्निबन्धनः।**
**वितथोऽवितथश्चापि तत्रैकत्वनिबन्धनः ॥ ४३ ॥** इति।

---

१– व श– आ०, ब०, प०। २– स्या प्र–आ०, ब०, प०। ३– राम– आ०, ब०, प०। ४– तु वा त– आ०, ब०, प०। ५ न्यायवि० श्लो० २।२३। ६ 'नापि केवले विशेषे' इत्यन्वयः। ७ शब्देन लक्षितं सामान्यं तेन च लक्ष्यते विशेष इति। ८ न्यायवि० श्लो० २।२२।

प्रतिपादितमेव प्रत्यवमर्शनिबन्धनत्वं तस्य गृहीतग्रहणेष्विति[1], तत्किमनेनेति चेत्; न; तस्यैवानेन विस्तरतः कथनात्। **स एव** पूर्वगृहीत एव **अयं** प्रतीयमानो नापरः, **समश्च** सदृशश्च तेन 'अयम्' **इति** एवं यः **प्रत्ययः** प्रत्यवमर्शः **तन्निबन्धनस्तद्धेतुकः 'समयः'** इति गतेन सम्बन्धः। स च प्रत्ययो **वितथोऽवितथश्चापि** प्रातीतिकमेतत्। कः पुनस्तस्यायं विभागः प्रतिपत्तव्य इति चेत्? उक्तं तत्र तेषु यागादिषु भिन्नदेशेषु **एकत्वनिबन्धनः** एकत्वविषयः प्रत्ययो मीमांसकस्य वितथः; तदेकत्वाभावस्य निरूपणात्, स्वस्तिकरुचकादौ त्ववितथ एव तदेकत्वस्याव्यवस्थापनात्। तथा 'समत्वनिबन्धनः' इत्यपि द्रष्टव्यम्, अस्योपलक्षणत्वात्। सोऽपि तत्रोपादानोपादेयरूपेषु सादृश्यमात्रविषयो मिथ्या तदेकत्वस्यापि वास्तवत्वात्, शावलेयशाबलेयादावमिथ्या तत्सादृश्यस्य[2]निर्बाधत्वात्।

न केवलमेकत्वसमत्वयोरेवेयं प्रक्रिया अपि तु तदन्यत्रापीत्याह—

**तथा तत्प्रतिषेधेऽपि वैलक्षण्यादिशब्दवत्।** इति।

**तथा** तेनोक्तप्रकारेण **तयो**रेकत्वसमत्वयोः 'स देवदत्तोऽयं जिनदत्तो न भवति, स कर्कोऽनेन खण्डेन समानो न भवति' इति **प्रतिषेधेऽपि** न केवलं विधौ यः प्रत्ययस्तन्निबन्धनश्च सङ्केतः। तथा स वितथोऽवितथश्चापि तत्रोपादानोपादेयेष्वेकत्वनिषेधी वितथः शरीरचैतन्ययोरवितथः। तथा शबलशाबलेयादौ सादृश्यनिषेधी वितथः, खण्डकर्कादौ त्ववितथः, सादृश्यविशेषस्य तत्राभावात्। तत्रोदाहरणम्– **वैलक्षण्यं** सादृश्याभावः **आदि**शब्दादेकत्वाभावः तयोः **शब्द**स्तत्रेव तद्वदिति।

साम्प्रतं सङ्केतितस्य शब्दस्य प्रवृत्तिप्रकारं दर्शयति—

**तत्समानासमानेषु तत्प्रवृत्तिनिवृत्तये ॥४४॥**
**संक्षेपेण क्वचित्कश्चिच्छब्दः सङ्केतमश्नुते ॥** इति।

**तत्** तस्मात् **समानासमानेषु** सदृशासदृशेषु वस्तुषु **तत्प्रवृत्तिनिवृत्तये** तेषु प्रवृत्त्यर्थमनित्य इति निवृत्त्यर्थं नानित्य इति **संक्षेपेण** समासेन **क्वचित्** शब्दादौ **कश्चित्** शब्दादिलक्षणः **शब्दः सङ्केतं** समयम् **अश्नुते** इति। न केवलमेक एव अपि तु अनेकोऽपि। इत्याह—

**तथाऽनेकोऽपि तद्धर्मनानात्वप्रतिपादने ॥ ४५ ॥** इति।

**तथा** उक्तप्रकारेण शब्दः श्रावणोऽनित्य इत्यादि क्वचिद्धर्मिणि सङ्केतमश्नुते इति सम्बन्धः। किन्निमित्तम्? **तस्य** धर्मिणो **धर्माः** कृतकत्वादयस्तेषां **नानात्वस्य प्रतिपादने** तन्निमित्तम्। कथं पुनरेकत्रानेकधर्मसद्भावः? इत्यत्राह—

**एकत्र बहुभेदानां सम्भवान्मेचकादिवत् ॥ ४६ ॥** इति।

निरूपितमेतद् बहुश इति न प्रतन्यते।

---

१ श्लोकांशेन। २ समत्वनिबन्धनः प्रत्ययः। ३ तन्निबन्धनत्वात्र केवलमेनयोरेव आ०, ब०, प०। ४ न नित्य आ०, ब०, प०। ५– त्वमनेकत्वस्य प्र- आ०, ब०, प०। ६ इत्याह ता०।

कथं पुनः सामान्यस्य व्यक्तिव्यतिरिक्तस्याभावे तद्व्यवहार इति चेत् ? अत्राह–

**समानं केनचित्किञ्चिदपरञ्च तथाविधम् ।**
**भेदिवद् धर्मिणः कृत्वा समानाकारकल्पना ॥ ४७॥** इति ।

**भेदिवत्** भेदिनमिव **कृत्वा** निश्चित्य । कुतः [1] **धर्मिणः** शब्दादेः । कम् ? **समानं** सदृशपरिणाममनित्यादिव्यपदेशविषयं **कञ्चित्** न सर्वम्, सर्वस्य भेदिवत्करणे [1]धर्मिणोऽनवशेषात्, तस्य तद्व्यतिरेकेणाभावात् **अपरं च** तमेवान्यतस्तत्परिणामादनर्थान्तरं च **कृत्वा** । कीदृशम् ? **तथाविधम्** अन्यगततत्परिणामप्रकारम्, अनेन तदपरत्वकरणे निमित्तमुक्तम् तथाविधत्वात्तदपरं कृत्वेति, कृतिरपि केनचिदपोद्धारन[3]येन । ततः किम् ? **समानाकारकल्पना** सामान्यव्यवहारः ।

तदपरत्वकारिणं नयं दर्शयति–

**तदन्यत्र समानात्मा स एवेति [तथाविधे]** । इति ।

**तस्मात्** शब्दादेरन्यत्र घटादौ यः **समानात्मा** समानः स्वभावो नित्यत्वादिः **स एव** यः शब्दाधिगतः तदात्मैव नापर इति एवं केनचिदपरं कृत्वा तत्कल्पनेति । ततो यदुक्तं कुमारिलेन–

"तथा भिन्नमभिन्नं वा सादृश्यं व्यक्तितो भवेत् ।
एवमेकमनेकं वा नित्यं वाऽनित्यमेव वा ॥
भिन्नत्वैकत्वनित्यत्वे जातिरेव प्रसज्यते ।"

[ मी०श्लो०शब्दनि० २७१-२७२ ] इति,

तत्प्रतिविहितम्, भिन्नत्वादेरपोद्धारनयार्पणयैव भावात् । तदपेक्षया च सादृश्यं 'जातिरेव प्रसज्यते' इत्यस्येष्टत्वेनादोषत्वात् । अकल्पिततद्रूपाया एव तस्या अनभ्युपगमात् । प्रमाणार्पणया तु न तत्र भिन्नत्वादिकम् [5]अभेदानित्यनानारूपतयैव तथा तस्य प्रतीतेः । विशेष एवैवं शब्दार्थः स्यान्न सादृश्यं तस्य तद्व्यतिरेकेणाभावात्, ततो व्यक्तिवादात् प्रागुक्तान्न सादृश्यवादस्य विशेषः । तदुक्तम्–

अभेदानित्यनानात्वे पूर्वोक्तेनैव तुल्यता ।" [ मी० श्लो० शब्दनि० २७२ ]

इति चेत्; न सारमेतत्; प्रमाणतस्तस्याऽभेदादिरूपत्वेऽपि नयवशात्तदन्यरूपत्वस्यापि भावात् पूर्वोक्तेन तुल्यत्वानुपपत्तेः । [6]प्रमाणतोऽप्येकान्ततस्तत्राभेदादेरप्रतिपत्तेरित्यलं बहुजल्पितेन, तं प्रति अपोद्धृतभेदेषु समानाकारेषु तन्निबन्धनं प्रयोजनमाह–

तथाविधे ।
**व्यवच्छेदस्वभावेषु विशेषणविशेष्यधीः ॥ ४८ ॥**
**तन्निमित्तकः शब्दस्तथान्यत्रापि योऽफलाम्** । इति ।

**तथा** तेन प्रकारेण विधा विधानं तदाकारापोद्धारणं यस्मिन् तस्मिन् धर्मिणि शब्दादौ

१ धर्मिणो न सिद्धेः आ०, ब०, प० । २– मान– आ०, ब०, प० । ३ भेदन्वया । ४ एता- य दा ता० । ५ अभेदनित्यमनाना- प० । ६ प्रमाणेप्ये–आ०, ब०, प० । ७ तदन्यता– आ०, ब०, प० । ८– ण या विधानं आ०, ब०,प० ।

**योज्यताम्** सम्बध्यताम्, **विशेषणविशेष्यधीः** विशेषणधीरनित्य इति विशेष्यधी. शब्द इति । केषु सत्सु सा तत्र योज्यताम् ? **व्यवच्छेदस्वभावेषु** व्यवच्छेदो विपरीतव्यावर्तनं स्वभावो येषां तेषु समानाकारेष्वपोद्धृतेषु, तदभावे निमित्ताभावेन तत्र तद्योजनानुपपत्ते । अतद्रूपव्यवच्छेदे च तेषां न ततो विशेषणादिबुद्धिः, तेषामेवाव्यवस्थितेरिति व्यवच्छेदपदम् । स्वभावग्रहणं तु तेषामपोहरूपत्वनिषेधार्थम्, अपोहस्य नीरूपत्वेन स्वभावत्वासम्भवात्, अस्वभावस्य च तद्बुद्धिनिमित्तत्वानुपपत्ते. । न केवलं तद्धीरेवापि तु **शब्दो** विशेषणादिश्रुतिः तत्र योज्यताम् । कीदृश. [illegible]त्तन्निमित्तकः स [illegible] समानाकारविशेषो निमित्त यस्य स **तत्तन्निमित्तकः** । वीप्साद्विरुक्तस्य तच्छब्दस्य निमित्तपदेन बहुव्रीहिः । न केवलं धर्मिण्येव **तथान्यत्र** घटादावपि **योज्यताम्** उक्तरूपा बुद्धिः[1] शब्दश्च।

अस्तु वस्तुतः सादृश्ये ते[2] नियसदृशो नियसदृशस्य शब्दस्य योजनम्, सादृश्यञ्च न वस्तुन्यवस्थितं सम्भवति, प्रत्युत्पत्तिविलक्षणे वस्तुनि चिरापक्रान्तसङ्केतविषयापेक्षया पश्चाद्भाविनि सादृश्यस्य निर्मूलतो विनाशात् । विशेषणशब्दे स्वरव्यञ्जनादिभेदेन तत्रात्यन्तवैसादृश्यस्य प्रतीते., यथा शालाशब्दान्मालेत्यादौ अपकृष्यमाणस्य वेश्येत्यत्रात्यन्तिकविनाशः, तथान्यत्रापि तत्सम्भवमुत्पश्यतां कथं कस्यचित्प्रयोगः सतोऽप्यर्थवत् ? सदृशाच्छब्दात्तत्प्रतीति· भ्रान्तिरेव धूमसदृशाद्बाष्पादेरिव पावकप्रतीति. । भवत्वेवमिति चेत्, न, बाधकविरहात् । तावता तर्हि तत्प्रतीतेरपि भ्रमत्वमिति चेत्, तथा शब्दनित्यत्वमपि सिध्येत्, तज्ज्ञानस्यापि तद्विरहाविशेषात् । तदुक्तम्—

"वस्तुन्युत्पत्तिभिन्ने च दूरादारभ्य कल्पितम् ।
स्तोकस्तोकविशेषेण सादृश्यं विप्रकृष्यते ॥
स्वरव्यञ्जनमात्रादिभेदाच्छब्दे विशेषतः ।
शाला माला बला वेला वेश्येत्यादि विकल्पनात् ॥
सदृशात्प्रतिपत्तौ च भ्रान्तिज्ञानं प्रयुज्यते ।
धूमे दृष्टेऽग्निसम्बद्धे बाष्पादिव कृशानुधीः ॥
एवमस्त्विति चेद् ब्रूयान्नैतद्बाधकवर्जनात् ।
तावता सिद्धमिति चेच्छब्दाभेदोऽपि सिध्यतु ॥"

[ मी० श्लो० शब्दनि० श्लो० २६७–७० ]

इति चेत्, न; अपकर्षातिशयेऽपि सादृश्यस्य क्वचिदत्यन्तनाशस्यासम्भवात्, क्वचिदपरिज्ञातसादृश्यस्यापि तत्प्रसङ्गात् । दृश्यते हि तस्यापि तदतिशय अस्मादेः एकेन्द्रियजीवे, ततोऽपि द्वीन्द्रिये, ततोऽप्यन्यत्र यावच्छास्त्रार्थवेदी पुरुषः । यत्र च तस्यात्यन्तनाशस्तस्य सर्ववेदित्वेन धर्मेऽपि प्रामाण्यात् न "धर्मे चोदनैव प्रमाणम्" [ ] इत्यवतिष्ठेत । [illegible] च सादृश्या-

१–द्विश्च श– आ०, ब०, प० । २ विशेषणविशेष्यधियो । ३ भवत्वेव–आ०, ब०, प० ।
४ कल्पनं आ०, ब०, प० । ५–च्छब्दाभेदो– आ०, ब०, प० । ६ यावान् शा– आ०, ब०, प० ।

स्प्रतिपत्तिर्भ्रान्तिरेव, विशेषावधारणे तदभावात् । तदनवधारणाच्च प्रतिपत्तुरेव दोषान्न सादृश्यस्य । कथञ्चैवम् अहमिव सर्वे पुरुषाः प्रतिनियतार्थमिन्द्रियैः पश्यन्ति इत्युपमानमभ्रान्तम् ? सादृश्यादेव तस्यापि भावात् । ततो विभ्रमविलासादेव 'वस्तुनि' इत्याद्यभिजल्पितं न परिशुद्धज्ञानसामर्थ्यात् । 'तावता' इत्याद्यपि न सुभाषितम् ; शाब्दज्ञानस्य शब्दैकत्वज्ञाने [1]बाधविवर्जनस्याभावात्, तस्य च यथावसरं निरूपणात् ।

[2]तथा, वाचकत्वं शब्दस्य अर्थवता तदन्तरेण सादृश्यात्, अर्थवत्त्वञ्च सम्बन्धात् । स च न क्षणिकत्वे सम्भवति दुरवबोधत्वात् । सम्भवेऽपि सर्गादौ सर्वज्ञकृतस्य तद्वत् शब्दस्यास्माभिरनवलोकनात् कथं तत्र तत्सदृशे बुद्धिः ? यदि मतम्–तत्कालीनैः पुरुषैः तत्सदृशप्रतिपत्त्या तन्निबन्धनो व्यवहारः प्रबन्धेन प्रवर्तितः ततोऽनुमीयते मुख्यः कश्चिदर्थसम्बन्धः शब्द आसीत्, ततः सुगमैव तत्सादृश्यपरम्परा परापरशब्देषु प्रसज्यत इति; तन्न; एवमपि तद्विशेषस्यानवगमात् कथं क्वचिद्विशिष्टस्य सादृश्यस्यावगमो यतो विशिष्टार्थप्रतिपत्तये तत्प्रतियत्न इति चेत् ? न; लिङ्गेऽप्येवं प्रसङ्गात् । नहि तस्यापि सादृश्यादन्यतो गमकत्वं सामान्यप्रतिक्षेपात्, तत्र च सम्बन्धाभावस्य सत्यपि सर्गादिकृते सम्बन्धे तद्वतोऽन्यत्र तत्सादृश्यापरिज्ञानस्य च शब्दवदुपनिपातात् । तत इदमपि वेदवादिनो बालविलसितमेव–

"[3]सम्भवेद्यदि सम्बन्धः सर्गादौ कस्यचित्कृतः ।
तस्मिन्नबुद्धे नैव स्यादस्माकं सदृशे मतिः ॥
अथ तत्कालजैः पुंभिस्तस्मिन् शब्देऽवधारिते ।
प्रवृत्तेरनुमीयेत तत्सादृश्यपरम्परा ॥
तत्र सम्बन्धमात्रेण पूर्वोक्तेन प्रयुज्यते ।
स्मार्यो तन्मूलसादृश्यं तदधीनार्थनिश्चये ॥"

[ मी०श्लो०शब्दनि० २६४–६६ ] इति ।

न च सर्वज्ञकृतसम्बन्धशब्दसादृश्यादेव अधुनातनस्य वाचकत्वम्, उपाध्यायोपदर्शितप्रतिबन्धगोशब्दसादृश्यादपि तदपरगोशब्दस्य गवादौ तदर्थप्रयोगोपपत्तेः । उपाध्यायस्यापि तत्र तत्प्रयुक्तिः तदपरोपदर्शिततत्सादृश्यादपीति न किञ्चिदाद्यसादृश्यपरिज्ञानप्रयासेन । ततो युक्तमुक्तम्–'शब्दः प्रयुज्यताम्' इति ।

यदि न पुनः सदृशपरिणाम एव सामान्यं तस्य व्यक्तिवदनेकत्वात् कथं तत्र सदित्येकतया व्यवहार इति चेत् ? अत्राह–

**ततः सदेति [ साध्यन्ते सन्तो भावाः स्वलक्षणाः ] ॥४९॥**

ततस्तस्मादपोद्धारनयात् सदेति उपलक्षणमिदं तेन द्रव्यत्वं गुणत्वमित्याद्यपि भवतीति शेषः । नन्विदमुक्तमेव 'समानम्' इत्यादिनेति चेत्; न तस्यैवानेनोपसंहारात् । तत्र किम् ?

१ विवर्जितस्या– आ०, ब०, प० । २ तथा वा– ता० । ३ भवेद्यदि च स– आ०, ब०, प० । ४ वागादौ आ०, ब०, प० । ५ सामान्यमि–ता० ।

इत्याह—**साध्यन्ते सन्तो भावाः स्वलक्षणाः** इति तत इत्यत्रागतम्। ततस्तस्मात् सामान्यस्यैकस्याभावात् 'अस्ति बहिरर्थः' इत्यादौ **भावाः** घटादयः **सन्तो** विद्यमानाः **साध्यन्ते** नैका सत्ता तदभावात्। अन्यथा पृथिव्यादिषु तत्साधनादेव रूपादावपि तत्सिद्धेः, द्रव्यतत्साधनात् पृथग्गुण[1]तत्साधनप्रयासो व्यर्थ इति मन्यते। निरूपितञ्चैतत्–'नित्यं सर्वगतम्' [ ] इत्यादिना। कीदृशास्ते सन्तः? **स्वलक्षणाः** स्वा (स्वम् आ) त्मीयमपरामिश्रणं लक्षणं सदृशेतरपरिणामरूपं येषां ते तथोक्ताः। एकान्ततः सादृश्ये वैलक्षण्ये च सत्त्वप्रतिक्षेपात्।

पुनरपि तन्नयात् सिद्धं दर्शयति—

**नानैकवचनाः शब्दाः [ तथा सङ्केतिता यतः ]** इति।

एकत्रापि जलकणिकादौ वस्तुतोऽनेकस्यैकस्य च धर्मस्यापोद्धारे यथाक्रममपोद्धाराः जलं कलत्रमिति **नानावचना एकवचनाश्च** भवन्ति **शब्दाः**। कुत पुनरवादयः एकवचना कलत्रादयश्च नानावचना न भवन्तीति चेत्? अत्राह–'**तथा सङ्केतिता यतः**' इति। नानैकवचनप्रकारेण सङ्केतिता वृद्धैर्यतस्ततो नानेकवचना नान्यथेति मन्यते। ततो न युक्तमेतत्–

"**विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र च।**" [ प्र० वा० १।१८ ] इति।

अर्थवतोऽपि वृद्धव्यवहारातिक्रमेण न प्रयोगोपपत्तिः सुतरामनर्थकस्य अन्यथा विवक्षेत्यादेरपि सर्वत्र शब्दाभाव एव विवक्षया प्रयोग इति शङ्कायां कथमतः[2] सर्वत्रातत्सद्भावप्रतिपादनं यतोऽसाधनाङ्गवचनात्तद्वादिनो न निग्रहावाप्तिः? ततो युक्तं '**तथा**' इत्यादि। 'सह' इत्यादयो व्याख्यानश्लोकाः।

यदि समानप्रत्यवमर्शात्सामान्यं तर्हि जलयोरिव जलमरीचिकाचक्रयोरपि तद्भवेत्–'इदं जलमिदमपि जलम्' इति, तत्रापि समानप्रत्यवमर्शादिति चेत्, न; तच्चके तत्प्रत्यवमर्शस्य बाध्यत्वेन मिथ्यात्वात्। न हि मिथ्याप्रत्ययात् तद्विषयसिद्धिः; द्विचन्द्रादिविज्ञानादपि तत्प्राप्तेः। ततो निर्बाधादेव प्रत्यवमर्शात्तत्सिद्धिः। एतदेवाह–

**प्रत्यभिज्ञा द्विधा [ काचित्सादृश्यविनिबन्धना ]**॥५०॥ इति।

'**प्रत्यभिज्ञा** प्रत्यवमर्शः। प्रस्तावात् सामान्यविषयैव गृह्यते नैकत्वविषया, विपर्ययात्, तस्याः निरूपितत्वाच्च। सामान्यप्रत्यभिज्ञापि निरूपितैव 'स एवायं समर्थ' इत्यत्रेति चेत्, सत्यम्, तथापि सम्यङ्मिथ्यार्थप्रतिपादनार्थमिदमुक्तम्। सा **द्विधा** मिथ्या तथ्या चेति द्विप्रकारा। ततस्तथ्याया एव सामान्यसिद्धिरिति मन्यते। सामान्यमपि समानाकार एव, स च जलवत्तच्चक्रस्यापि विद्यत एव तत्कथं तत्प्रत्यवमर्शो मिथ्येति चेत्? न, तद्विशेषस्यैव तत्त्वेनोपगमात्, न तन्मात्रस्य। स च जल एव, तत्रैव निर्बाधप्रत्यवमर्शत्वात् न तच्चक्रे विपर्ययात्। तन्मात्रापेक्षया तु भवत्येव स तत्रापि तथ्य एव चैकचिक्यादेः सत एव तदाकारस्य तेनाधिगमात्। कथं पुनः स एव तद्विशेषतन्मात्रापेक्षया मिथ्या तथ्यश्चेति[10] चेत्? बाधकभावेतराभ्यामिति ब्रूमः। कथन्न विरोध

१–णादौ त– आ०, ब० प०। २ न्यायवि० श्लो० १।१५४। ३– कणिका– आ०, ब०, प०। ४– वचनेनान्य– आ०, ब०, प०। ५ रानति– आ०, ब०, प०। ६ प्रत्यभिज्ञा नाम प्र– ब०। प्रत्यभिज्ञानामप्र– प०। ७ 'अवसरात्, प्रस्ताव' स्यादवसर इत्यमर-"–ता० टि०। ८ न्यायवि० श्लो० २।४३। ९ सामान्याकार आ०, ब०, प०। १०– ति चा– आ०, ब०, प०।

इति चेत् ? न, दृष्टत्वात् । तत्रापि तत्कल्पनाया न किञ्चिद्भवेत् । ततो निर्बाधाया एव प्रत्यभिज्ञाया तत्सिद्धिर्नान्यत । सा च काचिदेव तदेवाह–'**काचित्सादृश्यविनिबन्धना**' इति । **काचित्** जलविषया न तच्चक्रादिगोचरा **सादृश्यस्य** विशेषेण तन्मात्रातिशायिना रूपेण **निबन्धनं** व्यवस्थापनं यस्या सा तथेति । सैव कस्मात्तथा ? इत्याह–

**प्रमाणपूर्विका नान्या [ दृष्टिमान्द्यादिदोषतः । ]** इति ।

**प्रमाणं** प्रत्यक्षादि **पूर्वं** कारणं यस्या सा काचिदेव **नान्या** तच्चक्रविषया यत , इत्यनेन कारणशुद्धया नस्या सत्यत्वोपदर्शनात् सेव तद्विनिबन्धना नापरेत्युक्तं भवति । कुत पुनरस्या भवति ? इत्याह–'**दृष्टिमान्द्यादिदोषतः**' इति । दृष्टेर्मरीचिकादर्शनस्य **मान्द्यं** यथावस्थिततत्परिच्छित्ति प्रत्यपाटवम् **आदिर्यस्य** जलाभिलापादे स एव **दोषस्तत** इति । अनेनापि दोषवत्कारणत्वेनासत्यत्वान्न सा तन्निबन्धनेति निवेदितम् ।[1]

स्यान्मतम्–खण्डादौ सामान्यप्रत्यभिज्ञानात्[2] एकत्वप्रत्यभिज्ञाप्यस्ति कथं समान एवाकार सामान्य नैक इति ? तन्न, समानप्रत्यभिज्ञाया एव प्रत्यक्षपूर्वकत्वेन तत्संवादनात् प्रामाण्योपपत्तेर्न परस्या । तदाह–'**प्रत्यभिज्ञा**' इत्यादि । यद्यपि समानैकविषयभेदेन द्विधा खण्डादौ **प्रत्यभिज्ञा** तथापि **काचित् सा** समानविषया **द्वयविनिबन्धना** द्वयो दर्शनयोश्च समानाकारस्तद्विनिबन्धना तद्गोचरा । तत एव **प्रमाणपूर्विका** च तत्र प्रमाण **नान्या** नैकत्वविषया तद्विपर्ययात् । नहि सामान्यमेकं शक्यदर्शनम् । तथाहि– यदि तदेकम्, व्यक्तिवदन्तरालेऽपि स्यात् । अनुपलम्भान्नेति चेत्, कथमेकम् ? प्रत्यन्तराल विच्छेदे व्यक्तिवन्नानात्वस्यैवोपपत्तेः । विच्छिन्नमप्येकमेव एकप्रत्यवमर्शादिति चेत्, अहो महती विवेकशक्ति कुमारिलस्य यदसौ मृतमपि जीवन्तमभिधत्ते । कथञ्चैवं लूनपुनर्जातकेशादिरप्येको न भवेत् 'स एवायं केशादि' इति प्रत्यवमर्शात् ? लूनप्रत्ययेन बाधनान्नेति चेत्, न, अन्यत्रापि विच्छेदप्रत्ययेन [3]तस्यानवस्थाभावात् । विच्छेदं पश्यतोऽपि[4] एकप्रत्यवमर्शो न निवर्तत इति चेत्; सौगतादे शब्दं नित्यं पश्यतोऽप्यनि[5]त्यप्रत्ययस्यानिवर्तनाद् वेदादेरनित्यत्वमेव स्यात् । दुरागमाभ्यासोपनीतस्य मनोदोषस्याभावे निवर्तनमन्यत्रापि । तत –

"व्यक्तिष्वेव च सामान्यं नान्तरा गृह्यते यत ।" [ मी०श्लो० आकृति० श्लो० २५ ]
इति ब्रुवाणस्य स्ववचनविरुद्धमेतत् –

"तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।
सामान्यशब्दः सत्तावदेकाधिकरणेन[6] वा ॥" [ मी० श्लो० आकृति० २४ ] इति ।

न वस्तुनो भिन्नेषु तदेकम् अनेकस्यापि कुतश्चिदेकबुद्धिकरणादेवैकत्वस्योपगमात्, 'एकाधिकरणेन वा' इत्यस्यैव पक्षस्य परिग्रहादिति चेत्, न किञ्चिद् व्याहतम्, स्याद्वादिभिरप्यपोद्धारनयेन तदुपगमात् । निवेदितञ्चैतत्–'**समानं केनचित्**' इत्यादिना[7] । तन्न व्यक्तिगतं तदेकम् । सर्वगत-

१ – ज्ञानव– आ०, ब०, प० । २ – सार्ताह विपर्ययात्ताद गा– आ०, ब० प० । ३ बाधनस्य । ४ – ता ह्येकत्र प्र– आ०,ब०,प० । ५ – नित्यस्यानि– आ०,ब०, प० । ६ सत्तावदभावे वय करणेन आ०, ब०, प० ।' सत्तादावेकाधीकरणेन' मी०, श्लो० । ७ न्यायवि० द्वि० २।५७ ।

मेकमिति चेत्; अन्तराले किन्न तदुपलब्धिः ? अनभिव्यक्तेरिति चेत्; व्यक्तिष्वपि[1] न भवेत्। नहि तदेव क्वचिदभिव्यक्तमनभिव्यक्तञ्चोपपन्नं विरोधिरूपाधिकरणत्वेन भेदापत्तेः। इष्टैव तत्रापत्तिः कथञ्चित्, कथञ्चिदेव तदधिकरणत्वस्यापि भावादिति चेत्; न, तस्य सावयवत्वप्रसक्त्या **"विभुत्वावयवाभावौ प्रतिपाद्यौ च शब्दवत्।"** [ मीं० श्लो० वन० ३१ ] इति व्याघातः। कुतश्च व्यक्तिषु तस्याभिव्यक्तिः ? स्वशक्तित इति चेत्; तदन्तरालेऽपि स्यात्। सति तस्मिन् शक्तेरप्यवश्यम्भावादभेदात्। भेदे कथं सा तस्येति व्यपदेशः ? सम्बन्धादिति चेत्; तथापि कथन्न सा तदन्तराले ? निरवयवेन सम्बन्धे 'व्यक्तिगत एव तत्र सोऽनान्तरालगतो' इति विभागानुपपत्तेः। कथञ्चैवम् **"व्यक्ति[ ] शक्त्यनुरोधतः"** [ मी० श्लो० आकृति० २६ ] इत्युक्तम् ? स्वशक्तितस्तदभिव्यक्तौ तदनुपपत्तेः। अस्तु व्यक्तिशक्तित एव तदभिव्यक्तिरिति चेत्; किमभिव्यक्तेनापि तेन ? अशक्तत्वेन क्वचिदनुपयोगात्। शक्तमेव तदपि वाहदोहादौ, न चैव विशेषवैयर्थ्यं विशेषाणामपि तदात्मनामेव तत्र व्यापारान्न केवलानामिति चेत्; उच्यते–यदि विशेषशक्तिरेव तस्यापि शक्तिः कथन्न तद्भेदे विशेषवत्तस्यापि नानात्वम् ? तद्भेदेऽप्येकत्वस्याविरोधादिति चेत्, विशेषाणामपि तदेव स्यात्। न तथा प्रतिभासनमिति चेत्; समानमेतत्सामान्येऽपि। न हि तस्याप्यविच्छिन्नस्य प्रतिभासनम् अन्तराले विच्छिन्नस्यैव तस्य तदुपलब्धेः। अन्यैव तस्य शक्तिरिति चेत्; तन्नानात्वे कार्यनानात्वस्य तत एव भावाद् व्यर्थं व्यक्तिषु तन्नानात्वकल्पनम्। तदेकत्वे वा न कार्यनानात्वं शक्त्यभेदेन तदनुपपत्तेः। व्यक्तिशक्तीनां नानात्वात्तन्नानात्वमिति चेत्; आगतं काचपच्यं सामान्यशक्तित एकत्वम्, नानात्वञ्च व्यक्तिशक्तित इति। तत्र वाहादौ तस्योपयोगः। स्वप्रतिपत्ताविति चेत्, न, तस्यापि व्यक्तित एव भावात् **"व्यक्तिशक्त्यनुरोधतः"** [ मी० श्लो० ] इत्यभिधानात्। ततस्तत्समवायिन एवाभिव्यक्तिर्न व्यापिनः। व्यापिनस्तु तदभिव्यक्तात्मरूपादेवेति चेत्, कथं पुनस्तत्समवायिरूपं व्यापिसामान्यस्य ? यतस्तदभिव्यक्तिस्तस्य स्यात्। तस्यैव समाप्त्या तत्र समवायादिति चेत्, कथं व्यापिन्व समाप्तौ तद्योगात् ? अन्यत्रापि तस्यैव प्रतीतेरिति चेत्, न, युगपत्तदसम्भवाद् व्यक्तिवत्। क्रमेणेति चेत्; न; तदविशेषात् व्यक्तीनामपि विभुत्वात्। ततो न युक्तमेतत्—

**"यथा च व्यक्तिरेकैव दृश्यमाना पुनः पुनः।**
**कालभेदेऽप्यभिन्नैवं जातिर्भिन्नाश्रया सती॥"** [ मी०श्लो०वन० ३२ ] इति।

क्रमव्यासादेव व्यक्तेरुदाहरणत्वोपपत्तेः। युगपत् युगपदपि तत्र तत्र तस्य प्रतिपत्तिर्दृश्यत इति चेत्, न; दृष्टाया अपि समाप्तिप्रत्ययबाधितत्वेन विभ्रमत्वात्। तस्मादवस्त्वेव मीमांसकस्य सामान्यमशक्तेरविज्ञानाच्च।

तत एव नैयायिकादेरपि; तस्यास्त्येव परिज्ञानं गोरयमयमपि गौरिति प्रत्ययादिति चेत्, न, तस्य विशेषगोचरत्वात्। भिन्नेषु कथमभिन्नप्रत्यय इति चेत्, भवतः कथम् ? अभिन्नसामान्यसम्बन्धादिति चेत्; न, तेनापि तत्र भेदस्यानपाकरणात् साङ्कर्यापत्तेः। अभिन्नप्रत्ययेन तत्र स

१– पि तु भ– आ०, ब०, प०। २ साधना– आ०, ब०, प०। ३– त्वे क– आ०, ब०, प०। ४ तद्देव तस्या– आ०, ब०, प०। ५ युगपदपि आ०, ब०, प०। ६– वतमेव तत्सा– आ०, ब०, प०।

करोतीति चेत्, स तर्हि विभ्रम एव अतस्मिंस्तद्ग्रहणत्वात्। ततः कथं सामान्यसिद्धिः, तन्मात्रे सम्यक्त्वादिति चेत्; न, एकत्र सम्यक्त्वविभ्रमयोर्विरोधात्। अविरोधे वा समानाकारे तस्य सम्यक्त्वं तदेकत्वे तु विभ्रम एव बाधाविशेषात्। तन्न सामान्यस्यैकत्वमाकारः। कुतस्तर्हि तत्प्रत्यभिज्ञा? इत्याह—'**दृष्टि**' इत्यादि। दृष्ट्या स्वमतश्रद्धया **मान्द्यं** बुद्धेर्वस्तुविचारं प्रत्यपाटवम् आदिशब्दाद्देकसामान्यसंस्कारादिः स एव **दोषः** ततः इति।

स्वमताभिनिवेशाद्वे सर्वं सर्वत्र विद्यते।
इति बुद्धिर्यथैवेयं पारमर्षैः प्रकल्प्यते ॥१३८७॥
मीमांसकादिभिस्तद्वदेकं सामान्यमित्यपि।
कल्प्यते बुद्धिरीदृक्षा दृष्टिमान्द्यादिदोषतः ॥१३८८॥

कथमेवं समानपरिणामे समर्थिते विशेषपरिणामो यतः इदमवतिष्ठेत—'**तत्समानासमानेषु**' इत्यादीति[1] चेत्, न, विशेषप्रत्यभिज्ञया तस्यापि समर्थनात् तत्राह—'**प्रत्यभिज्ञा द्विधा**' इति। कुतो द्विधा? **काचित्सादृश्यविनिबन्धना**। काचिदिति वचनादन्या [2]वैसदृश्यनिबन्धना यत इति। सापि **प्रमाणपूर्विका** प्रमाणतः प्रत्यक्षादेः सामान्यविशेषात्मकवस्तुविषयाद् उत्पत्तेः **नान्या**। या त्वन्या सादृश्याद्येकान्तप्रत्यभिज्ञा न सा तत्पूर्विका प्रत्यक्षादिना तद्विषयस्याप्रतिपत्तेः। ततो न ततस्तत्समर्थनमप्रमाणत्वादिति मन्यते। कुतस्तर्हि सा? तत्रोत्तरम्—'**दृष्टि**' इत्यादि व्याख्यानं पूर्ववत्। ततो यदुक्तम्—

"**सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने।**" [मी०श्लो०आकृति०७२] इति।

तद्यदि सामान्यज्ञानवद्विशेषज्ञानानामपि समानाकारपराङ्मुखत्वात् अभिमतमेव तन्मिथ्यात्वं तदभिमुखतयैव सम्यक्त्वोपपत्तेः, तत्र निर्बाधत्वादन्यत्र विपर्ययात्। सम सिद्धं शब्दानां वस्तुविषयत्वं समानपरिणामे सङ्केतात्, तस्य च वस्तुत्वेनावस्थापनात्। गौरेव कश्चित् प्रसिद्धस्तदन्यतो विशेषाग्रहणात् कथं तत्सादृश्येन खण्डादौ गोशब्दस्य सङ्केतः? तदुक्तम्—

"**विशेषग्रहणाभावादेका गौः करच कल्प्यताम्।**" [मी०श्लो०आकृति०७२] इति।

इति चेत्, न, तस्य वृद्धव्यवहारविषयस्य प्रसिद्धत्वात्। वृद्धानाञ्च तद्व्यवहारविषयसादृश्यात्तदुपपत्तेः। अतद्व्यवहारद्वीपादागतं तु प्रतिपत्तारं प्रति न प्रसिद्धसादृश्यात्सङ्केतः किन्तु सादृश्यविशेषाधिष्ठानेषु खण्डादिषु 'एते गाव इति प्रतिपत्तव्या' इति। ततो निरवद्यं तेषां तद्विषयत्वं [3]'लिङ्गवत्। लिङ्गादवस्त्वेव प्रतीयत इति चेत्, न, अप्रतिबन्धात्। नहि तस्य तस्मादुत्पत्तिः, अशक्यत्वात्। नापि तादात्म्यम्, स्वयमवस्तुत्वापत्तेः, अनेकान्तस्य चानभ्युपगमात्। ततस्ततोऽपि साध्यस्य वस्तुन एव प्रतिपत्तिः।

कथं तर्हि बहिरर्थादिवत् प्रधानस्यापि सत्त्वं ततो न साध्यते? अनन्वयादिति चेत्, न अन्वयस्य भवन्मतेनालिङ्गलक्षणत्वादिति। अत्राह—

१ न्यायवि० श्लो० २।४४। २ वैसादृ– प०। ३ "लिङ्गस्य यथा साध्याख्यवस्तुविषयत्वम्" ता० टि०। ४– स्य च तन्म–आ० ब०, प०।

अस्ति प्रधानमित्यत्र लक्षणासम्भवस्ततः ॥५१॥ इति ।

अस्ति विद्यते प्रधानं सत्त्वरजस्तमसां साम्यावस्थानम् इति एवं न साध्यते 'साध्यन्ते' इत्यनुवृत्तस्य नेत्यनेनाप्यनुवृत्तेनैव (नैक) परिणामेन सम्बन्धात् । कुतो न साध्यते ? अत्र अस्मिन् साध्ये लक्षणस्य 'साध्यं शक्यम्' इत्यादेः असम्भवस्ततः सम्भवतो भावः सम्भवः तदभावात् । न ह्यभिमतमप्रसिद्धमित्येव लक्षणमपि तु शक्यं च । न च प्रधानं शक्यम्, तत्स्वरूपस्य कारणरूपस्य च कारणानेकत्वाद्यात्मना प्रत्यक्षादिना प्रतिक्षेपात् अनुपलम्भवत् । अथवा अत्र अस्मिन् परप्रतिपादिते भेदानां परिमाणात् तल्लिङ्गे लक्षणासम्भवस्ततो लिङ्गलक्षणस्याभावात् न साध्यते इति । त्रैरूप्यमेव तल्लक्षणं तत्सद्भावादेव तर्हि तत्र साध्यत इति चेत्, न, तस्यालक्षणत्वेन प्रतिपाद्यमानत्वात् । ततोऽन्यथाऽनुपपन्नत्वस्यैवाभावात्तत्र न साध्यते । तदभावश्च प्रधानापक्षे भोगे तद्भावात् । अस्ति हि विषयानुभवात्मनि भोगे परिमाणादि, न च तस्य प्रधानं कारणम् अचेतनत्वापत्तेः । अचेतन एव वस्तुतो भोगो बुद्धेर्विषयाकारपरिणामस्यैव तत्त्वात्, चेतनत्वं तु तत्र पुरुषसम्बन्धनिबन्धनाद्विभ्रमादेवेति चेत्, न, एवं पुरुषस्यैवासिद्धेः । नासिद्धिः, सङ्घातपरार्थत्वाल्लिङ्गात् प्रतिपत्तेरिति चेत्, कः पुनः पुरुषस्य सङ्घातेनार्थः ? भोग इति चेत्, न, तस्य बुद्धावेव भावात् । विभ्रमः पुरुषेऽपीति चेत्, न, विभ्रमस्यैव पुरुषासिद्धावसिद्धेः । तत्सिद्धौ सिद्धिरिति चेत्, न, चक्रकदोषात् । तत्सिद्धौ तस्य बुद्धिसंसर्गात्तत्र भोगविभ्रमः तेन च सङ्घातस्य तादर्थ्यम्, ततश्च तत्सिद्धिरिति । किञ्च–

विभ्रमोऽचेतनश्चात्र तेन भोगमतिर्न रे ।
अन्यथा व्यर्थमेव स्यात् क्वचिच्चैतन्यकल्पनम् ॥१३८९॥
तत्रापि चेतनत्वं चेद्विभ्रमादवकल्प्यते ।
अनवस्थानदोषस्तां जीवन्तीं नावमुञ्चति ॥१३९०॥
न च विभ्रमपक्षेऽस्मिन् भोगानुबन्धिनी ।
प्रतीतिपथगामीति मीये या तत्र कल्प्यते ॥१३९१॥
वस्तुनश्चेतनत्वे तु भोगविभ्रमः कथम् ।
विभ्रमस्यापि भोगत्वादन्यथानुभवात्मनः ॥१३९२॥
ततो न परिमाणादेः प्रधानास्तित्वसाधनम् ।
अन्यथानुपपन्नत्ववैकल्याद् व्यभिचारिणः ॥१३९३॥
साधनादिप्रयोगस्य न चैव व्यभिचारिता ।
यतस्ततो न सिद्धिः स्याद् बहिर्भावादि वस्तुनः ॥१३९४॥

१ प्रता भा–आ० ब० प० । २– स्य तेन–आ० ब० प० । ३ न्यायवि० द्वि० ।४। ४ तस्यैव का– आ० ब० प० । ५ भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ।।–सांख्यका० १५ । ६ लिङ्गलक्षणम् । ७ बुद्धेर्विषयाका– आ० ब० प० । ८ म ग । ९ सांख्यका० १७ । १० भोगविद्वि– आ० ब०, प० ।

ननु अन्यथानुपपन्नत्वमपि सत्येव पक्षधर्मत्वादौ भवति ततस्तदेव हेतुलक्षणं तदसत्त्वादेव च प्रधानास्तित्वमप्यसाध्यमिति चेत् ; न, [1]तदभावेऽपि क्वचित्तदुपलम्भात्। तदाह—

**तत्रान्यत्रापि वासिद्धं यद्विना यद्विहन्यते।**

**तत्र तद्गमकं [ तेन साध्यधर्मी च साधनम् ] ॥ ५२ ॥** इति।

**अपि**शब्दो भिन्नप्रक्रमोऽसिद्धमित्यस्यानन्तरं द्रष्टव्यः। ततोऽयमर्थः—**तत्र** तस्मिन् विवक्षिते धर्मिणि **असिद्धमपि** न केवलं सिद्धम् **अन्यत्र वा** अन्यस्मिन् दृष्टान्तधर्म्मिणि इव। **वा**शब्दस्य इवार्थत्वात्। तत्किम् ? तत् साधनं **गमकं** [3]तत पक्षधर्मत्वादेरतल्लक्षणत्वमव्यापकत्वादिति मन्यते। क्व ? **तत्र** साध्ये। कीदृश तत् तत्रेति तदिति चोच्यते कुतो वा तद्गमकम् ? अत्रोत्तरम्—**यद्विना** यदन्तरेण **यद्विहन्यते** यन्न्विघटते। एतदुक्तं भवति– यत्स्वयं निवर्त्तमानं लिङ्गं निवर्त्तयति तत्तत्रेति, यच्च यन्निवृत्त्या नियमेन निवर्त्तते तत्तदिति, तन्निवृत्त्या निवृत्तिनियमश्च गमकत्वे निबन्धनमिति। ननु तदेव नास्ति यत्र पक्षधर्म्मत्वादिरहिते तन्निवृत्त्या निवृत्तिनियमः ततो गमकत्वञ्चेति चेत्; न, तस्य बहिरर्थादिसाधनस्य साधनदूषणप्रयोगादेः सविस्तरं निरूपितत्वात्। तस्यैवानुस्मरणार्थं मन्दानुग्रहबुद्ध्या पुनरस्य वचनात्। अथवा तत्रेति अत्रावधारणमपीति, एतच्चान्यत्रेत्यत्र द्रष्टव्यम्। अत्राप्ययमर्थः—**तत्रैव** धर्म्मिण्येव **सिद्धं** न दृष्टान्तधर्म्मिणि **यद्विना यद्विहन्यते तत्र तद्गमकम्।** किमिव ? **अन्यत्रापि वा** इति। अन्यत्र दृष्टान्ते धर्म्मिणि **अपि**शब्दात् साध्यधर्मिण्यपि **सिद्धमिव** **वा**शब्दस्य पूर्ववदिवार्थत्वात्। यथा पक्षसपक्षयोः सिद्धं सत्त्वकृतकत्वादि गमकमविनाभावनियमात् तथा पक्ष एव सिद्धं श्रावणत्वादिकमित्यर्थः। युक्तं कृतकत्वादेर्गमकत्वम् अन्वयबलादविनाभावपरिज्ञानात्, न श्रावणत्वस्य विपर्ययात्। नहि तस्य क्वचिदनित्यत्वेनान्येन वा शक्यमन्वयदर्शनं शब्द एव भावात्, तत्र च तयोर्विवादात्। तत्र [4]तद्गमकत्वे संशयं तु कुर्वीत वस्तुसतस्तदुभयपरिहारेणानवस्थानात्। उभयोरन्यतरस्मिन्नप्यप्रतिपत्तेरिति चेत्; न; [5]सत्त्वस्याप्येवमगमकत्वप्रसङ्गात्। नहि तस्यापि क्वचित् क्षणिकत्वेनान्वयः। विद्युत्प्रदीपादावपि क्षणभङ्गं प्रति वावदूकानां विवादात्, अविवादास्पदस्यैव सपक्षत्वोपपत्तेः। पक्ष एव विपक्षे बाधकप्रत्ययबलादविनाभावप्रतिपत्तेस्तस्य गमकत्वमिति चेत्, अनुकूलमाचरसि, श्रावणत्वस्याप्येवं गमकत्वापत्तेः[6]। श्रावणत्वं हि श्रवणज्ञानविषयत्वम्, तच्च तज्ज्ञानकारणस्यैव **"नाकारणं विषयः"** [ ] इति वचनात्। न च नित्यस्य कारणत्वम्; कार्य्यानुपरमप्रसङ्गादिति निरूपितं **"कारणस्य"** इत्यादौ[7]। ततो निश्चितनित्यव्यावृत्तिकं तत् शब्दे धर्म्मिण्युपलभ्यमानमनित्यत्वं गमयत्येव न संशाययति सत्त्ववत्। यदि पुनः श्रवणज्ञानकारणत्वात् श्रावणत्वम् [8]तर्हि 'कारणत्वात्' इत्येव हेतुरस्तु तावता साध्यप्रतिपत्तेः व्यर्थं तज्ज्ञानेन तद्विशेषणमिति चेत्; तावतापि कथं तत्प्रतिपत्तिः अन्वयाभावस्याविशेषात् ? क्षणभङ्गेनानन्वयेऽप्यनित्यत्वमात्रेणास्त्येव विद्युत्प्रदीपादौ

१ पक्षधर्मत्वाद्यभावेऽपि। २ सिद्धमेव वासिद्धम् आ०, ब०, प०। ३ तदुक्तं तत्रेति आ०, ब०, प०। ४ तदागम– आ०, ब०, प०। ५ सत्त्वस्यावगम– आ०, ब०, प०। ६ –त्वापत्तेः आ०, ब०, प०। ७ न्यायवि० श्लो० १०६। ८ तर्हि आ०, ब०, प०।

तस्यान्वय इति चेत्, न, तत्र विवादाभावात्। मीमांसकस्य तत्रापि विवाद एव शब्दे क्षणिकत्व तस्यापि तेनानभ्युपगमादिति चेत्, न,

"तेनेयं व्यवहारात् स्यादकौटस्थ्येऽपि नित्यता।" [मी० श्लो० शब्दनि० ३८९]

इति कौटस्थ्याभावमभ्युपजानतोऽपि तस्याभ्युपगमात्। तन्मात्रादन्यस्य तद्भावस्याभावाद्विवादा पन्नमपि कथं तत्र तत्साध्यम् अनभिप्रेतत्वात्। अभिप्रेतमेव हि तदापन्नमपि साध्य नापरमतिप्रसङ्गात्। न च भवतस्तदभिप्रेतं क्षणक्षयस्यैव तत्त्वात्। तदप्यभिप्रेतमेव साधितावत क्षणभङ्गसाधनादिति चेत्, न, तत्राप्यन्वयाभावस्याविशेषात्। ततोऽप्यपरानित्यत्वसाधनेन तत्साधनपरिकल्पनायामनवस्थापत्ते। तत्र कारणत्वस्याप्यन्वयनलक्षणकत्वम्। व्यतिरेकनिर्णयात्तु तत्त्व सविशेषणस्यापि न विरुद्धम्। निर्विशेषण स्यैव तत्त्वे किं विशेषणेन तद्वादिनो व्यर्थवादित्वेन निग्रहावाप्तेरिति चेत्, अयत्नमिदमुच्यते, कृतकत्वादिनापि किमिति वक्तव्य सत्त्वस्यापि तद्विशेषणरहितस्यैव गमकत्वात्। शिष्यव्युत्पत्तिवैचित्र्यार्थं सत्त्वमेव शुद्धम्, अविशुद्धं च भिन्नविशेषणं कृतकादि, अभिन्नविशेषणञ्चोत्पत्तिमत्त्वादि गमकमुप दिश्यत इति चेत्, अहो महानयमनुग्रह शिष्येषु भवतो यतो निग्रहनिबन्धनेषु तेषां गमकत्वव्युत्पत्ति शरण्यते। वैयर्थ्येऽपि कृतकत्वादीनां तन्निबन्धत्वे प्रतिज्ञादीनामपि स्यादविशेषात्। को वा विशेष कृतकत्वादीनां यतस्त एव सत्त्वविशेषा शिष्यव्युत्पत्तयेऽवस्थन्ते न कारणत्वविशेष श्रावणत्वमिति प्रतिपत्ति। यदुक्तम् अन्यत्रापि सिद्धमिव धर्मिण्येव सिद्धमपि गमकमिति, तन्न युक्तम्, वैफल्यात्। अन्यत्रापि सिद्धस्य तत्रव्याप्तिनिर्णयादितरस्य विपर्ययादिति चेत्, न, तदव्याप्तेस्तत्रैव निर्णये वैफल्यात् तत्र साध्यस्य प्रमाणान्तरादेवावगमात्। तन्निर्णयादेवावगमे परस्पराश्रयात्-सा यसिद्धया तन्निर्णय तस्माच्च तत्सिद्धिरिति। तत्राप्यन्यत्र तन्निर्णयेऽनवस्थापत्ते। साकल्येन तन्निर्णये तु पक्षेऽप्य यमवश्यम्भावी तदभावे सामस्त्येन तदनुपपत्तेः। ततोऽन्तर्व्याप्तिरवश्यम्भाविन्यत्र सिद्धस्यापि तयैव च गमकत्वोपपत्तेरूपन्न तद्वदितरस्यापि गमकत्वोपवर्णनम्। कुतरपि व्याप्तिनिर्णये तत एव साध्यस्या व्यवधारणात् व्यर्थमनुमानमिति चेत्, इदमपि "द्वयस्वरूपग्रहणे सति सम्बन्धवेदनम्" [प्र०वार्तिकाल० १।१] इति ब्रुवाणस्यैव दूषणं न स्याद्वादिनाम्, तै साध्यापरिज्ञानेऽपि तत्सम्बन्धस्य लिङ्गस्वरूपत्वेन तन्मात्रग्रहणेऽपि तन्निर्णयोपगमात्। तदुक्तम्—

"लिङ्गात्मग्राहकं मानमूहो मतिनिबन्धनः।" [ ] इति।

प्रथमदर्शिनोऽपि किन्न तन्निर्णय इति चेत्? सामर्थ्यभावात् क्षणक्षयादिनिर्णयवदिति मृम। ततो युक्तम् अन्यथानुपपत्तिबलाच्छब्दानित्यत्वे श्रावणत्वस्य गमकत्व तथा रूपाद्यनित्यत्वे चाक्षुषत्वादेरपि प्रतिपत्तव्य तदविशेषात्। तद्बलेन गमकत्वमन्यस्यापि दर्शयति–'तेन साध्यधर्मो च साधनम्' इति। तेन यद्विना यद्विघातेन साध्यश्चासौ अनित्यत्वविशिष्टतया साध्यमानत्वात् धर्मी च शब्दादि साध्यधर्मी साधन गमक शब्दानित्यत्वस्य। न केवल स एवापि तु साध्यधर्मोऽपीति

1 "यद् सत् तत्सर्वमनित्य यथा घटादिरिति शुद्धस्य स्वभावहेतोः प्रयोग। स्वभावभूतधर्मभेदेन स्वभावस्य प्रयोग। यत् कृतक तदनित्यमित्युपाधिभेदेन। —न्यायबि० पृ० ६५ ६६। 2 यावतभि– ता०। 3 ततो न च– आ०, ब०, प०।

चशब्दः । कीदृशं तदुभयमपीति चेत् ? उत्तरम्–'तत्र' इत्यादि । तत्र सिद्धः साध्यधर्मी तदन्यत्र सिद्धः साध्यधर्म इति सिद्धमित्यस्य लिङ्गपरिणामेन सम्बन्धः । कथं पुनः साध्यधर्मिणस्तदाधारत्वमाधेयत्वञ्च सत्येव भेदे तदुपपत्तेरिति चेत् ? न; सामान्यविशेषरूपतया भेदस्यापि भावात् । 'अपि वा' इति निपातसमुदायेन पक्षधर्मत्वादावनादरं सूचयति । तत्सूचनञ्च सतोऽपि तस्यासाधनाङ्गत्वात् । तदयमत्र प्रयोगः–अनित्यः शब्दः शब्दत्वादिति ।

यदि धर्मी साध्यः, कथं साधनम् ? अप्रसिद्धस्य साध्यत्वात् प्रसिद्धस्य च साधनत्वात्, तयोश्चैकत्र विरोधादिति चेत्; न; समुदायान्तःपातिन एव तस्य तद्रूपतया साध्यत्वेनासिद्धत्वात् न केवलस्य, केवलस्य च साधनत्वं सिद्धत्वात्, अन्यथा धर्मित्वमपि न भवेत् प्रसिद्धस्यैव[1] तत्त्वोपपत्तेः । ततः समुदायतदेकदेशरूपेणासिद्धेतरविभागविपर्ययेण ज्ञाप्यज्ञापकभावोपपत्तेर्न धर्मिणः स्वसाधने हेतुभाविनोऽप्यसिद्धत्वमिति दुर्भाषितमेतत्–

"ज्ञाप्यज्ञापकयोर्भेदाद्धर्मिणो हेतुभाविनः ।
असिद्धे ज्ञापकत्वस्य धर्म्यसिद्धः स्वसाधने ॥" [ प्र० वा० ४।१८० ] इति ।

यदि धर्मी हेतुः, 'अनित्यः शब्दः' इत्येवास्तु न शब्दत्वादिति वैयर्थ्यात् । न वैयर्थ्यं हेत्वन्तराकाङ्क्षानिवर्त्तनार्थत्वात्, भवति हि 'अनित्यः शब्दः' इत्युक्ते 'कुतः' इति तदाकाङ्क्षा प्रतिपत्तुः अतस्तन्निवृत्त्यर्थं धर्मितया निर्दिष्टस्यापि हेतुत्वेन निर्देशे न पौनरुक्त्यदोषः फलवत्त्वादिति चेत्; न; धर्मितया निर्दिष्टस्यैव साध्यप्रत्यायनसामर्थ्ये तदन्तराकाङ्क्षानुत्पत्तेरनर्थकत्वात्, अन्यथा हेतुभावेन निर्देशेऽपि तदुत्पत्तेः पुनरपि तद्भावेन निर्देशः तन्निवृत्तये कर्तव्यः, पुनरप्येवमिति न क्वचिदवस्थितिः स्यात् । अथ तथा[2] निर्दिष्टस्य न तत्सामर्थ्यम्; हेतुतया निर्दिष्टस्यापि न स्यात्, तन्निर्देशेनाप्यसमर्थस्य सामर्थ्यानापादनात् । तदुक्तम्–

"यदि शब्दस्य सामर्थ्यं हेत्वन्तरमनर्थकम् ।
अथासामर्थ्यमस्यास्ति पुनरुक्तेन तेन किम् ॥" [प्र० वार्तिकाल० ४।१७९] इति ।

सत्यमस्त्येव धर्मितया निर्दिष्टस्यापि हेतुत्वं तत्तु धर्मपरतया पञ्चम्या च निर्देशाभावे न प्रतीयत इति चेत्; न, धर्मिपरे प्रथमानिर्देशेऽपि तत्प्रतिपत्तेः वृक्षोऽयं शिंशपा यत इति, अनित्योऽयं कृतको यत इति च । ततः पुनर्वचने यद्विवक्षितं तदत्र नास्तीत्यसिद्धो[3] हेतुरिति चेत्, न सम्यगेतत्; एवं हि 'विषाणवानयं पिण्डो नाश्वो विषाणवत्त्वात्' इत्यपि न हेतुर्भवेत् प्रतिज्ञार्थैकदेशत्वेनासिद्धत्वात् । पिण्डस्यैव तदेकदेशत्वं न तद्विशेषणस्य विषाणवत्त्वस्येति चेत्, न, तत्रापि तस्यावश्यम्भावात्, कथमन्यथा तद्विशिष्टस्य पिण्डस्यापि तदेकदेशत्वम् ? वा मा भूत्तस्य तत्त्वम्, तथापि विशेषणतया निर्देशादेव हेतुभावस्यापि प्रतिपत्तेः विषाणवत्त्वादिति किं पुनर्वचनेन हेत्वन्तराकाङ्क्षायाः प्रकृतवदत्राप्यनवक्लृप्तेः तन्निवर्तकस्यापि पुनर्निर्देशफलस्याभावात् । ततोऽत्राप्येवं वक्तव्यम्–

---

१ धर्मित्वोपपत्तेः । २ धर्मितया । ३ "प्रतिज्ञार्थैकदेशासिद्धः । –ता० टि० । ४–शे फ–आ०, ब०, प० ।

शक्तिर्विषाणिनश्चेत स्याद्धेत्वन्तरमनर्थकम् ।
शक्तिर्यदि न तस्यास्ति पुनरुक्तेन तेन किम् ॥ १३९५ ॥ इति ।

ततोऽत्रापि पुनर्वचने विवक्षिताभावादसिद्ध एवायं हेतुः । नेह विशेषणस्यैव तत्पिण्डगतविशेषात्मनः पुनर्वचनम् ; अपि तु तदन्यस्यैव तद्वतद्गतस्य विषाणवत्त्वसामान्यस्य, तस्यैव च हेतुत्वं ततोऽयमदोष इति चेत; कथं तर्हीदमलङ्कारवचनमविरुद्धम्–"यदि नाम पक्षविशेषणं विषाणित्वं पिण्डान्तरव्यवच्छेदाय तथापि तस्य हेतुत्वं न विरुद्धयते ।" [ प्र० वार्तिकाल० ४।१८७ ] इति । अनेन तद्विशेषणस्यैव हेतुत्वप्रतिपादनात् । तत्रायमत्र परिहार ।

स्यान्मतम्–यस्य विशेषणनिर्देशादेव तत्र हेतुभावप्रतिपत्तिः प्रज्ञातिशयसम्पत्तेस्तं प्रति मा भूत्तस्य पुनर्वचनं वैयर्थ्यात्, यस्य तु नास्ति कोमलप्रज्ञस्य तं प्रति फलवदेव तद्वचनं ततस्तस्य तद्भावप्रतिपत्तेः । न च पुनरुक्तत्वम्; अनवगतवचनात्[1], अवगतवचनत्वात्तस्यावकाशादिति, तदेतदुपकारायैवास्माकं शब्दस्याप्येवं निर्दोषतया हेतुत्वेनावस्थितेः । ततो यथा साध्यविशेषणत्वेऽपि तेन साध्यप्रतिबन्धस्याप्रतिपादनाद्धेतुरेव विषाणवत्त्वं न प्रतिज्ञार्थैकदेशासिद्धम्; धर्मितद्विशेषणभावेन प्रतिज्ञार्थादर्थान्तरत्वात्, तथा शब्दत्वमपि,[2] धर्मित्वेऽपि तेन तत्साध्यप्रतिबन्धस्याप्रतिक्षेपात् समुदायैकदेशात्मना तदर्थान्तरस्यापि भावात् । भवत्वसिद्धिरेव विषाणवत्त्वस्यापि, तत्कथं तदवष्टम्भेन शब्दत्वे तत्परिहार इति चेत् ? किं पुनरिदं धर्मकीर्तेर्बुभुक्षाव्याकुलितस्य वचनम्—

"पक्षाङ्गत्वेऽप्यवाधत्वान्नासिद्धिर्भिन्नधर्मिणि ।
यथाऽश्वो न विषाणित्वादेष पिण्डो विषाणवान् ॥" [प्र०वा० ४।१८७] इति ।

यत्पुनरत्र पक्षान्तरम्- न साध्यसमये विशेषणमस्ति साध्यमुपलभ्य तस्य प्रागेव निवृत्ते निवृत्तस्य च तदेकदेशित्वायोगान्नासिद्धत्वमिति । तदुक्तम्—

"साध्यकाल गतो वा न निवृत्तेरुपलक्ष्यते ( तत् ) ।"
[ प्र० वा० ४। १८८ ] इति,

तदपि न; शब्दत्वेऽप्येवं तद्दोषानवक्लृप्तेः । शक्यं हि वक्तुं शब्दत्वमपि साधनमेव न साध्यम् अनित्यः शब्दत्वादिति अनित्यत्वस्यैव साध्यत्वात् ततो न तदपि तदेकदेशत्वेनासिद्धमिति क्वेदानीमनित्यत्वं साध्यं निराधारस्य धर्मस्यासम्भवादिति चेत् ? अग्निमान् धूमवत्त्वादित्यत्र क्वाग्निमत्त्वम् ? सामर्थ्याद्धूम एव, तदन्यत्र तत्साधने हेतोरसामर्थ्यादिति चेत, तत एवानित्यत्वमपि शब्द एवास्तु । कथमिदानीं न तस्य तदेकदेशत्वमिति चेत् ? न, हेतुव (का)लात्पूर्वं तदभावात् । पश्चात्तु भवतोऽपि हेतोरदूषणात् । नहि तद्बलोपनीतमेव तद्दूषणाय भवत्यतिप्रसङ्गात्, स्वयं चाभावापत्ते. । तथा हि—

नहि दोषवतो हेतोस्तत्सिद्धिरवकल्पते ।
तत्सिद्धौ वा कथं नाम हेतुर्दोषी भवेदयम् ॥ १३९६ ॥

---

१ –चनस्याव– ता० । २ पुनरुक्तत्वात् । ३ धर्मित्वेन त– आ०, ब०, प० । ४ –त्व शब्द ग– आ०, ब०, प० । ५ चेत्तर्ह्यग्निमान् आ०, ब०, प० । ६ –दोषो भ– आ०, ब०, प० ।

हेतोश्च दोषमन्विच्छन्नन्विच्छत्यपि तद्बलात् ।
साध्यसिद्धिमिति ह्येषा महती बोपदीधितिः ॥ १२९७ ॥

ततो हेतुरिव शब्दत्वं सिद्धत्वादन्यथानुपपत्तेश्च, तथा रूपाद्यनित्यत्वे रूपत्वादिकमप्यविशेषात्। धर्मिण इव किन्न साध्यधर्मस्यापि हेतुत्वमिति चेत् ? न, तस्य समुदायगतस्येव केवलस्याप्यसिद्धत्वात् । तदन्यगत. सिद्ध एवेति चेत्; इष्टमेवैतद् 'अनित्यः शब्दः तदन्यस्य सर्वस्यानित्यत्वात्' इति । चशब्देन तत्समुच्चयस्याभिधानात्। कथमत्रान्यथानुपपन्नत्वं शब्दनित्यत्वेन[1] तदन्यानित्यत्वस्य हि भिन्नाधिकरणत्वेन विरोधाभावात्, [2]विरोधोपायत्वाच्च तत्प्रतिपत्तेरिति चेत् ? न; शब्दस्य नित्यत्वे [3]तद्वत्त्वेनैव तदन्यस्यापि वस्तुनो व्याप्तेरेकाधिकरणतया विरोधोपपत्तेः । न च वस्तुनः कस्यचिन्नित्यत्वम् अन्यस्यानित्यत्वं व्यापकमित्युपपन्नम्; सत्त्वादेरपि व्यभिचारेणागमकत्वप्रसङ्गात् । तस्मादनित्यत्वमेव साकल्येन तस्य व्यापकम्, तच्च क्वचिद्भवदन्यत्रापि तद्विपर्ययं प्रतिक्षिपति तद्व्याप्तं शब्दत्वादिकमपि । इत्युपपन्नमभिहितम्–'तत्र' इत्यादि । यद्यनन्वयमपि श्रावणत्वादिकं गमकं किन्न प्राणादिमत्त्वमपीति चेत् ? क तस्य तत्त्वम् ?.आत्मनि नित्यादिरूपे प्राणादेस्तत्कार्यत्वेन तत्राविनाभावादिति चेत्; न, नित्यत्वेन हेतुत्वस्य निषेधात् । अनिषेधेऽपि किन्न शरीरवदन्यत्रापि प्राणादिः, आत्मनस्तत्रापि भावात् ? त[4]द्धेतोर्विशेषस्य शरीर एव भावात् बहिश्च विपर्ययादिति चेत्; न; तस्य[5] तत्स्वभावत्वे बहिरपि प्रसङ्गात् व्यापिनस्तदपरस्व-भावानुपपत्तेः, अन्यथा तावानेवात्मा भवेत् आत्मप्रयोजनस्य तत्रैव भावात् बहिर्भावी तद्भागो विपर्ययात् । अथायं[6] तत्स्वभावो न भवति, आत्ममनःसंयोगादित्वेन ततो भिन्नत्वादिति चेत्; ततो[7]ऽपि कुतस्तत्रैव प्राणादिः ? तदवच्छिन्न एवात्मप्रदेशे तस्य[8] भावादिति चेत्, न; आत्मनो निष्प्रदेशत्वात्, कल्पितस्तु प्रदेशो न तत्सहायोऽपि तद्धेतुः, अवस्तुत्वाद्वन्ध्यासुतादिवत् । कथं[9] वा तत्रैव[10] भवताऽदृष्टेन विप्रकृष्टात्[11] पश्चादा ( परवाचा ) कृष्टिर्यतस्तदनुमानम् ? कथं वा [12]तस्यात्मकार्यस्य तत्रैव भावो न बहिरपि ? तद्धेतोरपि विशेषस्य तत्रैव भावादिति चेत्, तस्य पूर्ववदनर्थान्तरत्वे [13]ततोऽपि कुतस्तन्मनः-संयोगादिस्तत्रैव ? तस्यापि तदवच्छिन्न एव तत्र प्रदेशे भावादिति चेत्, न, 'आत्मनो निष्प्रदेशत्वात्' इत्यादेरावृत्तेरनवस्थापत्तेश्च । नायं दोषः, सहकारिणां हेतुफलभावेन क्रमभाविनामनवस्थितेरेव[14] रूपत्वादिति चेत्; एवमपि सहकारिणामिति कुतो न स्वतन्त्राणामिति ? तत्सहायादात्मन एव प्राणादेर्भावान्न तेभ्य[15] एवेति चेत्, कथं पुनस्तेषामेव[16] निवृत्त्या घटादेर्निवर्तमानः तेभ्य एव स[17]न भवेत् ? आत्मापि ततो निवृत्त एवेति चेत्, न, विभुत्वात् । सहकारिसहितो निवृत्तश्चेत्; न, तत्साहित्यस्य

१ विभुनेन सह । २ विपक्षविरोधकारणत्वात् । ३ नित्यत्वेनैव । तद्वत्तेनैव आ०, ब०, प० । ४ प्राणादिसद्भावकारणस्य विशेषस्य । ५ प्राणादिहेतोर्विशेषस्य आत्मस्वभावत्वे । ६ प्राणादिहेतुर्विशेषः बहिर्भावविभागस्वभावः । ७ आत्ममनःसंयोगादे । ८ आत्ममन संयोगादे. । ९ कथं त– ता० । १० शरीरदेशे एव । ११ दूरदेशात् । विप्रकृष्टत्वात् आ०,ब०,प० । १२ आत्ममन संयोगादे । १३ –स्तेपि ततः कु– आ०,ब०, प० । १४ सन्तानापेक्षया अनन्तत्वस्यैव । १५ सहकारिभ्य एव स्वतन्त्रेभ्यः । १६ आत्ममन संयोगादीनामेव । १७ प्राणादि ।

तत्स्वभावत्वे तदनुपपत्तेः । अतत्स्वभावत्वे तु सहकारिण एव तदिति सिद्धा तन्निवृत्तित एव तत्सद्भूत्या वृत्तिः । अतो नात्मनि प्राणादिमत्त्वस्य गमकत्वमन्यथानुपपत्तिवैकल्यात् ।

अस्तु तर्हि [1]बुद्ध्यात्मन्येव तस्य गमकत्वमविनाभावादिति चेत्; कुतोऽविनाभावः ? तस्य स्वशरीरे तत्पूर्वकत्वेन प्रतिपत्तेरिति चेत्; कीदृशात्तदात्मा ? निश्चयविकल इति चेत्; कथं तदस्तित्वव्यवहारः ? निर्विकल्पादेव स्वसंवेदनादिति चेत्; न; क्षणभङ्गादावपि तत एव तद्भावेनानुमानवैफल्यात्[3] । व्यवहारसमर्थं च तद्वेदने[4] विपरीतारोपणस्यानुपपत्तेः । तन्न तस्यान्वयमुखेनाविनाभावः ।

नापि व्यतिरेकमुखेन अनिश्चितास्तित्वस्य कुतश्चिन्निवृत्तेरपरिज्ञानात् । भवतु नीलमिदं पीतमिदमित्युपजायमानो निश्चय एव स इति चेत्; स एव कुतः ? निर्हेतुकत्वे नित्यसत्त्वादिप्रसङ्गात् । पूर्वस्मान्निश्चयादेवेति चेत्; कुत इदमवगन्तव्यम् ? तयोरेवान्यतरस्मादिति चेत्; न; तेन परस्परस्याविषयीकरणात् । नाप्यन्यतः, तेनापि तदन्यतरकालेनेतरस्य तत्कालासम्भविनोऽपरिज्ञानात्, उभयकालव्यापिनश्च क्षणभङ्गभङ्गभयेनानभ्युपगमात् । 'तदुभयपृष्ठभाविनो विकल्पात्' इत्यपि नोत्तरम्, तुल्यचोद्यत्वात् 'कुतस्तस्य तत्पृष्ठभावित्वमवगम्यते' इति ? विकल्पान्तरकल्पनायामनवस्थानदी स्वप्रभवा पतेश्च । न चोभयापरिज्ञाने तद्धेतुफलभावप्रतिपत्तिः, "द्विष्ठसम्बन्ध" [प्र० वार्तिकाल० ३।१ ] इत्यादिविरोधात् । तन्न नैरात्म्यवादिना निश्चयोऽपि लब्धात्मा यत प्राणादयो भवेयुः ।

सत्यपि तस्मिन् कुतः सुषुप्तादौ तदुत्पत्तिः ? तदापि निश्चये तद्दशाविलोपात् । जाग्रतो निश्चयादिति चेत्; भवतु नामानन्तरं परस्तु क्रमभावी कुतः ? प्राणादेरेव पूर्वपूर्वस्मादिति चेत्; कथमिदानीं तत[6] परचैतन्यनिमित्तिर्व्यभिचारात् ? न व्यभिचारः चैतन्यप्रभवात् प्राणादेस्तत्प्रभवस्य वैलक्षण्यात् अग्निप्रभवादिव धूमात् तत्प्रभवस्य धूमस्येति चेत्; न; तदनवधारणात् । कथमन्यथा सव्याजेयं सुषुप्ति रुग्णा वेति संशयः ? न हि द्रुतवहनादिविशेषविकलतयोपलभ्यमानाद्धूमाद्धूमध्वजे संशयानाः परिदृश्यन्ते प्रतिपत्तारः । किञ्च, तदा[10] निश्चयवैकल्ये कुतः[11] प्रबोधः ? सोऽपि जाग्रत एव निश्चयादिति चेत्; कथं क्रमभाविप्राणादिप्रबोधध्यानमादव तन्निश्चयात् ? "नाक्रमात् क्रमिणो भावः" [प्र० वा० १।४५] इत्यस्य व्यापत्तेः । कुतो वा मृतशरीरेऽपि तत एव न प्रबोधः ? सहकारिणोऽदृष्टस्याभावादिति चेत्; एतदपि कुतः ? [12]तत्र प्रबोधस्यानाविर्भावादिति चेत्; न; विषमूर्च्छितादौ पक्षमेकमनाविर्भावेऽपि तस्य पुनस्तत्रैव प्रयत्नबलादाविर्भावप्रतिपत्तेः अत्रापि तदाशङ्काऽनिवर्तनात्[13] । निश्चितस्तदनाविर्भाव इति कथमदृष्टाभावः ? कथञ्च दाहादिसाहसमाचरितुः पातकित्वप्रसङ्गात् । ततो न मृतशरीरवत् सुषुप्तादावपि जाग्रज्ज्ञानात्तदुत्पत्तिरिति सन्निहित एव कश्चिद्धेतुर्वक्तव्यः । स चात्मैव उपयोगपरिणामी

---

१ सौगताभीष्टे चित्तसन्ततिरूपे । – ता० टि० । २ निर्विकल्पकादेव । ३ 'दृष्टेऽपि क्षणभङ्गादौ विपरीतसमारोपदर्शनात्तद्व्यवच्छेदार्थस्यानुमानस्य साफल्यम् । तदुक्तम्–तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः । भ्रान्तेर्निश्चीयते नेति साधनं सम्प्रवर्तते ॥ इति । इत्याशङ्कायामाह । –ता० टि० । ४ निर्विकल्पवेदने । ५ संवित्ति नैकल्प्यवेदनात् ।' –प्र० वार्तिकाल० । ६ प्राणादि । ७ प्राणादेः । ८ प्राणादिप्रभवस्य । ९ धूमप्रभवस्य । १० सुषुप्तादौ । ११ प्रबोध आ०, ब०, प० । १२ तत्र वा– आ०, ब० प० । १३ –शङ्कानिनिवर्तनात् आ०, ब०, प० ।

नापर इति, तत्रैव तस्य गमकत्वमन्यथानुपपत्तिसम्भवात् । तस्यापि निर्णयात्मन एव सन्निधाने कथं सुषुप्तिरिति चेत् ? न; तदा तस्यादृष्टवशान्निर्णयविकल्पस्यैव भावात्, प्रबुद्धस्यैव निर्णयरूपतया प्रतिपत्ते । कथमेकस्य निर्णयश्चेतरश्च स्वरूपमिति चेत् ? तथैवाधिगमाद्विकल्पज्ञानवत् । एतदेवाह —

**अप्रत्यक्षः सुषुप्तादौ बुद्धः प्रत्यक्षलक्षणः ।**
**जीवतीति यतः सोऽयं जीव आत्मोपयोगवान् ॥ ५३ ॥** इति ।

न विद्यते प्रत्यक्षं निर्णयरूपं यस्य स **अप्रत्यक्षो जीवः** इति सम्बन्धः । क्व ? **सुषुप्तः** स्वप्नदर्शी निद्रावान् **आदिर्यस्य** मूर्च्छितादेस्तस्मिन्निति । सदा तर्हि सोऽप्रत्यक्ष एव कपिलादेरप्यात्मा परोक्ष एवेति केषाञ्चिदभ्युपगमादिति चेत्; न; **बुद्धो** निद्राप्रबन्धाद् व्युत्थितः । **प्रत्यक्षलक्षणः** प्रत्यक्षं निर्णयात्मकं स्वसंवेदनम्, "व्यवसायात्मकं ज्ञानं प्रत्यक्षम्" [ ] इति वचनात्, तल्लक्षणं स्वरूपं यस्य तेन वा लक्ष्यत इति तल्लक्षण इति । अनेन तत्परोक्षत्ववादस्य प्रत्यक्षबाधनमुपदर्शितम् । भवतु **बुद्धो जीवः** प्रत्यक्षतोऽवगमात्, सुषुप्तादिस्तु कथमिति चेत् ? उत्तरम्—**जीवतीति यतः** इति । यतो लोकस्य सुषुप्तादिरपि जीवतीति प्रत्ययः ततः सोऽप्यस्त्येव अन्यथा तत्प्रत्ययायोगात् । कुतोऽयं प्रत्ययः ? मृते मृतप्रत्ययोऽपि कुतो यतो दाहादिस्तत्र कल्प्येत ? स्पर्शादिविशेषाल्लिङ्गादिति चेत्; न; जीवनप्रत्ययस्यापि तत एव भावात् । जीवनप्रतिबन्धस्यापि तद्विशेषस्य निरुच्छ्वासमूर्च्छितेऽपि लोकैरध्यवसायात् । सोऽपि जाग्रत एव जीवनान्न तादात्विकादिति चेत्; तदहर्जातस्य व्याहारादिरपि प्राच्यभवजीवनादेवेति कथं ततस्तच्चैतन्यप्रतिपत्तिर्यतोऽस्य परिपोषणादिनाऽनुगृह्येत । ततो यथा *तदात्वीनादेव जीवनात्तद्व्याहारादिः, अन्यथा सन्तानान्तरव्यवहारविरहापत्ते, तथा सुषुप्तादेः स्पर्शादि-*विशेषोऽपीत्यलमाग्रहवैशसेन । कथं पुनरेवमपि सुषुप्तादिना प्रबुद्धस्यैकत्वं यतः 'अप्रत्यक्षः' इत्याद्युच्यत इति चेत् ? अत्रोत्तरम्—**'सोऽयम्'** इति । अत्रापि **इति** यत इति सम्बन्धनीयम् । तदयमर्थः-**स** सुषुप्तादिः अयं प्रतीयमान इति एवं प्रत्यभिज्ञानं यतस्ततः स एव अप्रत्यक्षः पूर्वं पुनः प्रबुद्धश्च प्रत्यक्ष इति । ननु स इत्यतीतस्य निर्देशः, तस्य च कुतः प्रतिपत्तिः ? स्मरणादिति चेत्; तस्याप्यनुभूतवस्तुगोचरत्वे न तद्विषयत्वम् अतीतेऽनुभवाभावात् । नहि वस्तु किञ्चिदतीतत्वेनानुभवे परिस्फुरति । अतद्गोचरत्वे तु न स्मरणम्, अनुभवपृष्ठभाविन एव प्रत्ययस्य तत्त्वोपगमात् । तदुक्तम्—

"अनुभूतार्थविषया स्मृतिश्चेद् नष्टता कथम् ?
नानुभूतार्थविषया यदि सा स्मृतिता कथम् ॥" [प्र० वार्तिकाल० ४।१९७] इति ।

अनुभूतमेवानुभवादपक्रान्तमतीतमिति चेत्; न; युगपत् विरोधेन तदसम्भवात् । पर्यायेण तत्सम्भवे तु तदपक्रान्तादन्यदेवानुभूतमिति कथं तदेवातीतमिति व्यपदेशः ? तत्र केवलं वासनाबलादेव स्मरणमिति ततोऽवसीयमानमवस्त्वेवातीतं प्रधानादिवत् । तदप्युक्तम्—

१ –नः सन्निधातेति क– आ०, ब०, प० । २ जीवप्रत्य– आ०, ब०, प० । ३ "जीवनेन सह प्रतिबन्धः सम्बन्धो यस्य । जीवनप्रतिबन्धस्य ।" –न्या० टि० । जीवनप्रबन्धस्यापि आ०, ब०, प० ।
४ मरणत्वापगमात् । ५ –दप्रविक्रान्तमिति आ०, ब०, प० ।

"यदातीतं न तद्ग्राह्यं यदा ग्राह्यं न तत्तथा ।
स्मर्यमाणेन रूपेण तदतीतं न वस्तु[1] तत् ॥" [ प्र० वार्तिकाल० ४।१९७ ] इति ।

तत्कथमवस्तुनस्तस्य वस्तुन प्रत्यक्षविषयस्येति चेत् ? न, सचेतनादिरूपेणानुभवविषयस्यैव तेन ग्रहणात्; तस्य च वस्तुत्वात् । कथमिदानीमतद्विषयस्यातीतत्वस्य तेन ग्रहणमिति चेत् ? भवतु तावता तस्यास्मरणत्वम् अपूर्वार्थत्वात् । तदेव कथं स्मरणमस्मरणञ्चेति चेत् ? "तदेव स्वरूपे प्रमाणमितरत्राप्रमाणमितिवत्" [ ] इति ब्रूमः । तत प्रमाणमेव स्मरण कथञ्चिदपूर्वार्थत्वादविसंवादाच्च । अस्ति हि तत्राविसंवाद, ततोऽपि प्रवृत्तस्य विषयप्राप्तेः । कथमतीतस्य प्राप्तिः ? कथं वर्तमानस्य ? मासिकाले तस्याप्यभावात् । प्राप्त इत्यभिप्रायादिति चेत्, न, इतरत्रापि तुल्यत्वात् । साघृतमेवैव स्मरणस्य प्रामाण्यमिति चेत्; प्रत्यक्षस्यापि स्यात् । तदपि तादात्म्येन वस्तुत इति चेत्; नेदानीमतीतस्यैवावस्तुत्व वर्तमानस्यापि तत्त्वात् । तत्तुतस्तत्रैव तन्निर्णय । तनस्तदेवातीतमपि वर्तमानवदिति कथ न तदेकत्वं प्रत्यक्षविषयस्य ? तस्मादनालोचितवचनमेवेदम्-"स्मर्यमाणेन रूपेण तदतीतं न वस्तु तत्" [ प्र० वार्तिकाल० ] इति । असत्यपि वस्तुत्वे कथञ्च तदेकत्वं तद्रूपद्गतस्य तस्याप्यवस्तुत्वात् धर्मिरूपानुसारित्वाद्धर्मस्य । नैकान्तेनावस्तुत्व वस्तुभूतवर्तमानपर्यायगतत्वेन वस्तुत्वस्यापि भावादिति चेत्, न तर्हि तदेकमेकत्वं भवेत्, अपि त्वतीतगतमन्यदवस्तुरूपम् अन्यच्च वर्तमानगतं वस्तुभूतमिति भिन्नस्यैवोपपत्तं । तत्रातीतेतरयोरेकस्य तस्यैवैकस्यासम्भवात । तदुक्तम्-

"यदि धर्मवशेन स्यात्तस्यासत्यतया स्थितिः ।
एकमेव तदातीतं वर्तमानतया मृषा ॥" [ प्र० वार्तिकाल० ४।१०७ ] इति ।

इति चेत्; उच्यते-

अवस्तुत्वादतीतस्य तदैक्य चेन्न वस्तुन ।
तद्धेतुत्व कथ तस्य वर्तमानस्य कल्प्यताम् ॥ १३९८ ॥
अवस्तुनोऽपि हेतुत्वे हेतुत्व वस्तुलक्षणम् ।
अर्थक्रियासमर्थ यत्तत्सदित्युच्यते कथम् ॥ १३९९ ॥
अतीत चेन्न तद्धेतुस्तदहर्जातचेतनात् ।
अतद्रूपात्तत्कार्यात्मभवानुमिति कथम् ॥ १४०० ॥
कुतो वा वस्तुनो जन्म भव्याच्चेद्वास्तु वस्तुत ।
प्रत्यक्षगोचरत्वस्याभावात्तत्राप्यतीतवत् ॥ १४०१ ॥
पश्चात्तद्गोचरत्वाच्चेद्वस्तु तत्प्रतिनाञ्छितम् ।
तत तत्रापि यद्वस्तुमेवं शक्य मनीषिणाम् ॥ १४०२ ॥

---

१ वस्तुतः आ०, ब०,प० । २ स्मरणेन । ३ वास्तव आ०, ब०,प० । ४ "प्रत्यक्षविषयस्य"-ता० टि० । ५ धर्मिव- ता० । "यदि धर्मवशोऽतस्या- सत्यासत्यतया स्थिति । वर्तमानतया सत्याऽवर्तमानतया मृषा ॥" ६- प्र० वा २।३ । प्र० वार्तिकाल० ।

यदा भव्यं न तद्ग्राह्यं यदा ग्राह्यं न तत्तथा ।
अनुमागम्यरूपेण भव्यं तत्र च वस्तु तत् ॥ १४०३ ॥ इति ।
समकालात्तु तज्जन्म न त्वयैवोपगम्यते[1] ।
तस्मादहेतुकं वस्तु ततश्च ध्रुवमापतेत् ॥ १४०४ ॥
नित्यत्वमेवं तद्ध्वंसभयत्नादप्यवस्थितम् ।
प्रज्ञाकरपदं व्यर्थं त्वयि शाक्य प्रकल्पयेत् ॥ १४०५ ॥

न वस्तुतः किञ्चित् कस्यचित् कार्य्यं कारणं नित्यमनित्यमन्यद्वा, सकलविकल्पापक्रान्तस्याद्वैतस्यैव भावात् । तदभ्युपगमस्तु संवृत्यैवेति चेत्; नन्वियं लोकबुद्धिरेव,

"केवलं लोकबुद्ध्यैव बाह्यचिन्ता प्रतन्यते ।" [ प्र० वा० २।२१९ ] इति वचनात्, तथा च कथमतीतादेरवस्तुत्वम् वस्तुतयैव तत्र लोकबुद्धेर्भावात् । भवत्वेवं तथापि कथं प्रत्यभिज्ञानात्तदेकत्वम् ? कथं च न स्यात् ? असत्यपि तस्मिंस्तस्य भावात् लूनपुनरुत्पन्ननखकेशादाविति चेत्; अक्षज्ञानादपि कथं कचित्पीतादिः[2] ? तदभावेऽपि शुक्लशङ्खादौ तस्य भावात् । निर्बाधादेव ततस्तद्भावो न सर्वस्मात्, बाधितश्च प्रकृतं पुनर्भाविना शुक्लप्रतिभासेनेति चेत्; न; प्रत्यभिज्ञानेऽपि समानत्वात् । लूनपुनरुत्पन्नकेशादौ किं तस्य बाधकम् ? मध्ये लूनतादर्शनमिति चेत्; ननु लूनता नाम विच्छेदः[3], स च पूर्वस्योत्तरेणासङ्घटनम् । तच्च लूनवदन्यत्रापि समानं तत्कथं कचिदपि तस्य निर्बाधित्वम् ? तदुक्तम्—

"लूनता नाम विच्छेदः परासङ्घटनं स च ।
ततः पूर्वपरित्यागाच्छित्तिः सङ्घटिते कुतः ॥
असङ्घटितदृष्टिश्च समा दार्ष्टान्तिकेतरे ।" [ प्र० वार्तिकाल० ४।१९७ ]

इति चेत्; न; असङ्घटितत्वस्य दार्ष्टान्तिके कथञ्चिदेवावगमान्न सर्वथा । न च तेन कथञ्चिदेकत्वप्रत्यभिज्ञानस्य बाधनम्, अविरोधात् । अथ कथञ्चिदिति न क्षम्यते तस्यान्धपदत्वात्[4], न तर्हि प्रत्यभिज्ञानमपि तदाकारयोरपि स इत्ययमिति चासङ्घटितयोरेवावभासनादेकत्वस्यानुपपत्तेः; तदुपपत्त्या च प्रत्यभिज्ञानस्य । न हि स इति प्रत्यभिज्ञानं स्मरणत्वात् । नाप्ययमिति प्रत्यक्षत्वात् । तदपि मा भूदिति चेत्; कथं तर्हीदमुक्तम्—"एकार्थक्रियाकारितयैकत्वं प्रत्यभिज्ञानविषयो न तत्त्वतः ।" [ प्र० वार्तिकाल० ४।१९७ ] इति ? सत्येव तस्मिंस्तद्विषयचिन्तनस्योपपत्तेः । तदपि कल्पनादेव न तत्त्वत इति चेत्; ननु तदपि प्रत्यभिज्ञानमेव योऽयं स इति स एवायमित्ययमाकारं[5] इत्युपजननात्, तच्च कथञ्चिद्वादविद्वेषे नास्ति । तत्कथं सतैवासतः[6] परिकल्पनम् ? तदपि परिकल्पनादेवेति चेत्; न; अनवस्थाप्रसङ्गात् । ततो दूरं गत्वापि तत्त्वत एव सङ्घटिताकारं तदङ्गीकर्त्तव्यम् ।

१ -पपद्यते आ०, ब०, प० । २ पीतादेस्त- आ०, ब०, प० । ३ -दनः न आ०, ब०, प० । ४ "कथञ्चिदित्यन्धपदमेतत्"- हेतुबि० टी० पृ० ८४ । ५ -रमित्यु- आ०, ब०, प० । ६ -सत्येवास- आ०, ब०, प० ।

तथा च तद्धदेवातीतादेरपि सङ्घटनोपपत्तेरुपपन्नम्–'प्रत्यभिज्ञानात्कथञ्चिदसङ्घटनेऽपि तदेकत्वपरिज्ञानम् ।' ततः कथञ्चित्पदस्यान्यत्वाभिधानमन्यतमसानुबन्धादेव न परीक्षाबलादिति निश्चिन्वन्ति विपश्चितः । ततः सूक्तम्–'स एवायम् ।' इति । यतस्ततः सुषुप्तादिरेव प्रबुद्ध इति ।

भवतु तादृशो जीवो न त्वात्मा तस्य नित्यशुद्धत्वेन सुषुप्तादिभावानुपपत्तेरिति चेत्, उत्तरम्–'आत्मा' इति । अत्र सोऽयमिति योजयितव्यम् । तदयमर्थः–स प्रकृतो जीवोऽयं प्रत्यवमर्शेन व्यवस्थाप्यमान आत्मा नापरः । कुत एतत् ? उपयोगवान् यतः उपयोगो ज्ञानदर्शनरूपो व्यापारो विद्यते अस्येत्युपयोगवान् । नित्ययोगे तादात्म्यलक्षणे मतुः । एतदुक्तं भवति–आत्मनोऽप्युपयोगवत्त्वमेव लक्षणम् "सत्यं ज्ञानमनन्तं ब्रह्म" [तैत्ति० २।१।१] इति वचनात् । तस्य च जीव एव दर्शनात् स एवात्मेति तत्र दर्शनमपि परमात्माविवेकादेव न स्वतस्तत्त्वात्, तमेव भान्तमनुभाति सर्वम् [ कठो० ५।१८] इत्याम्नायादिति चेत्, न, तत्र दृष्टस्यान्यत्र कल्पनायामनवस्थापत्ते[1], तदन्यत्रापि तदनिराकरणात् । आम्नायबाधनान्नेति चेत्, प्रत्यक्षबाधनादाम्नायोक्तेऽपि न भवेत् । ततो जीव एवात्मा "अनेन जीवेनात्मना" [ छान्दो० ६।३।२ ] इति जीवाभेदेन तस्याम्नायाच्च । आत्माभेदेन जीवस्यैवायमाम्नायो न तदभेदेनात्मन इति चेत्, तस्यैवाम्नाये को दोषः ? जीवादन्यो नात्मा स्यात्, अस्ति चासौ मुक्तरूपः, न च तस्य जीवत्वं प्राणधारणस्याभावात्, सत्येव तस्मिन् जीवत्वोपपत्तेरिति चेत्, न, तस्यापि[2] भूतपूर्वगत्या तत्त्वात्[3], जीवितपूर्वो जीव इति व्युत्पत्तेः, विग्रहगतावपि[4] जीविष्यतीति जीव इति व्युत्पादनात् । कथं पुनरुपयोगवत्त्वे तस्य सुषुप्त्यादि[5] सत्यज्ञानस्वभावस्य तदसम्भवादिति चेत् ? न, कर्मवशात्तस्यापि तदुपपत्तेः । तत्राह–

**कर्मणामपि कर्ताऽयं तत्फलस्यापि वेदकः ।** इति ।

**कर्मणां** ज्ञानावरणादीनामयं जीवः **कर्ता** न केवलमुपयोगवानेवेत्यपिशब्दः । ततश्च तेषां यत्फलं तत्परिपाकोपनीतं सुषुप्त्यादिलक्षणं तस्य वेदकस्तद्रूपतयापि प्रत्येनुभविता । न केवलं कर्ताऽपि तु वेदक इत्यपिशब्दः । परमपि तत्फलं दर्शयति–

**संसरेत् [ परिणामात्तमुच्यते वा ततः पुनः ]** ॥ ५४ ॥ इति ।

तत्कर्तृत्वादेव परापरशरीरादिपरित्यागोपादानक्रमेण देवतिर्यगादिगतिषु परिभ्रमेदयं जीव इति । तत्कर्तृत्वे निबन्धनमाह–'**परिणामात्**' इति । परिणामो मिथ्यादर्शनादिविकारः तेनात्त' इति । न चैवं परस्पराश्रय परिगृहीत, ततस्तेषां कर्ता स एव उपयोगवत्त्वात् कुत इति चेत् ? कर्मभ्य एव । न चैवं परस्पराश्रय परिगृहीत, ततस्तेषां कर्ता स एव उपयोगवत्त्वात् कुत इति चेत् ? कर्मभ्य एव । तस्य च सयुक्तिकत्वेन तृतीये 'कर्मभ्यस्तद्दर्शनादिस्ततोऽपि कर्माणि' इति, अनादित्वात्प्रबन्धस्य । तस्य च सयुक्तिकत्वेन तृतीये निरूपणात् । न तर्हि कर्मभ्यस्तत्करणस्वभावस्य मुक्तिः तत्स्वभावपरिहाण्या जीवस्यैव परिहाणिप्रसङ्गादिति चेत्, आह–'**मुच्यते वा ततः पुनः**' इति । मुच्यते अपवृज्यते ततः कर्मभ्यो जीवः स च न सर्वः किन्तु भव्य एवेति दर्शनार्थं वेति विकल्पवचनम् । मुच्यमानोऽपि न सर्वदा

---

१ –धनादिति आ०, ब०, प० । २ मुक्तस्यापि । ३ जीवत्वात् । ४ नूतनशरीरधारणार्थं गति विग्रहगति । ५ सुषुप्तादि– ता०, ब० ।

किन्तु पुनः तदुपायानुष्ठानस्य पश्चात्, पूर्वं तु संसार एव, तदभावे मुक्तेरनुपपत्तेः तदपेक्षत्वात्।

मुक्तिः संसारतस्तस्मिन्न चासत्यवकल्पते।
पाशबन्धाद्विनिर्मुक्तेस्तस्मिन् सत्येव दर्शनात् ॥ १४०६ ॥
अविद्याकल्पितास्त्येव संसृतिः प्रागपीति चेत्।
तदा तस्माद्विनिर्मुक्तिर्जीवस्य कथमुच्यताम् ॥ १४०७ ॥
न हि संसारनिर्मुक्तो तमोदीपप्रमे इव।
निष्पर्यायं क्वचिज्जीवे युज्येते गृहगर्भवत् ॥ १४०८ ॥
सत्त्वेऽपि प्रागवस्तुत्वात्संसृतेर्मुक्तिरेव चेत्।
अवस्तुन कुतो विचिर्यदि वस्तुदृशिः पुमान् ॥ १४०९ ॥
कल्पनापि कथं तस्य न चेद्वित्ति कुतश्चन।
वित्तिरेव यतो भ्रान्ता कल्पनेति प्रकल्प्यते ॥ १४१० ॥
न च भ्रमोऽस्ति जीवस्य यतः स्यात्तत्र कल्पनम्।
भ्रमे वा तत्र निर्मुक्तिरनादि कल्प्यता कथम् ॥ १४११ ॥
भ्रमोऽपि विभ्रमादेव भ्रान्त्यात्भ्रान्त्योऽपि तादृशात्।
अनादिस्तत्प्रबन्धोऽयमिति चासन्मतं मतम् ॥ १४१२ ॥
चेतनादन्यतस्तस्य व्यवस्थाकारिणोऽप्ययात्।
चेतनस्य च शुद्धस्य तद्विचावप्रवर्तनात् ॥ १४१३ ॥
तस्मात्संसारमिच्छद्भिरशुद्धिस्तस्य तात्त्विकी।
वक्तव्या प्रागनादिस्तन्निर्वाणं नोपपद्यते ॥ १४१४ ॥

वस्तुसत्त्वे संसारस्य न निवर्तनं जीवस्वरूपवदिति चेत्; अवस्तुसत्त्वेऽपि न भवेत् तस्यैवोक्तन्यायेनासम्भवात्। ततो निवर्तनं न क्वचिदिति प्राप्तम्। ततो वस्तुसत एव निवर्तनम्। अनर्थान्तरस्य कथमिति चेत्, न; तस्यापि तद्धेतुनिवर्तनेन निवृत्तिदर्शनात् कलधौतद्रवत्वादिवत्। तत उक्तम्–'पुनर्मुच्यते' इति। पुनरपि कुतो मुच्यते? अत्राप्युक्तम्– 'परिणामात्' इति। सम्यग्दर्शनादिपरिणामपरिगृहीतो यत इति। सति तत्परिपाके तद्विरोधिमिथ्यादर्शनादिनिवृत्तेस्तन्निबन्धनपरिक्षयादपवृज्यते इति यावत्।

स्यादेतत्, कर्म तत्फलं संसारो मुक्तिरिति च सत्येव भेदे, न चायमस्ति तदवस्थापनोपायाभावात्। ततोऽद्वैतबोध एव परमार्थः, तस्य स्वत एवाधिगमात् 'स्वरूपस्य स्वतो गतिः' [ प्र० वा० १।६ ] इति वचनादिति चेत्, अत्राह—

**आत्मादिव्यतिरेकेण कोऽपरोऽध्यक्षतां व्रजेत्। इति।**

अपर इत्यद्वैतबोध उच्यते तस्याविद्यमानत्वपरत्वात्। स कः किंरूपोऽध्यक्षतां स्वसं-

वेदनविषयतां व्रजेत् प्राप्नुयात् ? न कश्चित् । सकलविकल्पातीतस्य [1]तद्ग्रहणात् केन तदाक्षेप इति ? अत्रोत्तरम्–आत्मादि । आदिशब्देन कर्मादि, तस्मादिवं व्यतिरेको व्यावृत्तिरध्यक्षतायास्तेनेति । इवार्थगर्भोऽत्र पञ्चमीतत्पुरुषः । तदयमर्थः[2]—

भेदरूपाद्यथात्मादेरध्यक्षं विनिवर्त्तते ।
तथोक्तरूपादद्वैतात्तदसम्प्रतिपत्तितः ॥ १४१५ ॥
सर्वनैरात्म्यमायातं तस्मादद्वैतवादिनाम् ।
तच्च प्रमाणशून्यत्वात्प्रागेव प्रतिवारितम् ॥ १४१६ ॥

भवतु नीलधवलादिभिराकारैश्चित्रस्यैव तस्य तद्ग्रहणमिति चेत्, सिद्धस्तर्हि जीवो युगपदिव क्रमेणापि बोधात्मनश्चित्रस्यानिषेधात्, तस्यैव परमार्थतो जीवत्वात् । तदाह–

***नानायं क्रमशो वृत्तेः [ न चेदत्राभिधास्यते ]*** ॥ ५५ ॥ इति ।

अयं प्रतीयमानो बोधात्मा नाना कथञ्चिदवग्रहादिपर्यायैः शबलः । कुत ? वृत्तेः प्रवृत्तेः । कीदृशीः ? क्रमशः क्रमसाकल्येन भवद्भिरिति । नास्त्येव तादृशो बोधः प्रत्यक्षतस्तस्याग्रहणात् , तत्र सन्निहितस्यैव सच्चेतनादेरवभासनात् न कालव्यापिनः तस्य मरणावधेर्ग्रहणप्रसङ्गात् । तदुक्तम्—

"यदि कालकलाव्यापि वस्तुग्रहणमक्षतः ।
सर्वकालकलालम्बे ग्रहः स्यान्मरणावधेः ॥" [ प्र० वार्तिकाल० ४।१९७ ]

इति चेत् , अत्राह–न चेत् अत्राभिधास्यते । न चेत् न यदि क्रमशबलो बोधः, अत्र एतस्मिन् अक्रमशबले बोधात्मनि अभिधा तदस्तित्ववादः अस्यते निराक्रियते तत्रापि देशव्यापिनि प्रत्यक्षस्यावृत्ते ।

यदि देशकलाव्यापि वस्तुग्रहणमक्षत ।
सर्वदेशकलालम्बे ग्रहः स्यात्सागराऽवधे ॥ १४१७ ॥

इति दोषात् । योग्यतया नियमस्येतरत्रापि सुकरत्वात् । प्रत्यक्षायोग्यस्य च तद्गतस्यानुमानात्प्रतिपत्तेरद्वैतभागवत् । न हि तत्रापि 'नानुमानम्- चित्रप्रतिभासाप्येकैव बुद्धिरशक्यविवेचनत्वात्' इति [4]तस्य दर्शनात् । तेनापि विप्रतिपत्तिरेव निवार्यते न तद्भागस्य ग्रहणम्, प्रत्यक्षत एव सर्वात्मना तस्य ग्रहणादिति चेत् ; न; विप्रतिपत्तिविवेकस्याग्रहणात्, ग्रहणेऽनुमानस्य वैफल्यात्[5] । ततोऽनुमानादेव तस्य प्रतिपत्तिः स्ववेदनाद्यनन्तत्वस्यापि । ततो युक्तं मानादिमत्त्वात् परिणामिन एवात्मनः साधनं न कूटस्थस्य नापि विज्ञानसन्तानस्य तत्र तस्य विरुद्धत्वात् ।

परिणामिन्यपि विरुद्ध एवायं शरीरोपक्लृप्तादेव चैतन्यप्रवृत्तेरिति चार्वाकः । तत्राह—

१ तत्परिज्ञा–आ०, ब०, प० । २ तस्मादेव प० । ३ –प्रत्यार्थः आ०, ब०, प० । ४ 'चित्रप्रतिभासापि बुद्धिरेकैव बाह्यचित्रविलक्षणत्वात् । शक्यविवेचनं चित्रमनेकमशक्यविवेचनादेव बुद्धेर्नीलादयः ।" प्र० वार्तिकाल० पृ० २९४ । ५ वैफल्यात्ते आ०, ब०, प० । ६ नापि तत्र– आ०, ब०, प० ।

**भूतानामेव केषाञ्चित् परिणामविशेषतः ।**
**कायश्चित्कारणं सोऽपि कथं संसारमुक्तिभाक् ॥ ५६ ॥** इति ।

**कायः** शरीरं **भूतानां** पृथिव्यादीनाम् एवकारान्न परमाण्वादीनां कार्यत्वेन सम्बन्धी, तेषामपि न सर्वेषाम्; सर्वेषां कायमयत्वप्रसङ्गात्, अपि तु **केषाञ्चित्** । भूतत्वाविशेषे कथमिदमिति ? अत्रोत्तरम्–**परिणामविशेषतः** । तेषामेव समुदायलक्षणोऽवस्थाविशेषस्तस्मात्तत इति केषाञ्चिदेव तद्विशेषभावात्तेषामेव स इत्यभिप्रायः । भवति चात्र सूत्रम्–**"तत्समुदाये शरीरेन्द्रियविषयसंज्ञाः"** [ ] इति[1] । भवतु नामैवं तथापि कः प्रकृतोपयोगः ? तत्रोत्तरम्–**चित्कारणं** चितश्चेतनस्य दर्शनस्मरणादेः कारणं काय इति सम्बन्धः **"तेभ्यश्चैतन्यम्"** [ ] इति वचनात् । प्रयोगश्चात्र–यस्मिन् सत्येव यद् भवति तत्तस्य कार्यं यथा किण्वादेर्मदशक्तिः,सत्येव च काये भवति चेतन इति । तदुक्तम्– **"मदशक्तिवद्विज्ञानम्"** [ ] इति[2] । भवतु तद्धेतुः काय एवात्मा **'चैतन्यविशिष्टः पुरुषः'** [ ] इत्यभिधानात्, स एव च संसरति मुच्यते चेति चेत्, उत्तरम्–**सोऽपि** कायोऽपि न केवलं परः **कथं** नैव **संसारमुक्तिभाक्** ? तस्य जन्मनः पूर्वं मरणाच्चोर्ध्वमभावेन तदनुपपत्तेरिति भावः । तत्रोत्तरमाह–

**शक्तिभेदे तथा सिद्धिः [ संज्ञा केन निवार्यते ]** इति ।

**तथा** तेन कायश्चित्कारणमिति प्रकारेण **सिद्धिः** निर्णीतिः भवतीति शेषः । कदा ? शक्तेः सामर्थ्यस्य **भेदे** तदन्यासम्भविनि विशेषे सति । तात्पर्यमत्र–कायात्मनः पृथिव्यादेश्चैतन्यं प्रत्यभिव्यञ्जकत्वेन कारणत्वमिति मते तद्भेदस्तस्य वक्तव्योऽन्यथा तदयोगात् भूतान्तरवत् । किं तेन कायत्वादेव तदुपपत्तेरिति चेत् ? न, मृतेऽपि देहे तत्प्रसङ्गात् । विशेषादिति चेत्; स तर्हि तद्भेद एव नापर इति सिद्धः स एव तद्भेदाधिष्ठानं जीवः, तदपरस्तु भावः पुद्गलादिस्तत्र दर्शनस्मरणप्रत्यभिज्ञानादेरात्मधर्मस्याभावात् तदधिष्ठाने च विपर्ययात् । ततः संज्ञयैव तस्य भूतत्वं नार्थतः । न च सा तत्र निवार्यते अनेकसंज्ञासमावेशस्यैकत्राविरोधात् । तदाह–**'संज्ञा केन निवार्यते'** इति । यदि तस्य तच्छरीरस्यैव जीवत्वमविनष्टैव दृष्टिर्नास्तिकानामित्यत्राह । अपरशरीरत्वेनापीति चेत्, कथमत्यक्ततच्छरीरस्य तत्सम्भवेत् युगपदेकत्र तदनुपलम्भात् । त्यक्ततच्छरीरस्येति चेत्; न; तस्यापि भस्मभावेनात्रैवोपलभ्यमानस्य तद्भावाप्रतिपत्तेरिति चेत्, मा भून्नाम स्थूलस्य तद्भावं सूक्ष्मस्य तु न कथं तस्य शरीरान्तरभवमनुभवतोऽप्यप्रतिपत्तेरविरोधात् । नाविरोधादेव तदस्तित्वमतिप्रसङ्गात्, अपि तु प्रमाणादेव, तच्चेह नास्तीति चेत् ; न; तस्यापि भावात् । तथाहि–विवादापन्नः पृथिव्यादिः तदन्तरवान् चैतन्याभिव्यञ्जकशक्तिभेदवत्त्वात् बालदेहपृथिव्यादिवत् । प्रसिद्धं हि बालदेहपृथिव्यादेस्तथाविधस्य तदन्तरवत्त्वं तत्रैव युवादिदेहभावस्य प्रतिपत्तेः । कथं पुनस्तद्देहस्य बालदेहाद् भेद इति चेत् ?

---

१ "पृथिव्यापस्तेजोवायुरिति तत्त्वानि तत्समुदाये शरीरेन्द्रियविषयसंज्ञा इत्यादि" तत्त्वोप० पृ० १ । न्या० कु० टि० पृ० ३४१ । २ 'तेभ्यश्चैतन्यामिति । तत्र केचिद् वृत्तिकारा व्याचक्षते—उत्पद्यते तेभ्यश्चैतन्यम् । अन्ये– अभिव्यज्यते इति ।" तत्त्व सं० पं० पृ० ५२० । न्या० कु० टि० पृ० ३४२ । ३ तत्त्वान्तरत्वेन भेदः ।

प्रतिभासभेदादेव पुरुषान्तरदेहवत् । सत्यपि तस्मिन्नात्यन्तीय तत्र भेद इति चेत्, न, अस्माभिरप्यत्यन्तभेदेन तदन्तरवत्त्वस्यासाधनात् । एवमपि कथं मरणतिरोहितचिद्रूपस्य पुनराविर्भूततद्रूपतया तदन्तरवत्त्वं स्थूलरूपस्यापि तस्य तत्प्रसङ्गादिति चेत् ? कथं भवतोऽपि जन्मनः पूर्वमनभिव्यक्तचिद्रूपस्य तथा भूततद्देहवत्त्वं भूतमात्रस्यापि तत्प्रसङ्गेन सर्वस्य प्राणिमयत्वापत्तेः । नायं दोषस्तत्रैव तन्निबन्धनस्य शक्तिविशेषस्य भावात्र तन्मात्रे इति समानमन्यत्रापि समाधानम् । तदेवाह—

**यथाभूताविशेषेऽपि प्रज्ञादिगुणसंस्थितिः ।**
**तथा भूताविशेषेऽपि भवद्भूतादिसंस्थितिः ॥ ५७ ॥ इति ।**

**यथा** येन शक्तिभेदभावाभावप्रकारेण शरीरभाविनोऽन्यस्य च पृथिव्यादेर्भूतस्य मात्रप्रधानत्वान्निर्देशस्य, उपलक्षणश्चैष तेनानभिव्यक्तचेतनत्वमपि तस्याविशेषस्तस्मिन्नपि न केवलं तद्भावे, **प्रज्ञादिगुणसंस्थिति** इति अत्यन्तविस्मृतस्य पूर्वसंस्कारादभ्यूहनं प्रत्येकगृहीतानामन्योऽन्ययोजनेन वानुस्मरणं **प्रज्ञा** सादिर्यस्य मेधाशरीरभावादे, मेधा गृहीताविस्मरणं पृथग्गृहीताना तथानुस्मरणं वा, स एव **गुणस्तस्य संस्थितिः** सम्यक् शरीरभाविन्येव पृथिव्यादौ नान्यत्र स्थितिरतिव्याप्तिपरिहारेणावस्थानम् । न हि तत्रैव शक्यं वक्तुम्—शरीरभाव्यपि पृथिव्यादिर्न तत्संस्थितिमान् भूतत्वादनुन्मीलितचेतनत्वाद्वा तदितरपृथिव्यादिवदिति, तत्त्वाविशेषेऽपि शक्तिभावेतराभ्यां तत्संस्थितिमत्त्वतदयोगोपपत्तेः । **तथा** तेन प्रकारेण **भूताविशेषेऽपि** भूतत्वतदुपलक्षिततिरोहितचेतनत्वाभेदेऽपि स्थूलस्य इतरस्य च पृथिव्यादेः **भवद्भूतादिसंस्थितिः** भवन् भाविशरीरप्रज्ञादिस्तस्य वर्तमानसमीपत्वेन तत्प्रत्ययविषयत्वात्, भवश्च वर्तमानस्तत्रापि तच्छब्दस्य रूढेः अन्यथा भूतपूर्वशब्दवैयर्थ्याद् भूतपदादेव तदर्थप्रतिपत्तेः । अदृश्यमर्थं—**भूतः** साम्प्रतिकः पृथिव्यादिः **आदिः** कारणमभिव्यञ्जकत्वेन यस्य स भूतादिः भवन्नेव भूतादिस्तस्य **संस्थितिः** सूक्ष्महेतुकतयैव न स्थूलभस्मादिनिमित्ततयावस्थानम् । ततो न तत्रापीदं वक्तव्यम्—विवक्षितोऽपि न पृथिव्यादिस्तद्धेतुः भूतत्वात्तिरोभूतचेतनत्वाद्वा स्थूलभस्मादिवदिति, तस्यापि सामर्थ्यभावेतराभ्यामेव परिहारात् । भवतु भाविरूपतया तस्यैव जीवस्य न भूतरूपतयेति चेत्, न, तस्याप्यनुमानादवगमात्—साम्प्रतिकः शरीरादिरतीतकायपृथिव्यादिहेतुकः शरीरादित्वात् वृद्धशरीरादिवत् । तदाह—भवदित्यादि । व्याख्यानमत्र भवन् वर्तमानः स एव भूतादिरतीतकायपृथिव्यादिनिबन्धनस्तस्य **संस्थितिः** पूर्ववत् । तदेवं कायकारणत्वेऽपि चैतन्यस्याप्रतिक्षेप एव जीवस्य, तस्य कालत्रयभावित्वेनावस्थापनात्, न तावता तस्य तत्त्वमनाद्यनन्तत्वेन तदुपगमात्, तस्य च नानुमानं तस्यानन्तरपूर्वादावेव[1] पर्यवसानात्, ततोऽपि न (न) परस्य तस्यानुमितिरिति चेत्, न, एवमनवस्थाप्रसङ्गाद् विषयान्तरे चासञ्चारापत्तेः यावज्जीवं तत्रैवाभिनिवेशादिति चेत्, नन्वयं भवत एव पर्यनुयोगः पृथिव्यादेरनाद्यनन्तस्य प्रत्यक्षतोऽनवगमात्, तस्य सन्निहितार्थगोचरत्वेनैव प्रतीतेः, अनुमानस्य

१ स्थूलेतरस्य च आ०, ब०, प० । २ –नन्तर पूर्वादेव प– आ०, ब०, प० । ३ –' आदिदेन अनन्तरोत्तरस्य ग्रहणम् '– ता० टि० ।

चानिष्टेरिष्टस्याप्युक्तदोषानतिवृत्तेः । तदनेन सौगतस्याप्यनाद्यनन्तत्वपरिज्ञानाभावः प्रतिपत्तव्यः । स्याद्वादिनस्तु नायं दोषः कतिपयतदनुमानपर्यवसाने तद्बलादेव क्षयोपशमविशेषसापेक्षादित्थमनादिरनन्तश्चायं प्रबन्ध इति तर्काभिधानस्य प्रमाणस्योत्पत्तेः । ततो युक्तं कार्यकारणत्वेऽपि चैतन्यस्यानाद्यनन्तत्वावस्थितेः संसारमुक्ती तस्येति । कीदृशश्चायं चेतनो यस्य शरीरेणाभिव्यक्तिः ? तदात्मेति चेत् ; न; तस्य तद्भिन्नलक्षणत्वात् । ज्ञानदर्शनलक्षणो हि चेतनो न शरीरं तस्य रूपादिलक्षणत्वात् । न हि तद्भिन्नलक्षणस्य तत्रान्तर्भावः पृथिव्यादौ जलादेरपि तत्प्रसङ्गात् । तन्निश्चयेऽनिश्चयाच्च । अस्ति हि निश्चितेऽपि शरीरे [१]तद्विकले संशयः किमयं मूर्खः किं वा पण्डित इति, अन्यथा तत्परीक्षावैयर्थ्यापत्तेः । व्यभिचारी हेतुः शब्दादिधर्मिनिश्चयेऽपि अनिश्चितस्याऽनित्यत्वादेस्तदन्तर्भावादिति चेत् , न; तत्र कथञ्चिद्भेदस्यापि भावात् । [२]चेतनेऽप्येवमिति चेत् ; न; जैनोक्तौ "**परस्परविरुद्धयोरेकत्रासम्भवात्**" [ ] इति सूत्रेण स्वयं तद्वादस्य निराकरणात् । तत्र तदात्मनस्तेनाभिव्यक्तिः । तद्गुणस्येति चेत् , न; तदाश्रयत्वात्तद्गुणत्वे घटादौ प्रसङ्गात् , तस्य भूम्याश्रयत्वात् । सर्वदा तदभावान्नेति चेत् ; अवयविनि प्रसङ्गः; तस्य शश्वदवयवाश्रयत्वात् । क्रियावत्त्वादिना द्रव्यत्वान्नेति चेत् , न; उत्पन्नमात्रे क्रियावत्त्वादेरसम्भवात् । तत्कार्यत्वात्[३] , न हि कार्यकारणयोः समकालः प्रादुर्भावः सव्येतरगवयबालविलासिनीकुचचूचुकवत् परस्परमनुपकारात् । पश्चाद्भाविना च [४]तेन पूर्वं द्रव्यत्वम्[५]; पूर्वभाविना द्रव्याश्रयत्वादिना पश्चादपि गुणत्वस्यैव प्रसङ्गात् । कथञ्चैवं गन्धादेरपि गुणत्वम् ? गुणवत्त्वेन द्रव्यत्वस्यैवोपपत्तेः । अस्ति हि तत्र तद्वत्त्वम्, द्वौ गन्धौ षड्रसा इति सङ्ख्याभेदप्रतिपत्तेः । वक्ष्यति चैतत्—"**गुणानाम्**"[६]इत्यादिना । तन्न तद्गुणस्यापि तेनाभिव्यक्तिः । नापि तत्कार्यस्य; वक्ष्यमाणोत्तरत्वात् । कथमेवं गुणनिषेधे "**गुणवद्द्रव्यम्**" इत्युपपन्नं भवतोऽपीति चेत् ? न, परकीयस्य तल्लक्षणस्यैवातिव्याप्त्यादिना प्रतिषेधान्न गुणस्य । कथं तर्हि तदुपपत्तिरिति चेत् ? आह—

**तस्मादनेकरूपस्य कथञ्चिद्ग्रहणे पुनः ॥ ५९ ॥**
**तद्रूपं भेदमारोप्य गुण इत्यपि युज्यते ।** इति ।

**तस्मा**दुक्तान्न्यायाद**नेकरूपस्य** युगपज्ज्ञानदर्शनादिनानास्वभावस्य **क्रमेण** स्वापप्रबोधसुखदुःखादिभेदात्मनश्चेतनस्य **कथञ्चित्** केनचित् न सर्वात्मना प्रकारेण **ग्रहणे** प्रत्यक्षादिना परिच्छेदः । न हि तेन तस्य सर्वात्मना परिज्ञानं स्वापादौ प्रबोधादेस्तत्र च स्वापादेरप्रतिवेदनात् । न चैवं तस्यापि न प्रतिपत्तिः; तस्याः प्रत्यभिज्ञाबलेन व्यवस्थापितत्वात् । ततः कथञ्चिदेव ग्रहणम् , तस्मिन् सति, **पुनः** पश्चात् **तद्रूपं** गृहीतागृहीतरूपं **भेदं** नानात्वम् **आरोप्य** नयबुद्धयाभिसन्धाय **गुण इत्यपि** शब्दाद् गुणीत्यपि कल्पनं **युज्यते** उपपद्यते । सति भेदे चेतनात् स्वापादीनां ते तस्य गुणास्तदाश्रय-

१ शरीरभिन्ने चैतन्ये इत्यर्थः । २ चेतनेऽप्येवमि– आ०, ब०, प० । ३ अवयविकार्यत्वाद्गुणस्य अतो न गुणत्वमवयविनः । ४ गुणेन । ५ यदि स्यात् इति सम्बन्धः । ६ न्यायवि० श्लो० २३० । ७ न्यायवि० श्लो० ११७ ।

स्वात् स च गुणी तदधिकरणत्वादिति प्रतीतिबलादुपपन्नो गुणतद्वद्भाव[1] इत्यर्थः । गुणतद्वतोरेकान्तत[2] एव भेदो न कथञ्चित् तद्वादस्य विरोधादिदोषादिति चेत् ; अत्राह—

**यदि स्वभावाद्भावोऽयं भिन्नो भावः कथं भवेत् ? ॥ ६० ॥**
**अनवस्थानतोऽभेदे सकलग्रहणं भवेत् । इति ।**

अत्रायमभिप्रायो यथा गुणी गुणात् स च गुणिनो भिद्यते तथा यदि न स्वभावादपि ; नानेकान्तवादान्निर्मुक्तिः अन्यतो भेदस्य स्वतश्चाभेदस्य भावे तस्यावश्यम्भावात् । तथा गुणगुणिरूपतयैव वरं तदभ्युपगम. प्रतीतिभावादिति । भिद्यते चेत् ; उत्तरम्-**यदि** चेत् **स्वभावात्** स्वात्मनोऽयं भाव-श्चेतनोऽन्यो वा **भिन्नो** व्यतिरिक्तः **भावः कथं** नैव **भवेत्** खरशृङ्गादिवत् । भिन्नस्यापि पुनः स्वभावान्तरे-णावस्थितिरिति चेत् ; न ; ततोऽपि तद्भेदस्यावश्यम्भावात्, अन्यथा अनेकान्तवादादनिर्मुक्ते । पुनस्तद-न्तरेण तदवस्थाने चानवस्थानात् । तदेवोक्तम्-'**अनवस्थानत**' इति । भिन्नस्यापि स्वभावात् सत्तासम्ब-न्धेन सत्त्वम्, इत्यप्ययुक्तम् , अनवस्थानत एव स्वभावनिष्क्रान्ते सम्बन्धस्यैव निर्विषयत्वेनानवस्थितेः व्योमकुसुमादिवत्[3] । तन्न क्वचिदैकान्तिको भेद. प्रमाणबाधनात् । भवत्वभेद एवैकान्तिक इति चेत् , उत्तरम्- '**सकल**' इत्यादि । सकलस्य स्वरूपादेरिव पररूपादेरपि **ग्रहणं** तादात्म्येन भावस्य **भवेत्** कदा ? **अभेदे**, क्वचिदपि भेदस्याभावे ।

तदेवं सति चार्वाक[4] कथं भूतचतुष्टयम् ।
कणादः षट्पदार्थान् वा कथं नामावकल्पयेत् ॥ १४१८ ॥
प्रागेव ब्रह्मवादोऽपि प्रतिषिद्धः सविस्तरम् ।
भेदाभेदात्मकं वस्तु तत्प्रतीत्योपगम्यते ॥ १४१९ ॥
तच्चानेकात्मकं वस्तु गुणगुण्यादिरूपत. ।
संशयाद्यनुपलीढं (पालीढं) भवतीत्याह शास्त्रकृत् ॥ १४२० ॥

**तदनेकात्मकं तत्त्वं [ न हि ज्ञानात्मना क्वचित् ] ॥ ६१ ॥ इति ।**

स्पष्टमेतत्[5] । अत्रायं भाव.—स्याद्वादबलभाविभूतचातुर्विध्यमभ्युपगम्य तद्वादिनं प्रति गोरेवायं केवलमस्य विषाणे न स्त इत्युपप्लवमवकल्पयन् भूतवादी महाभूतेनैवाविष्टो न विशिष्यया मज्ञयाधिष्ठित इति । भवतु स एव वाद , तत्रैव चेतनो देहस्य गुण इति चेत्; अत्राह—

**न हि ज्ञानात्मना क्वचित् ॥**
**शरीरग्रहणं येन तद्गुणः [6]परिकल्प्यते । इति ।**

न हि नैव **ज्ञानात्मना** शुक्लाद्यात्मना पटग्रहणवत् **क्वचि**दन्तर्बहिर्वा **शरीरग्रहण**मस्ति

१ गुणवद्भाव आ०, ब०, प० २ । –कान्त एव आ०,ब०,प० । ३ –भवत् आ०,ब०,प० । ४–श्चैव तत् ता० । ५ त्वादी आ०, ब०,प० । ६ परिकल्पते आ०, ब०, प० ।

येन तथा तद्ग्रहणेन तद्गुणः [1]परिकल्प्यते ज्ञानात्मेति विभक्तिपरिणामेन सम्बन्धः। गुणद्रव्ययोः कथञ्चिदप्यभेदे द्रव्यवद् गुणस्यापि गुणवत्त्वप्रसङ्गः तद्धर्मानुपाते सत्येव तदभेदोपपत्तेरिति चेत्, न; अभेदार्पणया तथेष्टत्वात्। न चैवम् "द्रव्याश्रया निर्गुणा गुणाः" [ त० सू० ५।४० ] इति सूत्रविरोधः; तस्य भेदाभिसन्धिनिबन्धनत्वात्। वैशेषिकादेस्तु "अगुणवान् गुणः" इति[2] ब्रुवाणस्य न गन्धादेर्गुणत्वं गुणवत्त्वात्। तदेवाह–

**गुणानां गुणसम्बन्धो गन्धादेः सङ्ख्यया ग्रहात् ॥६२॥** इति।

सङ्ख्यायाश्च गुणत्वं गुणसूत्रे[3] [4]तत्त्वेन पाठादिति भावः। सत्यं सङ्ख्यावत्तस्य ग्रहः, न तु गुण एव न भवति [5]भाक्तत्वेनावस्तुसत्त्वात्, वस्तुसत्त्व एव तस्या गुण[6]त्वोपपत्तेरिति चेत्; अत्राह–

**तादात्म्यं केन वार्येत [ नोपचारप्रकल्पनम् ]।** इति।

स गुण आत्मा स्वभावो यस्य तस्य भावः तादात्म्यं गुणात्मत्व सङ्ख्याया इति षष्ठीपरिणामेन सम्बन्धः। केन न केनचित् वार्येत प्रतिक्षिप्येत। ननूक्तं भाक्तत्वेन तन्निवारणमिति चेत्, अत्राह–

**नोपचारप्रकल्पनम्।**

**अत्रान्यत्रापि तुल्यत्वात् [ आधारस्यैकरूपतः ] ॥६३॥** इति।

*अत्र अस्यां गन्धादिसङ्ख्यायाम् उपचारस्य* असदाकाराद्यारोपस्य *कल्पनं* समर्थनम्। कुत एतत्? *अन्यत्रापि* पृथिव्यादावपि *तुल्यत्वा*त्तत्कल्पनस्य। तथा च न क्वचित् सङ्ख्याया गुणत्वमिति मन्यते। नायं दोषः, तत्र वस्तुत एव तस्या भावात् निर्बाधप्रतिपत्तिविषयत्वादिति चेत्; अत्राह–अन्यत्रापि गन्धादिसङ्ख्यायामपि तुल्यत्वात्तद्विषयत्वस्य[7] बाधकस्य कदाचिदप्यप्रतिपत्तेः। वस्तुतो निर्गुण एव गन्धादिरद्रव्यत्वात् कर्मादिवत् इत्यनुमानं बाधकमिति चेत्; न, कर्मादावपि 'पञ्च कर्माणि द्विविधं सामान्यम्, एकः समवायो बहवो विशेषाः' इति[8] सङ्ख्यया गुणवत्त्वस्यैव प्रतीतेः, साध्यवैकल्याद्धेतोश्चासिद्धत्वात्, गुणवत्त्वे तस्यापि द्रव्यत्वात्। तदेवाद्रव्यत्वेनेति चेत्; न; 'अगुणवत्त्वाद् द्रव्यत्वम्, ततश्च तत्' इति परस्पराश्रयस्य स्पष्टत्वात्। तत सूक्तम् 'अन्यत्रापि' इत्यादि।

क चेयं प्रसिद्धा सङ्ख्या यस्या गन्धादावुपचारः? तदाधार इति चेत्, न; पृथिव्यादेरेकत्वानेकसङ्ख्याया एव तत्र तदापत्तेः। तदाह–

**आधारस्यैकरूपतः ॥**

**तत्रैकत्वं प्रसज्येत [ संख्यामात्रं यदीष्यते ]।** इति।

आधारस्य पृथिव्यादेः एकरूपतः एकत्वेन निरूपणात् तत्र गन्धादौ एकत्वं प्रसज्येत तथा च 'द्वौ गन्धौ' इत्यादि व्यपदेशाभाव इति मन्यते। भवत्वनाधारसङ्ख्यायास्तत्रोपचार इति चेत्, न, प्रत्यासत्तेस्तन्निबन्धनस्याभावात्। सङ्ख्यासामान्यस्याधारेतरगतस्योपचारस्तत्र तद्भावादिति

१ परिकल्प्यते आ०,ब०,प०। २ वैशे० सू० १।१।१६। ३ वैशे० सू० १।१।६। ४ संख्यात्वेन। ५ "औपचारिकत्वेन" –ता० टि०। ६ –णवत्त्वो– आ०, ब०,प०। ७ संख्यया आ०, ब०, प०। ८ –यस्य आ०, ब०,प०। ९ एव संख्यया गु– आ०, ब०, प०।

चेत्; तदेव तर्हि स्यात् कथं विशेषः ? सामान्येन तस्याक्षेपादिति चेत्; न; आधारेतरगतयोरेकत्वनानात्वयोर्युगपदाक्षेपेण गन्धादौ तद्व्यपदेशस्यापि युगपत्प्राप्तेः, ततो यदि तत्कल्पनं सामान्यमेव न विशेषस्तदेवाह–'सङ्ख्यामात्रं यदीष्यते' इति। यदि चेत्, इष्यते तत्कल्पनं सङ्ख्यैव विशेषरहिता तन्मात्रं स्यात्। न च तेन कल्पितेनापि प्रयोजनं स्यात्, [1]द्विव्यपदेशस्य तस्मादनुपपत्तेः। उपचरितत्वे च गन्धादौ सङ्ख्यायास्तद्वदेव पृथक्त्वस्यापि स्यात्, सङ्ख्यावत्तस्यापि गुणत्वेन वस्तुतस्तत्रासम्भवात्। ततः किमिति चेत् ? आह–

नानात्मविभ्रमादेवं न पृथग्गुणिनो गुणाः ॥६४॥ इति।

नानात्मा नानास्वभावः पृथक्त्वमिति यावत्, तस्य विभ्रमः कल्पितत्वं तस्मात्। एवं गन्धादिसङ्ख्यावत्। न पृथक् न भिन्ना गुणिनः पृथिव्यादेर्गुणाः रूपादयः स्युः। उपलक्षणमिदम्, तेन कर्मसामान्यादयोऽपि तद्वतो न पृथगिति प्रतिपत्तव्यम्, वस्तुतः पृथक्त्वाभावे तदनुपपत्तेः। [2]तदभावेऽप्याकारभेदात्ते ततः पृथगिति चेत्; एतदेवाह–

प्रसक्ता रूपभेदाच्चेत् [ भेदो नानात्वमुच्यते ]। इति।

रूपभेदात् स्वाकारभेदात्ते ततः पृथक् प्रसक्ताः प्रवृत्ताः चेत् यदि। तत्रोत्तरमाह – 'भेदो नानात्वमुच्यते' इति। भेद इत्यपि नानात्वं पृथक्त्वमेव न स्वरूपवैलक्षण्यम् उच्यते, अन्यथा पृथिव्यादिष्वपि पृथक्त्वकल्पनावैफल्यप्रसङ्गात्। ततो गुणादीनां तद्वतो भेदमिच्छता पृथक्त्वं तत्र तात्त्विकमेवाङ्गीकर्तव्यम् इत्यव्यापकमेव "अगुणवान्" इति[3] गुणलक्षणम्। तदनेन "गुणवत्" इति [4]द्रव्यलक्षणस्यातिव्यापकत्वमुक्तं भवति गन्धादेरपि गुणवत्त्वेन तत्त्वापत्तेः, समवायस्य चैकत्वेन तस्यापि तद्वत्त्वात्। नास्त्येव तत्रैकत्वं केवलं भावसादृश्यात्तत्र तद्व्यवहारः। तदुक्तम्–"तत्त्वं भावेन व्याख्यातम्" [ वैशे० ७।२।२८ ] इति, तदेवाह–

एकता भावसाम्याच्चेत् [ उपचारस्तथा भवेत् ] ॥६५॥ इति।

भावः सत्त्वं तेन साम्यं साधर्म्यं सत्सदितिवत् समवायः समवाय इत्यविशिष्टज्ञानविषयत्वं तस्मात्, एकता एकत्वं समवायस्येति शेषः। 'चेत्' इति पराकूतद्योतने। तत्रोत्तरमाह–'उपचारस्तथा भवेत्' इति। तथा तेन तत्साम्यप्रकारेणोपचार एकत्वस्य भवेत् सादृश्यगुणोपनीतत्वात् माणवके [6]सिंहत्ववत्। तथा च तत्र नानात्वमेव स्यात्। वस्तुत एकत्वाभावे तस्यासम्भवात्। यदि च, तत्र गुणवत्त्वभयात्र वास्तवमेकत्वं पृथक्त्वमपि न भवेत्, तदपि कुतश्चित् कार्यविशेषादेरुपचरितमेव स्यात्। तदेवाह–

भेदेऽपि [ वस्तुरूपत्वात् न चेदन्यत्र तत्समम् ]। इति।

भेदः समवायस्य तदन्यत्वान्नानात्वं तस्मिन्नपि न केवलं तदेकत्व एव, उपचारः तथा

---

१ तदा भावे– आ०, ब०, प०। २ पृथक्त्वाभावेऽपि। ३ वैशे० सू० १।१।१६। ४ "क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम्"–वैशे० सू० १।१।१५। ५ समवायें। ६ सिंहत्ववत् आ०, ब०, प०।

भवेत्' इति सम्बन्धः । तथा च तस्य वस्तुतो भावादप्यभेदात् न युक्तमेतत्–'एकता भावसाम्यात्' इति, साम्यस्य भेदे सत्येवोपपत्तेः[1] । इतरः प्राह–'वस्तुरूपत्वान्न चेत्' इति । वस्तुनः समवायस्य रूपत्वात् स्वभावत्वाद्भेदस्य न चेत् न यदि तत्रोपचार इति; तत्राह–'अन्यत्र तत्समम्' इति । अन्यत्र तदेकत्वे तत् वस्तुरूपत्वं समं सदृशम् तस्यापि निरवद्यप्रत्ययवेद्यतया स्वयमभ्यनुज्ञानात्, तथा च सिद्धमेकत्वादिना तस्य गुणवत्त्वम् । [2]अर्थान्तरत्व एव स गुणो न वस्तुरूपत्वे इति चेत्; आह–'अन्यत्र' इत्यादि । अन्यत्र पृथिव्यादौ तत् वस्तुरूपत्वमेकत्वादेः समं तत्रापि तदपरस्य प्रमाणतोऽनवगमादिति न कश्चिदेकत्वादिर्गुणः[3] स्यात् । अथवा, 'न पृथग्गुणिनो गुणाः' इत्युक्तं[4] तदेवाभ्युपगमात् वदतः सङ्ग्रहवादिनो मतम् 'एकता' इत्यादिना आशङ्क्य 'उपचारः' इत्यादिनोत्तरमाह । न हि भावसादृश्यात् सन्मात्राविशेषादेकता सर्वगतानामुपचार एव तथा भवेत् सन्मात्रस्यापि सर्वव्यक्तिष्वेकस्याभावात् उपचारत एव तदेकत्वस्यावस्थापितत्वादिति मन्यते । हेत्वन्तरमाह–'भेदेऽपि' इत्यादि । न हि भेदस्यापि वस्तुरूपत्वे वस्तुतस्तदेकत्वमुपपन्नम्, भेदो न वस्तुरूपः तत्त्वात् मरीचिकातोयवदिति चेत्, तदेवाह–'न चेत्' इति । न यदि भेदे वस्तुरूपत्वमिति । तत्रोत्तरम्–अन्यत्र अभेदे तत् वस्तुरूपत्वं नेति समम्–सोऽपि[5] न तद्रूपः तत्त्वात् लूनपुनर्जातकेशादिभेदवदिति अनुमितिभावात् । भवतु बाधितस्य तस्यातद्रूपत्वं नापरस्य । न हि [6]बाधवतो धर्मस्तदन्यत्र योजनमर्हत्यतिप्रसङ्गादिति चेत्; न, भेदेऽपि समानत्वात् । अत एवोक्तम्–'अन्यत्र तत् समम्' इति । तन्न गुणगुण्यादीनामपृथक्त्वम् ।

भवतु पृथक्त्वमेव प्रतिभासादिभेदादिति चेत ; अत्राह–

**एतेन भिन्नविज्ञानग्रहणादिकथा गता ॥६६॥** इति ।

**भिन्नविज्ञानग्रहणं** भिन्नप्रतिभासावलम्बनम् **आदि**शब्दाद् भिन्नाभिधानकारणादि तस्य **कथा गता** न सम्भवति इत्यवगता । केन ? **एतेन** अनन्तरन्यायेन । विज्ञानादावपि भेदस्य सत्येव पृथक्त्वे सम्भवात् , तस्य च निराकृतत्वात् । तत्रापि भिन्नविज्ञानग्रहणादिना भेदकल्पनायामनवस्थापत्तेः । तन्न गुणो नाम कश्चिन्निश्चितो यतश्चेतनोऽपि गुणः स्यात् ।

मा भूद्धर्मस्तु तर्हि[7] तस्य[8] स्यात् तदवष्टम्भेनावस्थानाच्चित्रवत् कुड्यस्य, ततो यथा कुड्यापाये न चित्रं तत्र तिष्ठति नाप्यन्यत्र गच्छति नश्यत्येव परं तथा शरीरापाये चेतनोऽपीति मन्यमानस्य मतमुपदर्शयन्नाह–

**जीवच्छरीरधर्मोऽस्तु चैतन्यं व्यपदेशतः ।**
**यथाऽचैतन्यमन्यत्रेत्यपरः प्रतिपन्नवान् ॥६७॥** इति ।

**जीवतः** प्राणान् धारयतः **शरीरस्य धर्मोऽस्तु चैतन्यं व्यपदेशतः** 'सचैतन्यमिदं

---

१ –त्तेरिति तत्र प्रा– आ०, ब०, प० । २ अनर्थान्त–आ०, ब०, प० । ३ –दिनिर्गु–आ०, ब०, प० । ४ –क्तेन तदेवाभ्युपगमात् ततः आ०, ब०, प० । ५ अभेदोऽपि । ६ बाधावतो आ०, ब०, प० । ७ तर्हि स्यात आ०, ब०, प० । ८ "शरीरस्य" – ता० टि० ।

जीवेच्छरीरम्' इत्यभिधानतो यथा येन व्यपदेशप्रकारेण अचैतन्य चित्तादि अन्यत्र गुडादौ धर्म इति एवम् अपर चार्वाक प्रतिपन्नवान् । तत्रोत्तरमाह–

**अप्रत्यक्षेऽपि देहेऽस्मिन् स्वतन्त्रमवभासनात् ।**
**प्रत्यक्षं तद्गुणो ज्ञानं नेति सन्तः प्रचक्षते ॥६८॥** इति ।

पटलपरिपिहितलोचनदशायाम् अप्रत्यक्षेऽपि विस्पष्टप्रतिभासाविषयेऽपि न केवल विपुलनिरन्तरान्धकारकवलितकलेवरदशायां प्रत्यक्षेऽपीत्यपिशब्दः । कस्मिन् ? देहे शरीरे अस्मिन् आत्मीये प्रतीयमाने प्रत्यक्ष स्पष्टाभास ज्ञानम् । कुत एतत् ? स्वतन्त्र यथा भवति तथा अवभासनात् । तत् किम् ? तद्गुणः तस्य देह[स्य] गुणस्तत्रात्रैव नेति सन्तः प्रचक्षते कथयन्ति । नहि तस्मिन्नप्रत्यक्षेऽपि प्रत्यक्षस्य तद्गुणत्व रूपादेराकाशगुणत्वप्रसङ्गात् । शब्दस्य कथं तादृशस्याकाशगुणत्वमिति चेत् ? न, तस्य निषेधात् । स्पर्शस्य वायुगुणत्व कथमिति चेत् ? न; स्पर्शविशेषस्यैव वायुत्वात्, तस्य च प्रत्यक्षत्वात् । तस्य तदभावान्तरत्वे गुणगुणिभावाभावस्य निवेदनात् । तन्न देहगुणत्व ज्ञानस्य । तत्र किम् ? इत्याह–

**तद्दृष्टहानिरन्येषामदृष्टपरिकल्पना ।** इति ।

तत् तस्मात् तस्य गुणत्वाभावात् अन्येषां लोकायतिकानां दृष्टहानिः प्रत्यक्षवेद्यस्य स्वतन्त्रज्ञानस्य प्रतिक्षेपात्, अदृष्टपरिकल्पना परतन्त्रस्य तस्यादृष्टस्यैवोपगमात् । तदेवाह–

**दृष्टातन्त्र्यदृष्टेष्टं नानामद्गुणभावित ॥६९॥** इति ।

दृश्यते हि स्वातन्त्र्य ज्ञानस्य । नहि [4]देहभूताभूतसम्बन्धितया गुणभाव । ततो दृष्टहानिरदृष्टकल्पना चान्येषामिति । भवतु तस्य तदात्मत्व गुणत्व तद्धर्मत्व वा, तथापि न संसारमोक्षयोरभाव इत्याह–

**तत्सारतरभूतानि कायापायेऽपि कानिचित् ।** इति ।

तदित्यत्र अपिशब्दो द्रष्टव्य । तदयमर्थः—तदपि तस्य तद्गुणत्वादिप्रकारेणापि 'जीव. संसारमुक्तिभाग्' इति दूरादाकृष्य सम्बन्धनीयम् । कथमेतत् ? देहपाते सह तेन तस्यापि प्रलयादिति चेत् ? तन्न, यत कायापायेऽपि न केवलं तद्भावे कानिचित् न सर्वाणि शरीरान्तर परिणामभाञ्जि भवन्ति पूर्वोक्तन्यायात् । कीदृशानि कानिचित्तानीति चेत् ? सारतरभूतानि तैरपि तन्यस्य प्रागभिव्यक्तत्वात् तेभ्योऽपि साराणि पुनरप्यभिव्यञ्जकत्वात् भूतानि सूक्ष्मरूपाणि पृथिव्यादीनि, ततो निषिद्धमेतत्–"[6]यावज्जीवेत् सुखं जीवेत्" [ ] इत्यादि । ततस्तस्य तदात्मत्वादिकल्पन प्रयासमात्रमेव चार्वाकस्य संसारमोक्षयोस्तदर्थस्यानुष्ठानस्य च तथापि निषेधाभावादिति मन्यते । तस्मादित्याद्यस्य व्याख्यानश्लोका यथेत्यादिना व्यवस्थापितस्यैवात्मनः तैर्व्याख्यानात् ।

---

१ –नारे– आ०, ब०, प० । २ –शक्ति– आ०, ब०, प० । ३ –यावेति आ० ब०, प० । ४ देहभूतसम्ब– आ०, ब०, प० । ५ ज्ञानस्य । ६ यावज्जीव सुखं आ०, ब०, प० । "यावज्जीवेत् सुखं जीवेन्नास्ति मृत्योरगोचर । भस्मीभूतस्य देहस्य पुनरागमन कुत ॥"– ता० टि० ।




मतान्तरमुपदर्शयति दूषयितुम्—

**कार्यकारणयोर्बुद्धिकाययोस्तन्निवृत्तितः ॥७०॥**
**कार्याभावगतेर्नास्ति संसार इति कश्चन । इति ।**

कारणं हि कायो बुद्धेर्बुद्धिस्तु तस्य कार्यं तद्भाव एव भावात्, धूमादेरपि तत एवाग्निकार्यत्वात् । न च तत्कार्यमन्यतोऽपि यतस्तदभावेऽपि स्यात् । स्यादेव शालूकवत् । शालूक हि शालूकादिव गोमयादपि दृश्यते इति चेत्; न, तस्य तज्जन्मनः तदन्यतो वैलक्षण्यात् । बुद्धिरपि विलक्षणा तदन्यतः स्यादिति चेत्; न, तस्या एवाप्रतिपत्तेः । शालूकवत् सम्भाव्यत इति चेत्; धूमोऽपि पर्वतगतः किन्न तथा सम्भाव्येत ? दृष्टसदृशतयैव तस्य प्रतीतेरिति चेत्, न, बुद्धावपि समानत्वात् । सादृश्येव तदन्यतोऽपि किन्न भवतीति धूमोऽपि किन्न स्यात् ? तत्रैव तद्भावभावस्य नियमात्, अन्यत्राभावात्, भावे सोऽपि पावक एव स्यात् तन्नियमाधिष्ठितस्यैव तत्त्वात् । तदुक्तम् —

"अग्निस्वभावः शक्रस्य मूर्धा यद्यग्निरेव सः ।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत् ॥" [ प्र० वा० ३।३५ ] इति ।

अन्यतोऽपि तस्य भावे निर्हेतुकत्वमेव स्यात् तन्नियमादन्यस्य सहेतुकत्वनिबन्धनस्याभावात्, तस्य चातथात्वेनावस्थापनात् । तदप्युक्तम्—

"धूमः कार्यं हुतभुजः कार्यधर्मानुवृत्तितः ।
सम्भवस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥" [ प्र० वा० ३।३३ ]

इति चेत्; न, बुद्धावपि तुल्यत्वात् । तथा हि—

कायस्वभावो यद्यन्यः काय एव तथा हि सः ।
अथाकायस्वभावोऽसौ बुद्धिस्तत्र कथं भवेत् ॥१४२१॥
बुद्धिः कार्यं हि कायस्य कायधर्मानुवृत्तितः ।
साऽसती तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥१४२२॥

तत कायस्यैव कार्यं बुद्धिः । तथा च **कार्यकारणयोर्बुद्धिकाययोः** मध्ये तस्य कारणस्य **निवृत्तितो** विनिपातात् **नास्ति संसारः** कायान्तरसञ्चारः । कुतो नास्ति ? बुद्धेरवस्थानात् तस्या एव तदुपगमादिति चेत्; न; **कार्यस्य** बुद्धेः **अभावगतेः** अभावप्राप्तेरभावनिर्णयाद्वा । न हि कारणनिवृत्तौ कार्यस्यावस्थानमतत्कार्यत्वापत्तेः । **इति** एवं **कश्चन** चार्वाकविशेषोऽविद्धकर्णः । तत्रोत्तरमाह—

**तस्यापि देहाद्यनुत्पत्तिप्रसङ्गः [ अन्योन्यसंश्रयात् ] ॥७१॥** इति ।

**तस्याप्यविद्धकर्णस्यापि** न केवलं पुरन्दरादेः **देहानुत्पत्तिः** देहादनुत्पत्तिः पर्युदासेन तदन्यस्मादुत्पत्तिर्बुद्धेस्तस्याः **प्रसङ्गः** प्राप्तिः । तथा हि—यथा निवृत्तेऽपि पावके धूमो धूमादेवोत्-

१ "अग्नेः सकाशादन्यत उत्पत्तिप्रकारेण"– ता० टि० । २ –नयैतस्य ता० । ३ अग्ने स्व– आ०, ब०, प० ।

परिणामे[1] तथा भासनमुपपन्नं मृत्पिण्डशिवकयो परस्पराभेदेनैव प्रतिभासावलोकनात् । [2]पिण्डशिवकयोः क्रमेण रूपभेदेन प्रतिभासेऽपि परिणामसद्भावात् व्यभिचार इति चेत्; न; युगपद्ग्रहणेन तद्व्यवच्छेदात् बहिः शरीरमन्तर्बुद्धिरिति देशभेदेन प्रतिभासनाच्च न तयोः परिणामः । यथेत्यादिकमुभयत्रापि दृष्टान्तः । स्पष्टश्चायम् । अतश्च न तयोः परिणाम इत्याह—

प्रमितेऽप्यप्रमेयत्वाद्विकृतेरविकारिणि[3] ।
[4]निर्ह्रासातिशयाभावान्निर्ह्रासातिशये धियः ॥७५॥
बलीयस्यबलीयस्त्वाद्विपरीते विपर्ययात् ।
काये [तस्मान्न ते तस्य परिणामाः सुखादयः ]॥७६॥ इति ।

प्रमितेऽपि परेण प्रत्यक्षप्रतिपन्नेऽपि काये अप्रमेयत्वात् अपरिच्छेद्यत्वात् धियो बुद्धेः नासौ तस्य विवर्तः । न हि विवर्तिनि प्रतिपत्तौ विवर्तस्याप्रतिपत्तिः स्वर्णप्रतिपत्तौ रुचकादेरवश्यंतया प्रतिपत्तेः । अविकारिणि विकारविकले काये विकृतेर्विकरणाच्च । न ह्युपादानविकारमन्तरेण तदुपादेयस्य विकारः, सत्येव कुतश्चित्तन्तुविकारे पटविकारस्योपलम्भात् । न चैवमत्र, शास्त्रश्रवणादिना बुद्धिविकारस्य अविकृत एव शरीरे दर्शनात् । विकृतेऽपि तस्मिन् दृश्यत एव तद्विकारो मृष्टेतराहाराभ्यां देहस्यानुग्रहोपघातयो बुद्धावपि प्रीतिपरितापयोरुपलम्भादिति चेत्; न; सौमनस्यदौर्मनस्याभ्यामेव तद्भावात्, तदभावे सतोरपि तयोस्तदप्रतिपत्तेः । विपर्ययदर्शनाच्च, दृश्यते हि तदनुगृहीतदेहस्यापि इष्टनाशे परितापः, तद्विपरीतस्य चाभ्यस्तशास्त्रहृदयनिर्णयादपरिमिता प्रीतिः । कथं तर्हि चक्षुरादिविकारे तद्विकारः ? दृश्यते हि काचकामलादिना विकृते चक्षुरादौ बुद्धेरपि मन्दप्रतिभासविभ्रमादिरूपो विकार इति चेत्; न; तस्यापि चित्तविकारादेव शक्तिवैगुण्यलक्षणादुत्पत्तेः, प्रगुणशक्तिकत्वे चित्तस्य सत्यपि तद्विकारे सत्यस्वप्नवदवितथस्पष्टावभाससंवित्तेरप्रतिषेधात् । किमिदानीं विकृतेन चक्षुरादिनेति चेत् ? न; तस्य तत्र कारणमात्रत्वात् अविकृतवत् । न हि तस्य[5] तन्मात्रत्वं प्रतिषिध्यते, शरीरवदुपादानत्वस्यैव प्रतिक्षेपात् । अनुपादानत्वे कथं तन्निवृत्त्या बुद्धिनिवृत्तिरिति चेत् ? न; तया गवाक्षनिवृत्तिवत् बुद्धेः रूपाद्यभिमुख्यस्यैव विवर्तनात् स्वरूपस्य, अन्यत्र वृत्तिदर्शनात् । अन्यैव सा बुद्धिरिति चेत्; कथमेवं प्रतिविषयं बुद्धिभेदे कर्कटीभक्षणादौ 'रूपादिकं युगपदहमेवानुभवामि' 'य एव रूपमुपलब्धः स एवाधुना स्पर्शादिकमुपलभे' इति च प्रतिसन्धानं सन्तानान्तरवद्भेदे तदनुपपत्तेः । तदपि विकल्पादेव कुतश्चिन्नेन्द्रियबुद्धीनामन्योऽन्यतादात्म्यात्, प्रतिभासभेदेन तदनुपपत्तेरिति चेत्; न; विकल्पकेऽपि तदविशेषात् परस्परविकल्पलक्षणरूपादिपरामर्शभेदाधिष्ठानत्वात् । तथापि तदेकत्वे तद्बुद्धीनामपि स्यादविशेषात् । ततो युक्तं विकृतेरविकारिणीति । तथा निर्ह्रासातिशये शरीरस्य व्याध्यादिरसायनादिना क्षयपरिपोषणप्रकर्षे धियस्तदतिशयाभावाच्च नासौ तस्य परिणामः । न हि शरीरस्य निर्ह्रासो बुद्धिमन्वेति पुष्टिर्वा, [6]कृशतरशरीराणामपि सातिश-

१ परिणामेन ब०, प० । २ पण्डशिव– ब०, प० । ३ तुलना— तत्त्वसं० का० १९३४ । तत्त्वसं०प० पृ० ५२७ । ४ तुलना– प्र० वा० २।७२ । अष्टश० टि०पृ० १६३ । ५ चक्षुरादेः । ६ कृशतर– ब०, वि०, [illegible]

यप्रज्ञानां महाकायानामपि मतङ्गजादीनामल्पप्रज्ञानामवलोकनात्। **बलीयसि** च करिवराहादीनां काये तस्या **अबलीयस्त्वात्** **विपरीते** चाबलीयसि स्त्रीबालादीनां **विपर्ययात्** बलीयस्त्वात् स्थिति-सारत्वात् न तस्यास्तद्विवर्तत्वम्। उपसंहरन्नाह–**तस्मान्न ते तस्य परिणामाः सुखादयः** इति। स्वपदव्याख्यातमेतत्। यत्रापि परिणामतद्वद्भावो घटकपालादौ तत्रापि प्रमितेऽपीत्यादि विद्यते ततो व्यभिचार इति चेत्; आह–

**एतदत्र घटादीनां न तु जातुचिदीक्ष्यते।** इति।

**एतत्** प्रमितेऽपीत्यादि **अत्र** लोके **घटादीनां** परिणामतद्वद्भावेन प्रसिद्धानां **न तु** नैव **जातुचित्** कदाचित् **ईक्ष्यते** दृश्यते। ततो न व्यभिचार इति भावः।

अथ गुणदूषणमत्राप्यतिदिशन्नाह–

**तुल्यश्च गुणपक्षेण [ तत्तथा परिणामतः ] ॥७७॥** इति।

सदृशश्चायं **गुणपक्षेण** परिणामपक्षस्ततो यथा तत्रोक्तं 'न हि ज्ञानात्मना' इत्यादि तथा अत्रापि वक्तव्यम्–'न हि ज्ञानात्मना क्वचित् शरीरग्रहणं येन तद्विवर्तः प्रकल्प्यताम्।' इति। निगमयति–'तत्तथाऽपरिणामतः' इति। तत् तस्मात् **अपरिणामतो** धियः कायविवर्तत्वाभावात् **सा तथा** तेन 'संसरेत्' इत्यादिना प्रकारेण भवति। किञ्च, परलोकिनमात्मानमनिच्छतश्चार्वाकस्य कुत इदं संसारवैचित्र्यम्–कस्यचिद्विकृतमिन्द्रियं दुर्भगसंस्थानं संहननं दुःखप्रचुरं जीवनम् अन्यस्या-विकलं चक्षुरादि मनोनयनाभिरामं शरीरसंस्थानमभिनन्दनीयञ्च जीवनम् अपरस्य तदुभयप्रकार-शबलमिति? न चेदं दृष्टादेव कारणात्, सर्वत्र व्यभिचारात्, इष्टाहारविहारसेवाकृत्यादौ समानेऽपि क्वचिदिन्द्रियविकारादेरन्यत्र तद्विपर्ययस्य च प्रतिपत्तेः। स्वभावत एव [1]सत्त्वज्ञेयत्वादेर्जलबुद्बुद-वदिति चेत्; कस्यासौ स्वभावः? तद्वैचित्र्यस्येति चेत्; न; अनुत्पन्नस्य तदभावात्। उत्पन्नस्येति चेत्; न; उत्पत्तौ स्वभावस्ततश्चोत्पत्तिरिति परस्पराश्रयात्। तत्कारणस्य पृथिव्यादेरिति चेत्; न, ततोऽप्येकस्वभावादेकप्रकारस्यैव निकायस्योत्पत्तिप्रसङ्गात्। न चैवम्, वरिश्र(पा[2]लायणाशुद्धाद-म्भस परिवासितारकस्यचिदारक्तशिरसोऽपरस्य [3]पीतमस्तकस्यान्यस्याल्पवपुषोऽपरस्य विपुल-विग्रहस्य जीवनिवहस्य प्रादुर्भावप्रतिपत्तेः। न ह्येकस्वभावात् पद्मादिबीजाद्विचित्रस्तत्प्रसवो दृष्टः। नापि तत्र स्वभावभेदः; प्रत्यक्षतोऽप्रतिपत्तेः। तद्वैचित्र्यादेवानुमीयत इति चेत्; न; तस्यापि सम्भूय इति [4]कार्यमुपयोगे तदाकारवर्णमाधुर्यस्याबुद्धिगोचरस्य प्रसङ्गात्। कस्यचित्क्वचिद्व्यापारे निया-मकं वक्तव्यं तदन्तरेण तदसम्भवात्। तद्गत एवान्यस्तद्भेदो नियामक इति चेत्; न, तत्राप्यन्यनन्त-द्भेदान्नियमकल्पनायामनवस्थानदोषात्। नायं दोषः, पूर्वपूर्वस्मादुत्तरोत्तरस्य नियमादनादित्वात् तत्प्रबन्धस्येति चेत्; आगतं तर्हि तद्विषयस्य जीवस्याप्यनादित्वं विषयिणस्तस्य तदभावेऽनुपपत्तेरिति सिद्धो नः सिद्धान्तः–जीवस्य परलोकिनोऽप्रतिक्षेपात्, तस्य च कर्मण एव तद्वैचित्र्यात्, तदनुबन्धिनः

१ सत्त्वज्ञेयत्वादेः' इति पदं मन्दतादायातमिति भाति। २ परिभवणाशु– आ०, ब०, प०। वर्षापतितात् शुद्धाज्जलात्। ३ तुलना– "तथाहि रक्तशिरसः पीनकायादयः परे। जलादिमाग्निनो दृष्टाः स भ्रमः कुतो भवेत्॥" –प्र० वार्तिकाल० १।६७। ४ मिलित्वा कार्ये प्रयुपयोगे।

पृथिव्यादिस्वभावभेदप्रबन्धस्यैव कर्मत्वेनास्माभिरभिधानात् । एतदेवाह—

**अक्षादीनां विकारोऽयमात्मकर्मफलं भवेत् ।**
**अन्यथा नियमायोगात् [ प्रतीतेरपलापतः ] ॥७८॥** इति ।

अक्षाणामिन्द्रियाणाम् आदिशब्दः पाणिपादादीनां विकारो मन्दाविलकुणिखञ्जादिः अयं प्रतीयमानः । उपलक्षितमिदं तेन लाभालाभसुखदुःखादिरपि आत्मनो यत् कर्म तस्य फलं कार्यं भवेत् । अन्यथा तत्फलत्वाभावप्रकारेण नियमस्य कस्यचिदेव कश्चित् तद्विकारादिः न सर्वस्येत्य-वधारणस्य अयोगात् सर्वस्यापि तत्प्राप्तेः ।

अत्रैव हेत्वन्तरमाह— 'प्रतीतेरपलापतः' इति । प्रतीतिः कर्मविषया आनुमानिकी बुद्धिः तस्या अपलापतोऽपह्नवाच्च स तत्फलमिति सम्बन्धः । तथाहि[1] तदहर्जातस्य तद्विकारादिः जीव-शरीरव्यतिरिक्तजीवसम्बन्ध( द्ध )द्रव्यान्तरपूर्वकः तत्त्वात् विषमाहाराद्युपयोगजनिततद्विकारवत् । न मन्त्रादिनिमित्तेन तेन व्यभिचार, तस्यापि द्रव्यान्तरसम्बन्धे सत्येवोपपत्तेः, अन्यथा न कश्चित्तद्व्य-भिचारः स्यात् । न चैवं मन्त्रादेर्वैयर्थ्यम्, तस्य तत्सहकारित्वात्[2] कृष्यादिवत् । यच्च तद् द्रव्यान्तरं तत्कर्म शुभमशुभञ्चेति । कथमियमानुमानिकी तत्प्रतीतिः स्वाभाविकतद्विकारवादिभिर्नापलप्येत ? न च तदपलापे[3] क्षणमपि जीवनम्, पृथिव्यादेरप्यव्यवस्थितिप्रसङ्गात् । ननु यदि तस्य पृथिव्यादि-हेतुत्वं तदोत्तनीया कर्मफलत्वम् । तदेव तु मा भूदिति चेत्; किन्निमित्तं तर्हि तत् स्यात्, कार्यस्या-निमित्तस्याभावात् ? कार्यमपि तन्नेति चेत् ; कथं देशादिनियमः ? स्वभावादेव मयूरचित्रादिवदिति चेत् ; न, तस्यापि मयूरादिहेतोरेव भावात्, तदन्वयव्यतिरेकनियमात्[4] , तल्लक्षणत्वादन्यत्रापि हेतुफलभावस्य । कथं पुनश्चित्रकारादिनिमित्तं तत् अन्यत इति चेत् ? न, वैलक्षण्यात् । विलक्षणं हि चित्रकारादिनिमित्ताव ततो मयूरचित्रादि, तत् कथं तस्य तदन्यतो भावः ? स्वाभाविकत्वे वा चैतन्यस्यापि निषिद्धमेतत्—"तेभ्यश्चैतन्यम्" [ ] इति । तस्मात् स्वभावकल्पनाया सामर्थ्यस्य युक्तिरूपस्याभावात् कर्मफलमेव तद्वैचित्र्यम् । तदेवाह—

**कल्पनायामसामर्थ्यात्** इति ।

तदेवं तदहर्जातस्य परलोकित्वे कर्मसिद्धया[5] सिद्धे यत् सिद्धं तदाह—

**ततस्तद्विकृते ऋते ।**
**पारम्पर्येण साक्षाच्च नास्ति विज्ञानविक्रिया ॥७९॥** इति ।

ततस्तस्माद्विज्ञानस्य रूपादिविषयस्य विक्रिया मन्दाविलत्वादिः, उपलक्षणमिदं तेन प्रीतिपरितापादिश्च नास्ति न भवति । कुतः ? तद्विकृतेः तस्यात्मनो विकृतेर्विकाराद् दौर्मनस्यादि-लक्षणात् ऋते विना । तस्यां तु भवति । तस्याः कर्मफलत्वात् कथं तद्विक्रियातो भाव इति चेत् ? उक्तमुत्तरम्—पारम्पर्येण इति । तात्पर्यमत्र—कर्मापि तद्विकृतेरेव विज्ञानविक्रियादिनिबन्धनत्वात् उक्तमुत्तरम्—पारम्पर्येण इति ।

---

१ तथापि आ०, ब०, प० । २ –त् स्वकृष्या– आ०, ब०, प० । ३ अनुमानापलापे ।
४ तयोत– प० । तयोत– ध०, आ० । ५ धर्मसि– ता० ।

मदिरादिवत् । प्रसिद्धं हि मदिरादेस्तदभिलाषादिपुरुषविकारोपनिबन्धनत्वमिति न वैकल्यं साध्यस्य । नापि साधनस्य; ततो विज्ञानविकारादिप्रतिपत्तेः । ततः पारम्पर्येण तद्विकृतेरेव सा इति, ततः सिद्धा तदहर्जातस्य तस्य पौर्वभविकी विकृतिः इह तदप्रतिपत्तेरिति । न केवलं पारम्पर्यात् अपि तु साक्षाच्च अव्यवधानाच्च । तस्या ऋते न तद्विक्रिया । शोकविषादादेः साक्षादपि तस्याः प्रतिपत्तेः सदापि कर्मभावात् । ततः सा किन्नेति चेत् ? क एवमाह–नेति, शोकादेरपि कर्मसहकारिण एव भावात् । तन्न शरीरपरतन्त्रोऽपि जीवः तदुपरमेऽप्यवस्थानात् तदहर्जातवत् । कुतो वा तस्य तत्परतन्त्रत्वम् ? तद्धेतुत्वादिति चेत्; न; ततः केवलादुत्पत्तौ मृतेऽपि प्रसङ्गात् । इन्द्रियसहायादिति चेत्; इन्द्रियाणामपि समुदायेन तत्सहायत्वम्, प्रत्येकं वा ? प्रथमविकल्पं निराकुर्वन्नाह—

**कारणं नाक्षसङ्घातस्तत्प्रत्येकं विना भवात् ।**
**विकल्पानां [ विशेषाच्च तत्त्वद्गति विरोधतः ] ॥८०॥** इति ।

अक्षाणां चक्षुरादीनां सङ्घातः समुदायः शरीरसहकारित्वेन न कारणम् । केषाम् ? विकल्पानां मनोविज्ञानानाम् । तेषामेवान्वितक्रमाणां जीवत्वाज्जीवस्येति गम्यते । कुतो न कारणम् ? तत्प्रत्येकं तद् अक्षं प्रत्येकम् एकं विना अन्तरेण भवात् उत्पत्तेर्विकल्पानाम् । नहि सङ्घातकार्यं तदभावे युक्तम् । न च सङ्घातिनामन्यतमापाये सङ्घातः, तस्य तत्साकल्यरूपत्वात् । भवन्ति च प्रत्येकं तदभावेऽपि विकल्पाः, अन्यथा अन्धादीनां मरणापत्तेः । भवतु प्रत्येकमेव तत् तेषां तत्सहायतया कारणमिति चेत्, तदपि न नियतविषयतया, तदप्रतिपत्तेः । न हि नियतविषया विकल्पाः प्रतीयन्ते, रूपादिपञ्चकपरामर्शात्मतयैव तेषां प्रतिपत्तेः । तादृशामेव तथा तत् कारणमिति चेत्; अत्राह–'विशेषाच्च' इति । अत्र 'तत्प्रत्येकम्' इति 'न कारणम्' इति चानुवर्तते । ततोऽयमर्थः–तदिन्द्रियं प्रत्येकं तेषां न कारणम् । कुतः ? विशेषात् । शेषस्याभावो विशेषम्, अर्थाभावेऽव्ययीभावः, तस्मात्, शेषेन्द्रियाभावप्रसङ्गादिति यावत् । तथाहि —

एकस्मादेव चेदक्षात् रूपादिविषया इमे ।
विकल्पा व्यर्थमेव स्यात् तदन्याक्षप्रकल्पनम् ॥१४२४॥
न चैव कश्चिदन्धादिर्जीवो भवितुमर्हति ।
चशब्देनैतदेवाह शास्त्रकारः परोत्तरम् ॥१४२५॥

स्यान्मतम्–अक्षान्तरं तेषां तद्विषयाभिमुख्यार्थमतो व्यर्थमिति; तन्न; तस्यापि तदनर्थान्तरत्वेन प्रकृतादेवाक्षादुपपत्तेः, अन्यथा विवक्षिताभिमुख्यमपि ततो न भवेत् । भवतु मनोमात्रमेव तत इति चेत्; न, विषयाभिमुख्यविकलस्य तस्याप्रतिपत्तेः । तन्न कायकार्यत्वं तेषामिति न युक्तमेतत्–"मदशक्तिवद्विज्ञानम्" [ ] इति । मदशक्तौ गुडादिकार्यत्ववद्विज्ञाने शरीरकार्यत्वस्याभावात् । कथं पुनः कायेन सह अतत्परतन्त्र-

१ –दादावपि प्र– आ०, ब०, प० । २ पूर्वभाविर– आ०, ब०, प० । ३ भूवेन आ०, ब०, प० । ४ एव तत्र ता० । ५ जीवस्य । ६ जीवहेतुत्वात् शरीरस्य । ७ इन्द्रियाभावेऽपि । ८ इन्द्रियम् । ९ विकल्पानाम् । १० इन्द्रियम् । ११ तावदक्ष– आ०, ब०, प० । १२ तद्वि– प० ।

स्यावस्थानमिति चेत् ? न; उक्तोत्तरत्वात्–‘आत्मकर्मफलं भवेत्’ इति । न च पारतन्त्र्यादेव सहावस्थानम् पृथिव्यादिषु चक्षुरादीना तदभावेऽपि तद्भावात् । उपसंहरति–‘तद्वति विरोधतः’ इति । तत् तस्मात् तद्वति अक्षवति शरीरे निमित्ते विरोधतो विकल्पोत्पत्तेर्विरोधात् ‘[1]तद्विकृते’ इति सम्बन्धनीयम् । अथवा विकल्पानां विशेषाद् अभियोगोपनीतादतिशयात् । चेति भावनायाम् । तेषामक्षसङ्घात. तदक्ष प्रत्येकं वा न कारणम् । सोऽपि तद्विशेषादेवेति चेत्, आह–‘तद्वति’ इति । ‘विना भवात्’ इत्येतदत्र द्रष्टव्यम् ‘विशेषात्’ इति च । तदयमर्थः–तच्चाक्षं तद्वच्च शरीरं तत्र विशेषात् विना भवात् तेषाम्, विशेषस्येति विभक्तिविकारेण सम्बन्धः । न हि तद्विशेषोत्पत्तौ अक्षे शरीरे वा विशेषनियमो प्रच्युतप्राच्याकारेऽपि तस्मिंस्तदुपलम्भात् । भवत्वेवं तथापि तस्य तदेव कारणमिति चेत्; न; विरोधतः । विरुद्धं हीदम्–अविशिष्टेऽपि कारणे कार्यं विशिष्यत इति, विशिष्टादेव तन्त्वादेः पटादिप्रतिपत्तेः । तत. सजातीयादेवाभियोगसंस्कृतात्तस्योत्पाद इति युक्तमेतत्–‘तद्विकृतेः’ इत्यादि ।

अत्रैव हेत्वन्तरमाह–

**जातिस्मराणां संवादादपि [ संस्कारसंस्थितेः ] । इति ।**

जाते· पूर्वभवस्य स्मर्तारो जातिस्मराः तेषा संवादः अविप्रतिसारः तस्मादपि, न केवल पूर्वस्मादेव हेतोः तद्विकृतेरित्यादि (दे.)। जातिस्मरत्वे कारणमाह –‘संस्कारसंस्थितेः’ इति । संस्कारस्य पौर्वभविकानुभवनिबन्धनस्य स्मरणहेतो धारणाज्ञानस्येहापि जन्मनि सम्यगवैपरीत्येन स्थितेः । जातिस्मरा एव नोपलभ्यन्ते तत्कथं तेषां संवाद इति चेत्; न, प्राग्मानीयस्य बन्धुभृत्यादेर्निक्षेपादेश्च कैश्चिदपि दर्शनात्, तदहर्जातस्य च जातिस्मरत्वाभावे स्तनादौ प्रवृत्तेरनुपपत्ते ।

तदापि[2] तदभावकल्पनायां दूषणमाह–

**अन्यथा कल्पयन् लोकमतिक्रामति केवलम् ॥८१॥ इति ।**

अन्यथा अन्यथात्वं भावप्रधानत्वान्निर्देशस्य, तच्च जातिस्मराणामजातिस्मरत्वमेव तत्कल्पयन् प्रतीत्यपलापेन[3] संपादयन् चार्वाको लोकं जीवनिकायं भूतचतुष्टयं वा अतिक्रामति अपह्नुते केवलं नापरं करोति । नहि तदपलापः कश्चिदेव शक्यनियमो यतो जातिस्मरवत्र लोकेऽपि स्यात्, तत तस्याप्यतिक्रमात् लोकायतत्वमस्य नश्यति, लोकबुद्ध्यनुगम एवं तत्त्वोपपत्तेरिति मन्यते । ततो लोकवज्जातिस्मराणामपि प्रतीतिभावेनानतिक्रमात् सिद्धस्तत्संवादः । प्रतीतिश्च तेषामनुमानात्, तथाहि–तदहर्जातस्य स्तनादौ प्रवृत्ति. तदभिलाषात्, सापि स्तनादेरभिलषितार्थनियमितत्त्ववितर्कात्, स च तेनायं समान इति प्रत्यभिज्ञानात्, तदपि स्मरणात्, तदप्यनुभवात्, प्रवृत्त्यादित्वात् [5]अवलग्नप्रवृत्त्यादिवत् । न चेहजन्मनि तदहर्जातेन स्तनादिरपरस्तथाभूतो दृष्टोऽस्ति यतोऽनुस्मरणादिक्रमेण तत्सदृशे प्रवृत्ति । तत पौर्वभविकस्यैव तस्य तेन स्मरणमिति कथन्न जातिस्मराणा संवादः[4]

एतदेवाह–

१ तत्प्रकृते–आ०,ब०,प०। २ तथापि आ०,ब०,प० । ३संवादयता– प०। ४ एवात– आ०,ब०,प०। ५ मध्यावस्थाकालीनप्रवृत्तिवत् । "मध्यमध्यावलग्नञ्च मध्योऽस्त्री द्वौ परौ द्वयोः ।–इत्यमरः ।" –ता०टि० ।

**नाऽस्मृतेरभिलापोऽस्ति न विना सापि दर्शनात् ।**
**तद्धि जन्मान्तरान्न [ अथ जातमात्रेऽपि लक्ष्यते ] ॥८२॥** इति ।

अस्मृतेः स्मरणाभावात् उपलक्षणमिदं तेनाप्रत्यभिज्ञानानूहाचेति द्रष्टव्यम् । ततो नाभिलापोऽस्ति स्मृत्यादेरेवास्तीत्यर्थः । सापि स्मृतिर्न विना दर्शनात् दर्शनादेवास्ति । तद्धि तदपि दर्शनं जन्मान्तरात् न विना जन्मान्तरादेव पूर्वभवभाविनश्चक्षुरादेर्भवति । ततोऽभिलापादेर्दर्शनपर्यन्तस्य तर्कादेरनुमितिरविनाभावनियमनिश्चयात् अवलग्नदशायामिति सिद्धो जातिस्मराणां संवाद इति मन्यते । तदहर्जातस्याभिलाप एव नास्ति तत्कुतस्तदनुमितिरिति चेत् ? अत्राह–'अथ जातमात्रेऽपि लक्ष्यते' इति । जात एव जातमात्रः तस्मिन्नपि न केवलं चिरजीविते अयमभिलापो लक्ष्यते प्रवृत्तेर्लिङ्गात्प्रतीयते,तस्याः तत्पूर्वकत्वेनात्मनि प्रतिपत्तेः ततोऽस्ति तदनुमानमिति भावः । सत्यं लक्ष्यते, स तु न पौर्वभविकादनुभवात् अपि तु गर्भभाविन एव । तत्राह–

**गर्भे रसविशेषाणां ग्रहणादिति कश्चन ।** इति ।

'कश्चन' इत्येतद्वक्ष्यमाणात् 'प्रवर्तितः' इत्यत परं द्रष्टव्यम्, तत्रैव च व्याख्येयम् । इतरद्व्याख्यायते–गर्भस्तदाधारत्वात् गर्भाशयस्तस्मिन् रसविशेषाणां माधुर्यादीनां ग्रहणाद् अनुभवात् पूर्वभवे 'जातमात्रेऽय कश्चिल्लक्ष्यते' इति सम्बन्धः । तत्रापि तद्ग्रहणमभिलापादेव स च प्राग्भवीयादनुभवादिति सिद्धचत्येव सः इति चेत्, अत्राह–

**तदादावभिलापेन विना जातु यदृच्छया ॥८३॥** इति ।

तत् रसविशेषाणां ग्रहणम् आदौ गर्भगतस्य प्रथमसमये अभिलापेन काङ्क्षया विना 'जातु' इत्यवधारणेति निपातत्वात् । कथं तर्हि तद्ग्रहणम् ? यदृच्छया काकतालीयेन मात्रा भुक्तानां तेषां प्रतिस्रोतः स्वत एव प्रवेशादिति यावत् । ततः परं कथमभिलाप इति चेत् ? आह–

**तत्संस्कारान्वयेक्षित्वाद्भूयो भूयः प्रवर्तितः ।** इति ।

तस्य तद्ग्रहणस्य संस्कारस्तत्कृता धारणा स चान्वयोऽनुगमः स च संस्कारस्यैव अन्यस्याश्रुतेः, तस्मिन् सति ईक्षत्वमपेक्षितृत्वं तत्संस्कारान्वयेक्षत्वं तस्मात् भूयो भूयः पुनः पुनः प्रवर्तितोऽभिलाप प्रवृत्तिमानिति यावत् । प्रवर्तशब्दात् प्रवृत्तिवाचिन "तारकादिभ्य इतः" [ शाकटा० ३।३।१।४ ] इति प्रवर्तित इति रूपात् । एतदुक्तं भवति–गर्भगतस्य प्रथमं यदृच्छया तद्ग्रहणं पुनस्तत्संस्कारात् भूयो भूयस्तत्राभिलापो गर्भनिष्क्रान्तस्य तु तदन्वये सति विषयदर्शिनादनुस्मरणादिक्रमेणेतीत्येवं कश्चन चार्वाकः । तत्रोत्तरमाह–

**कोशपानं विधेयं [ न समं भूयस्तथा दशाः ] ॥८४॥** इति ।

कोशस्तन्निर्लेपित्तं जलं तस्य पानं विधेयं विधातव्यम् अस्यार्थस्य प्रत्ययोऽप्रतिपत्तेः ।

---

१–नुमानाद–आ०, ब०, प० । २ गर्भेऽपि । ३ अभिलाप । ४ ... । ५ ... शेति नि– आ० ब०, प० । ६ प्रवर्तते आ०, ब० प० । ७ ... आ० ब० प० । ८–... तस्य आ०, ब०, प० ।

न हि गर्भगतः प्रत्यक्षादेवं प्रत्येति 'यदृच्छया मे रसादिग्रहणम्' इति कोशपानस्यैवात्रापि शरणत्वात् मात्रादेरेवमव्यवहारात्। न च प्रत्यक्षाभावेऽनुमानम्, तस्य तत्पूर्वकत्वात्। भवतोऽपि समानमिदं गर्भगतस्यापि पौर्वभविकादेवानुभवादेः स्मरणादिरित्यत्रापि प्रमाणाभावादिति चेत्, आह–'न मम भूयस्तथादृशः' इति। न मम न मदृशः कोशपानं विधेयमिति। कुतः ? भूयः प्राचुर्येण तथा तेन 'दर्शनात् संस्कारस्ततः स्मृतिः' इत्यादिना प्रकारेण दृशो दर्शनादवलम्बनेलायाम्। तदुक्तम्–

"अक्षज्ञानैरनुस्मृत्य प्रत्यभिज्ञाय चिन्तयन्।
आभिमुख्येन तद्भेदान् विनिश्चित्य प्रवर्तते॥" [सिद्धिवि० परि० १] इति।

ततः प्रागपि तथैवासौ प्रतिपत्तव्यः अन्यथा, हेतुफलभावस्य[1] क्वचिदपि निर्णयनियमाभावात् कथं जलादावपि पानार्थिना प्रवृत्तिः ? कथं वा शुभाशुभकर्मभावनिर्णयेन निरारेकं[2] वैरिवधाभिला षिणा नास्तिकशास्त्रोपादाने यत इदं सूक्तं भवेत्–

"इदममरगुरुर्जगौ महात्मा सुरपतये किल वृत्रनाशनाय।" [ ] इति।

ततः स्थितं भूयोदर्शनबलाद्गर्भगतस्यापि स्मरणादिरनुभवादेरेवेति। ततो न युक्तं शालूक-दृष्टान्तेन तस्यानुभवादेरन्यतोऽपि भाव इति, चैतन्यस्यापि कायादिवान्यतोऽपि भावप्रसङ्गात्। शालूकस्य च शालूकेतरजन्मनो वैलक्षण्यात् स्मरणादेश्च तदभावात्।

पुनरपि गर्भ इत्यादि निराकुर्वन्नाह–

**रूपादिदर्शनाभावात् तत्सम्बन्धस्मृतिः कथम्।** इति।

रूपं स्तनादिगतमादिर्यस्य तत्कार्यस्य क्षीरादेस्तस्य दर्शनं तदभावो गर्भे तस्मात्। तयो रूपतत्कार्ययोः सम्बन्धोऽविनाभावस्तस्य स्मृतिः स्मरणं गर्भनिष्क्रान्तस्य कथम् ? न कथञ्चित्। न हि दृष्टेऽपि स्तनादौ प्रागदृष्टस्य तस्य स्मरणम्, नालिकेरद्वीपादागतस्य धूमे पावकसम्बन्धवत्। सापि मा भूदिति चेत्; न, प्रवृत्तिदर्शनात्, गर्भेऽपि रूपादिदर्शनमस्तीति चेत्; न, तत्र स्तनादेरभावात्, नयनादिव्यापाराभावाच्च। तदेवाह–

**नावश्यं चक्षुरादीनां सर्वत्रोन्मीलनादयः॥८५॥** इति।

चक्षुरादीनामादिपदात् जिह्वादीनाम् उन्मीलनादयः आदिशब्दात् उद्वर्तनादयश्च नावश्यं न नियमेन। क्व ? सर्वत्र सर्वस्मिन् जराय्वादिपरिपिहिते प्राणिनि तत्कथं गर्भे रूपादिदर्शनं यतः पश्चात्तत्सम्बन्धस्मरणम् ? अस्ति च बालस्य स्तनादिदर्शनात् तत्र रसविशेषार्थितया प्रवृत्तिः, अतोऽवगम्यते जन्मान्तरे तस्य तद्दर्शनमिति। पुनरपि तद्विकृतेरित्यादि समर्थयितुमाह–

**तथा रागादयो दृष्टाः सङ्कल्पान्वयिनो भुवि[3]।** इति।

रागः शरीरेन्द्रियादावभिरतिरादिर्येषां द्वेषादीनां ते रागादयो दृष्टाः प्रवृत्तिविशेषतोऽवगताः 'जातमात्रेऽपि' इति सम्बन्धः। कीदृशाः ? सङ्कल्पो ममेदमहमिदमिति चाभिनिवेशः आदिर्यस्य

१ –लस्य ता०। २ निराकारेक आ०, ब०, प०। नि शङ्कम्। ३ वन्द।

रागाद्यभ्यासादेः, तेन विना न भवन्तीति सङ्कल्पाद्यनिनामुत.। ततो न युक्तमेतत्[1]–"कफप्रकृते रागः तन्मूलश्चानुनयादयः। पित्तप्रकृतेर्द्वेषः तदाश्रयाश्चासूयादयः,वातप्रकृतेर्मोहः तन्निमित्ताश्च चापल्यादयः।" [ ] इति, तेषा[2] सङ्कल्पादिनिबन्धनतयैवात्मलाभवेलाया प्रतिपत्ते। व्यभिचाराच्च कफप्रकृतावपि द्वेषादीनामुपलम्भात्। अथ कफप्रकृतेरन्यापि प्रकृतिरस्ति तासा साङ्कर्यादिति, तन्न, द्वेषादिवत् सर्वस्यापि प्रकृत्यन्तरकार्यस्य तत्प्रकृता प्रसङ्गात्। न चैवम्, कस्यचिदेव दर्शनात्। दृष्टस्यैव तदन्तर कारण नान्यस्येति चेत्, तर्हि सत्त्वान्तरेऽपि कुतस्तद्भवेत्? तत एवेति चेत्, प्रकृतेऽपि स्यात् अविशेषात्। अन्यत इति चेत्, सिद्धो व्यभिचार –पित्तादेर्दृष्टस्यापि तस्यान्यतो भावात्। तन्न तत्साङ्कर्यात् तत्प्रकृतौ द्वेषादि। अथ सोऽपि तत्प्रकृतेरेव कार्यम्, व्यर्थं तर्हि प्रकृत्यन्तरकल्पन कार्याभावात्। तदन्तरस्यापि तदेव सर्वं कार्यमिति चेत्, एवमपि तन्निर्ह्रासातिशय साम्ये तत्प्रकृते सर्वस्यापि समान एव रागादि प्राप्नुयात्। न हि कारणस्याविशेषे विशेष कार्यस्य, तस्यातद्धेतुकत्वापत्ते। न चैवम्, सत्यपि तत्साम्ये कस्यचिद्रागादेरुत्कर्षस्यान्यस्यापकर्षस्य च तारतम्येन प्रतीते। नाय दोष, तत्साम्येऽपि स्वहेतुबलनिबद्धात् परिणतिविशेषात्तदुपपत्तेरिति चेत्, न, तस्यापि दृश्यस्य तदव्यभिचारात्। न ह्यसौ रागादौ क्वचिदेव नियतो द्वेषादेरपि तत एवोपलम्भात्। ततो द्वेषादिवद्विलक्षणपरिणामजन्यस्यापि तत एवोपपत्ते कथ तस्मान्नैव तत्प्राप्तिर्भवेत्? 'अथ अदृश्य एव तद्विशेषो रागादिवैषम्यहेतुः, स तर्हि सङ्कल्पादावेव कार्यविशेषादुन्नेतव्य तस्यैव तद्धेतुतया दृष्टेन कफादौ विपर्ययात्, अन्यथा पर्वतादौ धूमहेतुरपि विशेष कश्चिदन्यनैवावकल्प्येत इति न पावक इति न कश्चिन्नियतो हेतुफलभाव। तन्न तद्विशेषकल्पनमुपपन्नम्। तदभावे च न कफादे रागादिविशेषास्तदविशेषात्। अविशिष्टादपि कारणात् कार्यवैषम्य दृश्यत एव यथा पृथिव्यादे रूपसस्थानादिभेद शरीरस्येति चेत्, न, तत्रापि तथैव चोद्यात्-कथ तदविशेषे तद्भेद इति? तच कस्मान्न भवतीति चेत्? न, अदृष्टविशेषसहायात् तनस्तदुपगमात्। अत एवोक्तम्–

"अक्षादीना विकारोऽयमात्मकर्मफलं भवेत्।" इति।

धर्मकीर्तिनाप्युक्तम्–

"व्यभिचारान्न वातादिधर्मः प्रकृतिसङ्करात्।
अदोषश्चेन्नदन्येऽपि धर्मः किं तस्य नेष्यते॥
न सर्वधर्मः सर्वेषा समरागप्रसङ्गतः।

१ "चार्वाकवच' ता० टि०। तुलना–'वातप्रकृतेर्मोह, पित्तप्रकृतेर्द्वेष– कफप्रकृते राग इति'–प्र० वार्तिकाल० १।२४। "क्वचिदा –श्लेष्मणा मकाशाद्राग पित्ताद् द्वेषो वातान्मोह इति –तत्त्वस० प० पृ० ५६८। २ 'कफ प्रकृति स्वभावो यस्य गर्भादिमरणपर्यन्तस्यात्मन "–ता० टि०। ३ "रागादीनाम्'–ता० टि०। ४ –नुपलम्भात्– आ०, ब०, प०। ५ कफस्य साम्येन त–आ०,ब० प०। ६ अन्यथा दृश्या एव आ०, ब०, प०। ७ –न न क– आ०,ब, प०। ८ –व्यादिरू– आ०, ब० प०। ९ पृथिव्यादे। १० न्यायवि० श्लो० २५६। ११ वचन आ०, ब० प०।

रूपादिवदद्दोषश्चेत् तुल्य तत्रापि चोदनम् ॥
आधिपत्यं निमित्तानां यदि तत्र न कर्मणाम् ॥" [प्र०वा०१।१५०-५२]

इत्यलं निर्बन्धेन । तत सङ्कल्पादेरेव रागादयस्ते च तत्तत्प्रवृत्तिविशेषादवधृतसन्निधाना तद्धेतु सङ्कल्पादिकमवगमयन्ति प्राग्भवीयमेव इहभवे तस्य तदभावादित्युपपन्नमेतत्-तद्विकृतेरित्यादि । यदि पुनर्भवान्तरानुभूतस्य स्मरणं किन्न सर्वस्य ? किं वा सामान्यस्य न विशेषस्यापीति चेत् ? भवत्येव यदि तादृश संस्कार, केषाञ्चित् स्वजात्यभिजनादिविशेषेऽपि तत्प्रतिपत्ते । सामान्यमात्र तु संस्कारे तस्यैव स्मरण न विशेषादे । तत्रापि तदभावे न कस्यचित् । कथं तर्हि सामान्यस्मरणाद्विशेषे प्रवृत्तिरिति चेत् ? न, तस्य तस्मादव्यतिरेकात् दृष्टत्वाच्च । तदेवाह—

तदाहारादिसामान्यस्मृतितद्विप्रमोषयोः ॥८६॥
भावोऽभावश्च वृत्तीनां भेदेष्विह च दृश्यते । इति

तच्च तत्प्रागनुभूतमाहारादि, आदिशब्दात् स्तनादि च, तदेवेह सामान्य तस्य स्मृतिश्च संस्कारात्, तस्या स्मृतेर्विप्रमोषश्चानुत्पादस्तदभावात् तदाहारादिसामान्यस्मृतितद्विप्रमोषां तयो सतोर्यथाक्रम वृत्तीनां विषयोपसर्पणादीना भावः स्मृतौ अभावश्च तद्विप्रमोषे स च न केवल बालवेलायामपि किन्तु इह च मध्यदशायामपि, तच्चोभयं भेदेषु विशेषेषु न केवल सामान्यमात्रे । कथमेतत् ? तेषामस्मरणादिति चेत्, न, दृश्यते यत । न हि दृष्टे पर्यनुयोगोऽतिप्रसङ्गात् । दृश्यते हि बन्धुरय भवति न जाने पितृवर्गिणो मातृवर्गिणो वेति बन्धुत्वसामान्यस्मरणादपि लोकस्य तद्विशेषे प्रवृत्ति, तद्वद् बालकस्यापि आहारादिविशेष इति न कश्चिदुपालम्भ । नन्वत्र तत्स्मृतौ तत्र तद्भाव एव वक्तव्यस्तत्रैव चोद्यात्, न तद्विप्रमोषे तदभावो विपर्ययादिति चेत्, न, प्रवृत्तीना तदन्वयव्यतिरेकानुविधानमतिशयेनेन कार्यत्वज्ञापनार्थत्वात् तद्वचनस्य । एवमपि 'भूयस्तथा दृश' इत्यत्रैव वक्तव्यं स्मरणमस्तावात् न रागाद्यभिधानात् परत इति चेत्, न, स्मरणस्यापि रागादिव्यवधानेनैव तत्कारणत्वमिति निवेदनार्थत्वात्, तथा वचनस्य । न हि स्मरणमात्रात् क्वचिद् व्यवहारो रागाद्यभावे । तत एवोक्तम् 'स्मरणादभिलाषे व्यवहार' इति । उपसंहरन्नाह—

तस्मात् संसारवैचित्र्यं नियमाच्च विहन्यते ॥८७॥ इति ।

तस्मादात्मनोऽनादिनिधनस्याप्रतिक्षेपात् कर्मणश्च संसारहेतोरवकल्पनात् संसारस्य वैचित्र्य सकलविकलेन्द्रिययोर्विकलसकलेन्द्रियत्व तिर्यगादेर्मनुष्यादित्व मनुष्यादेस्तिर्यगादित्वमित्यादिरूप वैचित्र्यरूप्य न विहन्यते न विघात गच्छति । कुत ? नियमात् प्रमाणतस्तद्विघातस्य निषेधात् । व्याहतमेव पिपीलिकाजीवस्य तच्छरीरपरित्यागेन हस्तिशरीरसञ्चरणम् अल्पीयसस्तस्य तद्व्यापित्वासम्भवात् तद्व्यापिनश्च जीवस्य भवद्भिरभ्युपगमादिति चेत्; अत्राह—

१ किन्न सा- आ०, ब०, प० । २ ननु आ०, ब०, प० । ३ चोद्याभावात् । ४ -या तादृश आ०, ब०, प० । ५ -सारवै- आ०, ब०, प० । ६ -स्य च शरीरवद्व्या आ०, ब०, प० ।
७ "जीवो उवओगमओ अमुत्ति कत्ता सदेहपरिमाणो ।" -ता० टि ।

**न च कश्चिद्विरोधोऽस्ति देहान्तरपरिग्रहे । इति ।**

पूर्वस्माद्देहादन्यो देहस्तदन्तरं तस्य परिग्रहे न च नैव कश्चिदनिर्दिष्टनामा विरोधोऽस्ति विद्यते । तथाहि–न तत्र प्रमाणबाधो विरोधः, प्रमाणेन तस्यावस्थापनात् । नोप्यल्पेन महतो व्याप्त्याऽनुपपत्तिः, महतो महत्त्वेनैव व्यापनात् । तदेवाल्पस्य सतः कुत इति चेत्? प्रदेशविसर्पणादिति ब्रूमः । न चेदं वाङ्मात्रम्, इहापि दर्शनात् । दृश्यते हीदम् इहापि बालजीवस्य युवादिदेहव्यापित्वं तद्विसर्पणात्, तद्वत् पिपीलिकाजीवस्यापि हस्त्यादिशरीरव्यापित्वम्, एवं महतस्तस्याल्पशरीरमात्रावस्थानं तदुपसंहारादिति प्रतिपत्तव्यम्, उपसंहरणविसर्पणधर्मत्वाज्जीवस्य । न चैवं तदुपसंहारविसर्पणयोरक्रमः, तत्सचिवस्य कर्मणः सूक्ष्मबादरस्वभावस्य क्रमात् क्रमस्यैवोपपत्तेः प्रदीपवत् । दृश्यते हि प्रदीपे तैलक्रमात् तयोरपि क्रमः । तदुक्तम्–"प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् ।" [ त०सू० ५।१६ ] इति । तदेवम् 'इह च दृश्यते' इत्यनेन तत्परिग्रहमुपपाद्य तदन्तरेणाप्युपपादयन्नाह

**तदभावे हि तद्भावप्रतिषेधो न युक्तिमान् ॥ ८८ ॥ इति ।**

तस्य देहान्तरपरिग्रहस्याभावे हि यस्मात्तद्भावस्य तत्परिग्रहभावस्य **प्रतिषेधो न युक्तिमान्** । अतस्तत्र न कश्चिद्विरोध इति । तथाहि–तस्य प्रतिषेद्धा न तावदचेतनः, चेतनोऽपि न क्षणक्षयी, तस्यापि लोकान्तरवदप्रतिपत्तेः । अक्षणिक एव गर्भमरणावधिरिति चेत्, न, बालादिशरीरत्यागेन कुमारादिशरीरान्तरपरिग्रहाभावे तस्यासम्भवात् । भवत्वयम् इदम्भविनो दृष्टत्वात् न भवान्तरिणः, तस्यैवासिद्धेरिति चेत्, इदम्भविनोऽपि कुतः सिद्धिः? प्रत्यक्षादेव स्वसंवेदनलक्षणादिति चेत्, न, तेनापि मरणावधेरप्रतिपत्तेः, अन्यथा जीवितव्यप्रमाणे न कस्यचिदपि सन्देहः स्यात्–'कियान् मम जीवितव्यकालः' इति । नापि तत्कालभाविषु सेवाकृष्यादितद्व्यापारेषु, इति व्यर्थं तत्परिज्ञानाय ज्योतिर्विदाद्युपासनम् । तत्र बालकस्य प्रत्यक्षता भाविदशाप्रतिपत्तिः यतः तात्कालिकापरापरशरीरोपादानं तद्व्यवस्थितयाभीष्येत । नापि वृद्धस्य तत्र प्राच्यदशापरिज्ञानम्, तात्कालिकीनां तच्चेष्टानामवधारणापत्तेः । माभूत् ततस्तद्ग्रहणं प्रत्यभिज्ञानात्तु भवत्येव 'स एवाहं वृद्धो यो बालोऽभूवम्' इति तस्योत्पत्तेरिति चेत्, न, तस्यापि प्रत्यक्षत्वे पूर्ववद्दोषात्, प्रमाणान्तरत्वस्य चानभ्युपगमात् इति । अपि चैव सिद्धो भवान्तरी, तस्यापि तत एवाधिगमस्याभिहितत्वात् । तथापि तस्याभावे नेदम्भव्यपि कश्चिच्चेतन इति कुतस्तत्परिग्रह[10]प्रतिषेधः तस्य प्रतिषेद्धुरभावेऽनुपपत्तेः । ततः [11]प्रतिषेधादपि सिद्धः प्रतिषेद्धुरिव[12] तस्यापि तत्परिग्रहः । तत्सिद्धौ कथं प्रतिषेधो यतस्तत्साधने विरोधादिति चेत्? न तदभिनिवेशस्य तत्त्वेनाभिधानात् न च तत्राविरोधात् । ततः स्थितम्–'तदभावे हि' इत्यादि । जातीत्यादयश्च व्याख्यानश्लोकाः, 'कारण

१ नाप्यल्पेन आ०, ■०, प० । २ तत्रावस्थ आ०, व०, प० । ३ सहंसारेभ्यात् संहारविसर्पयोरपि । ४–नो नापि क्षण- ता० । ५–वधरि– आ०, ब०, प० । ६ इहभवभाविन । ७ स देह इत्यन्वय । ८–मगनामनवधार–आ०, ब०, प० । ९ भवान्तरे त–आ०, ब०, प० । १० जन्मान्तरपरिग्रह । ११ प्रतिषेद्धापि सि- आ०, ब०, प० । १२–द्धुरेव त–आ०, ब०, प० ।

नाक्षसङ्घातः" इत्यादेरर्थस्य तैर्व्याख्यानात् । तस्माद्बुद्धिरियं पुरुषस्यैव स्वभावो न पृथिव्यादेः ।

चार्वाकस्तत्स्वभावत्वे दूषणमाह—

**बुद्धेः पुरुषतन्त्रत्वे नित्यत्वात्तदनुक्रिया ।**
**[ न भवेत्परिणामित्वाद्विनाशानुपलक्षणात् ] ॥ ८९ ॥** इति ।

बुद्धेरवग्रहादिज्ञानस्य, पुरुष आत्मा तन्त्रं प्रधानं यस्यास्तस्या भावः पुरुषतन्त्रत्वम् । "गुणस्त्वतं" [ शाकटा० २।२।४५ ] इति पुम्भावः, यस्य वा इत्यन्यपदार्थसामान्येन व्युत्पाद्य पुनर्भावप्रत्ययान्तस्य बुद्धेरित्यनेन सम्बन्धः, तस्मिन् पुरुषतन्त्रत्वे बोद्धा पुरुष इति तद्विशेषणत्वे सति **तदनुक्रिया** तेषां बुद्धिकार्याणाम् अनु क्रमेण क्रिया करणं **न भवेत्** एकदैव स्यात् । कुतः ? **नित्यत्वात्** । बुद्धेरिति सम्बन्धः । एवं मन्यते बुद्धेरात्मस्वभावत्वमभ्युपगन्तव्यम् तत्तन्त्रत्वात्[1], भेदे तदनुपपत्तेः । समवायाद्भेदेऽपि तदुपपत्तिरिति चेत्; न; सत्यपि तस्मिन् 'तत्र बुद्धि' इत्येव स्यात् तस्य इहेदम्प्रत्ययहेतुत्वात्, न तु 'स बोद्धा' इत्यविष्वग्भावस्यावगमः । सोऽपि तत[2] एव नाविष्वग्भावादिति चेत्, बुद्धिस्वरूपेऽपि तर्हि तत एव तदवगम इति नैक्य[3] बुद्धिर्भवेदित्यनुपपन्नमिदम्—"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" [ न्यायसू० १।१।१६ ] इति युगपदेव तदुत्पत्तेरेवं सम्भवात् ? बाधकाभावान्न नैवायं प्रसङ्ग इति चेत्; न; इतरत्रापि तुल्यत्वात् । न हि पुरुषबुद्ध्योरप्यविष्वग्भावे बाधकमुत्पश्यामः । पुरुषस्य बुद्धिरिति भेदप्रत्ययो बाधक इति चेत्; न; तस्य प्रत्यक्षरूपस्याभावात्, कल्पनारूपस्य चावस्तुविषयत्वात्, बुद्धेर्व्यापार इत्यपि तद्भावात् । तन्न भेदे, तस्यास्तन्त्रत्वमित्यभेद एवाभ्युपगन्तव्यः । तत्र च पुरुषवत् बुद्धेरपि नित्यत्वात् न तत्कार्याणां क्रम. तत्करणस्वभावायास्तस्या अक्रमात् । ततो भिन्न एव परापरस्तत्करणस्वभाव इति चेत्, कथमसौ तस्याः ? तत्र समवायाच्चेत्; न, तन्निषेधात् । तत्कार्यत्वाच्चेत्; न, तस्य अक्रमायास्ततोऽनुत्पत्ते.[5] । तस्याप्यपरतस्तत्स्वभावात् उत्पत्तिकल्पनायामनवस्थाप्रसङ्गात् । तत एव कार्योत्पत्तौ अन्यवस्थाञ्च बुद्धिः प्राप्नुयात् । ततो बुद्धेरेव 'तदुत्पत्तिरिति परापरतत्कार्याणां युगपदेव प्रादुर्भावेण भवितव्य तथा च कथ तस्या संसारः ? परापरदेहेन्द्रियादिसञ्चारे सत्येव तदुपपत्तेरिति । युगपच्च कार्योत्पत्तौ अवस्तुत्वं च तस्या. पश्चात्प्राप्नोति निर्व्यापारत्वात् व्योमकुसुमादिवत् । तदेवाह—**तदनु** तदनुत्पत्त्यनन्तरं **क्रिया** व्यापारो न बुद्धेरिति । एतच्च समानश्रुतिकत्वादेकोच्चारणगम्यमन्यदेव वाक्यम् । तथा च यतः सर्वकार्याणां युगपदुत्पादः ततस्तदनन्तर क्रिया नेति पूर्वोत्तरयोस्तदर्थयोर्हेतुहेतुमद्भाव. प्रतिपन्नो भवति । एव चार्वाकोक्तमिति चेत् इत्याशङ्क्य समाधानमाह—'**परिणामित्वात्**' इति । अत्र नेत्यनुवृत्तम् । तदयमर्थः—यदुक्त नित्यत्वादिति, तन्न; कुतः ? **परिणामित्वात्** पूर्वाकारपरित्यागाजहद्वृत्तोत्तराकार-

१–दभेदे चतदनु–आ०, ब०, प० । २ समवायादेव । ३ बुद्धिस्वरूपस्य बुद्धेरविष्वग्भावावगमार्थम् इहेदम्प्रत्ययमूलकसमवायबुद्धिरन्वेष्या इत्यनेकत्व बुद्धेः । ४ बुद्धिस्वरूपे । ५–नुपपत्तेः आ०, ब०, प० । ६–परतत्स्व– आ०, ब०, प० । ७ –तौ व्यवस्था च आ०, ब०, प० । ८ तदुपपत्तेरिति आ०, ब०, प० ।

गमनवत्त्वाद् बुद्धेरिति । न हि बुद्धेरन्यस्य वा तदभावे वस्तुत्वम् । अर्थक्रियया हि[1] वस्तुत्वम् । न च नित्ये तत्क्रिया; युगपत्तद्भावे पश्चादवस्तुत्वस्योक्तत्वात् । अक्रमाच्च ततः[2] क्रमतस्तदयोगात् । युज्यत एव ततोऽपि तत्क्रमः सहकारिक्रमादिति चेत्; कथं पुनस्त[3]त्क्रमाद्भवन् ततोऽपीति । न ह्यन्यतो भवंस्तदन्यस्मादपि[4]; अतिप्रसङ्गात् । तत्क्र[5]मस्यापि नित्यसहितस्यैव तत्र व्यापारादिति चेत्; तर्हि तद[6]क्रमादक्रमः सहकारिक्रमाच्च क्रम इत्यागतं तत्क्रियायां कादाचित्कत्वम् । सहकारिक्रमानुकूल्येनैव नित्यस्य तत्र व्यापारो न स्वकीयक्रमानुकूल्येन ततोऽयमदोष इति चेत्; नेदानीं त[7]स्य तत्कारणत्वं स्वभावानुकूल्येन प्रवृत्तावेव तदुपपत्तेः, अन्यथातिप्रसङ्गात् । किञ्च, तस्य तदानुकूल्यं यदि तत्क्रमात्, प्रागपि कुतो न कार्यम् ? तत्क्रमस्याऽभावादिति चेत्; व्याहतमेतत्—स च नास्ति तदानुकूल्यं च तस्यास्तीति, आनुकूल्यस्य आनुकूलयितव्ये सत्येवोपपत्तेः । तत्क्रमकाल एव तदपीति चेत्; कथं नित्यस्य नित्यत्वम् ? तत्स्वभावकादाचित्कत्वे त[8]दनुपपत्तेः । स्वभावोऽपि त[9]त्तस्य न भवति भिन्नत्वादिति चेत्, कथं तेन नित्यमेव तत्क्रममनुकूलयति न सहकारी तदक्रमम् । नित्य एव तस्य सम्बन्धादिति चेत्; न; अनुत्पन्नस्य तदयोगात् । उत्पत्तिश्च यदि नित्यादेव; कथं तस्यापि क्रमः ? सहकारिक्रमादिति चेत्; न; तत्रापि अपरानुकूल्यकल्पनायाम् अनवस्थापत्तेः । अन्यतस्तु उत्पत्तौ न हि तन्नित्यस्य । समवायस्यापि तदुत्पन्नस्यैव तत्रोपपत्तेः । तन्न तदानुकूल्येन तस्य प्रवृत्तिरिति न निवृत्तिः कादाचित्कत्वात् ।

एतेन सामग्री कारणमिति प्रत्युक्तम्; तस्या अपि नित्यतत्सहकारिकारणव्यतिरेकेणाभावात् । भावे वा तत एव तदुत्पत्तेः कथं नित्यस्य तत्सचिवस्य वा वस्तुत्वम् ? तस्या अपि त[10]त्सहिताया एव तत्र व्यापारादिति चेत्; अनिवृत्तकादाचित्कत्वैव पुनरपि तदुत्पत्तिर्भवेत् । अपि च, सामग्र्या अपि न नित्यत्वम्, तस्याः स्वतः परापेक्षतया च हेतुत्वे पूर्ववत् प्रसङ्गात् । सामग्रीतत्सन्निवेष्वपि सामग्र्यन्तरपरिकल्पनायाम् अव्यवस्थितेश्च । अनित्यैव सा, नित्याच्च सहायवत् उत्पद्यते इति चेत्; न ततः सामग्र्यन्तरव्यवहितात्; अनवस्थाप्रसङ्गात् । तदव्यवहिताच्चेत्; व्यर्थैव सामग्री ततस्तद्वदर्थक्रियाया एवोत्पत्तेः । तन्न नित्यत्वे तत्क्रमः । परिणामित्वे तु भवति परापरस्य तत्स्वभावस्य तद्धेतोस्तत्र भावात्, सहकारिप्रतीक्षायाश्च तत्कृतोपकारस्वीकारित्वेनाविरोधात् । नित्यत्वे तु न तथा तत्प्रतीक्षणं तद्व्याघातात् । इत्युपपन्नमुक्तम् 'परिणामित्वात्' इति ।

नित्यत्ववत् परिणामित्वमपि न सम्भवति भावेषु, तस्य संशयादिदोषप्रसङ्गनिगलितसकलाङ्गत्वात्, ततः एकान्तभङ्गुरत्वमेव तत्राङ्गीकर्तव्यमिति चेत्; अत्राह— 'विनाशानुपलक्षणात्' इति । विनाशो बुद्धेर्निरन्वयो विच्छेदः तस्योपलक्षणं निर्णयः तदभावात् परिणामित्वम्, [11]ततश्च नित्यत्वमित्यनुगमः । न खलु तदस्ति प्रमाणं यतस्तस्योपलक्षणम् ।

१ हि तत्र च आ०, ब०, प० । २ नित्यात् । ततस्तदयो–आ०, ब०, प० । ३ सहकारिक्रमाद्भवन् । ४– स्मादतिप्र– आ०, प० । ५ सहकारिक्रमस्यापि । ६ नित्यवस्तुनोऽक्रमात् । ७ नित्यस्य । ८ नित्यत्वानुपपत्तेः । ९ तद्गतस्तस्य आ०, ब०, प० । १० नित्यसहितायाः । ११ ततश्च न नि– ता० ।

प्रत्यक्षमस्तीति चेत्; कथं समारोपः ? उपलक्षिते तदयोगात् नीलादिवत्। मा भूदिति चेत्, कथं संसारः तस्य सत्त्वदर्शननिबन्धनत्वात्, तद्दृष्टेश्च आरोपरूपत्वात्। सोऽपि माभूदिति चेत्, व्यर्थस्तर्हि मुमुक्षूणां प्रयासः तस्य तन्निवर्तनार्थत्वात्, "मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि मोक्तरि" [ प्र० वा० १।१०४ ] इति वचनात्। प्रयासोऽपि नास्त्येव, वस्तुतः सकलप्रयासविकलस्याद्वैतसंवेदनस्यैव भावादिति चेत्, न, तस्य क्षणिकत्वे क्षणान्तरापेक्षणस्यावश्यम्भावात् अद्वैतरूपत्वानुपपत्तेः, अक्षणिकत्वस्य चानभ्युपगमात्। न क्षणान्तरव्यावृत्त्या तस्य क्षणिकत्वं यतस्तदपेक्षणम् अपि तु स्वत एवेति चेत्, न, नित्यत्वमपि स्वत एव न तदन्तराननुवृत्त्येति प्रसङ्गात्। स्वतः स्वयमेव भवति न नित्यत्वमिति चेत्, क्षणिकत्वमपि न भवेत्। न भवत्येव, क्षणिकाक्षणिकादिसकलविकल्पजालजालविरहसावलेपनानुपकल्पितरूपत्वात्तस्येति चेत्, तिष्ठतु तर्हि भवान्, क्षणभङ्गवादिनाऽस्माकमिदानीं विवादप्रवृत्तेः। तस्य च प्रत्यक्षतस्तदुपलक्षणे प्रशान्तदोषानप्रक्रमात्। मा भूत् ततस्तयोपलक्षणं ग्रहणं तु भवत्येव निर्णयविकलमिति चेत्, न, तस्यापि सत्त्वग्रहणवदुपलक्षितस्याभावात्। उपलक्ष्यत एव तद्विचारादिति चेत्,

विचारात् तद्विनाशस्य यदि नास्ति प्रवेदनम्।
प्रत्यक्षात्तदहस्तेन कथं नामानुगम्यताम् ? ॥ १४२६ ॥
विषये हि गृहीते तद्विषयिग्रहणं भवेत्।
सम्बन्धग्रहणं यद्वत् सति सम्बन्धिविग्रहे ॥ १४२७ ॥
ग्रहणे तेन तस्यापि कथं नास्त्युपलक्षणम्।
निर्णयात्मा विचारो यद्यतोऽपि प्रसिद्धिमान् ॥ १४२८ ॥
तथा सति समारोपः कथं तत्रोपजायताम्।
नास्त्येव चेन्न दृष्टत्वाद्विचारमपि कुर्वतः ॥ १४२९ ॥
अन्यथा स्वकलत्रादौ कथं तस्य प्रवर्तनम्।
आत्मात्मीयग्रहादेव यतस्तत्परिदृश्यते ॥ १४३० ॥
आहार्यस्तस्य नास्त्येव समारोपो विचारिणः।
ततस्तु सहजादेव संसारे तस्य चेष्टितम् ॥ १४३१ ॥
निर्णयारोपमनसोर्बाध्यबाधकभावतः।
अभ्यासोपचितादेव तस्य नाशस्ततो यदि ॥ १४३२ ॥
अनभ्यासे कथं तस्य निर्णयात्मत्वमुच्यताम्।
तद्विनाशस्वभावोऽयं निर्णयो लोकसम्मतः ॥ १४३३ ॥

१ क्षणान्तरानुवृत्त्या। २ क्षणिकमपि आ०, ब०, प०। ३–नुपकल्पित– आ०, ब० प०। ४ प्रपञ्चत। ५ द्रष्टव्यम्–प्र० वा० ३।४८।

प्राङ्निर्णयोऽपि मा भूच्चेत्, हन्त तेन कथं भवान् ।
विनाशं तत्र चाध्यक्ष निश्चिन्वीत प्रवृत्तिमत् ॥ १४३४ ॥
निश्चाययेद् वा तं सभ्यान् वादोऽय न निगृह्यताम् ।

तत्र प्रत्यक्षतस्तस्य ग्रहणमुपपन्नम् उपलक्षणवत् । अनुमानात्[1] तु तदुपलक्षणं दुरुपपादम्; प्रत्यक्षाभावे तत एव लिङ्गलिङ्गिसम्बन्धस्याऽप्रतिपत्तेः[2] । अन्यानुमानतः प्रतिपत्तौ अनवस्थानस्योपकल्पनात् । कश्चासौ विनाशो यस्य कुतश्चिदुपलक्षणम् ? क्षणावस्थानमिति चेत्, न; तस्यानवधृतस्य नित्येऽप्यविरोधात् । क्षण एव स्थानमित्यवधृतमेव[3] तदिति चेत्; तर्हि सामर्थ्यात् क्षणान्तरे तस्यास्थानं विनाश इति प्राप्तम् । एवमिति चेत्; तदपि यदि तुच्छम्; उपपन्नमुक्तम्–'विनाशानुपलक्षणात्' इति, तुच्छे तत्र प्रत्यक्षादेः प्रतिबन्धाभावेनाप्रवृत्तेः । वस्तु चेत्; तस्मात् अनन्यत्वे[4] कथं क्षण एव स्थानं तदन्तरेऽपि तद्भावात् । अन्यत्वं[5] चेत्; कुत एतत् ? तस्य क्षण एव स्थानादिति चेत्, न; तत्रापि क्षणान्तरभाविनोऽस्थानस्य अर्थादापत्तेः पूर्वप्रसङ्गानतिक्रमात्, अनवस्थोपनिपाताच्च ।

एतेन अतुच्छं तदित्यपि प्रत्युक्तम्, तुल्यदोषत्वात् । अथ न किञ्चित्तस्य क्षणान्तरे भवति, "न तस्य किञ्चिद्भवति न भवत्येव केवलम्" [ प्र० वा० ३।२७७ ] इति वचनादिति चेत्; किमिदानीमवधारणेन ? व्यवच्छेद्यस्य तत्फलस्याभावात् । अस्त्येवायम्, न तु[6] क्षणान्तरे, प्रागेव भावादिति चेत्, नेदानीमसौ कस्यचिदपि स्यात् । तथा हि– न तावत्तदन्तरस्थितेः; तदानीमभावात् । न ह्यन्यकालः स तस्या इत्युपपन्नम्, अन्यथा घटगतेनैवाभावेन तदन्यदेशस्य सर्वस्याप्यभाव इति भावनैरात्म्यप्रसङ्गात् ? नापि प्राच्यक्षणस्थितेः; स्वयं तदुपगमादिति व्यर्थमेवावधारणम् । अतः पश्चादेवासौ वक्तव्यो 'न भवत्येव केवलम्' इत्यस्यापि तथैवोपपत्तेः । न हि तत् तत्क्षणापेक्षमेव तन्नीरूपत्वप्रसङ्गादिति[7] नोपक्रान्तप्रसङ्गादि (द) तिक्रमः परस्य । भवतोऽपि कः पुनरसौ[8] विनाश इति चेत् ? न कश्चित्, निश्चित[9]निःश्रेयसमार्गस्य [10]तदनुपपत्तेः । भवत एव तु मिथ्यादृष्टेः प्रतिक्षणविनाशः समुपस्थायिवस्तुविनाशः पर्यनुयुज्यत इति चेत्, सोऽपि न कश्चिदन्यत्रान्यथाभावात् । निरूपयिष्यते चैतत् नातिदूरतः । इति सूक्तम्–'परिणामित्वात् विनाशानुपलक्षणात्' इति । तदपि कथम् ? विरोधादिति चेत्; न; प्रतीते । न हि प्रतीतमन्यथाभवत्यतिप्रसङ्गात् । व्यवहारस्य च प्रवृत्तिप्राप्त्यादेः तत्रैव सम्भवात् ।

अत्यन्तविनाशेऽपि सन्तानापेक्षया तत्सम्भवं मन्यमानस्य मतमाशङ्कते–

**परस्याप्यविरोधश्चेत् फलहेतुव्यपोहनः ।**
**प्रवृत्त्यांव्यवहाराणाम् [ अविनाशेऽपि सम्भवात् ] ॥ ९० ॥** इति ।

---

१–मानाद्तु– ता० । २ –त्तेरनुम – ता० । ३– वमेतदि–आ०, ब०, प० । ४ यन्यदन्यत्वे आ०, ब०, प० । ५ अनन्यत्व आ०, ब०, प० । ६ ननु च– आ०, ब०, प० । ७– दितिक्रमः परस्य आ०, ब०, प० । ८ पुनरस्यावि– आ०, ब०, प० । ९– श्चिते नि– आ०, ब०, प० । १० मिथ्यादृष्ट्यनुपपत्तेः ।

अपि इति परामर्शाभिमुख्ये । परस्य सौगतस्य सम्बन्धिना व्यवहाराणां पानभोजनादीनामनिरोधो विरोधाभाव । कुत ? फलञ्च हेतुश्च फलहेतू, हेतुशब्दस्य घ्यन्त्यत्वेऽपि न पूर्वनिपात, स्वकल्पे "लक्षणहेत्वोः" [ पाणिनि० ३।२।१२६ ] इति प्रयोगदर्शनात् । तयो र्व्यपोहः तद्हेतुफलव्यावृत्तिपरिकल्पित सन्तानस्तत्कल्पिते तद्व्यपदेशाच्च तमाश्रित्य प्रवृत्ते पानादिहेतुषु लोकस्य प्रवर्तनात् । यथा च तावत्सात्त्विकादिव हेतुफलतादात्म्यात् क्वित्र प्रवृत्तिरिति चेत् ? अत्रापि इदमेव कृतानुवृत्तिकमुत्तरम्—'फलहेतु' इत्यादि । अयमर्थ —फलहेत्वोर्व्यपोहः परस्परात्मन्यभावस्तत प्रवृत्तेः अन्यथा तद्योगात् । तथा हि—यदि हेतौ च फलम् न प्रवृत्ति तद्वतस्यापि दर्शनात्, प्रवृत्तेश्च तदर्थत्वात्, दृष्टेऽपि प्रवृत्तौ अनवस्थानात् । फलेऽपि यदि हेतु, कथं प्रवृत्ति ? फलवत्तस्याप्यनुपलम्भात्, तदुपलम्भावेन तदुपपत्ते, आकाशचर्वणस्य प्रकृतेष्वप्य प्रतिवेदनात् । तत प्रवृत्तेर्हेतुफलयोरन्योऽन्यात्मन्यभाव एव । तथापि कथमन्यदर्शनादन्यार्थितया प्रवृत्तिरिति चेत् ? न; सन्तानादिति दत्तोत्तरत्वात् । ततोऽपि कथं भेदाविशेषादिति चेत् ? न, दृष्टत्वात् । दृष्टा हि लोकस्याभेदकल्पनाया प्रवृत्तिरिति । 'चेत्' इत्याशङ्क्य परिहरन्नाह—'अविनाशेऽपि सम्भवात्' इति । अत्र सिंहावलोकितेन वक्ष्यमाणस्य नञ सम्बन्ध । ततो यत् 'परस्य' इत्यादि, तन्न, कुत ? एकान्तविनाशात् अन्यत्वात् कथञ्चिद्विनाशो अविनाश तस्मिन्नपि न केवल तदपोहे सम्भवात् प्रवृत्ते तदपोहे तदभ्युपगम परस्य चित्तभरणायैव न वस्तुत तस्यैवाभावात् । अविनाशस्य च निरूपितत्वात् निरूपयिष्यमाणत्वाच्च । इदमेव श्लोकै व्याचिख्यासु 'फलहेतुव्यपोहत' इत्यस्य द्वितीयमर्थं दर्शयन्नाह—

**यथाऽजनकजन्येषु न सन्ति कलशादय ।**
**तथा जनकजन्येषु ततस्तत्त्व निरन्वयम् ॥ ९१ ॥** इति ।

यथा येन दृश्यानुपलब्धिप्रकारेण न सन्ति न विद्यन्ते कलशादय । क ? अजनकजन्येषु अतद्धेतुफलेषु कुलिशकरणादिषु तथा तेन प्रकारेण जनकजन्येषु तद्धेतुफलेषु पिण्डकपालादिषु न सन्ति कलशादयः इति सम्बन्ध । प्रयोगश्च—यद्यत्रोपलब्धिलक्षणप्राप्तं नोपलभ्यते तत्तत्र नास्ति यथा अतद्धेतुफलेषु कलशादय, उपलब्धिलक्षणप्राप्ताश्च ते नोपलभ्यन्ते तद्धेतुफलेष्वपीति । ततस्तस्मात् निरन्वयम् अन्वयान्निष्क्रान्तं तत्त्व स्वरूपम्, कलशादीनामिति विभक्तिव्यत्ययेन सम्बन्ध । सत्येवं यत्सिद्ध तदाह—

**तत्र नाशादिशब्दाश्च समिताः समनन्तरे ।** इति ।

तत्र तेषु जनकजन्येषु नाश आदिर्येषां प्रागभावादीनां तेषां शब्दाः समिताः सङ्गता भवन्तीति शेष । न केवल प्रवृत्त्यादिरेवेति चशब्द । सत्येव हि तदभावे प्रागभावोपादानादिशब्दा

१ –कल्पल– ता० । २ कृत निवृत्ति– आ०, ब०, प० । ३– त्तस्म दप्यनु– आ०, ब०, प० । ४ 'विवर्ण पामरो नीच प्राकृतश्च पृथग्जन ।"– ता० टि० । प्रवृत्ते – आ०, ब०, प० । ५ करणादि– ता० । वज्रशरीरेन्द्रियादिषु । ६ ततस्तत्त्वं नि– ता० ।

जनकेषु, जन्येषु च नाशोपादेयादिव्यपदेशाः लोकसङ्केतप्रसिद्धाः संङ्गच्छन्ते नान्यथेति परस्य भावः। कस्मिन् सति ? समनन्तरे समानि सदृशानि अनन्तराणि अव्यवहितानि जनकजन्यानि यस्मिन् सन्ताने तस्मिन्निति। पररूपत्वमत्र शकन्धुवत्[1] प्रतिपत्तव्यम् उपसर्गस्य[2] सदृशार्थत्वम्। अनेन 'फलहेतुव्यपोहतः' इत्यस्य प्रथमोऽर्थो दर्शितः।

तत्रैवं परमतमुपदर्श्य अल्पवक्तव्यत्वात् तत्रेत्यादि निराकुर्वन् विनाशं पृच्छति–

**अन्यस्यान्यो विनाशः किं [ किन्न स्यादचलात्मकः ] ॥९२॥** इति।

**अन्यस्य** कलशादेः **अन्यः** कपालादिर्विनाशः। उपलक्षणमिदं तेन प्रागभावोऽप्यन्यो मृत्पिण्डादि। **किम्** इति प्रश्नयित्वा दूषणमाह–'**किन्न स्यादचलात्मकः**' इति। **किं न स्यात्** ? स्यादेव, **अचलात्मकः** अचलस्वभावः कलशादिः। नहि तदन्यप्रादुर्भावे तस्य[3] विनाशः; [4]त्रैलोक्यस्यापि तत्प्रसङ्गात् तदविशेषात्। नापि तदन्यभावः तत्प्रागभावः; जगतोऽपि तदेकप्रागभावत्वापत्तेः। तथा च तदुपमर्दनादेव तस्योत्पत्तेः तदेकसन्तानत्वमिति नावकाशः तन्नानात्वकल्पनस्य। तत प्रागभावादिवैकल्ये सति विद्यमानत्वाद् अवश्यंभाविनी तस्य कूटस्थता। इत्युपपन्नमेतत्– '**किन्न स्यादचलात्मकः**' इति। पर इदं परिहरन्नाह–

**तद्विवेकेन भावाच्चेत् [ कथन्नातिप्रसज्यते ]।** इति।

**तस्य** कलशादेर्विवेकेन पूर्वापरविच्छेदेन **भावो** भावनमवधारणम्, ण्यन्तादच्प्रत्ययः तस्मात् '**न स्यादचलात्मकः**' इति सम्बन्धः। न हि विविक्ततया भाव्यमानस्याचलात्मकत्वं पूर्वापराविवेके सत्येव तदुपपत्तेः। अत्र '**चेत्**' इत्याशङ्क्योत्तरमाह–

**कथं नातिप्रसज्यते।**

**सदापि [ सर्वभावानां परस्परविवेकतः ] ॥ ९३ ॥** इति।

**सदापि** सर्वकालमपि पूर्वापरकालवत् मध्यकालेऽपि **कथं** तद्विवेके **नातिप्रसज्यते** अतिप्रसज्येत[5] एव। एवं मन्यते–न तावत्तस्य तद्विवेकः पूर्वापरक्षणलक्षणः, तस्य प्रतिक्षिप्तत्वात्। अत स एव तस्य प्रागभावः प्रध्वंसश्चेति, स्वतोऽपि तस्य विवेकात्र क्षणभङ्गवादः शून्यवादमतिशेते इति। परमप्यतिप्रसङ्गं दर्शयति–'**सर्वभावानाम्**' अत्रापि सदापीति सम्बध्यते मध्येकरणात्। तदयमर्थः– आसिर्व्यासिः पूर्वापरानुगमः आप्तिः स विद्यतेऽस्येति आपि तदन्वयिरूपं सत् विद्यमाने न कल्पितं **कथं नातिप्रसज्यते** ? केषाम् ? **सर्वभावानां** चेतनेतरात्मनामर्थानाम्। अत्र हेतुमाह– '**परस्परविवेकतः**' इति। **परस्पर**मन्योऽन्यं जैनसौगताभ्यां **विवेकतो** विनिश्चयात् '**सदापिनः**' इति विभक्तिविक्रियया सम्बन्धः। अस्ति जैनवत् सौगतस्यापि तद्विनिश्चयः, अन्यथा क्षणविवेके निर्विवादात् अनुमानकल्पनावैफल्यापत्तेः। सतोऽपि तस्य[6] लूनपुनरुत्पन्नकेशादिवद् भ्रान्तत्वान्न

१ "शकन्ध्वादिषु पररूपं वाच्यम्"–कात्या॰वा॰१।१।६४। २ 'सम' इत्युपसर्गस्य। ३ अस्य आ॰, ब॰, प॰। ४ त्रैविध्यस्या– आ॰, ब॰, प॰। ५ –त एवं आ॰, ब॰, प॰। ६ अन्वयस्य।

तद्विषयस्य सत्त्वमिति चेत्; विवेकस्यापि न स्यात् तन्निश्चयस्याप्यसत्येव तस्मिन् द्विचन्द्रादौ दर्शनात्। बाध्यमानत्वात्तत्रैव तस्य भ्रान्तत्वं नान्यत्रेति चेत्; न, अनुगमेऽपि तुल्यत्वात्–तन्निश्चयस्यापि तत्केशाद्यनुगम एव बाधोपलम्भात् न पूर्वापरानुगम इति। तत्र तत्र विवेकभावनादचलक्षणकल्पपरिहार शून्यवाद-प्रसङ्गाद्विपर्ययसिद्धेश्च।

साम्प्रतं विवेकमभ्युपगम्य 'जनकजन्येषु' इत्येतन्निराकुर्वन्नाह–

**न चानन्तरमित्येव भावस्तद्व्यपदेशभाक्।** इति।

**न च नैव अनन्तरम्** अव्यवधानम् इत्येव हेतो **भावः** पिण्डकपालादि **तद्व्यपदेशं** कलशाद्यपेक्षया जनकजन्यत्वव्यपदेशं भजत इति **तद्भाक्**, सर्वस्यापि तत्पूर्वापरकोटिगतस्य जगत्क्षणस्य तद्भाक्त्वापत्ते आनन्तर्याविशेषादिति भाव।

परो विशेषं दर्शयति–

**तत्प्रतीत्य समुत्पादात् [ भावश्चेत् स कुतो मतः ] ॥९४॥** इति।

**तत्** पिण्डादिकं **प्रतीत्य** समनन्तरप्रत्ययं कृत्वा कलशादे, तच्च प्रतीत्य कपालादे **समुत्पादाद्भावः तद्व्यपदेशभाक्** न च सर्वं प्रतीत्य तस्योत्पादो यतस्तद्भाक्त्वस्यातिप्रसङ्ग इति मन्यते। तमेवेति **'चेत्'** इत्याशङ्क्य प्रश्नयन्नाह–**'स कुतो मतः'** इति। स प्रतीत्यसमुत्पाद कुत कस्मान्निमित्तात् नियतविषयो मत इति।

परस्तदाह–

**सादृश्यात् [ प्रत्यभिज्ञानं न सभागनिबन्धनम् ]।** इति।

**सादृश्यं** पिण्डकपालादीनां सारूप्यं तस्मात् स मत इति। तत्रोत्तरमाह–**'प्रत्यभिज्ञानं न सभागनिबन्धनम्'** इति। न हि सादृश्यं प्रत्यभिज्ञानादन्यत शक्यमवगन्तु प्रत्यक्षस्यासाधारणविषयत्वेन तत्राप्रवृत्ते, अनुमानस्य च तत्पूर्वकत्वात्, न च तत्परस्य सम्भवति। कुत ? सभागनिबन्धनं सदृभागयोः तदिदमिति आश्रयोर्निबन्धनेन एकत्वरूपेण वर्तमानं निबन्धनं मत इति। तथापि कथं तत् परस्येति चेत् ? न, अनेकान्तविद्वेषात् स्वयं च तद्भागभेदवत् तस्यापि भेदकल्पनया निराकरणात्। चित्रज्ञानवादिनः सम्भवत्येव तदिति चेत्; अत्राह–

**विशेषकल्पनायां स्यात् परस्याव्यभिचारिता ॥९५॥** इति।

**विशेषस्या**कारभेदस्य प्रत्यभिज्ञाने **कल्पनायां परस्य** अक्रमानेकान्तादन्यस्य क्रमानेकान्तस्य **स्यात्** भवेत् **अव्यभिचारिता** सर्वभावेष्वविचलितत्वं युगपदिव क्रमेणाप्यनेकान्तस्य प्रतिषेद्धुमशक्यत्वात्। कथमशक्यत्वं यावता नित्यानित्ययोरेकत्वे तदुपपत्ति, नित्यानित्ययोरिति चोपलभ्यानुपलभ्ययोरित्यर्थ, तयोश्चैकत्वमसम्बद्धम्। तदुक्तम्–

१ –तितद्वि प०। २ भ्रान्तत्वात्नान्य–आ०, ब०, प०। ३–द्भावकस्यापि प्रसङ्ग इति ब०, ब०, प०। ४ तत्प्रतीते प०। ५–ल्पनायां नि– आ०, ब०, प०।

"यदि नित्यमनित्य चैकमेव तदा प्रतिपन्नमप्रतिपन्न चैकमिति प्रसक्त तथा च असम्बद्ध प्रतीयमानमेकत्वेनान्यथा[1] न शक्य प्रतिपत्तुं नाप्रतीतमेन प्रतीतम् ।" [प्र० वार्तिकाल० १।२०५] इति चेत, तदसङ्गतम्, यस्मात न[2] ह्युपलभ्यत्व नित्यत्वम्, अनित्यत्व वा तद्विपर्यय, स्वलक्षणस्यापि नित्यत्वापत्ते, अनित्यत्वे वाऽनुपलभ्यत्वानुपङ्गात्, अपि त्वनुगमान्नित्यत्व व्यावृत्तेश्चानित्यत्वम् अनुगमव्यावृत्ती च सुवर्णरुचकाद्यपेक्षया नैकत्रापि विरुद्धे । न च रुचकादेर्व्यावृत्तिमत प्रतीतस्येतरस्य च परस्परमेकत्वं जैनस्य सम्मतम्, प्रत्यभिज्ञानाकारयोरिव भेदस्यैव भावात । तत 'प्रतिपन्नमप्रतिपन्न चैकम्' इति परमतानभिज्ञानादेव प्रतिपादितम् । रुचकादे परस्परमिव सुवर्णादपि भेदे नेक नित्यानित्यम्, अभेदे परस्परमप्यभेद एव अभिन्नादभिन्नस्य गत्यन्तराभावात्, तथा च नित्यमेव तत् नानित्यमपीति चेत्, न, प्रत्यभिज्ञानस्यापि एवमव्यवस्थितिप्रसङ्गात्–तदाकारस्यापि स इत्यादे परस्पर मिव ततोऽपि भेदे नैक चित्र सन्तानान्तरवत्, अभेदेऽपि स एव दोपस्तदन्यतमाकारवदिति अनवधारित स्यैव भेदेतरभावस्याभ्युपगमाददोष इति परिहारस्तु क्रमचित्रत्वमपि भावेषु परिपुष्णाति । सत्यमिद यदि तथा प्रतिपत्ति, न चैवम् । तदुक्तम् —

"केनचित्तस्य रूपेण नोपलब्धिः परान्यथा ।
अविचित्तिर्यन रूपेण तदस्येति कथ मतम् ? ॥
पूर्वं तेनास्य विचित्तिश्चेत् पूर्वमेव तथा भवेत् ।
इदानीं नैव, तद्रूपमस्येति कथमेकता ? ॥
एक पूर्वपराभ्या चेद्रूपाभ्यामवियोगतः ।
वियोगे दृश्यमानेऽपि वियोगो न कथ मतः ॥
क्रमेणास्यावियोगश्चेद्वियोगोऽपि तथा भवेत् ।
अत एवोभयात्मत्वमवियोगवियोगतः ॥
यथैवास्याक्रम सत्त्व दृष्टिरस्य तथा भवेत् ।
अक्रमस्य च सत्त्वस्य न योग. क्रमभाविकः ॥" [ प्र०वार्तिकाल० १।२०५ ]

इति चेत्, नेदानी प्रत्यभिज्ञानमपि । तत्राप्यस्य तुल्यत्वात् । तथा हि–

स इत्येव प्रतीतस्य ज्ञानस्यैवायमित्यपि ।
अप्रतीत कथ नाम त्वयाकार[3] प्रकल्प्यताम् ॥ १४३५ ॥
तस्याप्यन्यत्र विचित्तिश्चेदन्यत्रैव भवेदसौ ।
स इत्यत्र तु नास्तीति कथ तस्य तदेकता ॥ १४३६ ॥
सैदतद्देशकाभ्या तदेक चेदवियोगत ।
वियोगे दृश्यमानेऽपि वियोगो न कथ मत ? ॥ १४३७ ॥

---

१ -या या श– ता० । २ न नुपलभ्यत्व नित्यमनित्य वा आ०, ब०, प० । ३ –ज्ञाकार– आ० ब०, प० । ४ पूर्वत्वेनाप्यविति– आ०, ब०, प० । "पूर्वत्वेनास्य विचि" वार्तिकाल० । ५ सदतद्देशकालाभ्या चैक आ०, ब०, प० ।

देशक्रमादवियोगो वियोगस्तत्क्रमान्न किम् ।
अत एवोभयात्मत्वमवियोगवियोगतः ॥ १४३८ ॥
यथा तदक्रमं सत्त्वं दृष्टिरस्य तथा भवेत् ।
अक्रमस्य च सत्त्वस्यावियोगस्तत्क्रमात् कथम् ॥ १४३९ ॥ इति ।

ततो यथा प्रत्यभिज्ञानमितरेतरदेशपरिहारप्रतिपन्नैस्तदाकारैरेकं तथा सुवर्णादिकम् अन्योऽन्यकालपरिहारवर्तैरिति प्रतिपत्तव्यम् । कुतः पुनः रुचकादीनां पूर्वापरीभावस्य प्रतीतिः ? पूर्वापरप्रत्ययाभ्यामिति चेत्; तद्भेदस्य कुतः ? स्वसंवेदनादिति चेत्; कथं ततो द्वित्वप्रतिपत्तिः अन्यगतस्यान्यत्राप्रवृत्तेः ? एकस्य च पूर्वपरीभूतस्याभावात् । एकमेव तत्तथाविधमिति चेत्; न, एकत्वे साक्षात्करणविषयतया पौर्वापर्यानुपपत्तेः । तदुक्तम्—

"यदि पूर्वापरीभावः केन तस्य प्रतीयताम् ।
प्राक्परप्रत्ययाभ्यां चेत्तयोर्भेदगतिः कुतः ॥
स्वसंवेदनभावाच्चेन्न स्याद् द्वित्वगतिस्ततः ।
न चाप्यविद्यमानस्य परपूर्वस्य तद्गतिः ॥
एकं संवेदनं तच्चेत् परपूर्वतयेष्यते ।
एकत्वे परपूर्वत्वं साक्षात्कृततया कथम् ? ॥" [प्र० वार्तिका० १।२०५]

इति चेत्, न; प्रत्यभिज्ञानेऽप्येवं प्रसङ्गात् । तथा हि—

सोऽयमित्यनयोर्देशभेदो गम्यः कुतस्त्वया ।
ताभ्यामेवेति चेद्द्वित्वं तयोर्विज्ञायतां कुतः ॥ १४४० ॥
स्वसंवेदनभावाच्चेन्न स्याद्द्वित्वगतिस्ततः ।
नचाप्यविद्यमानस्य भिन्नदेशस्य तद्गतिः ॥ १४४१ ॥
एकं संवेदनं तच्चेद्भिन्नदेशतयेष्यते ।
एकत्वे भिन्नदेशत्वं साक्षात्कृततया कथम् ? ॥ १४४२ ॥ इति ।

ततो यथा प्रत्यभिज्ञानं स्वाकारे कश्चिदाभिमुख्यमजहदेव तदन्तरं प्रत्येति युगपत्, तथा क्रमेणापि रुचकादिपर्यायपरिग्रहाभिमुख्यमपरित्यजदेव तदन्वयज्ञानमपरापरानपि स्वस्तिकादिपर्यायान् परि छिनत्तीति सुभाषितमेतत्—

**विशेषकल्पनायां स्यात् परस्याव्यभिचारिता ।** इति ।

मा भूत्प्रत्यभिज्ञानम्, युगपदपि चित्रैकस्यानुपपत्तेरिति चेत्, अत्राह—

**तस्मात् सभागसन्तानकल्पनापि न युज्यते ॥ ९६ ॥**

**न चेत् [ स परिवर्तेन हेतुरेव फलात्मना ] ।** इति ।

---

१– दविशोगे आ०, ब०, प० । "अभि उपसर्गस्य चेति सूत्रेण विकारस्य दैर्घ्यं च भवति, अविचारः अतीचार इत्यादिवत् ।"-ता० टि० ।

प्रत्यभिज्ञानमित्यनुवर्तते। **न चेत्** न यदि प्रत्यभिज्ञानम्, **तस्मात्** प्रत्यभिज्ञानात् **सभागानां** सदृशापरापरक्षणानां **सन्तानस्य कल्पनापि** अपि शब्दाद् व्यवहारश्च **न युज्यते**। एवं मन्यते सति हि प्रत्यभिज्ञाने तदवगतसादृश्यायत्तात्[1]प्रतीत्यसमुत्पादात् हेतुफलभावनियमः, ततश्च तत्सन्तानकल्पना न चासतीति। संवृत्यैव तत्कल्पना न प्रत्यभिज्ञानादिति चेत्; न; संवृतेरपि तद्रूपत्वात्। सा हि 'स एवाहं जलं पिबामि यः पूर्वं तदद्राक्षम्' इति मतिरेव। कथन्न प्रत्यभिज्ञाक्षणानां पौर्वापर्यकल्पनं संवृतिरिति चेत्? न; तत्रापि अस्मादिदं पूर्वमतश्चेदं परमिति प्रतिपत्तेः [2]प्रत्यवमर्शत्वात्, किं पौर्वापर्यस्य कल्पनेन? तत्त्वत[3] एवं भावात्, अन्यथैकक्षणमेव जगत्प्रसक्तम्। तथा चेत्; न कारणं कार्यं वा कस्यचिदिति कथं वस्तुत्वं यतो व्योमकुसुमादिकमतिशयीत? कथं वा सुगतक्षणानां पौर्वापर्यं यत इदं शोभेत—

"तिष्ठन्त्येव पराधीना येषां तु महती कृपा।" [प्र० वा १।२०१] इति।

कल्पितमेव तत्रापि तदिति चेत्; न; स्वयं तस्याकल्पत्वात्। तस्माद्वासनोपप्लवाधिष्ठितो लोक एव तदपि कल्पयति। अत एवोक्तम्—

"न च पश्यति सन्तानं नापि कश्चित्प्रवर्तते।
न तिष्ठति प्रमाभावात् केवलं भवतो भ्रमः॥" [प्र० वार्तिकाल० १।१९६]। इति।

इति चेत्, तात्त्विकमेव तत्र अन्यद्रूप्यात् तत्कस्मान्न भवति? तत्र प्रमाणस्य 'यदि पूर्वापरीभावः' इत्यादिना प्रतिक्षेपादिति चेत्; ननु सोऽपि प्रश्नस्तदुत्तरभावप्रवृत्तापरापरज्ञानरूप एव कथं क्वचित् तद्भावं प्रतिक्षिपेत्? स्वयं तत्त्वतस्तद्रूपात्तदयोगात्। तस्यापि ताद्रूप्यमारोपादेव, वस्तु[5]तस्तत्रापि तस्य यदि इत्यादिनैव प्रतिक्षेपादिति चेत्, न; अनवस्थोपनिपातात्। ततो दूरं गत्वापि तात्त्विकमेव तत्र पौर्वापर्यमिति सिद्धस्तदात्मा परमार्थत एव सन्तानः। तस्य च न प्रत्यभिज्ञानादन्यतः प्रतिपत्तिः। तथा च सिद्धं तद्वदेव क्रमतोऽपि वस्तुषु वैचित्र्यम्। तदेवाह—'**स परिवर्तेत हेतुरेव फलात्मना**' इति। स कलशाऽवग्रहादिरेव **हेतुरेव** कारणमेव **परिवर्तेत** परिणमेत **फलात्मना** [6]कपालेहादिफलरूपेण, न हेतोरन्य एव फलमित्येवकारः। एतेन 'अविनाशेऽपि' इति[7] व्याख्यातम्।

कथ पुनर्हेतोः फलात्मना परिवर्तनं प्रत्यक्षबाधनात्, तेन निरन्वयस्यैव विनाशस्य प्रतिपत्तेरिति चेत्? अत्राह—

**तस्माद्भावविनाशोऽयं फलीभावः [ तदग्रहः ] ॥ ९७ ॥**इति।

**तस्मात्** पूर्वोक्तात्तुच्छविनाशाभावात्। उक्तं हि पूर्वम्—'न तुच्छो विनाशस्तस्य स्वप्रतिपत्तावप्यसामर्थ्यादसम्बन्धाच्च। न हि वस्तुना[8] संयोगः सम्बन्धः; अद्रव्यत्वात्। नापि समवायः; तदधिकरणतया तस्याप्रतिपत्तेः। न च विशेषणभावः; 'तत्प्रतिपत्तौ तदनुरक्तस्य वस्तुनोऽपि नीलानु-

१ -त्तादप्रती- ता०। २ प्रत्यवमर्शात् प०। ३ तत्त्व एवं ता०। ४-व तथान्यत्र वा तत्समा-आ०, ब०,प०। ५ ततस्तस्यापि तत्र य- आ०, ब०, प०। ६ कलशः कपालरूपेण अवग्रहश्च ईहारूपेण। ७ न्यायवि० श्लो० २।९७। ८ -नास्य संयो- आ०, ब०, प०।

रक्तोत्पलवत् प्रतीतिप्रसङ्गात्' इति । नित्यश्चासौ भवेदकार्यत्वात् आकाशादिवत् । कार्यमेवासौ मुद्गरादेरुत्पत्तेरिति चेत्; कुतस्तत्प्रागभावस्य विनाशः ? तदभावे तदुत्पत्तेरयोगात् । तत एव मुद्गरादेरिति चेत्; न; पुनस्तत्प्रागभावविनाशस्यापि तत एव भावे युगपदनेकविनाशप्रतीतिप्रसङ्गात् । न चैकहेतुका युगपदनेककार्योत्पत्तिः; सामग्रीभेदादेव तदुपदर्शनात् । घटादिरेव तस्य प्रागभावस्ततस्तद्विनाश एव तस्यापि नाश इति चेत्, नन्वेवं विनाशोऽपि भावरूप एव स्याद् अभावत्वात् प्रागभाववत् । ततः फलशब्दिरेवायं न तुच्छः । तस्मात् भावस्य घटादेर्विनाशोऽयम् उभयसम्मतः फलीभावः अफलस्य सतः फलतया भवनम् । कुतः पुनः च्विग्रहण न 'फलभाव' इत्येवोच्येत, फलस्यैव हेतुविविक्तस्य तद्विनाशत्वादिति चेत् ? न; दत्तोत्तरत्वात् — 'अन्यस्यान्यो विनाशः किम्' इत्यादिना[3] । फलभावप्राप्तिरेव विनाश इति ज्ञापनार्थमुपपन्न तद्ग्रहणम् । अथवा तस्मादिति सभागसन्तानकल्पनादिति प्रतिपत्तव्यम् । न हि तत्कल्पनं हेतोः फलभावपरिवर्तनामन्तरेण सम्भवति । सम्भवन्त्येव हेतुफलविविक्तस्य भावादिति चेत्, न; सुगतेतरज्ञानयोरपि त प्रसङ्गात् । अनुपादानोपादेयत्वान्नेति चेत्; तदेव कुतः ? सादृश्याभावादिति चेत्; न, सुगतज्ञानेनेतरस्याप्रवेदनोपनिपातात्[4] । सादृश्यविशेषाभावादिति चेत्; कस्तर्हि तद्विशेषोऽन्यत्र कथञ्चिदभेदादिति युक्तं तत्कल्पनादपि तस्य तदात्मना परिवर्तनोपादानम्, प्रत्यक्षप्रतिपत्तेरपि तत्र समर्थनात् । ततः किम् ? इत्याह—

तद्ग्रहः ।

**तद्ग्रहः [ प्रतिषेधोऽस्य केवलं तन्निबन्धनः ] । इति ।**

तस्य भावस्याग्रहोऽप्रतिपत्ति. तद्ग्रहः फलीभावस्य ग्रहो[5] न ग्रहनिवृत्तिमात्रम् । नाप्यन्यग्रह इति यावत् । एवमपि भवतु तत्र फलीभावव्यवहारः, विनाशव्यवहारस्तु कथम् ? तद्भावस्याविनाशरूपत्वात् । अत्राह-'प्रतिषेधोऽस्य केवलं तन्निबन्धनः' इति । प्रतिषेधः तद्व्यवहारः अस्य भावस्य केवलं नान्यनिमित्तोऽपि तु तन्निबन्धनः फलीभावग्रहनिमित्तकः तत एव लोकैस्तद्व्यवहारस्य प्रवर्तनादिति भावः ।

साम्प्रतं हेतुफलयो. पराभिमतमन्यत्वव्यवस्थापनं दर्शयति—

**अन्यथात्वं यदीष्येत हेतोरपि फलात्मनः ॥ ९८ ॥**
**अन्य एवेति किन्नेष्टमिति केचित्प्रचक्षते ।**

अन्यथात्वम् अन्यप्रकारत्वं यदि चेत् इष्येत हेतोः विवक्षितफलजनकस्य अतज्जनकादिति सामर्थ्याद् गम्यते । किमिति तदिष्यते इति चेत् ? अन्यथा हेतुत्वासम्भवात् । न हि शालि-

१ ततश्च त– आ०, ब०, प० । २ फलीभाव इत्यत्र च्विप्रत्ययग्रहणम् । ३ एव ग्रह– प० । ३ न्यायवि० श्लो० २।९० । ४ तदाकारत्वाभावादिति शेषः । ५ ग्रहो न ग्रह इति आ०, ब०, प० । ६ एतदपि भ– आ०, ब०, प० ।

बीजस्यातद्बीजादन्यथात्वमन्तरेण[1] तदङ्कुरहेतुत्वं तद्वदेव तद्धेतुत्वप्रसङ्गात्[2]। तथा च न नियतो हेतुभाव इत्यभिमतसिद्धये यत् किञ्चिदुपादातव्यं भवेत्। इष्यत एव तर्हि तस्य ततोऽन्यथात्वं प्रतिभासप्रयोजनव्यपदेशादिभेदादिति चेत्; अत्रोत्तरम्–'अपि फलात्मनः' इति। फलमेव फलात्मा सुबुद्ध्यात्मवत्, ततोऽपि न केवलमतद्धेतोरेव 'हेतोरन्यथात्वमिष्येत' इति सम्बन्धः, प्रतिभासादि-[3]भेदस्य तत्रापि भावात्। ततः किमिति चेत्? उत्तरम्–अन्य एव फलात्मनो भिन्न एव हेतुरिति प्रथमा-परिणामेन सम्बन्धः। इति एवं किन्नेष्टम् इष्टमेव भवति जैनस्यापि प्रमाणोपपत्तेः। तथाहि–यद् यस्मा-दन्यथाभूतं तत्ततोऽन्यदेव यथा शालिबीजमतद्बीजात्, अन्यथाभूतं च तत्फलादपि तत्। तथापि तस्य तस्मादनन्यत्वं चेत्[4]; अतद्बीजादपि स्यादिति तदपि तस्यैव[5] विवर्तः स्यात्। एवं च–

शालिबीजविवर्त्तस्य देशकालादिभेदिनः।
जगतः सम्प्रसज्येत स्याद्वादमुपजीवताम्॥ १४४३॥
तन्मा भूदिति मन्वानैरतद्बीजादिव स्फुटम्।
तत्फलादपि तद्बीजस्यान्यत्वमुपगम्यताम्॥ १४४४॥
तत्र हेतुफलैकत्वं कथमप्युपपत्तिमत्।
इत्येवं केचिदज्ञानमलदिग्धाः प्रचक्षते॥ १४४५॥

तत्रोत्तरमाह[6]—

**अन्यथात्वं न चेत्तस्य भवेद् ध्रौव्यम् [ अलक्षणात् ]।** इति।

**तस्य** भावस्य **ध्रौव्यं** कौटस्थ्यम्। कदा? **न चेत्** न यदि **अन्यथात्वं** फलरूपतया परिवर्तनम्, तस्येत्यत्रापि सम्बन्धनीयम्। कुतः? इत्यत्राह–

**अलक्षणात्।**

**अभावस्यापि [ अभावोऽपि किन्नेत्यन्ये प्रचक्षते ]॥ ९९॥** इति।

**अलक्षणात्** अप्रतीतेः **अभावस्य** तद्विनाशस्य न केवलमन्यथात्वस्येत्यपिशब्दः। कथं पुनस्तस्यालक्षणं कार्यस्य प्रत्यक्षत एव प्रतिपत्तेः, तद्रूपत्वाच्च विनाशस्येति चेत्? कस्यासौ विनाशः? कारणस्येति चेत्, न, तस्य कार्येण समकालत्वे विनाशतद्वतोर्यौगपद्यप्रसङ्गात्। तत्पूर्वकालत्वे तु कुतस्तस्य ग्रहणम्? अग्रहणे तस्येत्ययोगात्। प्रत्यक्षत इति चेत्, न; तेनापि तत्कालेन वर्तमानतयैव प्रतिपत्तेः। कार्यकालादिति चेत्; न, तस्य पूर्वत्राप्रवृत्तेः। प्रवृत्तौ वा तदपि तद्विषयत्वात् कथं वर्तमानं कार्यवत्? स्वकालापेक्षयैव वर्तमानत्वं न कार्यकालापेक्षयेति चेत्? कथं तर्हि प्रत्यक्षतस्तत्-जन्मनः स्मरणाच्च पूर्वभावस्याग्रहणमुक्तं यत इदं शोभेत–

**"संवेदनं न पूर्वं तत्पूर्वत्वग्रहणे क्षमम्।**
**न परं तेन पूर्वत्वं स्मरणान्नैव साध्यते॥"** [ प्र० वार्तिकाल० ३।२०५ ] इति।

---

१ –ण्यातद– ता०। २ अन्यथात्वं यदि न स्यात् तदा यवबीजवत् यवाङ्कुरहेतुत्वं स्यादिति भावः। ३– भासनादि– ता०। ४ चेतद्बीजा– आ०, ब०, प०। ५–व च वि–आ०, ब०, प०। ६ इत्याह प०।

कथं वा द्रव्यरूपस्याप्रतिपत्तिः ? पूर्वापरयोरिव प्रत्यक्षत एव तदनुगमस्यापि प्रतीते द्रव्यस्य तद्रूपत्वात् । तदेवाह–'अभावोऽपि किन्न' इति । अः आत्मा मतिश्रुतादिपर्यायानुरूप तस्य भावः अपिशब्दात् पृथिव्याद्यन्वयरूपपुद्गलादिभावोऽपि किं कस्मान्न ? स्यादेव, प्रत्यक्षविषयस्याभावायोगात् । तथा चान्यथात्वमेव विनाश कारणस्य, नैकान्ततस्तद्विविक्तं कार्यमिति मन्यते । यदि वा, यदुक्तम्–"कार्यवज्जगदपि सर्वस्याकारणस्य परिवर्तः स्यादन्यथात्वाविशेषात् ।" [ ] इति, तत्राह–'अभावोऽपि किन्न' इति । अभावोऽपि न केवलं परिवर्तं तत्तस्य कार्यवत् किन्न स्यात् ? स्यादेव, अन्यत्वाविशेषात् । तथा च–

जगत समकालस्य नाशे सति परस्परम् ।
कार्यकारणभावस्य स्यादभाव तथापि च ॥ १४४६ ॥
ततश्च भावनैरात्म्यमनिवार्यं प्रसज्यते ।
कार्यस्यैव विनाशत्वं तथैव यदि बुद्धितः ।
विवर्तत्वं च तस्यैव स्यादित्यपि च वक्ष्यते ॥ १४४७ ॥

प्रकृतस्योपसंहारमाह–'इत्यन्ये प्रचक्षते' इति । इति एवम् अन्ये जैना[5] प्रचक्षते प्रमाणोपपन्नं प्रतिपादयन्ति ।

साम्प्रतं व्यवहारस्यातिप्रसङ्गमपरं तदभावप्रसङ्गमिव परिहरन्नाह–

**स्वस्वभावस्थिता भावा भावान्तरसमुद्भवे ।**
**नष्टा वा नान्यथाभूताः [ ततो नातिप्रसज्यते ] ॥ १०० ॥** इति ।

**भावो** दध्यादि **अन्यथा** स्वप्रकारादन्यप्रकारेण **न भूतो** न जातः । एतच्च न तत्कार्यतक्रादिप्रादुर्भावेऽपि तु **भावान्तरस्य** तदन्यस्योष्ट्रादेः **समुद्भवे** प्रादुर्भावे सति, तस्मिन् तद्रूपेण न परिवृत्त इति यावत् । स्वः असाधारण उष्ट्राद्यसम्भवी **स्वभावस्तेन स्थिता** यत इति । भावान्तरसमुद्भवे इत्यत्रापि योज्यम् । तदयमर्थः–यस्मादुष्ट्रादिप्रादुर्भावेऽपि स्वभावस्थित एवायं प्रतीयते तस्मात्तद्रूपापत्त्या अन्यथाभूत इति । प्रतीतिश्चात्र स्वभावस्थितत्वस्य हेतुत्वाभिधानादेव लभ्यते, अन्यथा तदनुपपत्तेः । अत्रैव '**नष्टो वा**' इति दृष्टान्तः । 'न' इत्यत्रापि सम्बध्यते मध्येकरणात् । वाशब्दश्चेवार्थः । तदयमर्थः–यथा भावान्तरसमुद्भवे भावो न नष्टः तदापि स्वस्वभावस्थितस्यैव तस्य प्रतीतेः, नाशे तदनुपपत्तेः, तथा तत एव न तद्रूपापत्त्याऽन्यथाभूत इति । ततो यथा तत्राय प्रसङ्गः–

अन्यस्य हि विनाशित्वे सर्वदा दध्यसम्भवात् ।
चोदितो दधि खादेति कथं तत्रापि वर्तताम् ॥ १४४८ ॥
को वा प्रवर्तता तत्र प्रवृत्तिरपि का भवेत् ।
न किञ्चिद्वै न तत्त्वं स्यादन्यनाशप्रवादिनाम् ॥ १४४९ ॥ इति ।

---

१ तदुपगम– आ०, ब०, प० । २ य आ– आ०, ब०, प० । ३ श्रुत वधिप– आ०, ब०, प० । ४ तथापि आ०, ब०, प० । ५ जना प्र– आ०, ब०, प० । ६ एव तच्च आ०, ब०, प० । ७ –रि स्वभा– आ०, ब०, प० ।

कार्यान्यस्यान्यत्वाविशेषेऽपि तद्विनाशित्वाभावात्, तथाऽयमपि न प्रसङ्गः–

"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ।
चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥" [प्र० वा० ३।१४२ इति

विशेषनिराकृतेरभावात् । दध्यादेर्हि तक्राद्यपेक्षयैवोभयरूपत्वप्रतिपत्तेर्नोष्ट्राद्यपेक्षया । तदेवाह– 'ततो नातिप्रसज्यते' इति । ततस्तस्मात्प्रतीतिसिद्धात् विशेषात् नातिप्रसज्यते दधिवदुष्ट्रादौ, दधिकामस्य [1]प्रवृत्तिर्न भवतीत्यर्थः ।

तदेवं प्रपञ्चतः साध्यमुपदिश्य साधनस्वरूपं दर्शयन्नाह–

**साधनं प्रकृताभावेऽनुपपन्नं [ ततोऽपरे ] ॥ १०१ ॥** इति ।

साध्यतेऽनेनेति साधनं लिङ्गम् । तत् प्रकृतं शक्यत्वादिलक्षणं तस्याभावे अनुपपन्नम् असम्भवि । 'निश्चितम्' इत्यपि द्रष्टव्यं वृत्तौ अन्यत्र च तद्वचनात् । कथमेवमन्यथानुपपन्नत्वमेव हेतुलक्षणं निश्चयस्यापि तदन्यस्य भावात् ? न, तस्य साधारणत्वात् । साधारणः खलु निश्चयः तस्य हेतुवदन्यत्रापि भावात् । असाधारणेन च लक्षणेन भवितव्यम्, तच्चान्यथानुपपन्नत्वमेव हेतावेव तस्य नियमात् । तदपि साधारणमेव अहेतावपि प्रत्यक्षादौ स्वार्थापेक्षया भावात्, भवति हि प्रत्यक्षादि स्वार्थापेक्षयाऽन्यथानुपपन्नम्, न च हेतुः । कस्मात् ? साध्याभावात् । न हि तद्विषयस्य साध्यत्वं प्रसिद्धत्वात् । अप्रसिद्धत्वे प्रत्यक्षादेरपि न प्रसिद्धिः विषयप्रसिद्ध्यैव तस्यापि प्रसिद्धेः[2] । ततो यदि तस्य प्रसिद्धिः; प्रसिद्धिरेव विषयस्यापीति न तस्य हेतुत्वम् । कथमिदानीम् 'अस्ति आत्मोपलब्धेः' 'नास्ति घटोऽनुपलब्धेः' इति च प्रत्यक्षस्यैव हेतुत्वप्रतिपत्तिरिति चेत् ? न; विषयापेक्षया तदभावात् । विषयो हि तस्यात्मास्तित्वं घटाभावश्च, न तत्रैव हेतुत्वं प्रसिद्धत्वात्, अपि तु तद्व्यवहारे, तत्र च न प्रत्यक्षत्वमुपलम्भादेरविषयत्वात् । कथं पुनस्तत्रापि हेतुत्वम् असति तदनुपपत्तेः । सतो हि लिङ्गं ज्ञापकं भवति नासत खरशृङ्गवत् । सत्त्वेऽपि न किञ्चिल्लिङ्गेन, विनापि तेन तत्प्रसिद्धेः, निश्चयाभिधानात्मा हि व्यवहारः, तस्य प्रत्यक्षत एव स्वसंवेदनादेरवगमात्, किं तेन ? कृतस्य करणायोगात् । असन्नेव [3]तेनायमुत्पाद्यते विषयोपदर्शनेनेति चेत्; न; साध्यं प्रति[4] तस्य कारणत्वाभावात् । भवतु तर्हि व्यवहारयोग्यत्वे तस्य लिङ्गत्वमिति चेत्, कस्य तद्योग्यत्वम् ? तद्विषयस्यैवेति चेत्, सिद्धं तर्हि तस्य तत्रैव कथञ्चिद्धेतुत्वमिति कथमतिव्यापकत्वं लक्षणस्य ? नन्वेवमनवस्थितिः प्रत्यक्षवदनुमानस्यापि तदुत्थापितस्य पुनस्तदुत्थापितस्य लिङ्गत्वप्राप्तेः । यत्राविप्रतिपत्तिस्तस्य व्यवस्थैव साध्याभावादिति चेत्, तत्र तर्हि सिद्धमन्यथानुपपन्नत्वमहेतुत्वेऽपि इति कथन्नातिव्याप्तिरिति चेत् ? न, तन्मात्रस्यालक्षणत्वात् । प्रकृतापेक्षं हि तत्तल्लक्षणम्, तच्च नाविप्रतिपत्तौ सम्भवति, प्रकृतस्य विप्रतिपत्तिविषयत्वात् । यत्र तु सम्भवति तल्लिङ्गमेव प्रत्यक्षादिकमपि । कथं पुनः सति तस्मिन् विप्रतिपत्तिर्यतः प्रकृतसम्भव

---

१ प्रतीतिर्न प्र– प० । २ "साध्यार्थासम्भवाभावनियमनिश्चयैकलक्षणो हेतुः ।"–प्रमाणसं० पृ० १०२ । ३ हेतुना । ४ प्रतीतस्य कारकाभा– प० । प्रतीतस्य कारकत्वाभा– आ०, ब० ।

इति चेत् ? न, दत्तोत्तरत्वात्[1]–'भ्रान्तेः पुरुषधर्मत्वात्' इति । ततो युक्तम्–'अस्त्यात्मा उपलब्धे' इत्यादि । न चैवं क्षणक्षये तथावभासनस्यापि हेतुत्वं साम्यवत् तस्यापि असिद्धेः । आत्मोपलब्धिरपि असिद्धैवानात्मवादिनं प्रति इति चेत्, न, सोऽहमिति बुद्धेस्तेनाप्यभ्युपगमात्, अन्यथा आत्मारोपाभावादनुपायसिद्धा मुक्तिरिति व्यर्थ एव तदर्थं[2] प्रयासः स्यात् । [3]तद्बुद्धिरेव चात्मोपलब्धिः, तत्प्रतिभासिनः संवेदनान्वयस्यैवात्मत्वात् । न चैवं क्षणक्षयावभासनमात्रोऽभिमार्गान्तरात् कस्यचिदपि विपश्चितो निश्चयकुटीरकोटरमुपढौकितमस्ति यस्य लिङ्गत्वमात्मोपलब्धिवत् प्रतिपद्येमहि । ततो युक्तम्–'प्रकृत' इत्यादि ।

अत्र प्रकृतस्यैव, अभाव एव, अनुपपन्नमेवेति चावधारयितव्यं सावधारणत्वात् वाक्यानाम् । तत्र प्रथमेनावधारणेन विरुद्धस्य व्युदासः, नह्यसौ[4] प्रकृतस्यैवाभावेऽनुपपन्नः, अपि तु तद्विपरीतस्यैव । द्वितीयेनासिद्धस्य[5] । नह्ययमपि प्रकृताभाव एवानुपपन्नः, तद्भावेऽपि तथाभावात् । न तर्हि धूम प्रयत्नानन्तरीयकत्वादिरपि हेतुः, साध्यस्य मुर्मुरदहन वनकुसुमानित्यत्वादेभावेऽपि तस्याभावादिति चेत्, न, तस्यासाध्यत्वात् । साध्यं हि शक्यत्वादिविशेषणं पर्वताग्न्यादिकमेव तत्रैवाभिप्रेतत्वादेभावात् न मुर्मुराग्न्यादौ विपर्ययात्, अतस्तत्र साध्याभावादेव तस्याभावः । कथं तर्हि महानसाग्न्यादावपि तस्य भावः तस्याभिप्रेतत्वाद्यभावेनासाध्यत्वात् ? भावे वा कथन्न व्यभिचारः ? तत्सदृशस्यैव तत्र भावादिति चेत्, न, सर्वत्र एवमेव व्यभिचारात् अन्यथा तदप्रसिद्धिप्रसक्तेः । न हि 'प्रयत्नानन्तरीयको ध्वनिः अनित्यत्वात्' इत्यत्रापि ध्वनिगतस्यैव अनित्यत्वस्य विद्युदादौ भावात् व्यभिचारः, अपि तु तत्सदृशस्यैव, सामान्यस्यैकस्य प्रतिक्षेपादिति चेत्, न, अन्तर्व्याप्तिनिर्णयाभावादेव [10]तदुपपत्तेः, न साध्याभावे तत्तुल्यभावात् । कुत एतदिति चेत् ? सति तन्निर्णये [11]तथापि गमकत्वप्रतीतेः । प्रतीयते हि धूमादिविशेषस्य तन्निर्णये पावकादिविशेषं प्रति गमकत्वम्, तत्तुल्यस्य चान्यत्राग्न्यादिमात्रे भावः । तद्विशेषवैकल्ये कथं तस्य तत्तुल्यत्वमिति चेत् ? धूमादित्वमात्रेण न तद्विशेषेणापि, अन्यथैकत्वमेव स्यात् सर्वाकारसाम्यादन्यस्य [12]तस्याभावात् । कथमेवं प्रयत्नानन्तरीयकत्वमपि शब्दस्यानित्यत्वविशेषात् नावगम्यत इति चेत्, क एवमाह–'नावगम्यते' इति तद्विशेषावसाये तदप्रतिक्षेपात्, तदभाव एव व्यभिचारावकल्पनात्–किमनित्यत्वात् प्रयत्नानन्तरीयकः शब्दो घटवत्, आहोस्वित् अन्यथा वनकुसुमादिवदिति । तत्र साध्याभावे तत्सदृशस्याभावेऽपि व्यभिचारः तस्याभावात् । ततो युक्तं प्रकृताभाव एवेति ।

१ न्यायवि० श्लो० १०४ । २ तदर्थं–आ०, ब०, प० । ३ तद्बुद्धिरेव आ०, ब०, प० । ४ 'ह्रस्वा कुटी कुटीरः । कुटी शुण्डाभ्यां रः' इति सूत्रेण ह्रस्वार्थे रप्रत्ययविधानात् ।–ता० टि० । ५ विरुद्ध । ६ 'व्युदासः'–ता० टि० । ७ असुरसमागत् ।–ता० टि० । ८ –राग्न्यादि वि– आ०, ब०, प० । ९ 'महानसाग्न्यादौ धूमादिभावे'–ता० टि० । १० व्यभिचारोपपत्तेः । ११ 'साध्याभावे तत्तुल्यभावप्रकारेण'–ता० टि० । १२ एकत्वस्य ।

एवमनुपपन्नमेवेत्यपि, तेनानैकान्तिकस्य व्यवच्छेदात्। न हि तस्य तदभावेऽनुपपत्तिरेव उपपत्तेरपि भावात्, प्रयत्नानन्तरीयकत्वेऽनित्यवत्।

साम्प्रतं तानवधारणव्यवच्छिन्नान् हेत्वाभासानुपदर्शयति–

**ततोऽपरे।**

**विरुद्धासिद्धसन्दिग्धा अकिञ्चित्करविस्तराः।** इति।

अत्रापरे इत्येतद्विरुद्धेत्यादेः परतोऽपि द्रष्टव्यम्। तदयमर्थः–विरुद्धासिद्धसन्दिग्धा अपरे हेत्वाभासा एव न केवलं त एवापि तु अकिञ्चित्करविस्तराश्च। अत्रैषोपपत्तिः–ततः तस्मादुक्तलक्षणात् साधनादपरे तल्लक्षणविकलतया विभिन्ना यत इति। तत्र विरुद्धस्य तदाभासत्वं साध्यस्याभाव एव भावात्। असिद्धस्य सत्यपि तस्मिन् अभावात्, सतोऽप्यनिश्चयात्। सन्नपि अनिश्चितोऽसिद्ध एव सिद्धकार्याकरणात् असत्तदाभासः। निश्चयाभावोऽपि अव्युत्पत्त्यादिना, वादिप्रतिवादिनोरन्यतरस्योभयस्य वा तत्राव्युत्पन्नस्याज्ञातासिद्धः, संशयानस्य सन्दिग्धासिद्धः विपर्यस्तस्य विपरीतासिद्ध इत्यनेकधा स भिद्यते। सन्दिग्धो व्यभिचारी किमित्थमन्यथा वेति ततः साध्यसंशयात्तस्य तदाभासत्वं तत्रैवं नियमाभावात्। अकिञ्चित्करः पुनः सिद्धोपस्थायी यथा शब्दानित्यत्वे कृतकत्वेन निश्चिते तत्रैवापरः प्रयत्नानन्तरीयकत्वादिः। कुतस्तस्याकिञ्चित्करत्वम्? ततस्तन्निर्णयस्यानुत्पत्तेरिति चेत्; सापि कुतः? कृतकत्वादेव तस्य भावादिति चेत्; न; तत्कार्यस्यान्यतोऽनुपपत्तेः। तादृशस्योत्पत्तिरिति चेत्; अस्तु; न तावता शक्तस्य स्वव्यापारादुपरतिः, पावकान्तरवद्धूमान्तरकृतेः। शक्तिरेव न तस्येति चेत्; तदपि यदि हेतुलक्षणवैकल्यात्, तदा विरुद्धादावेवान्तर्भावः, प्रतिपादितावधारणविपर्ययादेव तद्वैकल्यसम्भवात्, तद्विपर्ययस्य च विरुद्धादावेव नियमात्। विषयाभावान्न ततस्तन्निर्णय इति चेत्; न; लक्षणपरिपुष्टौ तदनुपपत्तेः। कथं वा तदभावः? शब्दानित्यत्वस्य भावात्। प्रागेव निर्णीतमिति चेत्; न; तत्राप्यनुपहतस्वरूपत्वेन तदन्तरस्यापि प्रवेशात् प्रकाशिते प्रकाशान्तरवत्। न चैवं छिदेरपि छिन्ने प्रवेशः; छेद्याभावात्। किं तत्प्रवेशेन व्यवहारस्य पौरस्त्यादेव भावादिति चेत्, न समर्थात् ततोऽपि तस्यासम्भावात्। व्यवहारिणस्तदभिलापस्याभावान्नेति चेत्, नेदानीमाद्यस्यापि लिङ्गत्वं ततोऽपि तन्निर्णये क्षटित्यन्यत्रगतचित्तस्य तद्व्यवहारासम्भवात्। भवतु तदा तस्याप्यकिञ्चित्करत्वमिति चेत्; न, "सिद्धेऽकिञ्चित्करो हेतुः" [ प्रमाणसं० श्लो० ४४ ] इति तल्लक्षणात् आद्यस्य चासिद्ध एव भावात्। निर्णयमात्रेण तु तस्यै हेतुत्वे द्वितीयस्यापि स्यात्। तस्मात्तदभावादेव तस्याकिञ्चित्करत्वम्, तच्च साधनलक्षणवैकल्यादेव। ततो विरुद्धादय एवाकिञ्चित्करविस्तरा इति केचित्। अन्ये पुनः 'तत्रैवोपप्रवृत्तहेत्वन्तरे त एव सम्यक् हेतव इति नातीव विरुद्धादित्वमनुभवन्ति, अतोऽन्य एव ते तेभ्यः तदाभासाः' इति प्रतिपन्नाः। यदि साधनं प्रकृते सत्येव न तदा सपक्षेऽपि स्यात् तत्र प्रकृताभावात्, ततश्च न तस्य तदविनाभावपरिज्ञानं सपक्ष एव तत्सम्भवात्, न पक्षे तत्र अद्यापि प्रकृतस्यानिश्चयादिति चेत्; अत्राह–

---

१ "साध्यसद्भावप्रकारेण।" –ता० टि०। २ "साध्याभावप्रकारेण"–ता० टि०। ३ "साध्य एव" –ता० टि०। ४ आद्यस्य। ५ –प्रवृत्तेहेत्व– आ०, ब०, प०।

**तथार्थेऽसत्यसम्भूष्णुर्धर्मो न बहिरङ्गतः ॥ १०२ ॥**
**सर्वथैकान्तविश्लेषे साध्यसाधनसंस्थितेः । इति ॥**

बहिर्व्याप्त्यभावो साध्यसाधनयोः बहिः तद्व्यवस्थानात् तेद्व्यपदेशोपपत्तेः [1] तस्य अङ्गनम् अङ्गः अवगमः तस्मात्तः 'न भवति' इति शेषः । कः कीदृशो न भवति ? धर्मः पाषाणप्रमेयत्वादिः अर्थेऽर्थक्रियासमर्थे असति अविद्यमाने असम्भूष्णुः साधुसम्भवविकलः । कुत एतत् ? तथा तेन बहिरङ्गतस्तस्य तथात्वप्रकारेण साध्यसाधनयोस्तद्भावस्य भावप्रधानत्वात् निर्देशस्य, समन्तादतिव्याप्त्या स्थितेः । तथा हि–विवादापन्नः पुरुषः किञ्चिज्ज्ञो रागादिमान् वा पुरुषत्ववक्तृत्वादेः रथ्यापुरुषवदित्यस्यापि गमकत्वप्रसङ्गः सत्येव रथ्यापुरुषे किञ्चिज्ज्ञत्वादौ तस्योपलम्भात् असति च पाषाणादौ अनुपलम्भात् अविनाभावप्रतिपत्तेरुपनिपातात् । न बहिर्दर्शनमात्रात्[2] तस्याविनाभावोऽपि तु तादात्म्येन तदुत्पत्त्या वा प्रतिबन्धात्, न चायमिहास्ति प्रमाणाभावात् । न हि किञ्चिज्ज्ञत्वादेः स्वभावः कार्यं वा पुरुषत्वादिकमिति प्रमाणमस्ति, सर्वज्ञत्वादौ तद्विपक्षेऽपि तस्याविरोधादिति चेत्; किमिदानीं[4] शिंशपात्वधूमादावपि प्रमाणं यतः प्रतिबन्धसिद्धया गमकत्वम् ? तदेव भूयःप्रवृत्तं बहिः प्रत्यक्ष–तद्व्यावृत्तिद्वितयमिति चेत्, न, प्रकृतेऽपि तस्य भावात् । विपक्षे तद्बाधकप्रवृत्तिरिति चेत् ? तस्या अपि तेद्रूपत्वे न किञ्चित् परिहृतम् । अतद्रूपत्वे कुतस्तदुत्पत्तिः ? तत एवेति चेत्; अनिवृत्तः प्रसङ्गः । तदन्यत इति चेत्, न तर्हि क्वचिदपि बहिरुपलम्भतद्व्यावृत्त्योरुपयोग इत्यसङ्गतमेतत्–"बाधस्य कार्यहेतोः स्वभावविशेषस्य च क्वचिदाधारे प्राक्प्रवृत्तगृहीतविस्मृतप्रतिबन्धसाधकप्रमाणस्मृतये अन्यत्र प्रवृत्तिरपेक्षणीया ।" [ ] इति । ततो दर्शनतन्निवृत्तिलक्षणमेव विपक्षे तत्सत्ताबाधकद्वारेण धूमशिंशपात्वादावपि तादात्म्यादिप्रतिबन्धसाधकं प्रमाणमित्यङ्गीकर्तव्यम् । तच्च प्रकृतेऽप्यस्तीति कथन्नातिव्याप्तिः ?

'सर्वथा' इत्याद्यत्रैवान्याप्तिप्रदर्शनपरमुपपत्त्यन्तरम्–सर्वथा सर्वप्रकारेण नित्यमेव अनित्यमेव स्थूलमेव सूक्ष्ममेव परस्परभिन्नं तद्द्वितयमेवेत्यादयः एकान्ताः सर्वथैकान्ताः तेषां विश्लेषो यस्मिन्नसौ सर्वथैकान्तविश्लेषोऽनेकान्तः तस्मिन् साध्ये साध्यसाधनसंस्थितेस्तद्भावस्य सम्यगवस्थानात् 'अर्थे सति' इत्यादिना सम्बन्धः । तथाहि–सर्वमनेकात्मकं प्रमेयत्वादित्यत्र बहिरुपलम्भ-तद्व्यवच्छेदौ सपक्षविपक्षयोरेव, सर्वस्य पक्षीकरणेन असम्भवात् । न चेदाविनाभावो नास्ति, विपक्षे बाधकसामर्थ्यात् तदवगतेः । बाधकमप्यूहज्ञानं बहिर्दर्शनादर्शनाभ्यामेव, अन्यत्र तथाभिधानात् तत्कथमिह तदभावे तत्सम्भव इति चेत् ? न; नियमाभावात् । न ह्ययं

१ तान्तद्वोपप– आ०, ब०, प० । २ तस्या गमन गोऽवगमः आ०, ब०, प० । ३ समन्तादिति व्याप्त्याविद्धेः प०, समन्तादिति व्याप्त्या आ०, ब०, । ४ –च उ– प० । ५ प्रत्यक्षतद्व्यावृत्तिद्वितयरूपत्वे । ६ –तथात्वकार्ये– आ०, ब०, प० । ७ 'सम्यक्प्रत्ययपत्वाकः प्रत्यक्षानुपलम्भतः ।" –प्रमाणसं० का० १२। "ग्रन्थान्तरे श्रकलङ्कदेवैस्तथाभिधानात्, तदनुसारिभिर्यांशित्यमन्दिग्भिक्तं यथा उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः ।" –वा० टि० ।

नियमस्ताभ्यामेव तदिति, तदभावेऽपि क्षयोपशमविशेषोपनिपातात् कुतश्चिदतिशयात् तदुत्पत्तेः, ताभ्यां तद्भावेऽपि तदतिशयस्य अवश्यापेक्षणीयत्वात् अन्यथा तद्विषयमात्रपर्यवसायित्वेन तस्यानर्थकत्व-प्रसङ्गात्। तर्हि तस्य ताभ्यामुत्पत्तिरिति चेत्? धूमादावेव, सपक्षविपक्षयोस्तत्र सम्भवात्। कथं तत्रापि सपक्षत्वं महानसादेः[2] साध्यस्य तत्राभावात्? सत्येव तस्मिन् तदुपपत्तेरिति चेत्; न तद्भावात् सपक्षत्वम्, अपि तु पर्वतादिवदग्न्यादिभावात्, पर्वतादेरपि तत एव पक्षत्वात्। एवमप्यग्न्याद्यविना-भावस्यैव ततः प्रतिपत्तिर्न साध्याविनाभावस्य, प्रमाणीकृतं च तत्र तदूहज्ञानं शास्त्रकारेण, तस्मात् प्रत्यक्षानुपलम्भजन्मा तत्रोहः प्रमाणयितव्य इति चेत्; न, अग्न्याद्यविनाभावग्रहणे साध्याविनाभाव-स्यापि ग्रहणात्, अग्न्यादेरेव शक्यत्वादिविशिष्टस्य साध्यत्वात्। यश्च यादृक् चाग्न्यादिर्न तेन विना धूमादिरिति तद्व्यापारात्। ततः सम्भवापेक्षं तस्य तज्जन्यत्वमुक्तं न नियमत इति वयं प्रतिपन्नाः। अथवा,

देवस्य शासनमतीवगभीरमेतत्तात्पर्यतः क इव बोद्धुमतीव दक्षः।
विद्वान्न चेत् स गुणचन्द्रमुनिर्न विद्यानन्दोऽनवद्यचरणः सदनन्तवीर्यः ॥१४५०॥

कथमर्थे विपक्षे बाधनमिति चेत्? उच्यते–विपक्षो नित्याद्येकान्तः, तत्र नित्यस्य प्रमेयत्वं यदि तज्जन्मना प्रमित्या नित्यं तत्प्रसङ्गः प्रमितेरनुपरमात्। अन्यजन्मना चेत्; तत्रापि प्रमिति-सन्निधौ यदि न प्राग्रूपस्य परित्यागः कथं प्रमेयत्वं प्रागिवेव? परित्यागो वा कथं नित्यत्वम् अतादव-स्थ्यात्। प्रमितिप्रागभावस्यैव तदा परित्यागो न नित्यरूपस्य, न चैवमप्रमेयत्वं प्रमितिभाववदिति चेत्; न; सर्वस्यापि तत्त्वस्तत्त्वप्रसङ्गात्। अप्रतिभासनान्नेति चेत्; सिद्धस्यापि किं प्रतिभासनम्? तदन्तर्भाव एवेति चेत्, अनिवृत्तः प्रसङ्गः। विषयभावापत्तिरिति चेत्; कथं प्राग्रूपस्यापरित्यागः? इति न किञ्चिदेतत्।

भवतु अनित्यमेव तत्त्वमिति चेत्; तदपि अयोग्यमप्रमेयमेव व्योमकुसुमवत्। योग्यश्चेत्; कुतो न सर्वस्यापि प्रमेयम्? नियतं प्रत्येव योग्यत्वादिति चेत्; स यदि संसारी न सर्वज्ञस्य प्रमेयम्। सर्वज्ञश्चेत्; न संसारिण। उभयोरपीति चेत्; संसारिणः सर्वज्ञत्वं सर्वज्ञयोग्यवस्तुप्रमितौ तेन सर्वज्ञस्य तच्च प्रमिण्वता तद्विषयस्यापि सर्वस्य प्रमिते, अन्यथा तस्य तद्योग्यस्य च वस्तुनः प्रतिपत्तुम-शक्यत्वात्। नासौ वस्तुनस्तद्योग्यत्वं प्रत्येतीति चेत्; किं पुनः स्वयोग्यत्वादन्यदेव तत्? तथा चेत्; वस्त्वपि तर्हि तद्भेदाद्भिन्नमेवेति कथं सर्वज्ञवेद्ये तदुपदेशादपि संसारिणः प्रतिपत्तिः जात्यन्धस्येव रूपे चक्षुष्मदुपदेशात्? तयोरपि कथञ्चिदेव भेद इति चेत्; सिद्धं तर्हि प्रतीतम-

१ ऊहस्य। २ "शक्यमभिप्रेतमप्रसिद्धमिति विशेषविशिष्टस्याग्नेः" –ता० टि०। ३ द्रष्टव्यम्– पृ० ..टि० ..। ४ "सर्वमनेकान्तात्मकं प्रमेयत्वादित्यत्र"।–ता० टि०। ५ "अनवरतम्। नित्यानवरता-जस्रमित्यमरः।" –ता० टि०। ६ 'प्रमेयत्व' –ता० टि०। ७ –ति चेत् आ०, ब०,। तदन्त-र्भावादेवेति इति स चेत् प०। ८ गगनकु– आ०, ब०, प०। ९ "जनस्य" –ता० टि०। १० "जनम्" –ता० टि०।

प्रतीतश्चैकं परस्यापीति यदुक्तमनेकान्तवादिनं प्रति–"अप्रतीतं प्रतीतं चेत्सदेतदतिसाहसम्" [ प्र० वार्तिकाल० १।२०५ ] इत्यादि, तत्प्रज्ञाकरस्य स्वगृहं प्रति प्रत्यावृत्तम् । ततो यथाभिमतं निरंशमेव तत्त्वम्, तत्र च–

सर्वात्मना दृशौ तस्य सर्वविद्वेद्यता दृशो[1] ।
सिद्धः सर्वोऽपि सर्वज्ञो वृथा ते बुद्धकल्पनम् ॥१४५१॥
ज्ञानवान् मृग्यते कश्चिदित्यादि प्रवदन्नतः ।
धर्मकीर्तिः स्ववाचोऽपि तात्पर्यं तत्र बुद्ध्यते ॥१४५२॥
तद्वेद्यत्वमदृश्यं[2] चेददृश्यं सर्वथैव तत् ।
खण्डशो न हि दृश्यत्वं निरंशस्योपपत्तिमत् ॥१४५३॥
तत्रैकान्तादनित्यस्य प्रमेयत्वं प्रतीतिमत् ।
नापि स्थूलस्य वस्तुत्वं यन्न तस्य स्वयं मतम् ॥१४५४॥
निष्कलाणुस्वभावे यत्तत्त्व बौद्धोपकल्पितम् ।
काकदन्तोपमं तत्प्रमेयत्वञ्च तादृशम् ॥१४५५॥
एकान्तभिन्नयोर्नापि स्थूलसूक्ष्मस्वभावयोः ।
प्रमाणप्रतिवेद्यत्वे तदभेदप्रवेदनात् ॥१४५६॥
ते तन्तवः पटो यन्न तेभ्योऽन्य इति यज्जन ।
प्रत्येति वक्ति सर्वोऽपि विवादपरिवर्जितम् ॥१४५७॥
पटस्तन्तुष्विहेत्यादि[3] शब्दा एव परं तथा ।
न प्रत्ययो यतस्तेनाभेदप्रत्ययबाधनम् ॥१४५८॥
शब्ददृष्टिकृतेनापि[4] तेन तस्य विबाधने ।
सर्वैकत्वधिया बाधः सर्वभेदधियो भवेत् ॥१४५९॥
ततो द्रव्यादिभावानां तात्त्विकानामभावतः ।
अवैशेषिकमेवेदं जगत् सर्वमुपस्थितम् ॥१४६०॥

तन्न सर्वथैकान्तस्य प्रमेयत्वमिति । विपक्षे बाधकसामर्थ्यादेव ततस्तद्विश्लेषस्य साधनात्, उपपन्नमेतत्–'सर्वथैकान्तविश्लेष'[5] इत्यादि ।

ननु प्रमेयत्वं यतः प्रमाणात् तस्य तदेकान्तविषयत्वे नातस्तद्विश्लेषस्य साधनम्, तत्पक्षस्य प्रमाणतः प्रतिक्षेपात् । तद्विश्लेषविषयत्वे तु व्यर्थमनुमानं तत एव तत्सिद्धेः, अन्यथा तत्प्रमितेऽपि[6] तदपरकल्पनयाऽनवस्थापत्तेः । तदपि प्रमाणमनुमानमेवेति चेत्; न, परस्पराश्रयापत्तेः–अनुमानात्प्रमेयत्वमतश्चानुमानमिति – इति चेत्; न, प्रमाणमात्रादेव अविवक्षितविषयभेदात् तदुप-

१ प्र० वा० १।३२। २ चेत्तदृश्य आ०, ब०, प० । ३ प्र० वा० २।१४९। ४ स्वाशयदृष्टिकृतेनापि आ०, ब०,प० । ५ "सर्वथैकान्तविश्लेषस्य"–ता० टि० । ६ अनुमानप्रमितेऽपि ।

गमात्, वादीतरयोस्तत्राविप्रतिपत्ते., अन्यथेष्टसिद्धेरसम्भवादिति । निरूपितं चैतत्[१]-'सन्ति प्रमाणानि इष्टसाधनात्' इति । तत्र व्यर्थमनुमानमनवस्थितिर्वा, अनुमानादेव[२] विप्रतिपन्न प्रति तद्विश्लेषस्य साधनात् तत्र चापरस्यानपेक्षणात् । कथमेव प्रत्यक्षादपि तत्साधनमुक्तम् "न पश्यामः क्वचित् किञ्चित्" [ सिद्धिवि० परि० २ ] इत्यादिना ? न ह्येतदविप्रतिपन्न-विषयम्, तत्र विवादाभावात् । विप्रतिपन्नविषयत्वे तु सति प्रत्यक्षे किमनुमानेनेति चेत्; न, प्रतिपादन-प्रकारस्य वैचित्र्यात्, कदाचित् प्रत्यक्षादेव प्रमाणात् कदाचिदनुमानत इति । किं पुनस्तत् प्रमाणं यतः सर्वस्य प्रमेयत्वमिति चेत् ? व्याप्तिज्ञानमेव, तस्य परैरप्यङ्गीकारात्, अन्यथा ऽनुमानाऽनवक्लृप्तेः । कथं पुनरनेकान्तस्य प्रमेयत्वम् तस्यैकान्तनिवृत्तिरूपत्वेनावस्तुत्वात् ? तत्र च प्रमाणस्याव्यापारा-दिति चेत्, न, तन्निवृत्तिविशिष्टस्य जात्यन्तरस्यैव तत्त्वात् । न च तादृशं किमपि दृष्टमस्ति यत. संवि-सम्भे चेतः स्यादिति चेत्, आह—

**एकं चलं चलैर्नान्यैर्नष्टैर्नष्टं न चापरैः ॥१०३॥**
**आवृतैरावृतं भागे रक्तै रक्तं विलोक्यते । इति ।**

एकं शरीरावयवि चलैः भागैः पाणितलादिभिः चलं परिस्पन्दात्मकम्, नान्यैरचलैः पादादिभिः । तदेव कथं चलमचलं च युगपदिति चेत् ? उत्तरम्—विलोक्यत इति । दृश्यते हि चलैर-चलैश्चावयवैः तदेव चलमचलं च । न च दृष्टमनुपपन्नं सर्वत्र प्रसङ्गात् । भ्रान्तं तद्दर्शनम् अवयवचलन-स्यावयविन्यारोपादिति चेत्; न; अदृष्टे तदयोगात् व्योमकुसुमवत् । दर्शनं च तस्य न परं चलन-दर्शनात् । अप्रतिपत्तेः[३] अस्तु तदेवेति चेत्; न; तद्विषयत्वे चलनवत्[४] अवयविनोऽप्यवस्तुत्वा-पत्तेः । अभ्रान्तमेवावयविनि तदिति चेत्; कथमेकमेवाभ्रान्तं[५] तदूर्ध्वं च विरोधात् ? अविरोधे वा किमेकमेवावयवि चलमचलं च न भवेत्, अस्यापि प्रतीतेः ? भ्रान्तं च तद्दर्शनं तदा भवति यदि चलेष्वेव भागेषु कदाचिदवयविरूपमचलमुपलभ्येत, न चैवम् तच्चलने नियमतस्तस्यापि चलत एव प्रतिपत्तेः । तथापि विभ्रमे चलनावयवेऽपि स्यात् । ततो न क्वचित् क्रिया नाम तात्त्विकीति निर्विषय तल्लक्षणप्रणयनम् । ततो भागवद्भागिनोऽपि चलनमितरच्च तात्त्विकमेव दृष्टत्वात् ।

तथा हि तदेवैकं नष्टैः छेदभेदादिमद्भिस्तैरङ्गुल्यादिभिर्नष्टं न च नैव अपरैः अनष्टैः पाणिपादादिभिः । कुत एतत् ? विलोक्यते प्रतीयते यत इति । नष्टमेव तत् कारणविनाशे कार्य-स्यापि विनाशात् । कारणं हि अवयविद्रव्यस्यावयवसंयोगः. "संयोगानां द्रव्यम्" [ वैशे० सू० १।१।२७ ] इति सूत्रात् । तस्य च कर्मजात् तद्विरोधिनोऽवयवविभागात् विनाशे कथं न तत्कार्यस्य विनाश इति चेत् ? त्रिमेक एव तस्य तत्संयोगो हेतु. ? तथा चेत्; न; "संयोगानां द्रव्यम्" इत्यस्य विरोधात् । अन्येऽपीति चेत्; तेषामप्येकतत्संयोगेन सह विनाशे कथमिदमुक्तम्—"एकाय-

१ न्यायवि० श्लो० २ । २ -त्रादावपि तत्ता-आ०, ब०, प० । ३ "अविश्वासद, सर्वा विस्रम्भविश्वासौ इत्यमरः ।'-ता० टि० । ४ स्यादित्याह प० । ५ अविप्रतिपत्तेरस्तु आ०, ब०, प० । ६ भ्रान्तमेव । ७ "अवयविनि दृश्यमानस्य चलनस्य भ्रान्तदर्शनविषयत्वेनावस्तुत्वं यथा ।"- ता० टि० । ८ भ्रान्तंच ।

यवसंयोगविनाशात् पूर्वद्रव्यविनाशे अवस्थितसंयोगेभ्यः अवयवेभ्यः द्रव्यान्तरमुत्पद्यते ।" [ ] इति ? कुतश्च तेषां विनाशः ? विभागादेव कर्मजादिति चेत्; न; निष्क्रियेषु तस्याभावात् । सक्रियेषु सम्भवतोऽपि तत्संयोगस्यैव नाशात्, तत एव तदन्तराणामपि विनाशे परमाणुपर्यन्तस्तत्प्रसङ्ग इति न घटविनाशे कपालान्यप्युपलभ्येरन् । अविनाशे कथं कार्यविनाशः सति हेतौ तदनुपपत्तेः ? एकस्य तस्य विनाशादिति चेत्; आश्चर्यमेतदेकस्य विनाशात् तस्य विनाशो न बहूनाम् अवस्थानादवस्थितिरिति ? अवस्थितौ कथं विनाश इति चेत् ? विनाशेऽवस्थितिरपि कथम् ? मा भूदिति चेत्; विनाश एव मा भूत् । दृश्यत इति चेत्; अवस्थितिरपि दृश्यत एव 'स एवायं देवदत्तश्छिन्नाङ्गुलिरपि' इति लोकस्य प्रतीतेः । पूर्वद्रव्यविनाशे द्रव्यान्तरस्याशु प्रादुर्भावेन भेदानवधारणात् भ्रान्तैवेयमेकत्वप्रतिपत्तिरिति चेत्; स्थूलघटादिप्रतिपत्तिरपि तथा किन्न भवति ? परमाणुष्वेव कुतश्चित् प्रत्यासत्तेः तदुत्पत्तिरिति कैश्चित्[२] परिकल्पनात् । बाधकाभावान्नेति चेत्; न; इतरत्रापि तुल्यत्वात् । कुतः पुनः कार्यद्रव्यस्याविनाशे सति तदीयस्यावयवस्याकाशादेर्विभागः ? छेदभेदादेः कर्मण एवेति चेत्; न तर्हि तस्यावयवान्तरविभागहेतुत्वम् आकाशादिविभागहेतुत्वात् नर्तकावयवकर्मवत्; अस्ति तस्य तदन्तरविभागहेतुत्वं [३]छेदादौ सत्यङ्गुल्यादेर्विभागप्रतिपत्तेः । ततो न तस्मात्तद्विभागः । तज्जन्मनो विभागादिति चेत्; न; तस्यापि स्वतन्त्रावयवगतस्यैव तद्धेतुत्वोपपत्तेर्न द्रव्यसम्बन्धा(द्धा)वयवगतस्य । कुत एतत् ? तदाकाशादिविभागस्य द्रव्यविनाशसहचरितस्यैव दर्शनात् । न हि तस्य द्रव्यावयवृत्तिः स हेतुः, तस्यापि सद्रव्यस्यैव दर्शनापत्तेः । ततोऽस्ति द्रव्यविनाशो विभागस्य विभागान्तरकारिणः तदपेक्षत्वात् । ततः पुनरुत्पन्नं द्रव्यान्तरमेवेति भ्रान्तैव तत्रैकत्वप्रतिपत्तिर्बाधकाभावादिति चेत्; नैवमपि भ्रान्तिः अन्तरा भेदनिर्णये तत्प्रतिपत्तेरेवासम्भवात् । दर्शनमेव भेदस्य निर्णय इति चेत्; न, तस्यापि निर्णयस्यैव भवद्भिरभ्युपगमात् न सौगतवन्निर्विकल्पस्य । निर्णयस्यापि द्रव्यान्तरप्रादुर्भावाशुभावेनाभिभवात् एकत्वप्रतिपत्तिरिति चेत्; व्याहतमेतत् 'निर्णयश्च अभिभवश्च' इति, निर्णयस्याभिभवविरोधित्वात् । अभिभूतं वा कथं तत्सिद्धम् यत एकत्वप्रतिपत्तेर्भावः, अतिप्रसङ्गात् । तथा हि–

सर्वस्यापि भवेदेवं वादिनः स्वेष्टदर्शनम् ।
ततो लोकप्रसिद्धानां बुद्धीनामपि बाधनम् ॥१४१॥
मा भूदेकत्वबुद्धिश्चेत्, काणादत्वं तदा कथम् ।
अन्तरा भेदमुत्पश्यन् कलत्रादौ प्रवर्तसे ॥१४२॥
कलत्रादि न तद्यस्य न भेदः कण्टकादिना ।
न भेदोऽप्यस्ति तादृग् यो द्रव्यनाशोत्तरो न ते ॥१४३॥
यच्चाद्युजं कलत्रादि तत्र भेदेन वेदिनः ।
अस्वकीयप्रवृत्तौ च कथं दोषैर्न लिप्यसे ॥१४४॥

---

१ स चैवा– आ०, ब०, प० । २ बौद्धैः । ३ चेदादौ आ०, ब०, प० । ४ –नाशात्तो न आ०, ब०, प० ।

एकत्वज्ञानमेष्टव्यं व्यवहारं तदिच्छता ।
भेददृष्टिस्तदा नास्ति तत्कथं तस्य विभ्रमः ॥१४६५॥

यदप्युक्तम्–'न तर्हि इत्यादि; तत्र कस्मात् नृत्यतः हस्तकर्मादिरवयवविभागो न भवति ? तस्याप्रतीतेरिति चेत्; किं पुनरेकावयवनाशे सर्वात्मनाऽवयविनो नाशः प्रतीयते ? तथा चेत्; तत-स्तद्विभागोऽपि प्रतीयताम् । कथमेवं 'स एवायं नर्तकः' इति प्रत्ययः तद्विभागात् संयोगस्य तद्धेतुकस्य शरीरस्यापि नाशादिति चेत् ? न; तस्याप्येकावयवविनाशवत् अवस्थितसंयोगावयवात् द्रव्यान्तर एव भावात् । ततो न युक्तमेतत्–'छेदभेदादिकर्म न स्वाश्रयस्याकाशादेर्विभागमारभते द्रव्यारम्भकसंयोग-विरोधिविभागजनकत्वात्, यत्तस्तस्य तमारभते न तत्तज्जनकं यथा नृत्यतोऽवयवकर्म, तज्जनकञ्चेदं तस्मान्न ततस्तस्य 'तमारभते' इति ; साध्याव्यावृत्तत्वेन नृत्यतोऽवयवकर्मणो वैधर्म्यदृष्टान्तत्वानुपपत्तेः । ततो यथा निरवद्यप्रत्यभिज्ञानगोचरत्वान्न तदवयविनो विनाशः तथा नष्टद्विन्नावयवस्यापि । कथं पुनरविनष्टस्य नष्टैरपि तैर्नाशो विरोधादिति चेत् ? उक्तमत्र 'कथमेकस्य प्रत्ययस्याभ्रान्तस्यैव भ्रान्तत्वम्' इति । प्रतीतेर्विरोधाभावस्येतरत्रापि तुल्यत्वात् । ततः सूक्तमेतत् 'नष्टैर्नष्टं न चापरैः ।' इति ।

तथेदमपि, 'आवृतैरावृतं भागैः'इति । अत्रापि 'नापरैः' इति 'विलोक्यते' इति च योजयितव्यम् । कथं पुनरवयवस्यावारकमवयविनमावृणुयात् अल्पत्वात् कर्पटखण्ड इव गण्डशैलमिति चेत् ? किं पुनस्तस्य तेन संयोगो नास्ति ? तथा चेत्; न; "कारणसंयोगिना कार्यमवश्यं संयुज्यते" [ प्रश० भा० पृ० ६४ ] इत्यस्य विरोधात् । अस्ति चेत्; कथं नावृणोति अवयवस्यापि तत एव तेनावरणात् । ततोऽपि व्यापकादेव तस्यावरणं नाव्यापकात्, अव्यापकश्च तस्यावयवावारकेण संयोग इति चेत्; न, यावति संयोगस्तावतः स्वल्पेनापि तदुपपत्तेः । यावत्तावदिति च भेदापेक्षम्, तत्कथं निर्भेदेऽवयविनीति चेत् ? कथं तत्र संयोगस्य कस्यचिदव्याप-कत्वम् ? स्वतस्तस्य स्वल्पत्वादिति चेत्; न; स्वल्पत्वस्य गुणत्वेन संयोगेऽनवक्लृप्तेः; अवक्लृप्तावपि कथं तदधिष्ठितस्य तदव्याप्यत्वम् ? अवयविनः तदतिरेकेणापि प्रतीतेरिति चेत्; कथं तदतिरिक्तस्य तस्मादभेदो यत् सभाग एवायं न भवेत् ? कल्पितात् तर्हि तद्भेदात्तस्य तदव्यापकत्वमिति चेत्, न; तस्य द्रव्यत्वेन संयोगानाश्रयत्वात्, कल्पितद्रव्यवादे मतान्तरानुप्रवेशापत्तेः । अवयव्येव तस्याश्रयः, अभेदस्तु तस्याव्यापकत्वमात्रमवकल्पयतीति चेत्, न, व्योमकुसुमादिवत् कल्पितात् ततस्तदनुपपत्तेः । ततो वस्तुभूतादेव भेदात् तस्य तदव्यापकत्वमित्युपपन्नं तदेवावृतमनावृतं चैकमिति, तथाविलोकित-स्यान्यथाकरणायोगात् । एवं तदेवैकं रक्तं रक्तैर्भागैर्नापरैः तथाविलोकनादेव प्रतिपत्तव्यम् ।

अथ मतं चलादेस्ततोऽर्थान्तरत्वात् अचलादिकमेव तत्त्वतस्तत्, ततो न चलाचलादि-रूपवत्तया जात्यन्तरस्यावलोकनमिति । तत्राह—

**अन्यथा तदनिर्देश्यम् [ नियमस्याप्यसम्भवात् ] ॥१०४॥** इति ।

---

१ –स्याविना– ता० । २ "साधनाव्यावृत्तत्वेनेति पाठः ।"–ता० टि० । ३ किन्तु विनाश एवेति भावः । ४ बौद्धमतप्रवेशापत्तिः । ५ –द्विवत्कल्पि– आ०, ब०, प० ।

अन्यथा चलादेर्न तद्रूप्यमपि तु व्यतिरेक इति प्रकारेण वद् द्रव्यम् अनिर्देश्य पादे चेल पाणावारच्चं विनष्ट चाक्षुष इति व्यपदेशम न भवेत्, अर्थान्तरेण तदसम्भवात्, अन्यथा-आकाशादावपि तदापत्ते । तदेवाह–'नियमस्याप्यसम्भवात्' इति । 'शरीरादिकमेव चेलादि नाकाशादिकम्' इति नियमस्य अपिशब्दात् तदभेदप्रतिभासस्य च असम्भवात् । सम्भव एव समवायादिति चेत्, तस्य निषेधात् । अभ्युपगम्याप्याह—

वृत्तावपि [ न तस्येदं विश्वरूपं विभाव्यते ] इति ।

वृत्तौ समवायसञ्ज्ञायां सत्यामपि 'नियमस्याप्यसम्भवात्' इति सम्बन्धः तस्याः शरीरादिवदाकाशादावपि भावात्, तथा तदर्थान्तरभावस्याप्रतिक्षेपाच्चेति मन्यते । तत्रैवोपचयमाह–'न तस्येदं विश्वरूपं विभाव्यते' इति । तस्यैकस्येदं प्रस्तुतं विश्वरूपं द्रव्य क्रियादि समवाय इत्येकान्तमितानेकान्तरूपत्वं न विभाव्यते कथञ्चित्तस्य तदभेदेनैव विभावनादिति मन्यते ।

तदनभ्युपगमे दोषमाह —

सम्यग्ज्ञानं व्यवस्थाया हेतुः सर्वत्र तत्पुनः ॥१०५॥
प्रत्यक्षं यदि बाध्येत लक्षणं प्रतिरुद्ध्यते ।इति।

सम्यक् निश्चयरूपं ज्ञानं व्यवस्थायाः इत्यमात्रेण वस्तुव्यवस्थितेः हेतुर्निमित्तम् । विनापि तेन तद्व्यवस्थायां न कश्चिदपि समीहितसिद्धिविकल्प स्यात् । ततो न विभ्रमनादिक-मुपपन्नं तत्र तस्याभावात् । भावे वा नेद्वादादनु ( दानु ) पपत्तिरिति मन्यते । तच्च सर्वत्र बालाबलादिप्रसिद्धनीलपीतादावपि तद्धेतुर्न केवलमनेकान्तात्मनि, तथा च सिद्धा तद्वदेव तस्यापि व्यवस्था सम्यग्ज्ञानमुख्यस्य प्रत्यक्षस्यापि तत्रैव भावात् । भवदपि तत्र बाध्यत इति चेत्, उच्यते–तत्पुनः सम्यग्ज्ञानं प्रत्यक्षमनेकान्तविषयं यदि चेत् तद्विपर्ययकल्पनया बाध्येत तल्ल-क्षणनीलादेरपि संलम्तत्मात् विषयीकरणं प्रतिरुद्ध्यते तत्रापि तस्य केषाञ्चित् स्वप्नादितः प्रतिभासनात् बाधपरिकल्पनात् । कल्पनमेव तत्केवलं न कदाचिदपि निराकारस्य वस्तुनः प्रतिपत्तिरिति चेत्, इतरत्रापि समानमेतत्–एकान्तरूपतिभिन्नस्य द्रव्यादेरपि अप्रतिवेदनात् । कथं पुनरनेकान्त-स्तात्त्विकः ? कथं च न स्यात् ? तस्य संशयादिदोषोपपत्त्यादिति चेत्, अत्राह–'सम्यग्ज्ञानम्' इत्यादि । व्यवस्थायाः संशयादिदोषपरिकल्पनायां सम्यग्ज्ञानमेव हेतुः । वाङ्मात्रात्तद्व्यव-स्थायामतिप्रसङ्गात् । तथापि किमिति चेत् ? उच्यते तत्पुनः अनेकान्तरूपं सर्वत्र बहिरिव संशयादिविकल्पेष्वपि प्रत्यक्षं स्वसंवेदनमेव तस्यैव तत्र सम्यग्ज्ञानत्वात् । तथा हि–संशयस्तावत् व्यभिचारीतरत्तप्रतिभासद्वयात्मकत्वात् अनेकान्तात्मक अभिलाप्येतराकारत्वाच्च, तथा विरोधादिवि-कल्पा अपि । तदात्मकत्वञ्च तत्र सर्वत्र स्वसंवेद्य "सर्वचित्तचैत्तानाम्" [ न्यायबि० पृ० १९ ] इत्यादि वचनात् । तत्रापि तद् यदि बाध्येत लक्षणम् अनेकान्ते दोषदर्शने प्रतिरुद्ध्यते तथा सति

१ चलित पा– आ०,ब०,प० । २ चलनादि आ०,ब०,प० । ३ व्यवस्थाहेतुरन्यत्रानार । ४ तद्ग्राभानुप–आ० । ५ ततस्तेन नादिप– आ०,ब०,प० । ६नीलप्रतिभासवत् । ७ 'स्वसंवेदनस्यैव' –ता०टि० ।

संशयादेरेव असम्भवात् । कुतश्च तत्रापि तद् बाध्येत ? तदन्यतः संशयादेरिति चेत्; न; तत्रापि तदन्यतः तद्बाधने अनवस्थापत्तेः । न बाध्यत एवं तत्र तत् । संशयाद्यनुपक्रान्तस्यैव तत्र तस्य निर्णयादिति चेत्; अनुकूलमाचरसि, परत्रापि तादृशस्यैव प्रतिपत्तेः । पुनरपि तदनभ्युपगमे दूषणमाह—

**साङ्कर्यं[1] व्यवहाराणां सन्निवेशविशेषतः ॥१०६॥**
**नानैकपरिणामोऽयं यदि न व्यवतिष्ठते ।** इति ।

न व्यवहाराणां प्रवृत्त्यादिरूपाणां साङ्कर्यम् इष्टे प्रवृत्त्यादिवत् इतरस्य अनिष्टेऽपि निवृत्त्यादिवत् तद्विपर्ययस्य 'भावः स्यात्' इत्युपस्कारः[2] । कदा ? **नानैकपरिणामोऽयं** प्रतीयमानो **यदि न व्यवतिष्ठते** तद्व्यवस्थितौ न स्यादिति भावः । तथा हि—तदनवस्थितौ कस्य[3] प्रवृत्तिः ? विलक्षणस्येति चेत्; न; पूर्वापरीभावप्रसङ्गात् प्रवृत्तेस्तद्रूपत्वात् । तत्सन्तानस्येति चेत्, न; वस्तुतस्तस्यासत्त्वात् । कल्पनया सन्नेव स इति चेत्; न, तस्यापि वन्ध्यासुतवत् तदसम्भवात् । सापि कल्पनयैवेति चेत्; अप्रवृत्तिरपि तथैव स्यात् । प्रवृत्तिमेव कल्पयति लोक इति चेत्; तदनुसरणेन[4] नानैकपरिणामस्यैव सिद्धिः स्यात् "भूतग्रामः स एवायं भूत्वा भूत्वा निवर्तते ।" [ ] इति तन्मतप्रसिद्धेः ।

किञ्च, कल्पने सन्तानस्य हेतुफलभावादेव सादृश्योपाधिकात् । तत्र[5] चोक्तं सुगतेतरज्ञानयोरपि तत्कल्पनमिति । सुगतवत् इतरस्याप्रवृत्तिरितरवच्च सुगतस्य प्रवृत्तिरिति सुव्यक्तं तत्साङ्कर्यम् । क्व वा प्रवृत्तिः ? द्रव्यादाविति चेत्; न; तस्य निरंशाणुरूपस्याप्रतिपत्तेः । तदणुव्यूहरूप इति चेत्; न; तस्य वस्तुवृत्तेनासत्त्वात् । कल्पनया सत्त्वमिति चेत्, न; तत इष्टसिद्धेरसम्भवात् । सम्भवे तद्व्यूहान्तरादपि करभाभिधानात् तत्प्रसङ्गः । तथा च—

कल्पनासत इष्टं चेत् तद्विशेषनिराकृतेः ।
चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥१४६५॥
विशेषः कल्पनातश्चेदविशेषस्ततो न किम् ?
प्रवृत्तीतरसाङ्कर्यं यतो न स्याद् द्वयोरपि[6] ॥१४६६॥
विशेष एव तत्रास्ति यदि लोकधिया तदा ।
नानैकरूपं तत्त्वं स्यात्तन्मत्येति निवेदितम् ॥१४६७॥

तथा, यौगादेरपि तत्साङ्कर्यं दधनि दधित्ववत् करभत्वस्य करभेऽपि करभत्ववत् दधित्वस्य तद्धेतोः समवायेन भावात् । नहि नियामकस्याविशेषे नियमः, नियाम्यस्य तस्यातन्निबन्धनत्वप्रसङ्गादिति सूक्तम्—'साङ्कर्यं व्यवहाराणाम्' इति । नानैकपरिणामेऽपि कुतो न साङ्कर्यं दध्नः स्वपर्यायैरिव

१ 'अनेकान्तरूपम्' —ता० टि० । २ "अध्याहारः, सम्पर्युपात् कृञः सद्भूषसमवाये, [शाकटा० ४।२।२११] उपादिकारपतिपत्नवाक्याध्याहारे [ ४।२।२१२ ] सट्" —ता० टि० । ३ तस्य आ०, ब०, प० । ४ तदनुसारयेन आ०, ब०, प० । तदनुसारेणैव । ५ पृ०...टि०.. । ६ "दध्युष्ट्रयोः" —ता० टि० ।

तेषां च तद्द्रव्येणेव, करमादिपर्यायद्रव्यैरपि तत्परिणामस्यानिवारणादिति चेत्, न; स्वद्रव्यपर्यायापेक्षयैव वस्तुषु तस्य प्रतीतेः, तत एव तत्र[2] तस्य निवारणात्। निरूपितं चैतदसकृत्। अत एवोक्तम्-'सन्निवेशविशेषतः' इति। अयमर्थः-सन्निवेशो नानेकरूपयो कथञ्चिदविष्वग्भावस्तस्य विशेषः प्रतीतिप्रसा साङ्कर्यादिवैकल्यं तत. तत्परिणाम इति। कुतश्चाय निरंशवादे वस्तुषु स्थूलप्रतिभासः ? न चायं नास्ति; प्रसिद्धत्वात्। एका[3]र्थकारित्वादिति चेत्; न; अर्थस्याप्यणुरूपस्याप्रति[4]वेदनात्। स्थूलप्रतिभासरूप एव सोऽपीति चेत्; न; तस्याप्यन्यतस्तत्का[5]रित्वात् प्रतिभासकल्पनायामनवस्थानात्। तन्न तत्कारित्वम्, सत्यपि तस्मिन् न ततस्तत्प्रतिभासो व्यभिचारात्। अस्ति हि तत्कारित्वमिन्द्रियालोकादीनाम्, न च तत्र स्थूलैकप्रतिभासः, विषये चोदिता प्रवृत्तिरिन्द्रियादावपि स्यात्। एतदेव दर्शयन्नाह-

**सत्यप्येकार्थकारित्वेऽसंश्लेषपरिणामतः ॥१०७॥**
**इन्द्रियादिषु नैकत्वं यदि किं वा विरुद्ध्यते।** इति।

वाशब्दोऽयमिवार्थः, इन्द्रियादिष्वित्यस्यानन्तरं द्रष्टव्यः। तदयमर्थः-सत्यपि विद्यमानेऽपि **एकार्थकारित्वे** एकप्रत्यवमर्शाद्येकप्रयोजननिष्पादकत्वे दध्यादिव्यपदेशविषयेषु **नैकत्वं** नैकप्रत्ययविषयत्वम्। कस्मात् ? **असंश्लेषपरिणामतः** ऐकान्तिकात् नानात्वपरिणामात् '**इन्द्रियादिषु वा**' इत्यत्र दृष्टान्तः। तथा हि-'न प्रकृता' परमाणव एकप्रत्ययविषया एकान्ततो विश्लिष्टत्वात् इन्द्रियादिवत्' इत्यत्र परस्य पर्यनुयोगः '**यदि किम्**' इति। यदि नैकत्वं किम् ? न किञ्चिद्दूषणमिति। अत्रोत्तरम्-**विरुद्ध्यते** इति। व्यवहार इति 'व्यवहाराणाम्' इत्यस्य विभक्तिवचनपरिणामेन सम्बन्ध। तथा हि-यदि विश्लेषेऽपि विवक्षितेष्वणुषु प्रवृत्तिः किन्न व्यूहान्तरगतेषु ? तैरेव तदभिमतस्य करणादिति चेत्; उक्तमत्र-दधि चोदिता प्रवृत्तिरिन्द्रियादावपि स्यात् तदविशेषादिति। ततो वस्तुषु व्यवहारनियममिच्छता तात्त्विकमेव तेष्वेकत्वमभ्युपगन्तव्यम्। तदपि न सयोगसाहाय्यात्; यत संयोगस्य कार्त्स्न्यैकदेशाभ्यामयोगात् तद्योगः प्रकल्प्येत अपि तु तथैव परिणामात्। न हि तत्र तत्साहाय्येन किञ्चित्, अन्यथा तत्परिणामेऽपि तदपरपरिणामोपकल्पनायामनवस्थापत्तेः। न चैवं "भेदसङ्घाताभ्यां चाक्षुषः" [त० सू० ५।२८] इति सूत्रविरोधः; सङ्घातशब्देनापि तत्परिणामसमर्थव्यवधानविकलस्य वस्तुस्वरूपस्यैवाभिधानात्, नैकदेशादिना परस्परानुप्रवेशे स्वतः सांशत्वमणूनां पिण्डस्य वाऽणुमात्रत्वम्। वक्ष्यति चैतत्-"नैरन्तर्यं निरंशानाम्" इत्यादिना[10]। ततः सति सङ्घाते [11]तस्मादसति तु स्कन्धादेव स्कन्धस्योत्पत्तिः, अत एव भेदग्रहणम्। न हि भेदात्तदुत्पत्तौ सङ्घात, घटस्कन्धादेव भेदिनोऽनेकस्य कपालस्कन्धस्योत्पत्तिदर्शनात्। [12]अभिन्नाद्वर्हि कथमभिन्नस्योत्पत्तिः सूत्रेण तदनुक्तेरिति

१ दधिद्रव्येणेव। २ साङ्कर्यस्य। ३ "एकप्रत्यवमर्शाद्येकप्रयोजन-निष्पादकत्वात्" ता०टि०। ४ -प्रतिरूप आ०,ब०,प०। ५ -तत्कार्यत्वात् आ०,ब०,प०। ६ एकत्वमपि। ७ "सर्वात्मना" -ता० टि०। ८ -प्रवेश्य स्वतः आ०, ब०। प्रवेशस्ततः प०। ९ "एकदेशेन सम्बन्धे परमाणोः षडंशता। सर्वात्मना सम्बन्धे पिण्डः स्यादणुमात्रक॥" -ता० टि०। १० न्यायवि० श्लो० २८३। ११ तत्परिणामरूपात् संघातात्। १२ "अभिन्नात् मृत्पिण्डादेः अभिन्नस्य शिवकादे" -ता० टि०।

चेत् ? न; सङ्घातशब्देन अभेदस्याप्यभिधानात् । [1]द्विविधो हि सङ्घातो नैरन्तर्यभेदविकल्पात् । ततो नाऽयुक्तम् अणोरण्वन्तरस्येव स्कन्धादपि स्कन्धस्योपजननम् । ततो न स्वलक्षणैकान्तवादसम्भवः । कथं पुनः स्कन्धादपि स्कन्धस्योत्पत्तिः ? कथं च न स्यात् ? 'विवादापन्नः स्कन्धस्तदवयवसंश्लेषपूर्वकः स्कन्धत्वात् पटवत्' इत्यनुमानेन तत्प्रतिक्षेपादिति चेत्; न; शिवकस्य पिण्डादेवोत्पत्तिदर्शनात् ? [2]तदेव तेन प्रतिक्षेपादप्रमाणमिति चेत् ; तन्तुपटभेददर्शनमपि[3] स्यात् सर्वभेदस्यापि [4]कैश्चिदनुमानात् । तथा च कथन्न साध्यसाधनविकलो दृष्टान्तः स्यात् ? अपरिस्खलद्रूपतया [5]लोकैः परिगृहीतत्वात् , [6]तद्भेददर्शनमेव तस्य प्रतिक्षेपकं न तत्तस्येति चेत्, समानमितरत्रापि ।

किञ्च, शिवकस्य तदवयवाः सहजन्मानः, पूर्वजन्मानो वा हेतवः स्युः ? पूर्वजन्मान इति चेत्; कुतस्तथा नोपलब्धिः तन्तुवत् ? अस्त्येवैयं केवलमाशुभाविन्या शिवकोपलब्ध्या तिरोधानान्नोपलक्ष्यत इति चेत्; अनुपलक्षिता कथमस्ति ? भवति चैवमतिप्रसङ्गः–'शिवकोऽपि प्रागेवास्ति, तदुपलब्धिरपि केवलं कुतश्चित्तिरोभावान्नोपलक्ष्यते' इति वदतोऽपि दुर्निवारत्वात् । तर्हि मा भूदुपलब्धिरेव तेषाम् अयोग्यत्वादिति चेत्; आरब्धशिवकानामपि न भवेत् तदापि तद्रूपापरित्यागात् । तत्परित्यागे वा कथन्न परिणामवादः–तत्परित्यागेन तद्योग्यस्वभावोपादानात् ? [7]तयोस्ततो भेदान्नेति चेत्; कथमेवं तौ तस्य[8] ? तत्र समवायादिति चेत्; सोऽपि यदि युगपत्; तदुपलब्ध्यनुपलब्ध्योरपि यौगपद्यप्रसङ्गः । क्रमादिति चेत्; कुतः क्रमः ? स्वकारणादिति चेत्; ननु अवयवा एव तत्र समवायिकारणम् , ततश्चाक्रमात् कथं तत्क्रमः तदक्रमस्यैवोपपत्तेः, अन्यथा तस्य निर्हेतुकत्वप्रसङ्गात् वक्तव्य एव कारणस्यापि क्रम इति कथन्न तद्वादः ? तत्क्रमस्यापि क्रमान्तरसम्बन्धादेवाभ्युपगमे अनवस्थापत्तेः । ततः पश्चादपि तस्यापरित्याग एवेति कथं शिवकस्याप्युपलब्धिः अवयवोपलम्भविकलस्य तस्याप्रतिपत्तेः क्षणिकस्वलक्षणवत् । तन्न पूर्वजन्मनां तेषां तद्धेतुत्वम् । नापि सहजन्मनाम्; अनिष्पन्नानां तदयोगात् । निष्पन्नानाञ्च सहनिष्पन्नं प्रत्यनुपयोगात् । तन्न तस्य तदवयवसंश्लेषपूर्वकत्वसाधनमुपपन्नं प्रत्यक्षप्रतिपन्नस्य स्कन्धपूर्वकत्वस्यैवोपपत्तेः । कथं तर्हि तत्र अवयवावयविव्यपदेशो जन्यजनकभावाभावे तदयोगादिति चेत् ? न, तदभावेऽपि तथापरिणामादेव तद्व्यवस्थितेः । ततः सूक्तम्–'साङ्कर्यं व्यवहाराणाम्' इत्यादि । अस्यैव तात्पर्यं विस्तरतो व्याख्यातुकाम आह–

**तदनेकार्थसंश्लेषविश्लेषपरिणामतः ॥१०८॥**
**स्कन्धस्तु सप्रदेशोंऽशी बहिः साक्षात्कृतो जनैः ।** इति ।

तत् तस्मादनन्तरन्यायात् अनेकोऽवयवोऽर्थोऽवयवी तयोः संश्लेषश्च सङ्घातः विश्लेषश्च भेदः परिणामश्चाकारान्तरागमनं तेभ्यस्ततः स्कन्धः । तु शब्दोऽवधारणे तत एवायं न

---

१ विविधो आ०, ब०, प० । २ शिवकस्य पिण्डोत्पत्तिदर्शनमेव । ३ "अप्रमाणं स्यादिति सम्बन्धः" –ता० टि० । ४ वेदान्तिभिः । ५ लोके परि– आ०, ब०, प० । ६ ततो भेद–आ०,ब०,प० । ७ "उपलब्ध्ययोग्यत्वतद्योग्यत्वस्वभावयोः" – ता० टि० । ८ 'तस्येति आत्यैक्यवचनम्, शिवकावयवानामित्यर्थ. ।" –ता० टि० । ९ –यथायोऽव– आ०, ब०, प० ।

प्रकारान्तरादिति ।, तत्र संश्लेषोऽनेकस्य विश्लेषपरिणामावर्थस्येति प्रतिपत्तव्यम् । दृश्यते हि तद्विश्लेषादपि स्कन्धो घटभेदजन्मनः कपालस्कन्धस्य प्रतीतेः । घटकालेऽपि तत्स्कन्धो विद्यत एवेति चेत्; सत्यम्; तदा तदात्मनो भावो न केवलस्य, तस्य तु तत एवोत्पत्तिः तथा दर्शनात्, अन्यथा न कस्यचिदपि कुतश्चिदुत्पत्तिः । एवमपि किं विश्लेषग्रहणेन परिणामत इत्येव गतत्वात्, कपालस्कन्धस्यापि प्राक्तनात्तदवयव्यभिन्नाकारपरिहारेण तद्भिन्नाकारस्योत्पत्तेरिति चेत् ; न; विश्लेषस्यापि तद्विशेषत्वात् , किमर्थं तर्हि पृथग्वचनमिति चेत् ? मुद्गरादिसन्निपातात् केवलं नाश एव घटस्य कपालस्कन्धस्तु प्रागपि विद्यते इति मतव्युदासार्थम् । तत्परिणामात्तु तदुत्पत्तिरभिहितैव । अनेकसंश्लेषे तु तद्वचनं दृष्टान्तार्थम्, परस्यापि प्रसिद्धत्वात् । तत्रायं प्रयोगः–यद् यतो दृश्यते तत्तत एवोत्पत्तिमत्, यथा अनेकसंश्लेषाद् दृश्यमानस्तत एव स्कन्धः, दृश्यते चार्थविश्लेषपरिणामाभ्यामपि कपालशिवकादिस्कन्ध इति ।

स च स्कन्धः सप्रदेशः स्वतः कथञ्चिदभिन्नावयवः सहशब्दस्याभेदवाचित्वात् , अत एव अंशी न भिन्नावयवसमवयात् , तस्य निराकरणात् । न चात्र विप्रतिपत्तिः प्रामाणिकस्य साक्षादेव निरीक्षणात् । अत एवोक्तम्– 'बहिः साक्षात्कृतो जनैः' इति ।

इदानीं तत्साक्षात्करणेनैव विपक्षाभ्युपगमं प्रतिक्षिपन्नाह—

**नानाकारैकविज्ञानं स्वाधारे बदरादिवत् ॥१०९॥**
**तादात्म्येन [ पृथग्भावे सति वृत्तिर्विकल्प्यते । ] ।** इति ।

आकारो भागः ततो भागाद् भिन्नम् अनाकारमेकमवयविद्रव्यं तस्य विज्ञानं स्वबुद्ध्या कल्पनम् । क्व तत् ? **स्वाधारे** अवयवकलापे । किंवत् ? **बदरादेरिव** तद्वत् । यथा बदरादेः स्वाधारे विज्ञानं कुण्डे बदरादिरिति तथा अवयविनोऽपि कपालेषु घट इति यद्विज्ञानं परस्य तत् न । केन ? **तादात्म्येन** । तादात्म्यमवयवतद्वतोः कथञ्चिदभेदः तज्ज्ञानमिह तादात्म्यं विषयशब्देन विषयिणोऽभिधानात् । तेन नहि तत्राभेददर्शने भेदकल्पनमुपपन्नम्, सर्वत्र दृष्टविपर्ययकल्पनापत्तेः । भेदेदूषणान्तरमप्याह–'**पृथग्भावे सति वृत्तिर्विकल्प्यते**' इति । अवयवतद्वतोरेकान्ततः पृथग्भावे हि वृत्तिभङ्गिषु तद्वतः सम्बन्धो विकल्प्यते– 'किमेकदेशेन सर्वात्मना वा' इति । तत्र च दोषो भवति अनवस्थानादिति मन्यते । नास्ति तत्र तद्विकल्पः तस्य भेदनिष्ठत्वात् अवयविनश्च निर्भेदत्वात् ततो न देशतो नापि कार्त्स्न्यतस्तस्य तत्र वृत्तिरपि तु स्वरूपेणैव तथा दर्शनादिति चेत्; भवेदेवेदं यदि तथादर्शनं लभ्येत । न चैवम्, कथञ्चिदभेदस्यैवोपलम्भात् । तदेवाह—

**दर्शनादर्शने स्यातां सप्रदेशाप्रदेशयोः ॥११०॥** इति ।

सप्रदेशो जैनस्यावयवी यौगस्य अप्रदेशः तयोर्यथाक्रमं दर्शनमदर्शनं च स्याताम् ।

---

१ 'घटात्मनः' –ता० टि० । २ –त्पत्तिरिति आ०, ब०, प० । ३ सश्ले– आ०, ब०, प० । ४ प्राक्तद– आ०, ब०, प० । ५ "स्वतः कथञ्चिदभिन्नावयवः" –ता० टि० । ६ "प्रदेशेभ्योऽवयवेभ्यो भिन्नः अप्रदेशः" –ता० टि० ।

विधिपदं तदस्तित्वज्ञापनार्थं विधेरज्ञातज्ञापनार्थत्वात्. ततो न स्वरूपेणापि वर्तनं तस्येत्यभाव एवेति मन्यते । अथवा दर्शनमवयविनोऽवयवेषु वृत्तिरिति मतम् । अदर्शनं तद्विपर्ययस्ते स्याताम् । कयोः ? । सप्रदेशाप्रदेशयोः भावप्रधानोऽयं निर्देशः । ततः सप्रदेशत्वे दर्शनमप्रदेशत्वे च अदर्शनमित्यर्थः । नहि प्रदेशनिष्क्रान्तस्य केवलस्य तत्र वृत्तिर्नाम । असिद्धस्तन्निष्क्रम इति चेत्; न; पाणेराकाशाद्विभागेऽपि देहस्य तदविभागेन तत्प्रसिद्धेः । न हि पाणेस्तद्विभाग एव देहस्यापि तद्विभागः तस्य तत्कार्यत्वात् । "पाण्याकाशविभागात् तत्संयोगविनाशसव्यपेक्षात् देहाकाशविभागः ।" [ ] इति स्वयमभ्युपगमात् । ततो विभक्तेऽपि तस्मिन् स्वयमविभक्तस्य न तत्र वृत्तिः द्रव्यान्तरवत् । विभज्यत एव सोपि तस्मादिति चेत्; न; पाणिविभागावस्थायां तदभावात् । न चैकस्यैव निष्पर्यायं तत्र वृत्तिरवृत्तिश्चोपपन्ना विरोधात् वृत्तिरेव नावृत्तिः । सप्रदेशवृत्तेरेव तस्यापि वृत्तित्वात्, इतरत्रावृत्तिरेव तस्याप्यवृत्ति किन्न स्यात् ? वृत्तरेव तत्र दर्शनादिति चेत्; न; इतरत्रापि विपर्ययस्यैवोपलम्भात् । तयोस्तत्राविरोधे वा अवयवभेदाभेदात्मकत्वस्याप्यविरोधाद्व्यर्थं तदेकान्तभेदकल्पनमिति मन्यते । भवतु तर्हि भवत्परिकल्पितस्यापि स्कन्धस्याभावो भेदाभेदयोरेकत्र विरोधादिति चेत्; अत्राह–

**विरोधानुपलम्भेन किल स्कन्धो विरुद्ध्यते** । इति ।

स्कन्धोऽवयवी विरुद्ध्यते विघट्यते किल 'नेति' इत्यर्थः । किलशब्दस्यारुचिसूचकस्य तात्पर्यतो नञर्थत्वोपपत्तेः । केन न विरुद्ध्यते ? **विरोधस्य** सहानवस्थानादेरनुपलम्भोऽदर्शन तेनेति । तथा हि–न तयोः सहानवस्थानम्; सहैव प्रतिपत्तेः । नापि परस्परपरिहारः, कथञ्चित्तदपरिहारस्यापि प्रतीतेः, कथञ्चित् परिहारस्य च तत्सिद्ध्यनुकूलत्वात् । कथं पुनस्तादृशस्यापि दर्शनम् ? कथं च न स्यात् ? अर्वाग्भागदृष्ट्या परभागादेरपि दर्शने तदनुमानाभावप्रसङ्गात् । अदर्शने तदभेदात् अर्वाग्भागस्याप्यदर्शनमित्यनुपलम्भादभावस्यैव प्राप्तेरिति चेत्; अत्राह–

**सम्भवत्यपि मात्राणां दर्शनादर्शनस्थितिः ॥१११॥**

**इदं विज्ञानमन्यद्वा चित्रमेकं यदीक्ष्यते** । इति ।

योग्यपेक्षया केवलं न सम्भवत्यपि तु छद्मस्थापेक्षया **सम्भवत्यपि दर्शनादर्शनयो**रुपलम्भानुपलम्भयोः **स्थिति**रविचलनम् । कासाम् ? **मात्राणां** स्कन्धभागानाम् । कुत एतत् ? **इदं** पुरोवर्ति स्तम्भादि **चित्रं** नानारूप**मेकं** च **यत्** यस्मात् **ईक्ष्यते** दृश्यते इति । तात्पर्यमत्र यद्येकान्तेन मात्राणामभेदस्तदा भवति दर्शनमेवान्यदेव वा इत्येकान्ते, न चैवम्, कथञ्चित्तासां भेदस्यापि प्रतिपत्ते. । ततो नाऽयुक्तं तासामर्वाचीनानां दर्शनम्, अदर्शनं च पराचीनानामितीक्ष्यते इति । अनेनापि-

"चित्रं तदेकमिति चेदिदं चित्रतरं ततः" [ प्र० वा० २।२०० ] इति प्रतिक्षिप्तम्; [6]ईक्षिते अनुपपत्तेरसम्भवात् । तदपि युक्त्यसङ्गतमनुपपन्नमेवेति चेत्; न; ईक्षणस्यापि युक्तित्वात्,

---

१ देहाकाशविभागस्य । २ पाण्याकाशविभागकार्यत्वात् । ३ –ति कि– आ०, ब०, प० । ४ नार्थ– प० । ५ " सौगतवैशेषिकअरनयोः ' –ता० टि० । ६ दृष्टे वस्तुनि । ईक्षितेरनुप– आ०,ब०,प० ।

अन्यथाऽनुमानस्यापि न तत्त्वं तदुपाश्रयादेव तस्याप्यवस्थितेः, ततो दुर्भाषितमिदम्[1] ।

"युक्त्या यन्न घटामुपैति तदहं दृष्ट्वापि न श्रद्दधे ।" [ ] इति ।

दृष्टावश्रद्धायां युक्तेरेवानुमितिरूपाया असम्भवात्, तया गगनकमलिन्येव कस्यचिद्घटना-घटनयोरनुपपत्तेः । तत्सम्भवे वा कथं दृष्टावश्रद्धानम्? यतः, दृष्ट्वापीत्यादि शोभेत । किञ्च,

युक्तिरप्यन्यया युक्त्या श्रद्धेया घटनायदि ।
तदान्ययैव साप्यन्येत्यनवस्था प्रसज्यते ॥१४६८॥
स्वत एव यदि श्रद्धा युक्तौ दृष्टा न किं तथा ।
व्यभिचारावलोकाद्युक्तौ[2] किन्नैव विद्यते ॥१४६९॥
हेत्वाभासोपजाताया तस्या भूयस्तदीक्षणात् ।
युक्तिरेव न सा तस्या युक्त्या भ्रान्तितो यदि ॥१४७०॥
दृष्ट्याभासैव सापि स्यात्ततोऽस्ति व्यभिचारिता ।
तथा च सति दृष्ट्वेति जायदीति न ते वच ॥१४७१॥
दृष्ट्याभासावबुद्धस्य दृष्टत्वानवकल्पनात् ।
लोकरूढ्या तयोक्तिश्चेत् साक्षाद्दृष्टं न दुर्घटम् ॥१४७२॥

निदर्शनमत्रं 'विज्ञानमन्यद्वा' इति । प्रत्यक्षविषये किं तेन अन्यथा तत्रापि तदन्तर-कल्पनेऽनवस्थाप्रसङ्ग इति चेत्? सत्यम्; तथापि प्रत्यक्षव्यापारमनिरस्य वैपरीत्याद् दोषगुरूपो-पपतो निवारणार्थं तद्वचनम् । न चैवमनवस्थानम्; अविप्रतिपत्तिस्थाने तदन्तरस्याऽनवकाशात् । तादृशं च परस्य विकल्पेतरविभ्रमेतरात्मकं चित्रविज्ञानम्[3] । तथा वैशेषिकस्य विज्ञानाद् अन्यत् पटचित्ररूपम् । न हि तदेकमेव; चित्रावभासनात् । नाप्यनेकम्; "युगपदेकत्र बहूनि कर्माणि न वर्तन्ते सजातीयत्वे समानेन्द्रियग्राह्यत्वे एकद्रव्यत्वे च सत्यविभुद्रव्यवृत्तित्वात् रूपवत्" [ ] इत्यत्र निदर्शनस्य साध्यवैकल्यापत्तेः । तत्र दर्शनस्यभ्यवनेव तत् । नित्यानि चैवम् स्वयमेव-"गुणाश्च गुणान्तरम्" [ वैशे० सू० १।१।१० ] इत्यत्र सूत्रे । वाराब्दोऽपरिवर्षं, ततो यथा तद्विज्ञानं तथा रूपं चित्रैकमिष्यते- सौगतादिना[4] नोन्नीयते, तस्यैव तदनुभवेनैव[5] पी-डनात्, तथा स्वग्मादिकमपि तथाविधमेव तदिष्[6] । भवतु चित्रैकमस्तु तथापि युक्त कस्मिन् सति मानाणां दर्शनादर्शनस्थितिरिति चेत्; आह-

अवान्तरात्मना[7] चास्यात् सकलात्मदृष्टेः ॥११२॥ इति ।

सकलविषयसाक्षात्कारात्मकत्वात् आत्मनोऽन्ये आत्मनो अवान्तरात्मानः संसारिणः तेषां भेदाः शक्तिरूपा विशेषा तेषामानन्त्यात् अन्तो विस्तस्य परमात्मनि स न

१ उद्धृतमिदम्- अष्टश० अष्टसह० पृ० २३४ । २ -दुर्भा- आ०, ब०, प० । ३ "इदं चित्रमेकं यदीष्यते इत्यत्र" -ता० टि० । ४ 'सौगतस्य' -ता० टि० । ५ चित्र.[?]- आ०, ब०, प० । ६ तदुपाश्रयादेव । ७ साक्षात्- आ०, ब०, प० ।

विद्यते विषयत्वेन येषां तेषां भावात् आनन्त्यात् सन्मात्रवस्तुधर्मे तेषामप्रवृत्तेः । सकलाग्रहे सति तासां तत्स्थितिरिति । कथमेवमपि दृष्टस्यैवादृष्टोऽपि भाग इति प्रतिपत्तिः ? न तद्दर्शनादेव; तस्य तत्राप्रवृत्तेः । नापि तद्विषयात् दर्शनान्तरात्; तस्य दृष्टे प्रवृत्त्यभावात् । अत एव नोभाभ्यामपि । न च तदेकं तद्विषयमस्ति । सकृत्तस्य भावे दृष्टेतरविभागानुपपत्तेः । क्रमेण भावे परापरतत्कारणवैफल्यम् आदितद्व्यापारादेव तस्योत्पत्तेरिति चेत्; अत्राह—

**नानाकारणसामर्थ्याज्ज्ञानं भेदेन भासते ॥११३॥ इति ।**

**नाना** यत् **कारणं** परापरचक्षुरादिव्यापारलक्षणं तस्य **सामर्थ्यात् ज्ञानं** रूपादिप्रत्यक्षं **भेदेन** तदुत्पन्ननानातिशयक्रमरूपेण **भासते** । भासत इत्यनुभवप्रसिद्धमिदं न स्वरुचिविरचितमिति दर्शयति । तत्क्रमस्य तस्मादभेदे तदवस्थं तद्वैफल्यमुत्पत्तिभेदाभावात् । भेदे वा स कुतस्तस्य ? ततोऽपि तत्क्रमस्यापरस्य भावात्[4]; न; अनवस्थापत्तेरिति चेत्; अत्राह—

**भेदसामर्थ्यमारोप्य [ प्रत्यासत्तिनिबन्धनम् ] इति ।**

**भेद**श्च तत्क्रमात् तस्यार्थान्तरत्वम् **सामर्थ्यं** चैकत्वम्, सङ्गतस्यैकस्यार्थस्य भावः सामर्थ्यमिति व्युत्पत्तेः । तदुभयमारोप्य आत्मन्यवस्थाप्य ज्ञानं भासत इति सम्बन्धः । तात्पर्यमत्र—नैकान्ततस्तस्य तस्मादभेदो भेदो वा यतः प्रागुक्तदूषणम् अपि तु कथञ्चिदेव । ततः सत्यप्यभेदे नोत्पत्तिभेदाभावः; भेदापेक्षया तदुपपत्तेः । तथा न भेदेऽपि तस्येतरेतरविषयासङ्क्रमः; तस्याप्यभेदापेक्षया सुलभत्वात् । ततो युक्तं तद्बलेन दृष्टस्यैव अदृष्टमपीति । ज्ञानमिति यया प्रत्यासत्त्या तत्क्रमस्तद्विज्ञानरूपमेव एकमाकारमात्मसात्करोति नापरं साङ्कर्यापत्तेः; तथा तत्फलमेव कुर्वीतेति पर्यासं तज्ज्ञानेन प्रयोजनाभावात् पारम्पर्यदोषाच्च । इत्येतदेवाह परः—

**प्रत्यासत्तिनिबन्धनम् ।**

**चोद्यं महति [ नीलादौ तुल्यं तद्विषयाकृति ] ॥११४॥ इति ।**

महाविषयत्वात् प्रकृतं विज्ञानं महत् तत्र चोद्यम् उक्तरूपं प्रत्यासत्तिप्रयुक्तं भासते इति सम्बन्धः । तत्रोत्तरमाह—'नीलादौ तुल्यं तद्विषयाकृति' इति । तच्चोद्यं नीलधवलादौ विषयाकारे च विज्ञाने सदृशम् । तथा हि—यया प्रत्यासत्त्या वस्तुरूपं विज्ञाने च नियतमेव नीलाद्याकारं विषयाकारं च आत्मसात्करोति नापरं साङ्कर्यस्य सर्वग्रहणस्य च प्रसङ्गात्, तयैव स्वयमतदाकारमपि तत्फलमेव कुर्वीतेति विजयेरन् निराकारतद्विज्ञानवादिनः । यथाविषयं वस्तु विज्ञानं वा दृश्यत इति चेत्, न; सत्तत्करेऽपि तुल्यत्वात् । न हि तस्यापि कथञ्चिदेकत्वरहितस्य प्रतिपत्तिः । निवेदितं चैतत्–'भेदज्ञानात्' इत्यादिना[6] । सति चैवमनुपपन्नदर्शनविषयत्वे स्कन्धस्य यज्जातं तदाह–

**सर्वथा श्लेषविश्लेषे नाणूनां स्कन्धसम्भवः ।**
**अन्यथा नाप्रदेशादीत्यपरैर्दत्तमुत्तरम् ॥११५॥ इति ।**

---

१ न दर्श- आ०, ब०, प० । २ ज्ञानात् । ३ -तिभावा- ता० । ४ -वादनवस्था- ता० । ५ "स्वस्मिन्" -ता० टि० । ६ न्यायवि० श्लो० ११४ ।

स्कन्धस्यावयविनो न सम्भवः। कस्मिन् सति ? श्लेषविश्लेषे सङ्घातविघटने। केषाम् ? अणूनाम्। न हि तेषां तद्विश्लेषे स्कन्धोऽतिप्रसङ्गात्। तदविश्लेषे तत्सम्भव इति चेत्; उच्यते–अन्यथा तदविश्लेषप्रकारेण प्रदेशरहितत्वम् अप्रदेशो भावप्रधानत्वात् निर्देशस्य, तदादिर्यस्य पिण्डाणुमात्रत्वादेः तद् अप्रदेशादि न स्यात्। सप्रदेशाद्येव स्यात्। कथम् ? सर्वथा सर्वप्रकारेण। तथा हि–यद्येकदेशेन तेषां संश्लेषः; सांशत्वम्। कार्त्स्न्येन चेत्; पिण्डस्याणुमात्रत्वम्। अर्थान्तरसंश्लेषसम्बन्धात् तेषु तत्सम्भव इति चेत्; सर्वेषु तत्प्रसङ्गस्तदविशेषात्, तथा च जगदेकस्कन्धं प्राप्नुयात्। इति एवम् अपरैः सौगतैः दत्तं दूषणमिति शेषः। तत् किम् ? 'उत्तरम्' इति। स्कन्धशब्दमित्युत्तरम्। नेति सम्बन्धः। तथा हि–इदमपि दूषणं शब्दात्मकं तदुत्पाद्यज्ञानात्मकं वा यदि स्कन्धरूपम्; कथं तद्वादमतिनिर्मीत् ? तद्वदेव स्कन्धान्तरस्यापि कथञ्चिदवस्थितेः। न ह्यात्मानं तद्रूपमनतिक्रमदेव तादृशमपरमतिनिर्मितुमर्हति। निरंशैकाणुरूपं चेत्; न; शब्दस्य तादृशस्य अवाचकत्वात्, कुशाक्य-समयत्वात्। धौव्यत्ववत् तदेव कल्पितस्कन्धरूपतया वाचकमिति चेत्; न, कल्पितस्य नित्यादिवत् अर्थनियमानुपयोगात्, ज्ञानं च तदुत्पन्नं कथन्नाम अणूनां षडंशत्वादिकं प्रतिपद्येत ? निरंशैकस्वभाव-स्यानेकाकारगोचरत्वासम्भवात्। कल्पनया सांशस्य तत्सम्भव इति चेत्; न; कल्पितदूषणेन वस्तुप्रतिक्षेपायोगात्। ततः तात्त्विकमेव शब्दस्य तज्जनितज्ञानस्य च स्कन्धात्मकत्वमभ्युपगन्तव्यमिति युक्तम् स्कन्धवादस्योत्तरणम्। कथं तर्हि स्कन्धत्तेषां श्लेषाभावे अतिप्रसङ्गादिति चेत्; न; तद्दर्शनादेव श्लेषस्यापि तदनुगुणस्यावकल्पनात्। स च नैरन्तर्यमेव ससर्गविकल्पादेः तत्रानवतारात्। अन्यथा अणुवादेऽपि न ततो निर्मुक्तिरणूनां येन केनचिन्निरन्तराणामेव सम्भवात्। ततो निर्दोषत्वात् स एव तदनुगुणः श्लेष इति कथं तदभावः ? इदमेवाह–

**नैरन्तर्यं निरंशानां स्वभावानतिरेचनम्।** इति।

निरंशानामणूनां तेष्वेव "नाणोः" [ त० सू० ५।११ ] इति प्रदेशप्रतिषेधात् नैरन्तर्यं व्यवधानैकत्वम्। तत्किम् अतिरेचयति षडंशत्वाद्याघातने साधिकं करोति पिण्डाणुत्वापादनेन वा। अतीव रेचयति इत्यतिरेचनं स्वभावस्य नातिरेचनं स्वभावानतिरेचनम्। अतः स एव तेषां तदनुगुणः श्लेष इति भावः। ननु यदि स्कन्धावयवानां तेभ्यो वा स्कन्धस्याभेद एकान्ततः, एक एव नानैव वा स इति कथमेकानेकात्मकत्वमस्य ? इत्यत्राह–

**चित्रचैत्तविचित्राभदृष्टभङ्गप्रसङ्गतः ॥११६॥**

**स नैकः सर्वथा श्लेषात् नानैको भेदरूपतः।** इति।

सः स्कन्धः नैको नाप्यनेकः। कथम् ? सर्वथा। कुतः ? श्लेषात्, ततो भागानां तेभ्यश्च तस्य श्लेषस्याभेदस्य भावात्। सर्वथेति योज्यमत्रापि। अश्लेषोऽपि भेदरूपतः कथञ्चिदवयवतद्वतां भेदस्य भावात्। अनन्तस्यादिना एवंविधोऽप्ययं दुष्यतीति चेत्; न; तस्य बहुशस्तः प्रतिक्षेपात्।

१ न ह्यात्मानं आ०, ब०, प०। २ धान्यवत् आ०, ब०, प०।

अन्यथा स्वयमभिमतस्य निर्णयेतरादिरूपतया चित्रस्य चैतस्य विकल्पस्य रूपरसादिविषयतया विचित्राभस्य च दृष्टस्य कर्कटीभक्षणकालभाविनो दर्शनस्य भङ्गप्रसङ्गतः, तद्दोषस्य तत्रापि प्रवेशात् । ततः किम् ? इत्याह–

**स्कन्धो मात्रानुरोधेन व्यवहारेऽवधार्यते** । इति ।

**स्कन्धोऽवधार्यते** निश्चीयते । केनात्मना ? **मात्रानुरोधेन मात्राणां** तद्भागानामनुरोधः कथञ्चित्परस्पराविष्वग्भावः तेन न तत्समवेतेन रूपान्तरेण, ततो निश्चयनिराकुलं तत्कल्पनमिति भावः । किन्निमित्तं तदवधारणम् ? **व्यवहारे** । व्यवहारनिमित्तम् । ततोऽन्यत्र तत्कल्पनमपि प्रतिक्षिप्तमिति मन्यते । कुतः पुनरन्योऽन्यात्मगमनेनैव तस्यावधारणं न रूपान्तरेणेति चेत् ? अत्राह–

**सङ्ख्यादिसमभावेऽपि तत्स्वभावविवेकतः ॥११५॥** इति ।

सङ्ख्यानं सङ्ख्या तच्च गोचरविषयं न स्वरूपगोचरं तत्र [1]भेदस्य भावात् । आदि-शब्दाद्रूपादिकम्, तस्य **समभावो** भागेभ्यस्तत्त्वतो भेदः तस्मिन् सत्यपि **तत्स्वभावस्य** स्कन्ध-स्वरूपस्य **विवेकतो** विनिश्चयात् तेनैव सोऽवधार्यत इति । रूपान्तरेण तदवधारणे तत्साम्यानुपपत्तेः । निरूपितं चैतत्—"तुलितद्रव्यसंयोगे" इत्यादिना[3] ।

तथापि तमनभ्युपगच्छतो दूषणमाह–

**अतादात्म्यस्वभावे वा स्यानर्थक्यादलं परैः** । इति ।

**अतादात्म्यम्** अमात्ररूपत्वं सर्वथा तद्व्यतिरेकात् **स्वभावो** यस्य तस्मिन् **वा स्कन्धे** **परै**स्तद्भागैरलं पर्याप्तम् । कस्मात् ? **आनर्थक्यात्** आफल्यात्, यतश्च जलाहरणव्रीहिधारणादेः फलस्य स्कन्धादेव भावात् । ततोऽपि तत्सहायादेव तत न केवलादिति चेत्; न; केवलस्यैव सामर्थ्ये तदनपेक्षणात् । असामर्थ्ये न तत्सहायादपि व्योमकुसुमादेरपि तत्प्रसङ्गात् । तत एव सामर्थ्यं तस्येति चेत्; न; व्यतिरेके तस्येत्ययोगात् । अव्यतिरेके तत इत्यनुपपत्तेः । कथञ्चिद्व्यतिरेके वा स्कन्धः परिणामी स्यात्- असमर्थरूपपरित्यागेन समर्थरूपोपादानात् । तथा च क्रमवद्युगपदपि नानात्मकत्वोपपत्तेः नैकान्तमवयवव्यतिरेकः तस्य । स्वतः समर्थस्य सहायापेक्षण बहुकृत्वोऽपि प्रतिक्षिप्तम् । न च पक्षान्तरेऽप्ययं दोषः, सहकारीतरकारणकलापस्य परस्पराऽपादितातिशयस्यैव कार्ये व्यापारात् । वक्ष्यति चैतत्–"अर्थस्यानेकरूपस्य"इत्यादिना । तत्र जलाद्याहरणं तेषां फलम् । तदाधारतया स्कन्धस्य स्थापनमिति चेत्, ननु स्थितिकरणं स्थापनम्, स्थितिस्वभावस्य च किं तत्करणेन स्वयमेव स्थितेः ? अतत्स्वभावस्याप्यवश्यम्भाविनिपातत्वात् । तत्स्वभावतया तत्करणमिति चेत्; न, तदन्यस्वभाव-परित्यागेन तदयोगात् । तत्परित्यागे परिणामवादप्रसङ्गात् । यदि च तस्य तैः स्थापनं कथं विनाशः ? तद्धेतोरिति चेत ; कुत एतत ? तत्र तस्य सामर्थ्यात्, स्थापकसामर्थ्यात् स्थितिरपि

---

१ तेन तत्स–आ०, ब०, प० । २ भेदस्वभा–आ०,ब०,प० । ३ न्यायवि० श्लो० १।१०९ । ४ अवयवाद्भिन्नत्वम् । ५ न पक्षा–ता० । ६ न्यायवि० श्लो० २९९ ।

स्यात् । स्थापकस्यैव ततो नाश इति चेत्; न; पटविनाशेऽपि तन्तूनां प्रतीतेः । तत्सामर्थ्यस्य नाश इति चेत्; न; तस्य तदव्यतिरेकात् । व्यतिरेके वा कथं तेषामेव न सर्वस्यापि ? तत्रैव स्थितेरिति चेत्; न तर्हि तस्य विनाशः तैरवस्थापनात् । तत्स्थापनसामर्थ्यमपि तेषां नश्यत इति चेत्; न; तस्य तदव्यतिरेकादित्यादेरनुषङ्गात् अन्यवस्थापत्तेश्च । तत्र तत्रैव स्थिते(ति)स्तेषाम् । तत्सहायत्वादिति चेत्; न, स्वतः सामर्थ्ये तयोस्तदपाकरणात् । सहायस्यापि तदवस्थापकसहाय-विनाशद्वारेण विनाशकल्पनायामपरावस्थानप्रसङ्गाच्च । तत्र स्थापकसामर्थ्यनाशनेन स्थाप्यनाशन-मुपपन्नम् । ततो न भागानां भागवदवस्थापनं प्रयोजनम्; सत्सु तेषु तद्विनाशापत्ते । नापि तदुपलम्भनम्, अनुपलब्धानां परभागादिवत्तदसम्भवात्, इन्द्रियसन्निकर्षस्यापि तत्र[1] दुरवबोधत्वात् । नाप्युपलब्धानाम्; अष्टाणुकादेः तदवयवोपलम्भाभावेनानुपलब्ध्या परम्परतदवयविनामुपलम्भस्यैवा-सम्भवात् । ततो न युक्तमेतत्–"महत्यनेकद्रव्यत्वात् रूपाच्चोपलब्धिः" [ वैशे० सू० ४।१।६ ] इति । ततः सूक्तम्–'आनर्थक्यात्' इत्यादि ।

अथवा, अतादात्म्यमन्योऽन्यभेदः स एव स्वभावः तस्मिन् चेति पूर्वत्रात्र च पक्षान्तरद्योतने । हीति स्फुटार्थे । परैः परमाणुभिरलम् आनर्थक्यात् । तथाहि–तेषां यद्यातपावारणादिकं फलम्; अविशेषेण स्यात् । संसर्गिणामेवेति चेत्, न, संसर्गस्यैव सदूषितत्वात् । अन्यैव तत संहति

"विनापि परमाणूनां संसर्गात् संहतिः परा ।
आघातेऽपि पृथग्भावे यस्या नैव समस्ति सा ॥" [ प्र० वार्तिकाल० १।९१ ]

इत्यलङ्कारवचनादिति चेत्; सा तर्हि का परा स्यात् अन्यत्र कथञ्चित्तेषामभेदात्, तत्रैव घनैकाकारप्रत्ययोपलब्धे । तदभावेऽपि तत्प्रत्ययो दृश्यते विरलकेशेषु, ततस्तदभेदात् अन्यैव संहतिस्तत्रैव परमाणुष्वपीति चेत्; मा नाम भूत्तत्र तदभेदो बाधकसद्भावात्, न परत्र[2] विपर्ययात्, अस्मदादिप्रत्यक्षस्य स्वयमेव तत्प्रत्ययत्वेन तदबाधकत्वात्, तस्यापि योगिप्रत्यक्षं बाधकम् "अत्रात्य-तीन्द्रियदर्शियोगिप्रत्ययो भवति बाधकः" [ प्र० वार्तिकाल० १।९१ ] इत्यलङ्कारवचना-दिति चेत्; यदि योगी न स्यात् का गतिः ? अबाध एव तस्येति चेत्, सिद्धो नः सिद्धान्तः । सन्देह इति चेत्; न तर्हि परमाणुष्वपि निर्णय इति सुस्थितं तत्र संहतिवशात् आतपावारणादिपरि-कल्पनम् । निश्चित एव योगीति चेत्; न, "यदि योगी भवेत्" [ प्र० वार्तिकाल० १।९१ ] इति स्वयमेव तत्र सन्देहवचनात् । सत्यपि योगिनि कथं स्वप्रत्ययेन तस्य बाधः ? तेन संहति-विकलानामेव तेषां दर्शनादिति चेत्; कथं तस्य शरीरं तत्संहतेरेव तत्त्वात्, अशरीरस्य च नोपदेश इति व्यर्थं तदन्वेषणम् । तन्न तेन तस्य बाधनम् । 'विवादापन्ना सह तैर्मिथ्या तत्त्वात् दूरकेशवत्' इत्यनुमानेन बाध इति चेत्; न, 'विवादाकलितं नीलादि मिथ्या तत्त्वात्तैमिरिकनीलादिवत्' इत्यनेन

१ नाशेन आ०,ब०,प० । २ अवयवेषु । ३ "अथ सौगतमतदूषणपरत्वेन कारिकां योजयति ।" –ता० टि० । ४ "स्याद्वादिवादान्य' पक्षः पक्षान्तरम्, तस्य द्योतने ।'–ता० टि० । ५ तत्रैव आ०, ब०, प० । ६ नापरत्र आ०, ब०, प० । ७ "बाधकाभावात्"–ता० टि० । ८ योगिनः ।

नीलादेरपि तदापत्तेः, ततः परमाणवोऽपि न स्युः। नीलादिव्यतिरेकेण तदभावादिति कथं तदेकान्तेऽपि निर्बन्धः ? तन्नानुमानादपि तद्बाधनं यतस्तदन्यैव संहतिः। अन्यापि यदि तेषां साधारणी; न स्कन्धविलोपः। प्रत्यणु भिन्नायास्तु न संहतिव्यपदेश इति न तद्वशादणूनां व्रीहिधारणादावुपयोगः। स्वशक्तित इति चेत्; न; प्रत्येकं तत्प्रसङ्गात्, "संहतौ हेतुता तेषाम्" [ प्र० वार्तिकाल० ] इत्यस्य विरोधाच्च। तस्मादुपपन्नमुक्तम्–'अलं परैः' इति। ततोऽवश्यवक्तव्यः स्कन्धः तस्यैव तदुपयोगात्। स च रूपादीनामन्योऽन्याभेद एव नापर इत्याह–

**स्पर्शोऽयं चाक्षुपत्वान्न न रूपं स्पर्शनग्रहात् ॥ ११६ ॥** इति।

च शब्दो वक्ष्यमाणः स्पर्श इत्यादावचधारणार्थो द्रष्टव्यः। अयमुपलभ्यमानो मातुलुङ्गादिस्कन्धः **स्पर्श एव न**। कस्मात् ? **चाक्षुपत्वात्**। न हि तन्मात्रत्वे चक्षुर्वेद्यत्वम्। नापि **रूपमेव**। कुतः ? **स्पर्शनग्रहात्** स्पर्शनेनापि प्रतिपत्तेः। न च तन्मात्रस्य तेन ग्रहः सम्भवति। अस्ति च तस्य नयनस्पर्शनाभ्यां प्रतिपत्तिः। अतो रूपस्पर्शस्वभावस्यैव प्रत्यक्षविषयत्वमिति भावः। रूपादेर्भिन्न एव कस्मान्न भवतीति चेत् ? अत्राह–

**रूपादीनि निरस्यान्यं न चाभ्युपलभेमहि।** इति।

स्वपदव्याख्यातमेतत्। एतदेव कस्मादिति चेत् ? अत्राह–

**सामग्रीविहितज्ञानदर्शिताकारभेदिनः ॥ ११७ ॥**
**प्रायेणैकस्य ताद्रूप्यं [ पृथक्सिद्धौ प्रसङ्गतः ] ॥** इति।

एकस्य रूपाद्यन्वयिनः स्कन्धस्य। कथमेकस्य ? **प्रायेण** कथञ्चित् **ताद्रूप्यं** रूपाद्यात्मकत्वम् 'उपलभेमहि' इत्याकृष्य सम्बन्धः। ततो 'रूपादीनि' इत्युपपन्नम्। कीदृशस्य तस्य ताद्रूप्यम् ? **सामग्रीविहितज्ञानं** चक्षुरादिव्यापारोपजनितं प्रत्यक्षं तद्दर्शिता रूपादय आकारास्तद्भेदिनः प्रायेणेत्यत्रापि योज्यम्। पृथगेव कस्मान्नेति चेत् ? आह–**पृथक्सिद्धौ प्रसङ्गतः** इति। पृथक्सिद्धौ निष्पत्तौ तस्य प्रसङ्गतः प्रागुक्तदोषस्येति।

नन्वेवमेकस्मिन्नपि इन्द्रिये तस्य तथैव प्रतिभासात् इन्द्रियान्तरमनर्थकमिति चेत् ? अत्राह–

**अल्पभूयःप्रदेशैकस्कन्धभेदोपलम्भवत् ॥ ११८ ॥** इति।

अल्पश्च भूयांश्च तौ च तौ वातायनादिरूपौ **प्रदेशौ** च ताभ्याम् **एकस्कन्धस्य** पर्वतादेः **भेदे**नाल्पत्वबहुत्वादिना **उपलम्भः** तद्वत् स्कन्धस्य ताद्रूप्यम्, उपलभेमहीत्यनुगमनीयम्। एतदुक्तं भवति–यथा सुधागृहमध्यवर्ती पुरुषः पर्वतादिकमल्पेन वातायनादिनाऽल्पमेव पश्यति भूयसा च भूयांसम्, एवमयमपि शरीरागारमध्यमध्यासीनो जीवश्चक्षुरादिनैकैकेन रूपाद्यन्यतमात्मकमल्पमेव तमवलोकयति भूयसा च तत्समुदायेन भूयांसं रूपस्पर्शाद्यात्मकमिति न वैफल्यं तदन्तरस्येति। निदर्शनान्तरमपि परप्रसिद्धमाह–

१ तद्रावन आ०, ब०, प०। २ इत्यवधारणा–आ०, ब०, प०।

**अन्यथा स्वात्मनि ज्ञानमन्यथा चानुमीयते ।** इति ।

**अन्यथा** अन्येन अनुमानेन गम्यात् प्रकारात् प्रकारेण **स्वात्मनि** दानादिचित्तस्वरूपे **ज्ञानं** प्रत्यक्षम्, न हि तेन स्वर्गप्रापणशक्त्यादेर्ग्रहणं तदनुमानवैफल्यापत्ते, [2]खण्डशः समारोपस्य तद्व्यवच्छेदस्य च प्रतिक्षेपात्, **अन्यथा च** तच्छक्त्यादिप्रकारेण च **अनुमीयते** स्वात्मेति विभक्तिवैपरीत्येन सम्बन्धः । ततो यथा दर्शनेनात्मतया अनुमानसहायेन भूयस्तथा तदात्मनो ग्रहणं न तदन्यतरस्यानर्थक्यम्, एवं स्कन्धप्रतिपत्तौ इन्द्रियान्तरस्येति । एवमेते व्याख्यानश्लोकाः । ततो युक्तं सर्वस्यानेकान्तात्मकत्वं विचारप्रसिद्धेः अनुमानप्रसिद्धेश्च । तच्चेदमनुमानम्–सत् सर्वमनेकान्तात्मकं प्रमेयत्वादिति । सतः प्रमेयत्वे तस्य च सति नियमे स्यादिदमनुमानम् नान्यथा हेतुदोषसम्भवादिति मन्यमानस्य मतमादर्शयति–

***सत्प्रमेयत्वयोर्नास्ति सर्वथा नियमो यदि ॥ ११९ ॥*** इति ।

**सत्प्रमेयत्वयोर्नियमः** सत्प्रमेयमेव नाप्रमेयं प्रमेयत्वं च सत्येव नासतीति निर्धारणं **स नास्ति ।** कथम्भूतः ? **सर्वथा** सर्वेण सन्निहितेनेव इतरेणापि देशादिप्रकारेण । न हि सन्निहितदेशादिकमिव तदपरमपि प्रमेयं प्रमातुः सर्वस्य सर्वदर्शित्वापत्ते, अविरोधाच्च । वस्त्वपि स्यात्प्रमित्यवलम्बनमपीति ततो भागासिद्धो हेतुः । योगिनः प्रमेयमेव सर्वमिति चेत्, न, तथापि चतुरार्यसत्यमात्रवेदिनस्तदभावात्, सर्वसर्ववेदिनि सौगतस्य विप्रतिपत्तेरिति तदवस्थं तदसिद्धत्वम् । न च सदेव प्रमेयम् । असतोऽपि[4] प्रागभावादेस्तत्त्वात् । न च तस्यानेकान्तात्मकत्वम्; तस्य[5] भावधर्मत्वेन तत्रासम्भवात्, अन्यथा तस्यापि भावत्वेनाभावव्यवहारविलोपात् । अतोऽनैकान्तिकश्चाय हेतुरिति नातः साध्यसिद्धिरिति भावः परस्य । 'यदि' इति तदद्योतने । तत्रोत्तरमाह–

**अप्रवृत्तेः फलाभावात्तत्र वृत्तेर्निषेधतः ।** इति ।

नास्तीत्यनुवर्तते । ततोऽयमर्थः–यदुक्तं तयोर्नियमो नास्तीति, तन्नास्ति; कस्मात् ? **अप्रवृत्तेः** । प्रमेयमेव सदित्यनियमे संज्ञानशब्दादिप्रवृत्तेरसम्भवात् । असम्भवत्प्रवृत्तिकमेव तत्सदिति चेत्; कुतो न व्योमकुसुमादिकम् ? तदर्थक्रियाविरहादिति चेत्, स एव कस्मात् ? कस्यचिदपि तत्र तदप्रतीतेरिति चेत्; इतरत्र तर्हि कस्यचित्तत्प्रतिपत्तिर्वक्तव्या अन्यथा तद्विरहापत्ते, तथा च कथममेयत्वम् अर्थक्रियाकारित्वेन प्रतीतस्य तदयोगात् ? एवमपि नियतप्रतिपत्त्रपेक्षमेव तस्य प्रमेयत्वं न सर्वापेक्षमिति चेत्; भवतु, प्रमेयत्वमात्रस्यापि हेतुत्वात् । यदप्याकूतम्–सर्वसर्वज्ञे विप्रतिपत्तेस्तदपेक्षं प्रमेयत्वमपि विप्रतिपन्नमेवेति, तदपि नास्ति, तद्विप्रतिपत्ते. तत्साधनेन[6] प्रत्याख्यानात् । तत्र भागासिद्धत्वम्[7] सन्दिग्धादिसिद्धत्वं वा साधनस्य, सतः सर्वस्य प्रमेयत्वनियमात् । नापि व्यभिचारित्वम्;

---

१ अन्येन प्रकारेण इत्यन्वय । २ "ननु प्रत्यक्षेण स्वर्गप्रापणशक्त्यादेरग्रहणेऽपि न तदनुमानवैफल्यम् समारोपव्यवच्छेदार्थत्वात् । तदुक्तम्–'तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुण. । भ्रान्तेर्निश्चीयते नेति साधनं सम्प्रवर्तते' इति मदन्तं सौगतं प्रत्याह–"–ता० टि० । ३ तस्यातो आ०, ब०, प० । ४–पि च प्रा–आ०, ब०, प० । ५ अनेकान्तात्मकत्वस्य । ६ सर्वसर्वज्ञसाधनेन । ७ भागादिसि– आ०, ब०, प० ।

सत्येव प्रमेयत्वस्य नियमान्नासति। कस्मात् ? तत्र तस्मिन्नीरूपाभावे वृत्तेः प्रमाणव्यापारस्य निषेधतो निवारणात्। सोऽपि कस्मात् ? फलाभावात् सकलशक्तिविरहिणि तस्मिन् कस्यचिदपि फलस्याभावात्। मा भूत् फलं तथापि कुतो न तत्र तत्प्रवृत्तिः ? न हि प्रमाणस्यैवं प्रेक्षावत्त्वमस्ति फलवत्येव मया प्रवर्तितव्यं नापरत्रेति। पुरुषस्यास्तीति चेत्; न; तस्य तत्प्रवृत्तिनिषेधार्थत्वात्। सोऽपि तदधीनैवेति चेत्; न, तस्याः स्वहेत्वधीनत्वात्। अन्यथा भावेऽपि अभिमते तदभावप्रसङ्गादिति चेत्; कस्तर्हि तत्र तत्प्रवृत्तेर्हेतुः ? शक्तिर्विषयस्येति चेत्; न; अभावस्य तदभावात्। इदमेव तर्हि वक्तव्यम्, किं 'फलाभावात्' इति ? न; तेनाप्यस्यैवोपलक्षणत्वात्। पुरुषप्रवृत्तिनिषेधार्थत्वाच्च, सफलेऽपि प्रवृत्तेस्तदभावादेवं तदुपपत्तेः प्रमाणस्यैवेति चेत्; न; वक्ष्यमाणोत्तरत्वात्। ततः स्थितम्–अप्रवृत्तेरित्यादि। किं वा प्रमाणं यत प्रमेयत्वमभावस्य ? प्रत्यक्षमिति चेत्; अत्राह–

**प्रमाणमर्थसम्बन्धात् प्रमेयमसदित्यपि ॥ १२० ॥**

**केवलं ध्यान्ध्यमेवैतत [ किन्न सन्तं समीक्षते ]।** इति।

अर्थेन विषयेण सम्बन्धात् तज्जन्यादेः प्रमाणं प्रत्यक्षमिति गम्यते, अनुमानस्य वक्ष्यमाणत्वात्। ननु तदव्यविसंवादादेव प्रमाणमिति चेत्; न; तस्यापि सम्बन्धादेव भावात्, "अविसंवादः तस्मादात्मलाभात्" [ ] इति वचनात्। तस्य च प्रत्यक्षस्य प्रमेयम् असदपि अविद्यमानमपि प्रागभावादि[3] न केवलं विद्यमानमेव, अपिशब्दस्य भिन्नप्रक्रमत्वेनासदित्यत्र दर्शनम्। इति एवम् ध्यान्ध्यमेव चेतोविह्वलतैव केवलं न तत्त्वचिन्तनम्। एतत्परमतम्। तथा हि–यदि सम्बन्धात्प्रमाणं कथमसति तद्भवेत् ? न हि तस्य तस्मादुत्पत्तिः, अशक्तेः, अन्यथा वस्तुत्वापत्तिः वस्तुनः[5] तल्लक्षणत्वात्। नापि तादात्म्यम्[6], प्रमाणस्यापि तद्वन्नीरूपत्वप्रसङ्गात्। तस्यापि परतन्त्रस्वभावात् प्रतिपत्तावनवस्थितेः। न तादात्म्यादेस्तस्य तद्विषयत्वमपि तु योग्यत्वादिति चेत्; न; तस्य तदभावात्। प्रमाणस्येति चेत्; अत्राह–'किं न सन्तं समीक्षते' इति। सन्तं वर्तमानविषयं किं कस्मात् न समीक्षते समीक्षत एव प्रत्यक्षं योग्यत्वस्य तत्राप्यविशेषात्, अतिप्रसङ्गस्येतरत्रेव तत्रापि तन्नियमादेव निवृत्तेः। ततो नयुक्तम्–"भिन्नकालम्" [ प्र० वा० २।२४७ ] इत्यादिना अतीतस्य तद्धेतोर्विषयत्ववर्णनमिति भावः। अथवा नेति नन्वित्यर्थे न्यासे बहुलं तथा दर्शनात्। ततोऽयमर्थः–किं नैव न ननु सन्तं समीक्षते प्रमाणमिति। तथा हि–कथं नाम प्रमाणमभावगोचरं भावे स्यात् ? भावगोचरं भावान्तरे कथमिति चेत् ? तस्य सम्भवात्। तत्रापि तस्य योग्यत्वात्, नैवमत्र, अभावे सति भावस्यैवासम्भवात्। तदुपमर्दने सम्भव इति चेत्; न; उपमर्दनस्य सत्येव दर्शनात् पिण्डादौ नासति व्योमकुसुमादिवत्। तथा प्रच्छादनस्यापि। किं च, तस्य प्रच्छादनं यदि कार्यस्य स्वरूपमेव; तत्कथमसत्प्रच्छादनं भवेत् ? सदेव तत् प्रच्छादनादिति चेत्; न परस्पराश्रयात्-तत्प्रच्छादनात् सत् सतश्च तत्प्रच्छादनमिति। कुतो वा तत्तस्य प्रच्छादनम् ? तत्परिहारात्मकत्वादिति चेत्; न; सति

---

१ 'प्रमाणप्रवृत्ति'–ता० टि०। २ फलाभावादेव निषेधोपपत्तेः। ३-दिति न आ०,ब०, प०। ४ धान्ध्य-ता०। ५- नः सल-प०। ६ "तादूप्यम्"–ता० टि०।

तस्मिन् भवतस्तदसम्भवात्, अन्यथा तत्तस्य अभाव एव स्यान्न मच्छादनम्, तच्च न युक्तम्, तदभावस्य भावात्मकत्वे नि स्वभावाभावकल्पनावैफल्योपनिपातात्। उपलब्धिप्रतिबन्धकरणादिति चेत्; न, तत्समये तस्याप्युपलब्धियसङ्गात्। न हि तदा तस्य तत्प्रतिबन्धः; पश्चादेव तेन तस्य तत्करणात्। तथा च कथमुपलभ्यमाने तदभावे तदभावस्तदुपलब्धिर्वेति सूक्तमेतत्—'किन्न' इत्यादि। तत्र प्रत्यक्षत प्रमेयत्वमभावस्य। नाप्यनुमानात्; तत्रापि प्रतिबन्धसम्बन्धस्यैव प्रामाण्यात्, अभावे च प्रतिबन्धस्यासम्भवात्। तदेवाह—

**सत्प्रत्यक्षं परोक्षेऽर्थे साधनं त्रिविधं द्वयम् ॥१२१॥**
**हेत्वात्मनोः परं हेतुः तज्ज्ञानव्यवहारयोः ।** इति ।

अनुमानं हि साधनात् साध्यविज्ञानम्। **साधनं च परोक्षेऽर्थे** एव नाऽनर्थे नीरूपाभावे। कुत ? यत **सत्प्रत्यक्षं** सति विद्यमाने प्रत्यक्ष तत्प्रतिपन्नम्। इदमुक्तं भवति—यतो निदर्शने सत्येव साध्ये तत्प्रतिपन्न नास्ति नीरूपे, ततो धर्मिण्यपि तत्रैव तत्, नापरत्रातिप्रसङ्गात्। प्रतिषेधाच्च न तत्र तत्। तथाहि—**त्रिविधं** तत्, तत्र च **द्वयं** कार्यस्वभावलक्षण **हेत्वात्मनोः** कारणस्वभावयो. कार्यं हेतो. स्वभावश्चात्मन तदव्यतिरिक्तस्य साधनम्। न चाभाव कस्यचिद्धेतु, अशक्ते, अन्यथा भावत्वप्रसङ्गः। नाप्यात्मा, तस्यापि तद्वन्नीरूपत्वापत्ते। न च तदुत्पत्तितादात्म्याभ्यामपर. प्रतिबन्धो यतस्तत्रापि किञ्चित्साधनं भवेत्। **परं** चानुपलब्धिलक्षण साधन **हेतुः**। कयो ? **तज्ज्ञानव्यवहारयोः** तत्रैवार्थे यौ ज्ञानव्यवहारौ सदसज्ज्ञानशब्दलक्षणौ तयोः, नाभावे।

कुत एतत् ? इत्यत्राह—

**परसत्त्वमसत्ताऽस्यादर्शनं परदर्शनम् ॥१२२॥** इति ।

यद्यभावोऽपि भावात्मैव न भवेत् भवेदपि तत्रैव ज्ञानादिरनुपलम्भात्, न चैवम्. यत **परसत्त्वमेवासत्ताऽस्य** केवलभूतलस्यैव घटाद्यभावतया प्रत्यक्षतोऽवगमात् नापरस्यानुपलम्भात्। तस्यैवावगम इति चेत्, क तस्य तेन सम्बन्धग्रहणम् ? तदन्यत्रेति चेत्, न; तत्रापि प्रत्यक्षतस्तस्याप्रतिपत्ते। अनुपलम्भादेवेति चेत्; न, तत्रापि पुनरन्यत्र तद्ग्रहणकल्पनायामनवस्थापत्ते। तत परसत्त्वादन्यदसत्त्व निषेध्यस्य। नापि तद्दर्शनादन्यददर्शनम् अनुपलम्भ। दर्शननिवृत्तिमात्रमेव किन्न तदिति चेत् ? न, तस्य क्वचित् साधनत्वानुपपत्ते, व्योमकुसुमवदप्रतिपत्तेश्च। तस्यापि तन्निवृत्तेरन्यतः प्रतिपत्तौ अनवस्थोपनिपातात्, असम्बन्धाच्च। न हि तस्य साध्येन भावात्मनेतरेण वा कथञ्चिदपि सम्बन्धः, तस्य वस्तुनियततयैवाध्यवसायात्। असम्बद्धाच्च ततस्तत्प्रतिपत्ति प्रमाणान्तरमेव स्यान्नानुमान तल्लक्षणातिपातात्।

एवमेतत्, अभावप्रमाणतया तस्योपगमादिति कश्चिद्विपश्चिन्मन्यं। सोऽपि मन्यत —

१– स्य भा–आ०, ब०, प० । २ प्रतिपत्त–आ०, ब०, प० । ३ तदव्यतिरेकस्य–आ०, ब०, प० । ४ "अनुपलब्धिलक्षणात् साधनात्"– ता० टि० । ५ 'निषेधस्य"–ता० टि० । ६ सम्बन्धस्य । ७ मीमांसकः ।

किं तस्य प्रयोजनमिति ? असाङ्कर्यपरिज्ञानं भावानाम् । अत एवोक्तम्–

"वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यं समाश्रिता ।" [ मी० श्लो० अभाव० श्लो० २ ] इति ।

इति चेत्; किं पुनः प्रमाणान्तरेण स्वविषयस्यान्यसङ्कीर्णस्यैव परिज्ञानम् ? तथा चेत्; कथं वेदाद्धर्मे[1] प्रवृत्तिः अधर्मसङ्कीर्णस्यैव ततस्तस्य प्रतिपत्तेः ? निवृत्तिर्वा कथमधर्मात् ? इतरसङ्कीर्णस्यैव तस्यापि ततोऽध्यवसायात् । अभावप्रमाणसहायादन्योऽन्यासङ्करेणैव तयोस्ततोऽवगम इति चेत्, कथं स्वतः प्रामाण्यं स्वविषयपरिच्छित्तौ प्रमाणान्तरसव्यपेक्षस्य तदयोगात् ? तन्निरपेक्षादेव ततो विषयासङ्कर-परिज्ञाने प्रत्यक्षादेरपि स्यादिति व्यर्थमेव तदर्थं तत्कल्पनम् । यदि चायं निर्बन्धः तत[3] एव तत्परिज्ञानमिति; तस्य तर्हि कुतो भावप्रमाणाऽसङ्करः ? तदप्रतिपत्तौ तस्यैवाव्यवस्थितेः । तदन्यस्मादिति चेत्; न; तत्रापि तदन्यतस्तत्कल्पनायामनवस्थाप्रसङ्गात् । न तत्र तदन्तरापेक्षणं विषयवत् स्वरूपेऽपि तत एवान्यविवेकस्याध्यवसायादिति चेत्; न; नैतः प्रत्यक्षाद्यनुत्पत्तिरूपान्नीरूपात् तदयोगाद्व्योमकुसुमादिवत् । आत्मनस्तत्सङ्करज्ञानपरिणतिविकल्पादिति चेत्[4], तत्स्वसंवेदनस्य भावविषयस्य कथमभावांशे प्रवृत्तिः ? तत[5]स्तस्याप्यव्यतिरेकादिति चेत्, किमेवमन्यत्राप्यभावेन तत्रापि प्रत्यक्षादिनैव तदव्यतिरेकिणस्तदन्यविवेकस्य प्रतिपत्तेः ।

यदपि मतम्–'अन्यवस्तुनि विज्ञानं तत्प्रमाणम्' इति; तदपि न विज्ञानमिन्द्रियजम्; "न तावदिन्द्रियेणैषा नास्तीत्युत्पाद्यते मतिः ।" [ मी० श्लो० अभाव० श्लो० १८ ] इत्यस्य विरोधात् । मानसमिति चेत्; कुतस्तदुत्पत्तिः ? [6]वस्तुग्रहणनिषेध्यस्मरणाभ्यामिति चेत्; कथं वस्तुग्रहणम् ? निषेध्यसङ्करेणेति चेत्; न तर्हि तन्निषेधः, गृहीते तदयोगात्, वस्तुन्यपि प्रसङ्गात् । न तत्सङ्करेण नाप्यन्यथा अपि तु वस्तुत्वमात्रेणेति चेत्; तथापि न निषेधो वस्तुत्वमात्रस्य सर्वत्र भावात् । तद्विशेषस्य निषेध इति चेत्; न, तस्यास्मरणात् । न हि वस्तुग्रहणबलभाविस्मरणं तद्विशेषमवगाहितुमर्हति; निरवशेषविशेषावगाहप्रसङ्गात् । भवतु असङ्करेणैव तद्ग्रहणमिति चेत्, न; इन्द्रियज्ञानेन तदसम्भवस्योक्तत्वात् । मानसज्ञानेनेवेति चेत्; न; तत एव तस्यानुत्पत्तेः । तथा हि–यदि सत्; किमुत्पत्त्या सति तद्वैयर्थ्यात् । असत् चेत्, कथं हेतुर्यत उत्पत्तिः ? अन्यदेव तन्मानसमिति चेत्; न; तत्रापि कुतस्तदुत्पत्तिरित्यादेरनवस्थोपनिपातप्रसङ्गस्योपनिपातात् । सति वा तस्मिन् किमन्येन मानसेन तत एव निषेधसिद्धेः ? निषेध्यान्तरनिषेधार्थं तदिति चेत्; न; तस्यापि तदसङ्करग्राहिणस्तत एव सिद्धेः । पुनस्तदन्तरनिषेधार्थं तत्कल्पनमनवस्थामुपनयतीति न सुव्यवस्थितमेतत्–

---

१ वेदात् । 'सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात् । केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः ॥" –ता० टि० । २ अभावप्रमाणादेव असाङ्कर्यपरिज्ञानम् । ३ अभावात् । प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते । आत्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥ [ मी० श्लो० ] इत्येतत्कारिकोक्तमभावप्रमाणस्वरूपत्रयं मनसिकृत्याह"–ता० टि० । ४ चेत्स्वसं–आ० । ५ ततस्तस्याव्यतिरेकादिवस्तुग्रहणनिषेध्यस्मरणाभ्यामिति आ०, ब०, प० । ६ 'अभावप्रमाणेन"–ता० टि० । ७ तान्या–आ०, ब०, प० । ८ कथं हि हे–आ०, ब०, प० ।

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिता ज्ञानं जायतेऽक्षानपेक्षया ॥" [मी०श्लो०अभाव०श्लो०२७] इति ।

तत्र अन्यवस्तुनि विज्ञानमभावप्रमाणं सम्भवति । सम्भवतोऽपि न भावनिष्कृष्टतया तस्मादभावस्य प्रतिपत्तिः तदप्रतिवेदनात् । तदनिष्कृष्टतया तु प्रतिपत्तौ सिद्धं भावस्यैवाभावत्वमिति न तत्प्रमाणादपि तस्यै सिद्धिः । तथाऽनुमानादपीति न युक्तमेतत्–"अन्यत्सामान्यं सोऽनुमानस्य विषयः ।" [ न्यायबि० पृ० २४–२५ ] इति । नीरूपस्य सामान्यसम्बन्धाभावेन तद्विषयत्वायोगात् । न नीरूपं तत् । वस्तुमात्रस्यैवान्यव्यावृत्तिविशिष्टस्य तत्त्वादिति चेत्; किमत्र मात्रपदस्य व्यवच्छेद्यम् ? सजातीयविवेक इति चेत्; कथं तदवेदने वस्तुप्रवेदनम् ? "तस्माद्दृष्टस्य भावस्य" [ प्र० वा० ३।४४ ] इत्यादि विरोधात् । ततो दुर्व्याहृतमिदम्–

"अतद्रूपसंवृत्तवस्तुमात्रप्रवेदनात् ।
सामान्यविषयं प्रोक्तं लिङ्गं भेदाऽप्रतिष्ठितेः ॥" [ ] इति

कथं वा वस्तुरूपत्वे तस्योक्तम्–

"अर्थानां यच्च सामान्यमन्यव्यावृत्तिलक्षणम् ।
यन्निष्ठास्त इमे शब्दा रूपं तस्य न किञ्चन" [ प्र० वा० २।३० ] इति ।

शब्दविषयस्यैव तस्य नीरूपत्वमुक्तं नानुमानविषयस्येति चेत्; किं पुनस्तद्विषये न सन्ति शब्दाः ? तथा चेत्; कथं तत्प्रतिपादने यतः परार्थानुमानमिति दुष्परिहारमेवेदं परिस्खलितं परस्येति पर्याप्तमनुपन्नेण । ततो न व्यभिचारी हेतुः, अभावस्यापि भावान्तरस्वरूपतयाऽनेकान्तात्मकत्वात् ।

यदि भावान्तरमेवाभावस्तत्र कथमसज्ज्ञानादिप्रवृत्तिरिति चेत् ? अत्राह–

**सदसज्ज्ञानशब्दाश्च केवलं तन्निबन्धनाः ।** इति ।

सद्भूतलम् असन् घट इति य एते बुद्धयः शब्दाश्च तेषामपि तदेव भावान्तरं निमित्तं तथैव प्रमाणप्रवृत्तेर्न व्यतिरिक्तौ भावाभावौ विपर्ययात् । भावस्यैवाभावात्मकत्वे प्रसिद्धमुदाहरणमाह–

**अग्निः स्वपररूपाभ्यां भावाभावात्मको यथा ॥ १२३ ॥** इति ।

अग्निर्दहनात्मा पदार्थो भावाभावात्मको यथा येन प्रतीतिप्रकारेण तथान्योऽपीति । स च तदात्मकः स्वपररूपाभ्यां रूपग्रहणमुपलक्षणं क्षेत्रादेरपि । ततः स्वरूपादिना भावात्मकः पररूपादिना अभावात्मक इति प्रतिपत्तव्यः । भावस्यैवाभावत्वे स्वरूपादिनेव इतरेणापि तदात्मकत्वमेवेति भावैकान्तवादः । अभावस्यैवं वा भावत्वेऽपि शून्यैकान्तवादः पररूपादिनेवेतरेणापि तदात्मकत्वस्यैव भावात् नोभयात्मकत्वमिति चेत्; अत्राह–

**अन्वयव्यतिरेकाभ्यां [ शब्दबुद्ध्याऽवधार्यते । ]** इति ।

---

३ आह चात्र-अतद्रूप...'-प्र० वार्तिकाल० १।२।
१ अभावस्य । २ सामान्यम् । ६-ना च भा-आ०, ब०, प० । ७-य भा-
४ सामान्यस्य । ५ "तथा प्रमाणप्रवृत्तेः ।"-ना० टि० ।
आ०, ब०, प० ।

अन्वयो 'भावाभावयोः परस्परमेकत्वं व्यतिरेको भेदस्ताभ्याम् अग्निस्तदुभयात्मक इति न प्रकृतो दोषः, एकान्ताभेद एव तस्य भावात् । अन्वयग्रहणेनापि "तयोर्व्यतिरेके द्वे वस्तुनी स्यातां नोभयात्मकत्वमेकस्य" [ ] इति प्रतिक्षिप्तम्; एवमपि भावाभावयोरितरेतरनिष्कर्षणासम्भवात् कथं स्वरूपादेर्भावोऽभावश्च तद्विपर्ययादिति तथा व्यपदेश इति चेत् ? अत्राह–'शब्दबुद्ध्याऽवधार्यते' इति । शब्दबुद्धिः नयबुद्धिः तया स्वविषये शब्दस्य समर्पणात्तयाऽवधार्यते सत्त्वं स्वरूपादेरसत्त्वमन्यत इति पृथक्कारेण निर्णीयते । निरूपितं चैतत् प्रथमप्रस्तावे ।

यदप्यत्र चोद्यम्–"यदि भावान्तरमेवाभावस्तदा पर्युदासात् प्रसज्यप्रतिषेधस्याविशेषः" [ ] इति, तदप्येतेन प्रतिविहितम्; नयबुद्धिवशादभावौदासीन्येन भावस्य तदौदासीन्येन चाभावस्य प्राधान्यसमर्पणे पर्युदासप्रसज्ययोर्विशेषस्यावकल्पनात् । तत्राभावेन व्यभिचारः तस्य प्रमाणतोऽनवगमात् । नयतोऽवगमेऽप्यप्रमेयत्वात्, अन्यथा प्रमाणनययोरविशेषापत्तेः । प्रमेयत्वेऽपि भावरूपत्वात् । कुत एतत् ? ननु निरूपितमिदं यदि न तावता परितोषः पुनरपि वदामः । इत्याह–

**अप्रमेयं प्रमेयं चेदसत्किन्न सदात्मकम् ॥ १२४ ॥** इति ।

यथैव हि अभावो भावमपेक्षते तत्प्रच्युतिरूपत्वात् तथा तत एव प्रमेयमपि अप्रमेयम् । तत्र यत्तदप्रमेयं तच्चेत् यदि प्रमेयं प्रमाणवेद्यम् असत् अविद्यमानं किं कस्मान्न सदात्मकम् ? सदात्मकमेव प्रतिषेधद्वयेन प्रकृतप्रतिपत्तेः । प्रयोगश्चात्र–यत्प्रत्यनीकं तत्तद्वर्गीयं यथा अप्रमेयं प्रमेयवर्गीयम्, सत्प्रत्यनीकं च असदिति नात्यन्ताभावस्तो भिन्नवर्गत्वं तस्य । अथ तत्प्रमेयं न भवति कथं तद्व्यवहारः, सर्वप्रमाणव्यापारातिक्रान्ते तदयोगात् परिगणनातिक्रान्तपदार्थवत् । ततः प्रकृतप्रमाणापरामर्शेऽपि प्रमाणान्तरपरामृष्टमेव तदभ्युपगन्तव्यम् । ततः प्रमेयमेवाप्रमेयं तथा सदेवासदपि । तस्यापि प्रकृतरूपेणासत्त्वेऽपि रूपान्तरेण सत एवोपपत्तेः । अथ सदेवासदिति व्यवहारो नास्ति, तदेवाह–

**अथ न व्यवहारोऽयम्** इति ।

अत्रोत्तरमाह–

**अन्यत्रापि निरङ्कुशः ।** इति ।

अन्यत्र परपक्षेऽपि प्रमेयमेवाप्रमेयमिति व्यवहारो नेति प्रसङ्गो निरङ्कुशो निवारकरहित इत्यर्थः । लोकस्तत्राङ्कुश इति चेत्; न; अन्यत्रापि तुल्यत्वात् । ततः स्थितमव्यभिचारित्वं प्रमेयत्वस्य ।

सम्प्रति सर्वत्र प्रमेयत्वस्य सद्भावमुपसंहृत्य तस्य गमकत्वे निमित्तं दर्शयन्नाह–

**सत्प्रत्यक्षं परोक्षार्थगतिरन्त्रैकलक्षणम् ॥ १२५ ॥**
**साध्येऽसति विरोधः [ अयमतस्तर्केण साध्यते । ] इति ।**

प्रकृतं प्रमेयत्वं सत् अस्ति सर्वत्रेति शेषः। किं रूपम् ? प्रत्यक्षं तत्परिच्छेदयोग्यरूपम्। तथा परोक्षा अस्पष्टा अर्थगतिः स्मरणादिः, अत्रापि तयोग्यमेव रूपं तद्विषयत्वादुच्यते। ततः प्रत्यक्षपरोक्षप्रमाणव्यापारयोग्यत्वं प्रमेयत्वम्, अर्हार्थत्वात् कृत्यस्य[1]। तत्र तस्मिन् प्रमेयत्वे एकलक्षणं प्रधानं हेतुरूपं सदिति सम्बन्धः। तच्च साध्येऽनेकान्तात्मकत्वे असति अविद्यमाने विरोधो विघटन प्रमेयत्वस्य, नापरं ततस्तस्य गमकत्वमिति मन्यते।

स्यान्मतम्–तद्विरोधस्याप्यन्वयव्यतिरेकाभ्यामेव प्रतिपत्तिर्महानसादौ तदुपलम्भस्मरणाभावे पर्वतादौ प्रतिपन्नेऽपि[2] धूमे तदभावात्, ततोऽन्यत्र[3] तदुपलम्भाय दृष्टान्तो वक्तव्य इति; तन्न; दृष्टान्तेऽपि विप्रतिपत्तावत एव साध्यस्य व्यवस्थापनात्। तत्रापि दृष्टान्तरबलात् तत्प्रतिपत्तौ अनवस्थाप्रसङ्गात्। अस्ति च तत्रापि चित्रज्ञानादौ विप्रतिपत्तिः–"किं स्यात् सा चित्रतैकस्याम्" [ प्र० वा० २।२१० ] इत्यादि वचनात्। कथं तर्हि तत्प्रतिपत्तिरिति चेत् ? विपक्षे बाधकबलादेव। तच्च प्रतिपादितमेव पूर्वमिति नेह प्रतन्यते। निदर्शनबलात्तत्प्रतिपत्तावतिप्रसङ्गश्च–'विवादापन्नः पुरुषो न सर्वज्ञो वचनादे रथ्यापुरुषवत्' इत्यादावपि तदुपनिपातात्, वचनादेः किञ्चिज्ज्ञ एव दृष्टस्यापि विरोधाभावात् साध्यविपक्षेऽपि सम्भावनायां धूमादेरपि किन्न स्यात् ? तस्य पावकादावेव तत्कार्यत्वेन नियमात्। न चैवं वचनादिरसर्वज्ञस्यैव कार्यं सर्वज्ञेऽप्यनुपलब्धिलक्षणप्राप्तत्वेनाशक्याभावनिश्चये तदाशङ्काऽनिवृत्तेः। ज्ञानकार्यं हि वचनं तच्च यथाऽल्पं तद्धेतुस्तथा प्रकर्षवदपि। न हि कारणप्रकर्षः कार्यविरोधी। ततो न तस्य तत्र नियम इति चेत्; न; प्रकर्षवतोऽपि किञ्चिज्ज्ञस्यैव तत्कारणत्वप्रतिपत्तेः, तद्रूपपरित्यागे ज्ञानमेव तत्र भवेत्। अन्यथा उष्णस्पर्शादिविशेषपरित्यागेऽपि दहनादेरदहनादित्वाभावात्, ततोऽपि धूमादिसम्भवे कथं तदनुमानेऽपि दाहाद्यर्थिनस्तत्र प्रवृत्तिः स्यात् ? न तादृशो दहनादिरनुपलम्भादिति चेत्; न; तादृशे ज्ञानेऽपि तुल्यत्वात्। तथापि तस्य भावे पावकादेरपि स्यादविशेषात्। इन्धनं तत्कार्यं धूमादिरपि विलक्षणमेव स्यात् हेतुवैलक्षण्ये तद्वैलक्षण्यस्यावश्यकत्वात्। न तस्य प्रसिद्धपावकादिव्यभिचारे तेनान्यतो व्यभिचार इति चेत्; न; काष्ठादिविलक्षणादपि मण्यादेरविलक्षणस्यैव पावकादेरुत्पत्तेः। तथाप्यस्त्येव वैलक्षण्यं प्रतिपत्तुरशक्त्या तु तदपरिज्ञानमिति चेत्, परिज्ञाने का वार्ता ? ततो विलक्षणस्यैव हेतोरनुमानम् "तज्जन्यविशेषग्रहणेऽभिमतत्वात्" [ हेतुबि० पृ० १५२ ] इति हेतुबिन्दुवचनादिति चेत्; न; तस्य बहिरभावेनान्वयापरिज्ञानात्। पक्ष एव तत्परिज्ञानं विपक्षे बाधकबलादिति चेत्;

१ 'कृत्यत्वस्य, प्रत्ययस्य त्य इति संज्ञा जैनेन्द्रव्याकरणे।"–ता० टि०। २ प्रत्यपि वि–आ०, ब०, प०। ३ "पक्षधर्मत्वसम्बन्धादिरूप"–ता० टि०। ४–रि ज्ञानी ज्ञाते तद–आ०, ब०, प०। ५ 'पर्वतादि पक्षादन्यत्र"–ता० टि०। ६ दृष्टान्ते व–आ०, ब०, प०। ७ दृष्टान्तान्तर। ८ एवं आ०, ब०,प०। ९ ज्ञानम्। १० वचनस्य। ११ प्रकर्षवति। १२ वचनकारणरूपपरित्यागे। १३ उष्णस्पर्श–आ०, ब०, प०। १४ "विलक्षणकार्यस्य"–ता० टि०। १५ प्रसिद्धपावकोत्पन्नधूमस्य। १६ मण्यादेरपि विल–आ०, ब०, प०।

इदं तर्हि हेतुबिन्दुं व्याचक्षाणेनाप्यर्चटेन किमिति नावधारितम् ? अवधारितमेव "अगरुधूमग्रहणेन भवत्येव तदग्नेरनुमानम्" [ हेतुबि० टी० पृ० १५२ ] इति तेनाप्यभिधानादिति चेत्; तर्हि इव तस्य शिथिलीभवति–"**कार्यहेतोस्तु पक्षीकृते धर्मिणि कस्यचिच्च स्वभावहेतोः प्रत्यक्षानुपलम्भसाधनः प्रतिबन्धः कथं परोक्षे साध्यधर्मे गृह्यते**" [ हेतुबि० टी० पृ० १६] इति । यदि च, कार्येऽपि क्वचित् पक्ष एव तत्परिज्ञानम् अन्यथा देशनाविशेषात् सुगतप्रामाण्या-परिज्ञानापत्तेः; तर्हि व्यर्थं तदर्थं प्रमेयत्वादावपि तदपेक्षणं विपक्षे तदारोपपरिहारपरायणात् तर्कज्ञाना-देरेव तदुपपत्तेः । एतदेवाह–'**अयमतस्तर्केण साध्यते**' इति । अत[1] एतस्मात् प्रत्यक्षादेर्भवता **तर्केण साध्यते** निर्णीयते **अयं** साध्याभावे विरोधः साधनस्य न बहिर्दर्शनादर्शनाभ्यां व्यभिचारात् । नापि तादात्म्यतदुत्पत्तिभ्याम्, तयोस्तद्विरोधादेव[2] सिद्धेश्च, न पुनस्ताभ्यां तस्य[3] तदभावेऽपि भावात् । वक्ष्यति चैतत्–"**तुलोन्नामरसादीनाम्**" इत्यादिना[4] । तत्र बहिरन्वयादिना किञ्चित् विनापि तेन तत्तन्निर्णयात्[5] । न च सर्वत्र तत्सम्भवो यतः तस्मादेव स भवेत् । इत्याह–

**सर्वत्र परिणामादौ हेतुः सत्त्वादिः [ अन्यथा ] ॥ १२६ ॥** इति ।

न हि चेतनेतरसकलवस्तुगोचरतया परिणामादीनामन्यतमे साध्ये क्वचित् सत्त्वकृतकत्वा-देरन्वयः सर्वस्य विप्रतिपत्तिविषयत्वेन निदर्शनत्वानुपपत्तेः । न चैवमसौ अहेतुरेव; अन्तर्व्याप्ति-निश्चयात् । किमर्थमादिग्रहणम् ? न हि शास्त्रकारस्य क्षणभङ्गादिसाधनमिष्टमिति चेत्; न; दृष्टान्तार्थत्वात्–अन्यथा क्षणभङ्गादौ स निरन्वयोऽपि हेतुः, तथा परिणामेऽपीति । नैतदस्ति प्रदीपादौ तस्य[6] तदन्वयग्रहणादिति चेत्; न प्रत्यक्षतस्तद्ग्रहणम्, पक्षेऽपि स्यादिति कोऽर्थ-स्तत्रापि हेतुना ? समारोपव्यवच्छेद इति चेत्; न, समारोपस्य प्रदीपादावपि भावात् । सत्यम्, सन्नप्यसौ तत्र[7] 'यदि प्रदीपादिः प्रथमतैलादि०व्यापारादेवोत्पन्नः परापरस्तद्व्यापारो व्यर्थः' इत्यादिना विचारेण व्यवच्छिद्यत इति चेत्; न; अप्रमाणात्तद्व्यवच्छित्तौ प्रमाणकल्पनावैयर्थ्यात्[8] । प्रामाण्यमपि न प्रत्यक्षत्वेन अविचारकत्वापत्तेः । अनुमानत्वे तु तत्रापि निदर्शनान्तरमन्वयार्थमर्थयि-तव्यम्, पुनस्तत्समारोपस्यापि विचारान्तरादनुमानाद् व्यवच्छित्तौ पुनस्तदन्तरं तदर्थमर्थयितव्यमिति कथमनवस्थितवस्तुवादिनस्तथाऽनवस्थादोषव्यान्निर्मुक्तिः ? विचारस्यानन्वयस्यापि गमकत्वे सत्त्वादेरपि स्याद[9]विशेषात् ।

भवतु निरन्वयविनाश एव स[10] हेतुर्न परिणाम इति चेत्; न; तस्य[11] निरपेक्षस्य नित्यत्वापत्त्या कार्यद्रव्यादेर्वा तयापि अव्यवस्थितेः । सापेक्ष एवासौ[12] मुद्गरादिव्यापारादुत्पत्तेरिति चेत्; न; नीरूपस्य तद्योगात् । न हि नीरूपं किञ्चित् कुतश्चिदुत्पत्तिमन्नाम, प्रागिव तद्व्यापारेऽपि तदविरो[13]-धात् । न च तेन भावो नष्टो नाम सर्वदा प्रसङ्गात् । यदैवासौ तदैव नष्ट इत्यपि न युक्तम्; नीरूपे

१ अत एव यस्मात् आ०, ब०, प० । २ साध्याभावे विरोधादेव । ३ विरुद्धे विरोधस्य । ४ न्यायवि० श्लो० ३३८ । ५ तर्कात् । ६ सत्त्वस्य । ७ प्रदीपे । ८–णप्राप्तेः–आ०, ब०, प० । ९ तदविरोधाच्च स्यादविशेषात्–आ०, ब०, प० । १० सत्त्वादिः । ११ विनाशस्य । १२ विनाशः । १३ नीरूपत्वाविशेषात् ।

प्रकृतं प्रमेयत्वं सत् अस्ति सर्वत्रेति शेषः। किं रूपम्? प्रत्यक्षं तत्परिच्छेदयोग्यरूपम्। तथा परोक्षा अस्पष्टा अर्थगतिः स्मरणादिः, अत्रापि तद्योग्यमेव रूपं तद्विषयत्वादुच्यते। ततः प्रत्यक्षपरोक्षप्रमाणव्यापारयोग्यत्वं प्रमेयत्वम्, अर्हार्थत्वात् कृत्यस्य। तत्र तस्मिन् प्रमेयत्वे एकलक्षणं प्रधानं हेतुरूपं सदिति सम्बन्धः। तच्च साध्येऽनेकान्तात्मकत्वे असति अविद्यमाने विरोधो विघटनं प्रमेयत्वस्य, नापरं रूपस्तस्य गमकत्वमिति मन्यते।

स्यान्मतम्–तद्विरोधस्याप्यन्वयव्यतिरेकाभ्यामेव प्रतिपत्तिर्महानसादौ तदुपलम्भस्मरणाभावे पर्वतादौ प्रतिपन्नेऽपि धूमे तदभावात्, ततोऽन्यत्र तदुपलम्भाय दृष्टान्तो वक्तव्य इति; तन्न; दृष्टान्तेऽपि विप्रतिपत्तावत एव साध्यस्य व्यवस्थापनात्। तत्रापि तदन्तरबलात् तत्प्रतिपत्तौ अनवस्थाप्रसङ्गात्। अस्ति च तत्रापि चित्रज्ञानादौ विप्रतिपत्तिः–"किं स्यात् सा चित्रतैकस्याम्" [ प्र० वा० २।२१० ] इत्यादि वचनात्। कथं तर्हि तत्प्रतिपत्तिरिति चेत्? विपक्षे बाधकबलादेव। तच्च प्रतिपादितमेव पूर्वमिति नेह प्रतन्यते। निदर्शनबलात्तत्प्रतिपत्तावतिप्रसङ्गश्च–'विवादापन्नः पुरुषो न सर्वज्ञो वचनादे रथ्यापुरुषवत्' इत्यादावपि तदुपनिपातात्, वचनादेः किञ्चिज्ज्ञ एव दृष्टस्यापि विरोधाभावात् साध्यविपक्षेऽपि सम्भावनायां धूमादेरपि किन्न स्यात्? तस्य पावकादावेव तत्कार्यत्वेन नियमात्। न चैवं वचनादिरसर्वज्ञस्यैव कार्यं सर्वज्ञेऽप्यनुपलब्धिलक्षणप्राप्तत्वेनाशक्याभावनिश्चये तदाशङ्काऽनिवृत्तेः। ज्ञानकार्यं हि वचनं तच्च यथाऽल्पं तद्धेतुस्तथा प्रकर्षवदपि। न हि कारणप्रकर्षः कार्यविरोधी। ततो न तस्य तत्र नियम इति चेत्; न; प्रकर्षेऽतोऽपि किञ्चिज्ज्ञस्यैव तत्कारणत्वप्रतिपत्तेः, तद्रूपपरित्यागे ज्ञानमेव तत्र भवेत्। अन्यथा उष्णस्पर्शादिविशेषपरित्यागेऽपि दहनादेरदहनादित्वाभावात्, ततोऽपि धूमादिसम्भवे कथं तदनुमानेऽपि दाहाद्यर्थिनस्तत्र प्रवृत्तिः स्यात्? न तादृशो दहनादिरनुपलम्भादिति चेत्; न; तादृशे ज्ञानेऽपि तुल्यत्वात्। तथापि तस्य भावे पावकादेरपि स्यादविशेषात्। हन्तैवं तत्कार्यं धूमादिरपि विलक्षणमेव स्यात् हेतुवैलक्षण्ये तद्वैलक्षण्यस्यावश्यकत्वात्। न च तस्य प्रसिद्धपावकादिव्यभिचारे तज्जन्मनो व्यभिचार इति चेत्; न; काष्ठादिविलक्षणादपि मण्यादेरविलक्षणस्यैव पावकादेरुत्पत्तेः। तत्राप्यस्त्येव वैलक्षण्यं प्रतिपत्तुरशक्त्या तु तदपरिज्ञानमिति चेत्, परिज्ञाने का वार्ता? ततो विलक्षणस्यैव हेतोरनुमानम् "तज्जन्यविशेषग्रहणेऽभिमतत्वात्" [ हेतुबि० पृ० १५२ ] इति हेतुबिन्दुवचनादिति चेत्; न; तस्य बहिरभावेनान्यथापरिज्ञानात्। पक्ष एव तत्परिज्ञानं विपक्षे बाधकबलादिति चेत्;

१ 'कृत्प्रत्ययस्य, प्रत्ययस्य स्य इति संज्ञा जैनेन्द्रव्याकरणे।"–ता० टि०। २ सत्यपि वि-आ०, ब०, प०। ३ 'पक्षधर्मत्वसपक्षसत्त्वादिकम्"–ता० टि०। ४-पि अग्नौ आत्मे तद-आ०, ब०, प०। ५ "पर्वतादि पक्षादन्यत्र"–ता० टि०। ६ दृष्टान्ते व-आ०, ब०, प०। ७ दृष्टान्तान्तर। ८ एवं आ०, ब०, प०। ९ ज्ञानम्। १० वचनस्य। ११ असर्वज्ञे। १२ वचनकारणत्वपरित्यागे। १३ अन्यदोषस्य-आ०, ब०, प०। १४ "विलक्षणकार्यस्य"–ता० टि०। १५ प्रसिद्धपावकोत्पन्नधूमस्य। १६ मण्यादेरपि विल-आ०, ब०, प०।

इदं तर्हि हेतुबिन्दुं व्याचक्षाणेनाप्यर्चटेन किमिति नावधारितम् ? अवधारितमेव "अगरुधूमग्रहणेन भवत्येव तदग्नेरनुमानम्" [ हेतुबि० टी० पृ० १५२ ] इति तेनाप्यभिधानादिति चेत्; तर्हि इव तस्य शिथिलीभवति-"कार्यहेतोस्तु पक्षीकृते धर्मिणि कस्यचिच्च स्वभावहेतोः प्रत्यक्षानुपलम्भसाधनः प्रतिबन्धः कथं परोक्षे साध्यधर्मे गृह्यते" [ हेतुबि० टी० पृ० १६] इति। यदि च, कार्येऽपि क्वचित् पक्ष एव तत्परिज्ञानम् अन्यथा देशनाविशेषात् सुगतप्रामाण्यापरिज्ञानापत्तेः; तर्हि व्यर्थं तदर्थं प्रमेयत्वादावपि तदपेक्षणं विपक्षे तदारोपपरिहारपरायणात् तर्कज्ञानादेरेव तदुपपत्तेः। एतदेवाह-"अयमतस्तर्केण साध्यते" इति। अत एतस्मात् प्रत्यक्षादेर्भवता तर्केण साध्यते निर्णीयते अयं साध्याभावे विरोधः साधनस्य न बहिर्दर्शनादर्शनाभ्यां व्यभिचारात्। नापि तादात्म्यतदुत्पत्तिभ्याम्, तयोस्तद्विरोधादेव सिद्धेश्च, न पुनस्ताभ्यां तस्य तदभावेऽपि भावात्। वक्ष्यति चैतत्-"तुलोन्नामरसादीनाम्" इत्यादिना। तत्र बहिरन्वयादिना किञ्चित् विनापि तेन तत्तन्निर्णयात्। न च सर्वत्र तत्सम्भवो यतः तस्मादेव स भवेत्। इत्याह-

**सर्वत्र परिणामादौ हेतुः सत्त्वादिः [ अन्यथा ] ॥ १२६ ॥** इति।

न हि चेतनेतरसकलवस्तुगोचरतया परिणामादीनामन्यतमे साध्ये क्वचित् सत्त्वकृतकत्वादेरन्वयः सर्वस्य विप्रतिपत्तिविषयत्वेन निदर्शनस्यानुपपत्तेः। न चैवमसौ अहेतुरेव; अन्तर्व्याप्तिनिश्चयात्। किमर्थमादिग्रहणम् ? न हि शास्त्रकारस्य क्षणभङ्गादिसाधनमिष्टमिति चेत्; न; दृष्टान्तार्थत्वात्-अन्यथा क्षणभङ्गादौ स निरन्वयोऽपि हेतुः, तथा परिणामेऽपीति। नैतदस्ति प्रदीपादौ तस्य तदन्वयग्रहणादिति चेत्; न प्रत्यक्षतस्तद्ग्रहणम्, पक्षेऽपि स्यादिति कोऽर्थस्तत्रापि हेतुना ? समारोपव्यवच्छेद इति चेत्; न, समारोपस्य प्रदीपादावपि भावात्। सत्यम्, सन्नप्यसौ तत्र 'यदि प्रदीपादिः प्रथमतैलादिव्यापारादेवोत्तरत्र: परापरस्तद्व्यापारो व्यर्थः' इत्यादिना विचारेण व्यवच्छिद्यत इति चेत्; न; अप्रमाणात्तद्व्यवच्छित्तौ प्रमाणवत्त्वस्यैवैयर्थ्यात्। प्रामाण्यमपि न प्रत्यक्षत्वेन अविचारकत्वापत्तेः। अनुमानत्वे तु तत्रापि निदर्शनान्तरमन्वयार्थमर्थयितव्यम्, पुनस्तत्समारोपस्यापि विचारान्तरादनुमानाद् व्यवच्छित्तौ पुनस्तदन्तरं तदर्थमर्थयितव्यमिति कथमनवस्थितवस्तुवादिनस्तथाऽनवस्थादौस्थ्यान्निर्मुक्तिः ? विचारस्यानन्वयस्यापि गमकत्वे सत्त्वादेरपि स्यादविशेषात्।

भवतु निरन्वयविनाश एव स[10] हेतुर्न परिणाम इति चेत्; न; तस्य निरपेक्षस्य नित्यत्वापत्त्या कार्यद्रव्यादेर्वा तथापि अव्यवस्थितेः। सापेक्ष एवासौ[11] मुद्गरादिव्यापारादुत्पत्तेरिति चेत्; न; नीरूपस्य तदयोगात्। न हि नीरूपं किञ्चित् कुतश्चिदुत्पत्तिमन्नाम, प्रागिव तद्व्यापारेऽपि[13] तदविशेषात्। न च तेन भावो नष्टो नाम सर्वदा प्रसङ्गात्। यदेवासौ तदैव नष्ट इत्यपि न युक्तम्; नीरूपे

१ अत एव करमात् आ०, ब०, प०। २ साध्याभावे विरोधादेव। ३ विरोधे विरोधस्य। ४ न्यायवि० श्लो० ३२८। ५ तर्कात्। ६ सत्त्वस्य। ७ प्रदीपे। ८-यप्रवृ-आ०, ब०, प०। ९ तदविशेषाच्च स्यादविशेषात्-आ०, ब०, प०। १० सत्त्वादिः। ११ विनाशस्य। १२ विनाशः। १३ नीरूपत्वाविशेषात्।

कालसम्बन्धस्यैवासम्भवात्। अभावं करोति मुद्गरादिर्भावं न करोति इति क्रियाप्रतिषेधार्थे[1] न नीरूपाभावादिना भावविनाश इति सर्वं कूटस्थमेव जगत्स्यात्। न चैतद् दृष्टमिष्टं वा परस्य, कस्यचिद्विनाशिनोऽपि तस्य तेनोपगमात्। 'न नीरूपो विनाशो भावान्तरस्वभावत्वात्' इत्यपि न युक्तम्; अतद्रूपत्वे अतिप्रसङ्गात्। निवेदितं चैतत्–"अन्यस्यान्यो विनाशः किम्" इत्यादिना[2]। तत्र सहेतुको विनाशो यत्रायं हेतुः। नापि निर्हेतुकः[3]; तस्यापि नीरूपस्याप्रतिपत्तेः, वस्तुन्येव सम्बन्धभावेन प्रमाणव्यापारात्। वस्त्वेव विनाशोऽपि क्षणस्थितिधर्मणो भावादव्यतिरेकादिति चेत्; न तर्हि निर्हेतुकत्वं भावस्यैव, भावस्य वा तद्वत्त्वमिति[3] नित्यं सत्त्वप्रसङ्गः। तथा च[4] 'विनाशनियतो भावस्तं प्रत्यनपेक्षणात्' इति विरुद्धो हेतुः[5] अविनाशनियमस्यैव साधनात्। सहेतुक एवासौ भावहेत्वपेक्षया, निर्हेतुकत्वं तु मुद्गराद्यपेक्षयेति चेत्, ननु तथापि सत्त्वं[6] यदि तस्यैव भावस्य सिद्धसाधनं निष्पन्नस्यापराधीनत्वे विवादाभावात्। तद्विनाशस्येति चेत्; न; तस्यापि तद्व्यतिरिक्तस्याभावात्। कल्पनया भाव इति चेत्; कथं तर्हि तथापि निर्हेतुकत्वं कल्पनारूपाद्धेत्वन्तरादेव तस्य भावात्। व्यतिरेक एव तस्य कल्पनया न स्वरूपमपीति चेत्, न; व्यतिरेकस्यैव तत्स्वरूपत्वात्, सत्येव तस्मिन् विनाशव्यवहारप्रतीतेः। सत्यपि निर्हेतुकत्वे तस्य कथं तन्नियतत्वं[7] भावस्य? कथं च न? स्यादेतत् व्यभिचारात्, स्थैर्यस्य निर्हेतुकत्वेऽपि भावस्य तन्नियमाभावात्। शक्यं[8] हि वक्तुम्–

स्थितिस्वभावो भावश्चेत् तस्य किं स्थितिहेतुना।
यद्यस्थितिस्वभावोऽसौ तस्य हेतोः(हेतोस्तस्य)स्थितिः कथम्॥१४७३॥
न हि स्वभावात्तद्रूपस्तद्रूपः परतो भवेत्।
परतश्चेत्ततोऽपि स्यादन्यथा किमचेतनः॥१४७४॥

स्यादेतत्–यदि स्थैर्यस्य प्रतीतिस्तदा शक्यमिदं वक्तुम्–'स्थैर्यनियतो भावः स्थैर्यं प्रत्यनपेक्षणात्' इति, अन्यथा हेतोरसिद्धिप्रसङ्गात्। न चैवम्, प्रतीतावपि स्थिरात्मनो भावस्यासामर्थ्यादिति; तन्न; क्षणभङ्गिन्यपि तद्विशेषादिति निवेदनात्। अपि च, यद्यन्यतः तदसामर्थ्यं प्रतिपन्नम्; व्यर्थमेतत्–'विनाशनियतो भावो विनाशं प्रत्यनपेक्षणात्' इति, तत एवान्यतस्तन्नियमस्यावगमात्। अक्षणिकसामर्थ्याभावज्ञानस्य क्षणिकसामर्थ्यज्ञानस्वभावत्वात्[9]। अत एव तत्प्रतिपत्तौ परस्पराश्रयः–सत्यां तस्याम् अव्यभिचारात् अतस्तन्नियमसिद्धिः, अतश्च तत्प्रतिपत्तिरिति। तन्न नश्यदात्मैव[10] नाशः।

---

१ 'तथाहि प्रसज्यप्रतिषेधे सति नञः करोतिना सम्बन्धात् अभावं करोति भावं न करोतीति क्रियाप्रतिषेधादकर्तृत्वं नाशहेतोः प्रतिपादितम्।'–तत्त्वसं० पं० पृ० १३६। २ न्यायवि० श्लो० २।९१। ३ अभावस्य निर्हेतुकत्वम्। ४ "स्वकार्यं प्रति यच्चैव हेत्वन्तरमपेक्षते। तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात्॥ निर्निबन्धा हि सामग्री स्वकार्योत्पादने यथा। विनाशं प्रति सर्वेऽपि निरपेक्षाश्च जन्मिनः॥"–तत्त्वसं० श्लो० ३५४-५५। हेतुबि० टी० पृ० १४२। ५ हेतुः वि-आ०, ब०, प०। ६ निर्हेतुकत्वम्। ७ विनाशनियतत्वम्। ८ नित्यत्वासामर्थ्यम्। ९ अक्षणिकासामर्थ्यसिद्धौ। १० नश्यत्तदात्मैव आ०, ब०, प०।

तत्फलात्मेति चेत्; सोऽपि यदि सदृशपर्यायः, सत्यं तत्र निरपेक्षत्वं तन्नियतत्वं च भावस्य, किन्तु निरन्वयत्वमसिद्धम्, अन्वयस्यापि प्रतीतेः । निवेदितं चैतत्–"भेदज्ञानात्" इत्यादिना । अत एव न विसदृशपर्यायोऽपि । न च तस्य निर्हेतुकत्वम्; काष्ठादौ भस्मादितत्पर्यायस्य पावकादेरेव दर्शनात् । ततः सान्वयविनाश एव भावात् सत्त्वादेस्तत्रैव हेतुत्वमित्युपपन्नं परिणामसाधनत्वम्, अन्वयाभावाच्च ।

सर्वत्र तस्य तद्धेतुत्वे दूषणमाह—

**अन्यथा ॥**

**शब्देऽपि साधयेत् केन तस्मान्नान्वयतो गतिः ।** इति ।

**अन्यथा** सर्वत्रेत्याद्यभावप्रकारेण **शब्देऽपि** न केवलं सर्वत्र **साधयेत्** परिणामादिकं **केन** न केनचित् । दृष्टान्तेऽपि विप्रतिपत्तौ तत्राप्यन्वयस्य दुर्लभत्वादिति मन्यते । '**तस्मान्नान्वयतो गतिः**' इत्यनन्वयोपसंहारः । तथा हि–न क्वचिदन्वयात् साध्यगतिः अविनाभावादेव तदुपपत्तेः । न चासावन्वय एव, क्वचित् सत्यपि तस्मिन्नभावात्, अत एव न तज्ज्ञाप्योपि । नापि तन्नियतः; तदभावेऽपि भावस्योपदर्शनात् । इत्युपपन्नं 'तस्मात्' इत्यादि ।

साम्प्रतं विपक्षव्यवच्छेदेन परिणामहेतुत्वमेव सत्त्वादेर्विस्तरेण व्याचक्षाण आह —

**सिद्धमर्थक्रियाऽसत्त्वं सर्वथाऽविचलात्मनः ॥१२७॥**
**निरन्वयविनाशेऽपि [ साधनं नोपचारतः ] ॥** इति ।

**सिद्धं** निश्चितं पूर्वम् **अर्थक्रियाऽसत्त्वं** कार्याभावः । कस्य ? **सर्वथाऽविचलात्मनः** कूटस्थनित्यस्य भावस्य । न केवलं तस्यैवापि तु **निरन्वयविनाशेऽपि** क्षणिकैकान्तेऽपि निरन्वयो विनाशो यस्मिन्निति व्युत्पत्तेः । सत्यं वस्तुतस्तत्र तदसत्त्वम् "अशक्तं सर्वम्" [ प्र० वा० २।४ ] इति वचनात् । संवृतिसिद्धं तु तत्सत्त्वं सिद्धमसिद्धं वा तत्र हेतुरिति चेत्, अत्राह–**साधनं नोपचारतः**' इति । नह्युपचारोपनीतस्य हेतुत्वं ततो विनश्वरवदविनश्वरस्यापि सिद्धिप्रसङ्गात्; ततो निराकृतमेतत्–"**संवृत्यास्तु यथा तथा**" [ प्र० वा० २।४ ] इति ।

ननु यथा नित्याद्येकान्ते अर्थक्रियाऽभावः तथाऽनेकान्तेऽपि, तस्यापि तत्कुर्वतः कुतश्चित् प्रतिपत्तेरिति चेत्; अत्राह–

**अवश्यं बहिरन्तर्वा प्रमाणमवगच्छताम् ॥१२८॥**
**सिद्धमेकमनेकात्मपरिणामव्यवस्थितम् ।** इति ।

**एकं** चेतनमितरद्वा **सिद्धं** निश्चितम् । कीदृशम् ? **अनेको** नाना यः **आत्मा** स्वभावः स एव **परिणामस्तेन व्यवस्थितं** लब्धात्मलाभम् । क तथा तद्व्यवस्थितम् ? **बहिरन्तर्वा** । वेति

१ न्याय वि० श्लो० १।११८। २ तस्यात–आ०, ब०, प० । ३ अन्वये । ४ तद्भावस्यापि आ०, ब०, प० । ५ अविनाभावः । ६ शुद्धमशुद्धं वा आ०, ब०, प० । ७ तत्र प० । ८ क्षणिकाद्येकान्ते तथा आ०, ब०,प० ।

समुच्चये । कथं सिद्धम् ? अवश्यं नियमेन । केषाम् ? प्रमाणमवगच्छताम् अवधारयताम् । एतदुक्तं भवति–तथाविधं वस्तु निराकुर्वतां प्रमाणमेव शरणं भिन्ना तेन विधिवत् कचिन्निषेधस्याप्यनवकल्पनात् । ततो[1]ऽपि यदि बहिस्तन्निराकरणं बहिर्मुखत्वं तस्य वक्तव्यम् । न च तद्[2] अन्तर्मुखत्वमन्तरेण, "अप्रत्यक्षोपलम्भस्य" [ ] इत्यादेर्व्यापत्तेः । तथा च सिद्धं तदेव बहिरन्तर्मुखस्वभावद्वयाविभ्राड्भूतमेकम् अनेकात्मपरिणामव्यवस्थितम् । अन्तरेव ततस्तन्निराकरणं न बहिः, बहिर्भावस्यैवाभावादिति चेत् ; कुत एतत् ? तत एवेति चेत् ; वक्तव्यं पुनरपि तस्य बहिर्मुखत्वम् , अन्यथा ततस्तदयानुपपत्तेः । अन्तर्मुखत्वादेवोपपत्तौ चार्वाकस्यापि इहलोकाद्यभिमुखात् प्रत्यक्षादेव परलोकादिप्रतिषेधोपपत्तेः, "प्रमाणान्तरसद्भावः[3] प्रतिषेधाच्च कस्यचित् ।" [ ] इति प्लवेत । अन्तरपि कीदृशं वस्तु यत्र तन्निराकरणम् ? निराकार संवेदनमिति चेत्; न; तस्य स्वयमेवानभ्युपगमात् । नीलाद्याकारमेवेति चेत् ; न; तस्याप्यचितः प्रतिभासासम्भवात् । चित्स्वभावमपीति चेत् ; सिद्धं पुनरपि नीलादि-चैतन्यरूपतया तदेव द्विरूपमेकं वस्तु । संवेदनमेव तत्र वस्तुसत् न नीलादि तस्य भ्रान्तत्वादिति चेत् ; न ; तथापि विभ्रमेतरात्मतया द्वैरूप्यस्यानतिक्रमात् । विविक्तमेव तत नीलादेरिति चेत्, न; तद्विवेकस्यावभासे विभ्रमाभावापत्तेः । अनवभासे चैतन्येऽपि तदुपनिपातात्, अन्यथा सङ्गृहीतेतररूपतया द्व्यात्मकत्वस्यानिवारणात् । भवतु अन्तस्तत्परिणामव्यवस्था "चित्रप्रतिभासाऽप्येकैव बुद्धिः" [ प्र० वार्तिकाल० २।२१९ ] इति वचनात्, न बहिः तत्र परमाणूनामेव प्रतिक्षणक्षीणानां परस्परविलक्षणानाञ्च भावादिति कश्चित्[4] । अवयवावयव्यादीनामेवेत्यपरः । तत्राह–

**परापरविवेकैकस्वभावपरिनिष्ठितः ॥ १२९ ॥**

**परमाणुरतोऽन्यो वा बहिरन्तर्न बुद्ध्यते । इति ।**

**परमाणुः** सौगतकल्पितो **न बुद्ध्यते** नोपलभ्यते । क्व ? बहिः । कीदृशः ? परापरौ परापरदेशकालगतौ तयोर्विवेको विश्लेषः स एवैकोऽसहायः स्वभावस्तेन परिनिष्ठितः समाप्तः, कथञ्चिदभेदस्थूलप्रतिभासादिति मन्यते । प्रत्यक्षपृष्ठभावी विकल्प एवायमारोपिताकारो न दर्शनम् , दर्शनं तु क्षणिकपरमाणुविषयमेवेति चेत् , न, पृथक् तस्याप्रतिवेदनात् । अप्रतिविदितमपि विचारादवगम्यत इति चेत् , न, विचारस्यानुमानादन्यस्याभावात् प्रमाणसङ्ख्या[5]व्यापत्ते, अनुमानस्य च दर्शनाभावेऽसम्भवात् । दर्शनाल्लिङ्गतत्साध्यसम्बन्धप्रतिपत्तावेव तदुत्पत्तेः । अनुमानान्तरात् तत्प्रति[6]पत्तावनवस्थाप्रसङ्गात् । अप्रमाणाच्च विचारात्तदवगतौ प्रमाणान्तरान्वेषणप्रयासवैफल्यात्, अतिप्रसङ्गाच्च । तत स्थितम्–'परमाणुर्न बुध्यते' इति । न केवलं स एव बहिर्न बुद्ध्यते अपि तु अत परमाणोः अन्योऽवयव्यादिरपि वा । शब्दस्य अपि शब्दार्थत्वात् । न हि तस्यापि परस्परमेकान्तविवेकेन

---

१ प्रमाणान्तरतोऽपि । २ बहिर्विषयत्वम् । ३ "प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः ।" इति पूर्वार्धम्–ता० टि० । ४ बौद्धः । ५ नैयायिकः । अनुमानात् पृथक् विचारस्य प्रमाणत्वे । ६ लिङ्गसाध्यसम्बन्धप्रतिपत्तौ ।

अन्योऽपि कथञ्चिदविवेकस्याप्यवगमात् तस्याप्यारोपितविषयत्वकल्पनायां पूर्ववद्दोषात् । ततो युक्तम्-'अन्योऽपीति' इति । 'अन्तः' इति दृष्टान्तार्थम्-अन्तरिव बहिरपि स तथाविधो न बुद्ध्यत इति । तत्र विपक्षे क्वचिदपि सत्त्वादिः परिणामिन्येव भावात् । तस्यापि[1] स्वतोऽर्थक्रियासामर्थ्ये किं सहकारिप्रतीक्षयेति चेत् ? अत्राह-

**अर्थस्यानेकरूपस्य कदाचित् कस्यचित् क्वचित् ॥ १३० ॥**
**शक्तावतिशयाधानमपेक्षातः प्रकल्प्यते ॥** इति ।

कस्यचित् चेतने(तरस्य) तरस्य वा अनेकरूपस्य उक्तनीत्या[2] नानास्वभावस्य अर्थस्य न कल्पितस्य शक्तौ अपिशब्दोऽत्र द्रष्टव्यः, स्वत एवार्थक्रियासामर्थ्ये सत्यपि तद्विशेषरूपस्य अतिशयास्याधानमपेक्षातः सहकारिणां प्रकल्प्यते प्रकर्षेण निष्पाद्यते । तच्च क्वचित् विसदृशपरिणामे कर्तव्ये, कदाचित् न सर्वदा, तत्परिणामस्य कदाचिदेव भावात् । यदि अर्थस्य स्वभावोऽतिशयः; तर्हि तद्धेतोरेव सिद्धेरपेक्षया न किञ्चित् । असिद्धौ तु न तत्स्वभावत्वं सिद्धासिद्धयोर्विरुद्धधर्माध्यासेन भेदस्यैवापत्तेरिति चेत्; अत्राह-

**स्वभावातिशयाधानं विरोधान्न परीक्ष्यते ॥ १३१ ॥**
**तत्र सिद्धमसिद्धं वा [ तस्माज्जातिर्न हेतुतः ॥ ]** इति ।

स्वभावातिशय एवाधानम् आधीयमानत्वात्[4], तत् न परीक्ष्यते । कथम् ? तत्र अर्थे सिद्धमसिद्धं वा इति । कुतः ? विरोधात् परीक्षाया एवेति भावः । तथा हि-परीक्षेयमर्थस्यानेकातिशयनिराकरणार्था सती यदि स्वयमेकस्वभावैव, कथम् 'सिद्धमसिद्धं वा' इति 'भिन्नमेव न स्वभावः' इति च नानाकारपरामर्शिन्यवकल्प्येत ? सत्याकारं तद्भेदे वा यत्सिद्धं तदनपेक्षमिति कथं सङ्कलनम् सत्येवानेकपरामर्शे तत्सम्भवात् । ततो युक्तं तन्निराकरणाय परीक्षायां तस्या एव विरोधात् न तदाधानं परीक्ष्यते इति । न चैवं परीक्षायां कुतश्चित् कस्यचिदुत्पत्तिरपि । तथा हि-यदि तत्सिद्धम्, किं हेत्वपेक्षया सिद्धस्य निराशंसत्वात् ? असिद्धं चेत्, तथापि कथं तदपेक्षणम् तस्य वस्तुधर्मत्वात् ? इदमेव तदपेक्षणं यत्तत उत्पत्तिरिति चेत्; न; तद्रूपेण तदभावात्, तस्य प्रागपि भावात् । रूपान्तरेण तूत्पत्तिस्तस्यैव स्यान्नासतः । न तस्यापि, सिद्धवदसिद्धस्याप्यपेक्षाऽयोगात् । तत्रापि 'इदमेव वा' इत्यादिवचने परिनिष्ठापरिच्युतेः । एतदेवाह-'तस्माज्जातिर्न हेतुतः' इति । तस्मात् परीक्षणात् जातिः जननं न हेतुतो न कारणात् कार्यस्येति शेषः । सापि मा भूदिति चेत्, किमर्थं तर्हि परीक्षणम् ? तदाधानदूषणार्थमिति चेत्; व्याहतमेतत्-'ततो न तज्जातिस्तदर्थं च तत्' इति । कल्पनयैव तादर्थ्यं तस्य न परमार्थत इति चेत्; वस्तुतस्तर्हि[7] दूषणाभासमेतदिति कथन्न तद्वादिनो निग्रहस्थानम् ? भवतु तत्त्वतः एतद् दूषणम्, भवति तस्य हेतुत्वमिति चेत्; कुत एतत् ?

---

१ परिणामिनोऽप्यर्थस्य । २ उक्तरीत्या प० । ३-याधानं आ०, ब०, प० । ४ आधीयमा० , ब०, प० । ५ अनेकरूपस्य । ६ तदाधा-प० । ७ दूषणमाह भासमेव तदिति-आ०, ब०, प० । ८ एवतदानन्त-आ०, ब०, प० ।

थोत्पन्नो यदेकशक्तिक एव मन्त्रादिरहितः सर्वत्र दाहं करोति तत्सहितस्तु विभागेनेति । तद-प्युक्तं तत्रैव–

"जातः स्वकारणादोहग्येन मन्त्रादिसंयुतः ।
विभागात्कार्यकरणे समर्थः शक्यो यथा ॥
पावकस्सर्वदहने विना मन्त्रेण कारणात् ।
स एव कस्यचिद्दाहसमर्थो मन्त्रसंयुतः ॥" [ प्र० वार्तिकाल० १।१६२ ]

इति चेत्; न; नित्यस्याप्येक (व) मेकस्वभावस्यैवानेककार्यप्रसङ्गात् । तत् सर्वमेककालमेव किन्न भवतीति चेत् ? क्षणिकादपि एकदेशं किन्न भवति ? तथा तस्य स्वभावो यदेकदेशमनेक-देशं च करोतीति चेत्; इतरस्यापि तथैव स्वभावो यदेककालमनेककालं च तत्करोति । ततो न कार्यभेदात् प्रतिक्षणं तद्भेदकल्पनमुपपन्नम् । तदुक्तम्–

"यद्यदा कार्यमुत्पित्सुस्तत्तदोत्पादनात्मकम् ।
कारणं कार्यभेदेऽपि न भिन्नं क्षणिकं यथा ॥" [सिद्धिवि० तृ० परि०] इति ।

वार्तिकविरुद्धं चेद् शक्त्येकत्वकल्पनं भाषणात् । तत्र साधारणेतरभावेन शक्तिभेदस्यापि–

"रूपादिशक्तिभेदानामनाक्षेपेण वर्तते ।
तत्समानफलाहेतुव्यवच्छेदे घटश्रुतिः ॥" [ प्र० वा० १।१०२ ] इत्य-

भिधानात्, "रूपादीनां प्रतिनियतशक्तिभेदमनाक्षिप्य तेषु समानोदकधारणशक्त्या-क्षेपेण घटश्रुतिः प्रवर्तते ।" [ प्र० वार्तिकाल० १।१०२ ] इति स्वयं च तस्य प्रज्ञाकरेण विवरणात् । न च तदेव व्याचक्षाणस्य स्वकीयमपि विवरणपदं विस्मृत्य तद्विरुद्धं वस्तुपरिकल्पन-मुपपन्नम्; प्रेक्षावत्त्वव्यापत्तेः । ततो नानाशक्तिरेव भावतो भावः । तथा च सिद्धं प्रस्तुतार्थसाधन-मन्यथाऽनुपपन्नत्वं तद्गुणस्य । स्वशक्त्यभेदेन च भावस्य सामान्यभेदरूपत्वात्, युगपदिव क्रमेणापि भावस्य ताद्रूप्याप्रतिक्षेपात् । तत्र क्षणिकस्य साधनं ततः ।

नापि नित्यस्य; तस्यैवापरिज्ञानात् । कालत्रयमनुपाती स इति चेत्; न सकृत्तदनुपात-स्त्रैलक्ष्यस्य युगपदभावात् । क्रमेणेति चेत्; सोऽपि न कालभेद[2], तदनुपातादन्यस्य तस्यैवाभावात् । भावे तदनुपातोऽप्यपरेण तद्भेदेनेत्यनवस्थानप्रसङ्गात् । स्वभावभेद इति चेत्; न; कौटस्थ्येन तद-सम्भवात् । परिणाम इति चेत्; प्रकृतमनुपालिनं (नम्) । तत स्थितम्–'सामान्यभेद' इत्यादि ।

कीदृशो वा शब्दादिर्यत्र क्षणभङ्गसाधनम् ? निष्कलपरमाणुरूप इति चेत्; न, तस्याप्रति-वेदनात् । प्रत्येकदशायामेव तस्य तत्र सञ्चयदशायामिति चेत्; न; विशेषाभावात् । सञ्चय एव विशेष इति चेत्; न, तेनापि सौक्ष्म्यस्यानपाकरणात् । दशान्तरेऽपि तत एव तदप्रतिपत्तेः । सञ्चयाभावादेव तदापि [न] तत्प्रतिपत्तिर्न सौक्ष्म्यादिति चेत्; सञ्चये तर्हि सौक्ष्म्येणैव तेषां प्रतिपत्तिः स्यात् तत्स्वभावत्वात्, तथा च कथमेकघटादिव्यवहारः ? विकल्पारोपितादेव स्थौल्यात् क्षणभेदव्यवहारवदिति चेत्, एतदेव दर्शयति–

१ कालत्रयस्य । २ कालात् । ३ अप्रतिवेदनम् । ४ सौक्ष्म्यादेव ।

**प्रत्यक्षेऽपि समानान्यनिर्णयः प्रतिरुध्यते ॥१३६॥**

**यथा क्षणक्षयेऽणूनाम् [ इत्यात्माप्तौ विडम्बयेत् ]** इति ।

**प्रत्यक्षं** कल्पनापोढं ज्ञानं तस्मिन् सत्यपि । केषाम् ? **अणूनां प्रतिरुध्यते** बाध्यते । केन कः ? **समानान्यनिर्णयः** समानस्य सञ्चयगतसाधारणस्य स्थूलाकारस्य **अन्यः** तद्ग्राहको विकल्पः प्रत्यक्षापेक्षया तस्यैवान्यत्वात् तेन **निर्णयः** । स केषाम् ? **अणूनाम्** एतदपेक्षस्यापि निर्णयपदस्य गमकत्वाद् ( वा ) वृत्तिः । '**यथा**' इत्यादि निदर्शनम् । **अणूनां क्षणक्षयेऽपि** निर्णयस्य तदेकत्वविकल्पेन प्रतिरोधात् । अत्रोत्तरमाह– '**इत्यात्माप्तौ विडम्बयेत्**' इति । **इति** एवं ब्रुवाणो धर्मकीर्तिः **आत्मानमाप्तं** च **सुगतं**[2] **विडम्बयेत्** दूषणवन्तं प्रकटयेत् । तथाहि– यदि तद्विकल्पेन सर्वथा तन्निर्णयः प्रतिरुद्ध्यते; तदा सौक्ष्म्येणै ( णे ) व नीलादिनापि तदभावात् निरवकाशमेवैतत्–"**वस्तुस्वभावोऽयं यदनुभवः पटीयान् क्वचिदेव स्मृतिबीजमाधत्ते**।" [ ] इति ; नीलादिव्यतिरेकेण तदाधानविषयस्याभावात् । ततः सिद्धमात्मविडम्बनं निर्विषयवचनवादात् । अथ सौक्ष्म्येणैव तत्प्रतिरोधो [ न ] नीलादिना तदा निश्चितेतरस्वभावाविरोधे स्थूलमपि रूपं सौक्ष्म्यस्याविरुद्धमिति तदालम्बना एव पञ्चापि विज्ञानकायाः स्युः । तथा चेत्; आप्तवचनमपि निर्विषयमेव "सञ्चितालम्बनाः पञ्च विज्ञानकायाः" [ ] इति सिद्धमाप्तविडम्बनमपि । सन्तायमारोपितः[3] स्थूलाकारः तत्प्रत्ययव्यतिरेकेण प्रत्यक्षस्याप्रतिवेदनात्, एकत्वाध्यवसायाच्च तत्कल्पनस्य प्रतिक्षेपात् । एतदेवाह–

**अपृथग्वेद्यनियमादभिन्नाः परमाणवः ॥१३७॥** इति ।

**अपृथग्** अभेदेन प्रत्यक्षादिभिर्वेद्यं वेद्यत्वं भावप्रधानत्वान्निर्देशस्य, तस्य **नियमाद्** अवश्यम्भावाद् **अभिन्नाः** परस्परं कथञ्चिदव्यतिरेकिणः **परमाणव** इति ।

> दृष्टमप्यपृथक्त्वं चेदारोपितमतात्त्विकम् ।
> नीलाद्यपि तथैवेति शून्यवादो विजृम्भताम् ॥१४७५॥

अथवा यदुक्तम्–'**यथा क्षणक्षये**' इत्यादि; तदपनुदन्नाह–'**अपृथग्**' इत्यादि । **अणवः** सञ्चयगताः क्रमभाविनोऽ**भिन्नाः** परस्परमव्यतिरेकिणः । कस्माद् ? **अपृथक्** अपृथक्त्वेन **वेद्यं** वेदितव्यं येन तद् **अपृथग्वेद्यं** तदेवेदमिति प्रत्यभिज्ञानं तस्य **नियमः**[4] तदभेदादन्यथाभावस्तस्मादिति । नायं नियमः, कार्यकारणभावादपि तस्य भावादिति चेत्; न; सत्यपि तस्मिन् मुद्गरकपालयोरभावात् । सादृश्यादिति चेत्; न; यमलकयोरदर्शनात् । कार्यकारणभावोपाधिकादिति चेत्; न; पितापुत्रयोरप्रतिपत्तेः । ततः कथञ्चिदेकत्वपरिणामादेव तत्, काष्ठमस्मादौ तावतैव[5] सादृश्याभावेऽपि भावात् । वासनामात्रादेव भावान्न तन्निबन्धनत्वमपीति[6] चेत्, न; अस्खलद्रूपत्वात् । न हि तादृशस्य[7]

---

१ "सञ्चितः समुदायः सः सामान्यं तत्र नाक्षधीः । सामान्यबुद्धिश्चावश्यं विकल्पेनानुबध्यते ॥" प्र० वा० २।१९४ । २ सुगतं च वि–प० । ३ मेवारोपित– आ०, ब०, प० । ४ प्रत्यभिज्ञाननियमः । ५ तावत्येव–आ०, ब०, प० । ६ एकत्वपरिणामनिबन्धनत्वमपि । ७ तादृश्यं न भा–आ०, ब०, प० ।

वासनाहेतुकत्वं नीलादिज्ञानवत् । तदपि स्खलत्येव भेदज्ञानेन बाधनादिति चेत्; नीलादिज्ञानमपि किन्न स्खलति निराकारवस्तुज्ञानेन बाधनात् ? तदेव नास्ति, साकारस्यैव वस्तुनो दर्शनादिति चेत्; इतरदपि न भवेत्, सान्वयस्यैव दर्शनात् । व्यतिरेकोऽपि पिण्डशिवकादिरूपेण प्रतीयत इति चेत्; निराकारमपि प्रतीयत एव सन्नीलं सत्पीतमिति । न हि नीलेतरयोरन्यतरदेव सत्, इतरत्र तेज्ज्ञानाभाव-प्रसङ्गात् । [1] नीलादेरन्यत् सत्त्वमिति चेत्; सत्त्वादन्यत् नीलाद्यपि । कथं तत्प्रत्यय इति चेत् ? इतरप्रत्ययः कथम् ? नीलादावेव [2] इति चेत्; तत्प्रत्ययोऽपि सत्त्व एवेति किन्न स्यात् ? अतद्रूपे तदनुपपत्तेरिति चेत्; कथमभेदप्रत्ययः ? तत्रैव तदारोपादिति चेत्; नीलादिप्रत्ययोऽपि सत्त्व एव, तत्रैव तदारोपादिति किन्न स्यात् ? न कदाचिदपि नीलादिविकलं सत्त्वमुपलभ्यत इति चेत्; क्व पुनरभेदविकलस्य भेदस्योपलब्धिः ? विकल्पसंहारदशायामिति चेत्; तत्रैव सत्त्वस्यापि । "सदेव सौम्येदमग्र आसीत्" [छान्दो० ६।२।१] इत्यादि श्रुतेः । वाङ्मात्रमेवेदं नैवं कदाचिदप्यनुभव इति समानमेकान्तभेदेऽपि । ततो यथा नीलादिज्ञानस्य निराकारज्ञानेनाबाधनं केवलस्य तद्विषयस्याप्रतीतेः, एवं भेदज्ञानेनापि इतरज्ञानस्य, इत्युपपन्नमुक्तम्–'अपृथग्' इत्यादि । किं पुनरेवमभेद एव न भेदोऽपि तज्ज्ञानस्यापि भावात् ? कथमेवं तयोरेकत्र भावः ? कालविकल्पेनेति चेत्; न; वस्तुनि तदभावात् । न ह्येकमेव कदाचिन्नीलमन्यदान्यदिति चेत्; मा भूद्विकल्पः समुच्चयस्तु स्यात् । स एव कथमेकत्र विरुद्धयोरिति चेत् ? कथं विभ्रमेतरयो ? न चेदमसिद्धम्–"नौयानादिषु" इत्यादिना निरूपितत्वात् । कथं वा विकल्पेतरयो ? अन्यथा विकल्पाभावेन सर्वव्यवहारोच्छेदादिति निरूपणात् । ततो यथा विभ्रमेतरविकल्पेतरादीनामेकत्र समुच्चयस्तथा वस्तुस्वाभाव्यादेव सूक्ष्मेतरभेदेतरादीनामपि । एतदेवाह–

**देशकालान्तरव्याप्तिः स्वभावः क्षणभङ्गिनाम् ।** इति ।

'अणूनाम्' इत्यनुवृत्तम् । ततस्तेषां देशान्तरव्याप्तिः भिन्नदेशकलापाविष्वग्भावः स्वभावः ततो देशदैर्घ्यम्, क्षणभङ्गिनां कालान्तरव्याप्तिर्भिन्नकालपर्यायाभेदः स्वभावस्ततश्च कालदैर्घ्यमिति भावः । देशदैर्घ्यस्य निरूपितस्याप्युपादानं तद्वत् कालदैर्घ्यस्याप्यविरोधदर्शनार्थम् । अत्रैवोपपत्त्यन्तरमाह–

**सम्प्रत्यस्तमिताशेषनियमा हि प्रतीतयः ॥१३८॥** इति ।

सम्यक् प्रत्यस्तमिताः प्रलीना अशेषनियमाः स्थूलमेव सूक्ष्ममेव नित्यमेवानित्यमेवेत्यादय एकान्ता यासु तास्तथोक्ताः । काः पुनस्ताः ? प्रतीतयः प्रत्यक्षादिबुद्धयो हि यस्मात्, तस्माद् 'देश' इत्यादि । तथा हि–

नैकान्तनियता क्वचित् प्रतीतिरनुभूयते ।
अनेकान्ततिरस्कारं यद्बलाद्विदधीमहि ॥१४७६॥

---

१ तज्ज्ञाना–आ०, ब०, प० । २ स्वत एव–आ०, ब, प० । ३ इति 'भु–श्रां० ब०, प० । ४ –श तदन्यदि–आ०, ब०,प० । ५ न्यायवि० श्लो० १४८ । ६ समुच्चय इति शेषः ।

प्रतीतं प्रविलुम्पेम यद्यन्यस्य प्रकल्पनात् ।
लभेमहि कथं तत्त्वं किमप्येवं तदर्थिनः ॥१४७७॥
ततः प्रतीतिसामर्थ्याद्देशकालान्तरान्वयी ।
स्वभावो भावतो भावो भावज्ञैरभ्युपेयताम् ॥१४७८॥

न चेदमत्र चोद्यम्–**"तथाविधस्य भावस्य सर्वात्मना प्रत्यक्षत एव प्रतिपत्तेर्न तत्र प्रमाणान्तरं शब्दान्तरं वा प्रवृत्तिमत् ।"** [ ] इति; कस्मात् ? अर्वाग्दर्शिभिरसकलपर्यायस्यैव [1]ततस्तस्य प्रतिपत्तेः । एवं सति स एव गृहीतश्चागृहीतश्च भवेदिति चेत्, नायं दोषः, तथाप्यनेकान्तस्यानुपद्रवात् । एकान्तवादस्य तु भवत्येव समुपद्रवः । तत्र सर्वात्मना ग्रहणमेव नेतरदिति चेत्, न; भाववच्छक्तावपि तत्प्रसङ्गाद्व्यतिरेकात् । तथा च किं तत्रोपदेशाद्यपेक्षया ? निर्णय इति चेत्; न, प्रत्यक्षस्यैव निर्णयरूपस्योपगमात् । व्यतिरिक्तैव ततः शक्तिः तस्याः सामग्रीरूपत्वादिति चेत्; व्यतिरिक्ता कथं तस्य ? तत्कार्ये व्यापारादिति चेत्; न; अशक्तस्य कार्याभावात् । शक्त एवासौ सामग्र्येति चेत्; न; परस्पराश्रयात्–'सामग्र्या शक्तस्य कार्यम्, तद्व्यापाराच्च सा तस्य शक्तिः' इति । तत्र तत्र व्यापारात् तस्यास्तच्छक्तित्वम् । तदुपकारादिति चेत्; न; अशक्तेस्तदसम्भवात् व्योमकुसुमवत् । स्वतो[2]ऽपि शक्त एव भाव इति चेत्; तस्य तर्हि प्रत्यक्षत एव निर्णयात् कथं [3]शृङ्गवेरदर्शने संशयः शृङ्गवेरं विषमेवेति विपर्ययो वा ? तस्मादगृहीतैव शक्तिर्भावग्रहेऽपीति कथमेकान्तवादस्यानुपद्रवः ? तस्मादक्रमवत् क्रमेणापि अनेकान्तात्मक एव भावः, तथा प्रत्यभिज्ञानात् । ननु च प्रत्यभिज्ञानं प्रत्यक्षविषय एव प्रवृत्तिमन्नान्यत्र अतिप्रसङ्गात् । न च प्रत्यक्षस्य परापरपर्यायेषु प्रवृत्तिर्यनस्तेषां कथञ्चिदभेदप्रतिपत्त्या तस्यानेकान्तविषयत्वात् प्रत्यभिज्ञानं तत्र स्यादिति चेत्; अत्राह–

**अग्रहः क्षणभङ्गोऽपि [ ग्रहणे किमनिश्चयः ] ।** इति ।

न केवलमक्षणिकत्वमपि तु क्षणिकत्वमप्यविद्यमानग्रहणमेव । न हि परापरा[4]विज्ञाने तस्यापि ग्रहणं तदपेक्षत्वात् । स्वभाव एव भावस्य क्षणभङ्गः तत्किं तद्ग्रहणे[5] पूर्वापरग्रहणेनेति चेत् ? सिद्धं तर्हि तद्वदभेदस्यापि ग्रहणं तस्यापि कथञ्चित्[6] तत्स्वभावत्वाविशेषात् । किमिदानीं प्रत्यभिज्ञानेन प्रत्यक्षादेव तस्य प्रतीतेरिति चेत्; न; तस्यैव परापरपर्यायविशिष्टतया प्रत्यभिज्ञानेनाधिगमात् । अपि च, भवतोऽपि किमनुमानेन प्रत्यक्षादेव क्षणभङ्गस्यापि ग्रहणात् । निश्चय इति चेत्, न; निश्चयस्यापि नीलादिवत् प्रत्यक्षादेव भावात् । एतेनाह–ग्रहणे किमनिश्चयः' इति । ग्रहणे क्षणभङ्गस्य कस्मादनिश्चयो निश्चय एव स्यात् । न प्रत्यक्षमित्येव निर्णयहेतुर्बुद्धिपाटवादौ सत्येव तस्य तत्त्वात्, क्षणभङ्गे च तदभावादिति चेत्; नीलादेरपि न निर्णयः स्यात्, निरंशे खण्डशः पाटवादेरसम्भवात् । एवं च कथमनुमानं धर्मिहेत्वादीनामसिद्धेः । ततो विशिष्टनिर्णयार्थत्वमेवोत्तरम् । तच्च प्रत्यभिज्ञानेऽपि समानम् । नेदमत्रोत्तरम्, समारोपनिरासार्थत्वस्य तत्त्वादिति चेत्; अत्राह–

१ प्रत्यक्षात् । २ ततोऽपि आ०, ब०, प० । ३ एव ततो नि–आ०, ब०, प० । ४ आर्द्रं शुण्ठीति यावत् । ५ –परापरज्ञा–आ०,ब०, प० । ६ क्षणिकत्वग्रहणे । ७ –स्वित्स्वभा–आ०, ब०, प० ।

**आकृतिभ्रमवद्द्विपमज्ञैर्विलोकितम् ॥१३९॥** इति ।

आकृतिर्विपरीताकार तत्रैव भ्रमोपपत्ते तस्य भ्रम आरोप स क्रियतेऽस्मिन्निति तद्वद् ग्रहणं निरंशक्षणिकत्वेन 'ग्रहणे' इत्यस्य विभक्तिपरिणामेन योजनात्, किं नेत 'किम्' इत्यस्यानुवृत्ते । न हि सर्वात्मना तस्य स्वविषयनिश्चयनिबन्धनत्वे तद्ग्रहणमुपपन्न विरोधात् । ततो न आरोपस्याभावात् तन्निरासार्थत्वमनुमानस्येति मन्यते । यद्वदित्यादि तद्वत्त्वे निदर्शनम् । तस्याप्युपन्यास परं प्रत्यभिज्ञानापनार्थं । न हजे तन्निश्चयविकलैरवलोकित विषमपि तद्विपर्ययभ्रमवदुपपन्नं यतो निदर्शनं स्यात्, तदवलोकनस्यापि तन्निर्णयजननस्वभावत्वेन तद्ग्रहणानुपपत्ते । तत्र प्रागुक्तमेवोत्तरम्, प्रत्यभिज्ञानवत् । अपि च, सत्यपि दर्शने यदि निश्चयाद् व्यवहार, स एव प्रमाणमस्तु किं दर्शनेन ? स एव तदभावे कुत इति चेत् ? तदपि कुत ? विषयविषयिसन्निपातादिति चेत्; तत एव सोऽप्यस्तु । तदेवाह–

**न चेतेऽर्थविदोऽर्थोऽर्थात् केवलो व्यवसीयते ।** इति ।

किमित्यनुवृत्तम्, अर्थ पुरोवर्तिनीलादि किं कस्मात् न च नेव व्यवसीयते व्यवसीयत एव । कथम् ? अर्थविदो निर्विकल्पदृष्टे ऋते विना । कुतो व्यवसीयते ? अर्थात् विषयि सन्निहितात् स्वलक्षणात् । निश्चयो नामाभिलापवान् प्रत्यय, तद्वत्त्व च तस्य न विषयगतेनाभिलापेन तत्र तदभावात्, अन्यथा सङ्केतवैफल्यम्–स्वत एव वाचकानुविद्धस्य सर्वस्यापि वस्तुन प्रतिपत्ते । स्मरणोपनीतेन तु तद्वत्त्वे भवितव्यमेवार्थविदा पूर्वम्, अन्यथा स्मरणासम्भवादिति । अत्रोत्तरम्– 'केवलः' इति । तात्पर्यमत्र–यद्यभिलापसम्बन्धेनैवार्थो व्यवसीयते युक्त तर्हि भवितव्यमिति, न चैवम्, तत्सम्बन्धविकलस्य केवलस्यैव तस्य व्यवसायात् । तद्वैकल्ये व्यवसाय स कथमिति चेत् ? अभिलापानुस्मरणस्य कथम् ? तत्सम्बन्धादेव तत्रापीति चेत्, तत्रापि तदभिलापस्मरणान्तरमन्वेष्टव्यम्, तदुपनीतेनैवाभिलापेन तस्यापि तद्वत्त्वात्, पुनस्तत्राप्यपरं तदिति कथ नानवस्थानम् ? भवतु तन्निर्विकल्पकमेव तत्सम्बन्धाभावादिति चेत्, न तर्हि तद्विषयस्यान्यत्र योजन स्वलक्षणस्यावाचकत्वादशक्यत्वाच्चेति विकल्पविकल जगत्प्राप्तम्, अशब्दयोजनस्य तस्यानभ्युपगमात् । तदुक्तम्–

"सदृशार्थाभिलापादिस्मृतिर्नाप्यभिलापिनी ।

तावतैवाविकल्पत्वे स्वल्पा धीः स्याद्विकल्पिका ॥" [सिद्धिवि० प्र०परि० ] इति ।

ततस्तत्सम्बन्धाभावेऽपि व्यवसायात्मकमेव तद्वक्तव्यम् । अस्तु, तथोपयतया तदुपगमादिति चेत्, किमेव नेन्द्रियज्ञानम् ? तस्य असाधारणविषयत्वेनातद्योग्यत्वादिति चेत्, कुतस्तद्विषयत्वम् ? अतद्योग्यत्वात् । तदपि कुत ? तद्विषयत्वादिति चेत्, परस्पराश्रयस्य सिद्धे । स्वलक्षणतद्विषयत्वेनाव भासनात्, अत एवोक्तम्–'प्रत्यक्ष कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति ।" [प्र० वा० २।१२३]

१ –तर्ह प्रत्यभिज्ञानेऽपि समानं नेदमत्रोत्तरम्– समारोपनिरासार्थत्वस्य प्रत्यभिज्ञानान्यव्यवच्छेदे च आ०, ब०, प० । २ केवलो ऽत्र–आ०, ब०, प० । ३ "विकल्पो नामसंश्रय" इति वचनात् । यथा भिधानविशेषापेक्षा एव निश्चयैर्निश्चीयन्ते इति वचनाच्च ।"–ता० टि० । ४ अर्थविदा । ५ अभिलापानुस्मरणम् । ६ विकल्पस्य । ७ विकल्पकमिष्टमिति शेष । ८ शब्दसम्बन्धायोग्यत्वात् ।

इति चेत्; न; "व्यवसायात्मकं ज्ञानं प्रत्यक्षं स्वत एव नः" [ ] इत्यपि वचनात्, स्वतश्च तस्यैवावभासनात्। लोकस्यापि तत्रैव सम्मतेः, नेतरत्र, अन्यथा "तयोरैक्यं व्यवस्यति" [ प्र० वा० २।१३३ ] इत्यस्य विरोधात्। कथं पुनः अर्थाद्व्यवसायः ? निर्विकल्पात्तदनुपपत्तेरिति चेत् ? तद्विदोऽपि कथं तदविशेषात्। वासनात एव व्यवसायः, तद्बोधनद्वारेण तु तद्विदस्तद्धेतुत्वमिति चेत्; अर्थस्यापि तथैव तदस्तु। 'वासनाकार्यस्य कथमर्थविषयत्वम् ?' इत्यपि न चोद्यम्; अर्थस्यापि तद्धेतुत्वात्। कथं पुनर्वासनाबोधतः प्राग् अतद्धेतोस्तस्य पश्चात्तद्धेतुत्वम् उपयोगाविशेषात् ? ततोऽर्थाभावेऽप्यक्षज्ञानेन भवितव्यम्, अहेतोरनपेक्षणात्। तदुक्तम्-

"यः प्रागजनको बुद्धेरुपयोगाविशेषतः।
स पश्चादपि तेन स्यादर्थापायेऽपि नेत्रधीः॥" [ ] इति। चेत्;

कथमेवं तद्विदो व्यवसायहेतुत्वमपि। शक्यं हि वक्तुम्-

या प्रागजनिका दृष्टिर्व्यवसायस्य सा कथम्।
पश्चादप्यविशेषात् स्यात् तदपायेऽपि तन्मतिः॥ १४७९ ॥ इति।

वासनाबोधस्य तु पश्चात्तद्विशेषत्वमर्थेऽपि समानम्। कथं पुनरदृष्टस्य तद्बोधकत्वमिति चेत् ? दर्शनहेतुत्वं कथम् ? तदपि दृष्टस्यैवेति चेत्; न; अपूर्वदर्शनाभावप्रसङ्गात्। तथास्वभाव्यं तद्बोधकत्वेऽपि। तत्र व्यवसायार्थमपि दर्शनकल्पनमुपपन्नम्।

भवतु व्यवहारार्थमेव तद्, अभ्यासदशायां दर्शनादेव व्यवसायनिरपेक्षात् व्यवहारप्रवृत्तेरिति चेत्; अत्राह-

**भावान्तरसमारोपेऽभाविताकारगोचराः॥ १४० ॥**
**समक्षसंविदोऽर्थानां सन्निधिं नातिशेरते॥** इति।

विषयेषु सम्मुखमक्षमिन्द्रियं **समक्षं** तस्य **संविदः** तत्कार्या बुद्धयः **अर्थानां** रूपादीनां **सन्निधिम्** इन्द्रियसम्प्रयोगं **नातिशेरते** न ततो विशिष्यन्ते, तत इव ताभ्योऽपि न व्यवहार इत्यर्थः। कुतस्तथेति चेत् ? अनिश्चितस्वभावाधिष्ठानत्वादेव। अत एवोक्तम्-'अभाविताकारगोचराः' इति। हेतुपदं चेदम्। यत एवं ततस्तं नातिशेरत इति। निश्चयविरहेऽपि बोधात्मकत्वेन तासां तदतिशयोपपत्तेः कुतो न व्यवहारनिबन्धनत्वमिति चेत् ? उत्तरम्-भावान्तरस्य तद्विषयादन्यस्य भावस्य समारोपस्तत्रैवाध्यारोपस्तस्मिन्निति। न हि बोधरूपत्वेऽपि तदन्तरसमारोपे तन्निबन्धनत्वं क्षणभङ्गादावपि तत्प्रसङ्गेनानुमानवैफल्यापत्तेः। मा भूत् ततस्तत्र व्यवहारो नीलादौ तु स्यात्तदभावादिति चेत्, न; दर्शनादेव तत्रापि तद्भावात्, क्षणक्षयादावप्यन्यतस्तदनभ्युपगमात्। उपपन्नः क्षणे क्षणान्तरस्य तत आरोपः सादृश्यातिशयात्, नीलादौ तु कथं पीतादेः विपर्ययादिति चेत् ? मा भूत् पीतादेः, नीलादेरेवापरस्य स्यात् तद्भावात्। तथा च कथं तत्परिहारेण दर्शनविषय एव व्यवहारो

१ निर्विकल्पकबोधादपि। २ अर्थस्य। ३ उद्धृतोऽयम्-अष्टसह० पृ० १२२। ४ तुलना-"यः प्रागजनको बुद्धेरुपयोगाविशेषतः। स पश्चादपि तेनाशनोपायेऽपि कल्पना॥ इति प्रतिपादनात्।" -अष्टसह० पृ० १२२। ५ समानमिति शेषः। ६ सादृश्यातिशयसद्भावात्। ७ नीलान्तरपरिहारेण।

यतस्तन्नियमो लोकतः प्रसिद्धोऽवकस्येत ? नीलादिर्नीलादेरप्यत्यन्तविलक्षण एव ततो न तदारोपस्तत्रेति चेत्; क्षणे क्षणान्तरस्यापि[1] स न स्यात्तदविशेषात् ? तथा च नित्यनिर्मुक्तं जगद्भवेत् संसारबीजस्य आरोपा[2]त्मनः सत्त्वदृष्टेरभावात् । एवञ्च निर्विषयमिदम्–"उत्खातमूलां कुरुत सत्त्वदृष्टिं मुमुक्षवः ।" [ प्र० वा० १।२५९ ] इति । क्षणक्षयाक्षम्भवी दर्शनस्य नीलादावस्ति विशेषस्ततो न तत्र तदारोपमुपरचयतीति चेत्, स तर्हि कोऽपरः स्यादन्यत्र व्यवसायादिति तदात्मिकैव दृष्टिः । अन्यथा तस्यास्तद्विषयस्य चाननकल्पनात्, इत्यावेदयन्नाह–

**अणवः क्षणिकात्मानः किल स्पष्टावभासिनः ॥ १४१ ॥** इति ।

मेरुपर्यन्तशाखा नीलादय[3] एव अणवः त एव प्रतिसमयं निरन्वयविनश्वराः क्षणिकात्मानः स्पष्टावभासिनो निर्विकल्पकदर्शनवेद्याः 'किल' इत्यत्रारुचिद्योतन च[4] । तच्च तथाविधस्य दर्शनस्य तत्प्रतिभासिनां [च] तेषामप्यप्रतिवेदनात् । न ह्यनुपक्रान्तसंवेदनव्यापारं तत्त्वम् इत्यभावेन कथ्यमानमपि तथ्यं भवति मिथ्यावादविरहापत्ते । परमरुचिविषयं दर्शयति–

**अतत्फलपरावृत्तार्थाकारस्मृतिहेतवः ।** इति ।

न विद्यते तद्विवक्षितं जलाहरणादिफलं येषां ते अतत्फलाः पटादयस्तेभ्य परावृत्तार्थाः घटादिव्यपदेशभाजः परमाणव तेषाम् । आकारः कल्पितस्थूलनीलादिः तस्य स्मृतिर्घटोऽयं घटोऽयमित्यादिनिर्णयः परमसिद्ध्या तस्य स्मृतित्वात्, तस्याः हेतवो यथोक्ताः परमाणव । 'किल' इत्यत्रापि योजनादश्रद्धेयत्व बोद्धव्यम् । न हि विशेषरूपस्यानुभवगोचरस्यापि सामान्याकारस्मरणहेतुत्वमुपपन्नम्; अनीलस्यापि नीलनिर्णयकारणत्वप्रसङ्गात् । नीलवासनाप्रबोधस्यापि अनीलादेवोपपत्ते विशेषात् सामान्यवासनाप्रबोधवत् । तथा च यथा न वस्तुनि सामान्याकारस्तन्निर्णयात् तथा नीलाकारोऽपि मा भूत् । 'तत्रस्तदाकारो दर्शनादेव तस्य भावात्' इत्यपि नोत्तरम्; उक्तोत्तरत्वात्, निरंशस्य तस्यासंवेदनादिति । ततो निराकारमेव तत्त्वं प्राप्तमिति मन्यते । ततो यथा तन्निर्णयात् सत् तथा साधारणरूपमपीति तस्यैव प्रत्यक्षवेद्यत्वम् । एतदेवाह–

**स्थूलस्पष्टविकल्पार्थाः स्वयमिन्द्रियगोचराः ॥१४२॥** इति ।

स्थूलाश्च ते क्रमाक्रमाभ्यां नानावयवसाधारणत्वात् स्पष्टाश्च विशदप्रतिभासत्वात् स्थूलस्पष्टास्ते च ते विकल्पार्थाश्च घटादय परमसिद्ध्या तेषां विकल्पज्ञानविषयत्वात् । ते किम् ? इन्द्रियं तज्ज्ञानं तस्य गोचरा विषया न विरुध्यन्ते 'न विरुध्यते' इति वक्ष्यमाणस्य वचनपरिणामेनान्वाकृष्य सम्बन्धात् । कथं ते तद्गोचरा ? स्वयम् आत्मनैव न दर्शनैकत्वाध्यवसायेन, प्रथमतस्तद्विषयस्यैव ज्ञानस्यानुभवात् । न च तस्यारोपितगोचरत्वम्; स्पष्टत्वात्, वस्तुसन्निधावेव भावात्, प्रतिविकल्पानिवर्त्यत्वाच्च । अभावादेव [7]प्रतिविकल्पस्य तदनिवर्त्यत्वं न तु स्वयं वस्तुविषयत्वादिति

१ –पि न आ०, ब०, प० । २ –रोपात्मकस–प० । ३–य· कुत एव आ०, ब०, प० । ४ 'च' इति सम्पातादायातम् । ५ –वारादि–आ०, ब०, प० । ६ तदाकारस्तथा आ०, ब०, प० । ७ 'निरंशद-शिकविकल्प"–ता० टि० ।

चेत्; कुतस्तदभावः ? कारणाभावादिति चेत्; न; दर्शनस्यैव स्वलक्षणविषयस्य तत्त्वात् । अभ्यासपाटवादेर्नीलादिवत् क्षणभङ्गादावप्यविशेषात् । न च सादृश्यातिशयेन तस्य प्रतिरोधः; सत्यपि तस्मिन् मृगतृष्णिकादौ तन्निर्णयस्य तेन जलाद्यारोपनिवर्तनस्य च दर्शनात् । तन्न तस्य मानसत्वम्, ऐन्द्रियत्वस्यैवोपपत्तेः । तथा च यत्सिद्धं तदाह–

**समानपरिणामात्मशब्दसङ्केतहेतवः** । इति ।

**समानपरिणामात्मनः** सदृशपरिणामरूपस्य **शब्दस्य सङ्केतो** वाचकत्वेन निवेशनं तस्य **हेतवः** प्रतिपादिता एवार्थाः न क्षणक्षीणाः परमाणवः । एतदुक्तं भवति–न शब्दार्थयोरसाधारणयोर्वाच्यवाचकभावः सङ्केतासम्भवात्, अपि तु समानपरिणामस्वभावयोः । तयोरपि नाप्रतिपन्नयोः सङ्केतः; अतिप्रसङ्गात् ? न च असाधारणदृष्ट्या तत्प्रतिपत्तिः, नापि तज्जन्मना विकल्पेन; ततस्तदुत्पत्तेर्निषेधात् । तत इन्द्रियबुद्धिरेव तद्विषया वक्तव्या शाब्दव्यवहारस्यान्यथानुपपत्तेः । सैव तद्व्यवसायात्मिका बुद्धिर्न ततोऽन्येति ।

साम्प्रतं तस्यास्ततोऽन्यत्वेऽपि तत्स्वसंवेदनवदिन्द्रियप्रत्यक्षस्यापि व्यवसायात्मकत्वं दर्शयन्नाह–

**स्वभावव्यवसायेषु निश्चयानां स्वतो गतेः ॥१४३॥**
**नाशस्यैकार्थरूपस्य प्रतीतिर्न विरुद्ध्यते । इति ।**

**नाशस्य** क्षणभङ्गस्य **प्रतीतिर्**निर्णयात्मेन्द्रियबुद्धिः इतरत्र परस्याविवादात् **न विरुद्ध्यते** न प्रमाणेन बाध्यते । कीदृशस्य ? **एकार्थरूपस्य** एको भागसहायविकलोऽर्थो नीलादिस्तद्रूपस्य तत्स्वभावस्य । विशेषणमप्येतत्साधनं द्रष्टव्यं तद्रूपत्वात् । तदयमत्र प्रयोगः–प्रत्यक्षनिर्णयो नाशो नीलादेरव्यतिरेकात् तत्स्वरूपवत् । न हि निर्णये तदव्यतिरिक्तस्यानिर्णयः, तद्वेदने अवेदनस्यापि प्रसङ्गात् । ततो यथेदमुच्यते–

"एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥" [प्र०वा० ३।४२] इति ।

तथेदमपि वक्तव्यम्—

एकस्यार्थस्वभावस्य निर्णीतस्य सतः स्वयम् ।
कोऽन्योऽनिर्णीतभागो यन्निश्चयः क्रियतां परैः ॥१४८०॥ इति ।

नीलादेरपि न प्रत्यक्षान्निर्णयः तज्जन्मनो निश्चयान्तरादेव तद्भावात्, ततः साध्यविकलमुदाहरणमिति चेत्; निश्चयस्य तर्हि कुतो निश्चय तदनिश्चये नीलादेरनिश्चयात् तदविचावित्तिवत् ? निश्चयान्तरात् तस्यापि निश्चयेऽनवस्थोपनिपातान्न नामापि निश्चयस्य सिद्ध्येत् । निश्चितत्वादेव तस्य निश्चयो न निश्चितत्वादिति चेत्; अस्तु नामैवम्, तदेव तु वेदनं कुतः ? स्वसंवेदनादेव प्रत्यक्षादिति चेत्; न; तस्यानिश्चयरूपस्य निश्चयात्मनि विरोधात्, अनेकान्तस्य चानभ्युपगमात् । निश्चयात्मैव तदपीति चेत्; सिद्धं तर्हि तद्वदेव नीलादिप्रत्यक्षमपि तदात्मकमिति न तत्स्वरूपवदिति निदर्शनस्य साध्यवैकल्यम् । तदेवोक्तम्–'निश्चयानाम्' इत्यादिना । निश्चयानां

१ निश्चयस्य । २ निश्चय स्वरूपमिति ।

नीलादिविकल्पाना **स्वतो** न निश्चयान्तरापेक्षया **गते** निर्णीति । तां दृष्टान्तत्वेनाश्रित्य **नाशस्यैकार्थरूपस्य प्रतीतिर्न विरुध्यते** इति । कथं पुनस्तेषां गतिर्निर्णीतिरिति चेत् ? उत्तरम्–'स्वभाव' इत्यादि । **स्वभावाः** सं॰चे॰( सचे )तनादयो विकल्पधर्मास्ते च ते **व्यवसायाश्च** नाव्यवसायास्तेषां तेषु [१]विरोधात्, **स्वभावव्यवसायास्तेषु सत्सु** । न हि सकलतत्स्वभावानां व्यवसायात्मकत्व[२]नियमे निर्णीतिरन्या स्वतस्तेषां गतिः सम्भवति । ततो न बहिरन्तर्वा प्रमाणान्तरकल्पनमर्थवत्, प्रत्यक्षादेव समीहितसिद्धेरिति मन्यते । भवतोऽपि स्वपरनिर्णयात्मनो ज्ञानस्य स्वत एव सचेतनादिवत् प्रतिक्षणपरिणामादेरपि निर्णयात् किं तत्र प्रमाणान्तरेणेति चेत् ? अत्राह–

**व्यामोहशबलाकारवेदनानां विचित्रता ॥१४४॥** इति ।

व्यामोहयति विकल्पयति चित्तमिति **व्यामोहः** आवरणात्मको विशेषस्तेन **शबलो** मेचक आकारः स्वभावो येषां तानि च तानि **वेदनानि** च ज्ञानानि तेषां **विचित्रता** [३]विविधा चित्रप्रतिभासमात्मनि त्रायमाणानां भावः, विविधप्रतिभासत्वं भवति इति शेषः । एतदुक्तं भवति–सत्स्वेव सूक्ष्माणामपि ज्ञानाकाराणां निर्णयो यदि कर्मसामर्थ्यात् असकलनिर्णयपरिणामो न भवेत् । अस्ति चायमिति । एतदेवाह–

**साकल्येन प्रकाशस्य विरोधः सम्प्रतीयते ।** इति ।

**साकल्येन** स्वभावसामस्त्येन **प्रकाशो** ज्ञानाकाराणां तस्य **विरोधः** कर्मसामर्थ्यंप्रतिरोधः तद्व्यवस्थापकात् प्रमाणात् वक्ष्यमाणात् **सम्प्रतीयत** इति । ततो नास्माकं तत्र प्रमाणान्तरस्यावृत्तिः, अप्रतिविदितस्यापि तस्य विषयस्य भावात् । न चैवमेकान्तवादे, तत्र प्रतिपन्नस्य तत्सामस्त्येनैव प्रतिपत्तेः, अन्यथा तद्वादविरोधात् । नन्वेवमगृहीताकारसम्भवे कुतस्तदस्तित्वमित्यत्राह–

**सम्भावितान्यरूपाणां समानपरिणामिनाम् ॥१४५॥**
**प्रत्यक्षाणां परोक्षात्मा प्रमाणान्तरगोचरः ।** इति ।

**सम्भावित** सम्भवज्ञानावलम्बनम् अन्यत् प्रतीतादर्थान्तरं **रूपं** येषां तेषां **समानपरिणामिनां** सदृशपर्यायवतां ज्ञानानामर्थानां च तेष्वपि तत्सम्भवनाभावात्, तेषां **परोक्षात्मा** अप्रत्यक्षविषयः स्वभावः सूक्ष्मपरिणामादिः **प्रमाणान्तरस्या**नुमानादे**र्गोचरः** ततोऽस्तीति भावः । कीदृशानां तेषां स तद्गोचरः ? **प्रत्यक्षाणां** सच्चेतनादिना स्थूलनीलादिना च स्पष्टज्ञानविषयाणाम् । कुतः पुनरिदमवगन्तव्यं प्रमाणान्तरगोचर आत्मा प्रत्यक्षाणामिति ? प्रत्यक्षस्य तत्र तद्विषये च प्रमाणान्तरस्यावृत्तेः, उभयविषयस्य च कस्यचिदभावादिति चेत्; अत्राह–

**प्रत्ययः परमात्मानमपि च प्रतिभासयेत् ॥१४६॥**
**सत्यं परिस्फुटं येन तत्र प्रामाण्यमश्नुते ।** इति ।

---

१ स्वपर चेतना–ता० । २ –नियमनिर्णी–आ०, ब०, प० । ३ विविधं चित्रं प्र–आ०, ब०, प० । ४ तत्सम्भवात्तेषां आ०, ब०, प० ।

प्रत्ययः आत्मा 'प्रतिगतः परापरपर्यायान् अयो बोधः प्रत्ययः' इति व्युत्पत्तेः, तादृशस्य बोधस्यैवात्मत्वात् । स तत्र तस्मिन् 'प्रत्यक्षाणां परोक्षात्मा' इत्यत्र प्रामाण्यमविसंवादकत्वम् अश्नुते प्राप्नोति । एतदुक्तं भवति–बोधात्मैव कश्चित् प्रत्यक्षरूपेण परिणतः तद्विषयाभिमुख्यं परित्यजन्नेव पुनः प्रमाणान्तररूपेण परिणम्य परोक्षाकारस्य प्रत्यक्षविषयाविप्लवभावमनुभवतीति । कथं पुनरेकस्य प्रत्यक्षेतरपरिणाम इति चेत् ? स्वपरवेदनपरिणामोऽपि कथम् ? नास्त्येव, स्ववेदनस्यैव एकस्यानुभवादिति चेत्; न; परवेदनस्याप्यनुभवात् । न चायं विभ्रम एव, स्वरूपेऽपि प्रसङ्गात् । तद्विभ्रमे ग्राह्यविभ्रमो न सिद्ध्यतीति चेत्; एवमपि कथमविभ्रमस्य विभ्रमाकारो विरोधाविशेषात् ? अन्य एव स तस्मादिति चेत्; तस्य तर्हि तेन यथावस्थितस्य ग्रहणे सिद्धं परवेदनमपि । सत्यमेव, तद्ग्रहणस्यापि विभ्रमत्वे स एव प्रसङ्गः–'कथमविभ्रमस्य' इत्यादिरनवस्थापत्तिश्च । ततो गत्वापि दूरमविभ्रममपि परवेदनमभ्युपगन्तव्यम् । 'अस्तु तदेव न स्ववेदनम्' इत्यपि न युक्तम्; तदभावे तस्याप्यसम्भवादिति निवेदितत्वात् । ततः सिद्धः स्वपरवेदनपरिणामः तथा प्रत्यक्षेतरपरिणामोऽपि । तदेव 'परम्' इत्यादिना दर्शयति । परं बाह्यम्, आत्मानं स्वरूपम् 'अपि च' इति समुच्चये प्रतिभासयेत् प्रकाशयेत्, प्रत्ययः । कीदृशम् ? सत्यमवितथम्, अन्यथा विभ्रमैकान्तस्य प्रसिद्धेः । परिस्फुटं विशदम्, अनेन तत्परिणामिनः प्रत्यक्षव्यपदेशविपर्ययं दर्शयति, स एवैकः प्रत्यय आत्मनः परिस्फुटस्य प्रतिभासनात् स्वसंवेदनप्रत्यक्षम्, परस्येन्द्रियप्रत्यक्षमिति । 'येन' इति तस्य तत्प्रतिभासनेन तथानुभवसमुत्पत्तिं दर्शयति । तद्वचनाच्च तेनेति लभ्यते यत्तदोः सम्बन्धात् । तेन तथानुभवेन स तत्र प्रामाण्यमश्नुते इति । अस्ति ह्यनुभवो देशव्यापिन इव कालव्यापिनोऽपि प्रत्ययस्य । तत्र स्वपरवेदनभावस्येव प्रत्यक्षपरोक्षभावस्यापि प्रतिभासभेदनिबन्धनस्य तद्धेतोः सामग्रीवैचित्र्यात् उपपत्तेः । ततः सूक्तम्-'तत्र'–इत्यादि ।

'परम्' इत्याद्ययुक्तम्, एकस्य स्वपरप्रतिभासिनः स्वभावद्वयस्यासम्भवात् । अत आत्मानमेव प्रत्ययः प्रतिभासयतीति चेत्; अत्राह–

***आसादितविशेषाणामणूनामतिवृत्तितः ॥१४७॥*** इति ।

न तावदसावेकपरमाणुरूप एव सकलजगत्संव्यवहारेण तन्मात्रस्याऽशक्यावस्थापनत्वात् । सञ्चयगतानेकपरमाणुरूपत्वे च आसादितः प्राप्तः अतिशयश्चैतन्यलक्षणो बाह्यासम्भवी विशेषो यैस्तेषाम् अणूनाम् अतिवृत्तिः स्वरूपातिक्रमेणान्यत्रापि प्रवृत्तिः तत एव तद्बहुलस्यापि परिज्ञानात् तस्यास्ततः । 'परमात्मानमपि च प्रतिभासयेत्' इति सम्बन्धः । स्वत एव तेषां यथास्वमवगमात् किमतिवृत्त्येति चेत् ? ननूक्तम्–'एकस्य तद्विषयस्याभावे न तद्बहुत्वागमः' इति । एतदेव दर्शयति–

**एकाकारविवेकेन नैकैकप्रतिपत्तयः ।** इति ।

एकोऽनेकविषय आकारः प्रत्ययात्मा तस्य विवेकोऽभावस्तेन कृत्वा एकैकाः परस्परामिश्राः प्रतिपत्तयो न सम्भवन्तीति शेषः । भवति हि प्रत्ययनिमित्तात् प्रत्येयव्यवस्थायाः ( स्था ), तदभावे

१ स्वयंवेद–आ०, ब०, प० । २ परवेदनम् । ३ स्ववेदनाभावे । ४ परस्परभि–आ०, ब०, प० । ५ प्रत्ययत्व–आ०, ब०, प० ।

**तादात्म्यात् प्रत्यभिज्ञा न सदृशापरहेतुतः ॥१५१॥**
**अवस्थान्तर्विशेषोऽपि बहिरन्तश्च लक्ष्यते ।** इति ।

**तादात्म्यात्** परापरक्षणेषु कथञ्चिज्जीवस्य अभेदात् **प्रत्यभिज्ञा** स एवाहमिति परामर्शो **न** नैव सदृशश्चासावपरश्च अपरापर उपादानोपादेयप्रबन्धः वीप्सापरत्वान्निर्देशस्य, एव हेतुस्तस्मादिति । 'अवस्था' इत्यादिरत्रैवोपपत्तिः । **अवस्थानां** परापरविलक्षणलक्षणानाम् अन्तः अन्तर्गतः सन्तानान्तरासम्भावितया तत्रैव नियतो **विशेषो** हेतुफलभावः सोऽपि न केवलं वक्ष्यमाणो **लक्ष्यते** निश्चीयते । क्व ? **बहिरन्तश्च** अर्थे ज्ञाने च । एतदुक्तं भवति– सत्येव परापरपरिज्ञाने तेषु तद्विशेषलक्षणं तत्परिज्ञानञ्च जीवादेव, न क्षणनियताद्दर्शनात्, तस्य पूर्वस्मृतेरुत्तरत्र तद्दृष्टेश्च पूर्वत्राभावात् । नापि तदुभयदर्शनजन्मनः तदिदमित्याकारात्प्रत्यभिज्ञानात्, तस्यैवाभावात् । भावे वा नाभेदप्रत्यभिज्ञानं तत्र; विरोधादिति कुतः सन्तानकल्पनं यतः संसारतत्कारणादिकमवकल्प्येत ? जीवादपि कथं तल्लक्षणं तत्रापि भेदस्यानवभासनादिति चेत् ? न ; कथञ्चित्तस्यापि भावात् । न चैवं प्रत्यभिज्ञाने भेदवत् अभेदस्यापि प्रतिभासः तस्यापि तात्त्विकत्वेनेष्टसिद्धिप्रसङ्गात् । भेदस्यैव तात्त्विकत्वे प्रत्यभिज्ञानमेव न भवेत् विभ्रमेतरयोरेकत्र विरोधात् । अविरोधे भेदेतरात्मापि भावस्तात्त्विक एव स्यात् । इत्युपपन्नं जीवादेव तल्लक्षणम् । तदभावे प्रत्यभिज्ञानस्याप्यव्यवस्थितेः । पुनरपि 'तादात्म्यात् प्रत्यभिज्ञानम्' इत्यत्रोपपत्तिमाह–

**सूक्ष्मस्थूलतरा भावाः स्पष्टास्पष्टावभासिनः ॥१५२॥**
**वितथेतरविज्ञाने प्रमाणेतरतां गते ।** इति ।

सूक्ष्माश्च स्थूलतराश्च, स्थूला एव स्थूलतराः स्वार्थिकत्वात्तरप्रत्ययस्य अल्पाच्तरवत् । **सूक्ष्मस्थूलतरा भावा** बदरसहकारनालिकेरपनसफलादयः । तथा स्पष्टाश्चास्पष्टाश्च ते च ते अवभासिनश्च **स्पष्टास्पष्टावभासिनो** भावाः समीपदूरदेशवर्तिनो वनस्पत्यादयः । अत्र लक्ष्यन्ते इति वचनपरिणामेन सम्बन्धनीयम् । तथा वितथं च द्विचन्द्रादिविषयम् इतरच्च एकचन्द्रादिगोचरं ते च ते विज्ञाने च तथोक्ते, अत्र लक्ष्येते इति द्विवचनपरिणामेन । कीदृशे ते लक्ष्येते ? **प्रमाणेतरतां गते** प्रमाणतां गतमवितथम्, इतरतामप्रमाणतां गतं तु वितथमिति । तल्लक्षणं चात्र बदरादिभ्यः सहकारादयः स्थूलास्तेभ्यश्च बदरादयः सूक्ष्माः इति दूरपर्वतादिभ्यः समीपाः नीपकूपादयः स्पष्टावभासिनः तेभ्यस्तत्पर्वतादयोऽस्पष्टावभासिन इति । वितथादितरत् प्रमाणम्, इतरस्माच्च वितथमप्रमाणम् इति च परामर्श एव । न चायं तादात्म्याभावे सम्भवति, दर्शनस्योभयविषयस्याभावात्, भावेऽप्यपरामर्शरूपत्वात् । मा भूत् स्वयं परामर्शरूपं दर्शनम्, परामर्शस्य कारणं तु भवति संस्कारप्रबोधसहायमिति चेत्, अत्राह–

**यस्मिन्नसति यज्जातं कार्यकारणता तयोः ॥१५३॥**
**भेदिनां प्रत्यभिज्ञेति रचितोऽयं शिलाप्लवः ।** इति ।

---

१ सत इद–ता० । २ लक्षण-ता० । ३ वापीकूपा-प० ।

यस्मिन् दर्शने असति अविद्यमाने, कार्यकाले सतः कारणत्वानभ्युपगमात्, यज्ञातं परामर्शज्ञानं कार्यकारणता तयोः कार्यता तज्ज्ञानस्य कारणता दर्शनस्य इति एवं रचितो निर्मितः [1]सौगतेनायमपूर्वः शिलाप्लवः तत्कार्यकारणभाव एवाश्रद्धेयतया शिलाप्लवतुल्यत्वात् तच्छब्देनोक्तः । नापि तद्भावस्य श्रद्धेयत्वम्; असतो नीरूपत्वेन कारणत्वायोगात् । कार्ये एव तस्य नीरूपत्वं न पूर्वमिति चेत्; ननु पूर्वमित्यपि तस्य प्रध्वंस एवोच्यते नापरः कालोऽनभ्युपगमात् । तत्र च कथमस्तित्वं विरोधात् ? दृष्टत्वमेव तस्य पूर्वत्वं न नाशः "दृष्टताऽतीतकालत्वं दृश्यता वर्तमानता ।" [ प्र० वार्तिकाल० १।१३८ ] इति वचनादिति चेत्; किं पुनरिदं दृष्टत्वं नाम ? अतीतं दर्शनमेवेति चेत्; तस्यापि किमिदमतीतत्वम् ? अपरं दृष्टत्वमिति चेत्; तत्रापि किं पुनरित्यादे[2]: प्रसङ्गादनवस्थापत्तेश्च । तस्योपरतिरेव अतीतत्वमिति चेत्; भावस्यापि सैव तदिति किं दृष्टत्वेन ? अतीतं नष्टमिति च लोकव्यवहारात् । किञ्च, एवमतीतं कारणमिति दृष्टं कारणमिति भवेत्, तथा च कथं खलविलान्तर्गतबीजादेः तत्त्वमदृष्टत्वात् । दृष्टमेव तदपि योगिनेति चेत्; न तर्हि तस्यातीतत्वम् । "दृश्यमानतया वर्तमानमेव" [ प्र० वार्तिकाल० १।१३८ ] इति वचनात् । अन्यैरदृश्यत्वात् अतीतमपीति चेत्, नादृश्यत्वादतीतत्वम्, अपि तु दृष्टत्वात्, तच्च त[3]स्यात्मापेक्षया नास्त्येव । अदृश्यत्वादप्यतीतत्वमिष्टमेव "तस्मादतीतादि योगी पश्यतीति कोऽर्थः ? अन्येनादृश्यमानं पश्यति ।" [ प्र० वार्तिकाल० १।१३८ ] इत्यलङ्कारवचनादिति चेत्; न; तत्राप्यतीतस्यैव तद्दर्शनस्य वर्तमानतन्निषेधेनाभिधानात्, अन्यथा "दृष्टताऽतीतकालत्वम्" [ प्र० वार्तिकाल० ] इत्यस्य व्याघातात् । किञ्च,

> अन्यादृष्टेरतीतत्वात् वर्तमानत्वतोऽपि च ।
> योगिदृष्ट्या स एव स्याद्धेतुरन्योऽपि चाक्रमात् ॥१४८१॥

अन्यैरदृश्यमानत्वेन तस्यातीतत्वात् कारणत्वमकारणत्वं निष्पर्यायं प्राप्तं योगिना वर्तमानतया दर्शनादिति सङ्कटप्रवेशः–तत्कार्यस्य युगपदेवोत्पादानुत्पादयोरुपनिपातात् । अथ योगिनोऽपि स[4]माधानकाल एव तद्वर्तमानं न तस्मादुत्थितस्य, अत एवोक्तम्–"योगिना च समाधानादुत्थितेनातीततया व्यवहारात् ।" [ प्र० वार्तिकाल० १।१३८ ] इति चेत्; न; तथापि त[5]त्प्रवेशस्यानिवृत्तेः योग्यन्तरं प्रवृत्तसमाधानं प्रति तस्यैव वर्तमानत्वात्, योगिनाञ्च बहुत्वात् । न चायमपि नियमस्तेषां समकालमेव समाधानं तस्मादुत्थानं चेति, अन्यथापि तदविरोधात् । अपि च, योगिदर्शनस्यापि कारणमेव तद्विषयः, कारणत्वं च दृष्टत्वात्, तदपि यदि तद्दर्शनापेक्ष परस्पराश्रयः–दृष्टाद्दर्शनं ततो दृष्टमिति । दर्शनान्तरापेक्षमिति चेत्; तदपि यदि तस्यैव योगिनः, स एव प्रसङ्गः तस्यापि तद्दृष्टादेवोत्पत्तेः, पुनर्दर्शनान्तरदृष्टात् तदुत्पत्तावनवस्थाप्रसङ्गात् । दर्शनान्तरं परस्यैव योगिन इति चेत्; किं तत्काले प्रकृतस्य तस्य त[6]द्दर्शनं नास्ति ? तथा चेत्, कथं सर्ववेदनम् ? तदपि समाधानादुत्थितस्य नास्त्येवेति चेत्; न; तदुत्थानस्य तदप्रतिबन्धित्वात्, अन्यथा दोष एव स इति

१ सुगते–आ०, ब०, प० । २ त्यादिप्र– आ०,ब०, प० । ३ तस्मादात्मा–आ०, ब०,प० । ४ ध्यानकाले । ५ सङ्कटप्रवेश । ६ –स्यानप्र– आ०, ब०, प० । ७– स्य दर्श–आ०, ब०, प० ।

न 'सुगत' इत्यत्र अपुनरावृत्तिरुपसर्गार्थे[2] स्यात्, दोषस्यैव पुनरावृत्तित्वात्। तस्मादस्त्येव तदापि तस्य तदिति। कथं वा तदन्यदर्शनदृष्टादपि[3] तद्दर्शनस्योत्पत्तिः समकालाचदनुपपत्तेः? "नातोऽर्थः स्वधिया मह" [प्र० वा० २।२४६] इत्यस्य व्याघातात्। तद्व्याघातात्पूर्वं तद्दृष्टात् तदुत्पत्तिरिति चेत्, न, तदापि तस्य भावात्। पुनस्तत्पूर्वेत्यादि वचने अनवस्थानोपनिपातात्। तन्न दृष्टमतीतम्, अपि तु नष्टमेव। तस्य च न कारणत्वं नीरूपत्वात्। एतेन भाविनोऽपि तत्त्वं निषिद्धम्; सम्प्रत्यप्यनुत्पन्नस्य नीरूपत्वात्। नाऽनुत्पादाद्भावित्वमपि तु द्रक्ष्यमाणत्वात्, ननु तदपि भाविनः दर्शनम्, तस्यापि भावित्वं यद्यन्यतो द्रक्ष्यमाणत्वात्, तदेवानवस्थानम्। अनुत्पादादिति चेत्, विषयस्यापि तत एव तदिति किं द्रक्ष्यमाणत्वेन? अन्यथा प्रागपि तद्भावप्रसङ्गात्। एवमन्यदपि प्रकृतमत्र वक्तव्यम्। तन्न द्रक्ष्यमाणत्वं भावित्वमिति दुर्भाषितमेतत्—

"भाविता द्रक्ष्यमाणत्वमिति कालव्यवस्थितिः।"

[प्र० वार्तिकाल० १।१३८] इति।

ततो नासतः कारणत्वमतीतादे, नापि तत्कार्यत्वं प्रत्यभिज्ञानादेरिति तत्र तत्कल्पनमश्रद्धेयतया शिलाप्लव एवेति स्थितम्। क पुनरेवमाह—असत्कारणमिति, सौगतैः सत एव तत्त्वोपगमात्, कार्यत्वमेव तु असतः तत्काले तैरुपगम्यते, सत्त्वे कारणवैफल्यादिति चेत्, असत्यपि किं तद्व्यापारेण? तद्रूपस्य तन्निरपेक्षत्वात्, अन्यथा सहेतुकत्वमभावस्य भावस्य तु स्वरसभावित्वमिति कथमिष्टविपर्ययो न भवेत्? अथासत इति 'पश्चात् सत' इत्यर्थो न नीरूपस्येति, तदयमदोषः, तन्न, यस्मात्—

पश्चात्सत्त्वानुवादेन कार्यत्वं तत्र चेद् भवेत्।
भवतापि हि किं तेन सति तद्व्यर्थनास्थिते? ॥१४८२॥
कार्यत्वादेव तत्सत्त्वं ततो न व्यर्थतेति चेत्।
कार्यत्वात् सतत कार्यमित्यन्योऽन्याश्रयो न किम्? ॥१४८३॥

सत्यपि कार्यत्वे यदि तद्व्यापारस्तद्रूपं स्पृशति, न क्षणभङ्गः। न स्पृशति चेत्, कथं ततस्तदिति? तदनन्तरनियमादिति चेत्, न; तस्य सकलजगत् क्षणापेक्षयापि भावात्। एवमहेतुकत्वे तस्य नित्यं सत्त्वादि किन्नेति चेत्? सहेतुकत्वेऽपि कस्मान्न सर्वहेतुकत्वम्? अथायं तस्य स्वभावो यतस्तन्नियमाविशेषेऽपि कुतश्चिदेव भवतीति, यद्येवम्, अयमपि तस्यैव स्वभावो यन्निर्हेतुकमपि नित्यं न भवतीति। तन्न पश्चात्सतोऽप्यसतः कार्यत्वम्, तदभावान्न सतोऽपि कारणत्वमिति तत्र तत्कल्पनं शिलाप्लव एव। तदेवाह—'यस्मिन्' इत्यादि। यस्मिन् पश्चाद्भावि-

१ "सुष्ठु अपुनरावृत्त्या गत सुगतः"—ता० टि०। २ "अपुनरावृत्त्यर्थं सुनष्टज्वरवत्।"—प्र० वार्तिकाल० पृ० १। 'सुगत' इत्यत्र सूपसर्गस्य अर्थः। ३ –दर्शनद–आ०, ब०, प०। कारणत्वम्। ५ दर्शनस्यापि। ६ –त्वमपि तु–आ०, ब०, प०। ७ कारणत्वोपगमात्। ८ कारणकाले। ९ कारणव्यापारेण। १० कुतश्चिदन–आ०, ब०, प०। ११ सतत आ०, ब०। सतत प०। १२ तदनन्तरनियम।

**न्यसति** तद्व्यपदेशविषये **यज्जात तत प्राक् स्वलक्षणं कार्यकरणता तयोः** कार्यत्वमसत कारणत्व जातस्येति। शेष पूर्ववत्। न चायमस्मन्मते दोष, न हि तत्र पिण्डादिर्घटादौ सत्यसति वा व्याप्रियते यदयं प्रसङ्ग स्यात्, अपि तु स्वय तद्रूपो भवति। स एव खलु भावस्तत्र यत्प्रतिक्षण परिणामो नाम। तस्य यदन्यत्र सत्यसति च व्यापारनिषेधात् कारणत्वप्रतिक्षेप, प्रतिक्षिप्यताम्। न काचित् क्षति, तावतैव तत्र वस्तुत्वस्यावस्थानात्। अथ परिणाम एव तत्स्तस्य प्रतिक्षिप्यते, तन्न, तस्य तदनायत्तत्वात्। स्वभावतो हि तस्य परिणामो नान्यत्र व्यापारात्। अत एवोक्तम्[1]–"**परिणाम स्वभाव स्याद भाव**" इति "**अयमर्थक्रिया हेतु,**" इत्यपि[2] तद्रूप्यापेक्षयैवोक्त नान्यत्र व्यापारात्। कथमेव घटादौ चक्रचीवरादे कारणत्वम्? अतत्परिणामत्वादिति चेत्? तत्रापि सन्निधिमात्रेणोप कारात् तद्व्यवहारो न मुख्यत। मुख्यतस्तु पिण्डादेरेव तत्त्व तत्परिणामत्वादिति न किञ्चिदसमञ्ज समुत्पश्याम।

'**भेदिनाम्**' इत्यादिना परमपि परस्य शिलाप्लव दर्शयति–**भेदिनाम्** अन्योऽन्यविल क्षणाना **प्रत्यभिज्ञा**[3] तदेकत्वपरामर्श इति। अथवा, भिद्यन्ते सजातीयादन्यतश्चेति भेदा निरंशा भावास्ते सन्त्येषामिति **भेदिनस्तद्वादिन** तेषा **प्रत्यभिज्ञा इति अय रचित**:। **शिलाप्लव एव**। पूर्वत्र सुगतेतरज्ञानयोरपि तत्प्रसङ्गादुत्तरत्रासम्भवात्। न हि निरंशवादिना साश वस्तु सम्भवति तद्वा त्रिलव्यापत्ते। साशा च प्रत्यभिज्ञा[4] नानापरामर्शरूपत्वात्। तदपि कल्पनयैव तस्येति चेत्, यतस्त त्कल्पन तस्य तर्हि कथम्? अतद्रूपेण तत्कल्पनानुपपत्ते। तस्यापि कल्पनयैवेति[5] चेत्, न, अनवस्था-प्रसङ्गादिति पर्याप्त प्रबन्धेन।

तदेव पक्षधर्मत्वादिकमन्तरेणापि अन्यथानुपपत्तिबलेन हेतोर्गमकत्व तत्र तत्र स्थाने प्रतिपाद्य नेद[6] स्वबुद्धिपरिकल्पितमपि तु परागमसिद्धमित्युपदर्शयितुकामो भगवत्सीमन्धरस्वामि तीर्थकरदेवसमवसरणात् गणधरदेवप्रसादा[7]दासादित देव्या पद्मावत्या यदानीय पात्रकेसरिस्वामिने समर्पितमन्यथानुपपत्तिवार्त्तिक तदाह–

**अन्यथानुपपन्नत्व यत्र तत्र त्रयेण किम् ? ॥१५४॥**

**नान्यथानुपपन्नत्व यत्र तत्र त्रयेण किम् ?। इति।**

**अन्यथा** अन्येन साध्याभावप्रकारेण **अनुपपन्नत्वम्** असम्भवनियमो **यत्र** हेतौ **तत्र त्रयेण** पक्षधर्मत्वादित्रितयेन कि न किञ्चित् फल विनापि तेन गमकत्वात्। तत्र पक्षधर्मत्वेन विना गमको यथा अस्ति सर्वज्ञ सुनिश्चितासम्भवद्बाधकप्रमाणत्वात्, अस्त्यात्मा उपलब्धेरित्यादि। समपक्ष सत्त्वादिना शब्दानित्यत्वादौ श्रावणत्वादि। न ह्यस्य सत्यपि सपक्षे सत्त्व घटादेरश्रावणत्वात्। नापि व्यतिरेक, तदुपदर्शनविषयस्य कस्यचिदपि दृष्टान्तस्याभावात्। तत्त्रितयेनापि विना, यथा सन्ति प्रमाणानि इष्टसाधनात् सन्ति बहिरर्था साधनदूषणप्रयोगादित्यादि। समर्थित चैतेषाम यथा

१ न्यायवि० श्लो० २।१२३। २ न्यायवि० श्लो० २।१२४। ३ –ज्ञान त– आ०,ब०, प०। ४ –नानाप–आ०, ब०, प०। ५ कल्पनयैवेति आ०,ब०,प०। ६ –वायमेद आ०,ब०,प०। ७ दादापित आ०, ब०, प०। ८ 'विना गमक' इत्यन्वय।

नुपपन्नत्व गमकत्वनिबन्धनमन्यत्र च। ततो युक्त तत्रेत्यादि। ननु यत्र सम्भवस्तत्र तदपि लक्षणमेव, तत्सहितस्यैवान्यथानुपपन्नत्वस्यापि गमकत्वादिति चेत्, न, सम्भवमात्रेण तल्लक्षणत्वे धूमादौ पाण्डित्यादेरपि तत्प्रसङ्गात्। तस्याऽहेतावपि भावान्नेति चेत्; समानं पक्षधर्मत्वादावपि, हेत्वाभासेषु तस्यापि भावात्। समुदितमेव तत्तस्य लक्षणं तच्च नान्यत्रेति चेत्, न, असर्वज्ञसाधने वचनादौ तस्यापि भावात्। निश्चितान्वयव्यतिरेकौ न तत्रेति चेत्, न, कृतकत्वादावपि तदभावस्य निवेदनात्। तन्न सम्भवमात्रेण तस्य तल्लक्षणत्वम्। अथवा, 'त्रयेण' इत्यत्र इतिशब्दो द्रष्टव्यः, त्रयेणेति किं कस्मात्? 'चतुष्टयादिरूपेण हेतु' इति वक्तव्यं रूपान्तरस्यापि भावादिति भावः। तत्रावत् प्रथममन्यथानुपपन्नत्वम्। न च तत्त्रैरूप्यमेव, तदभावेऽप्युक्तेषु[2] हेतुषु भावात् तद्भावेऽपि वचनादावभावात्। तथा ज्ञातत्वमपि। नह्यज्ञातस्य गमकत्वम्, अतिप्रसङ्गात्। ज्ञातत्वं नाम ज्ञानमेव ज्ञातव्यवहारस्य तन्निबन्धनत्वात् तत्कथं हेतो रूपम् अर्थान्तरत्वादिति चेत्? न; ज्ञानं प्रति कर्मभावस्य तत्त्वात्[3]। तदपि कथं रूपान्तरं त्रैरूप्याद्व्यतिरेकादिति चेत्, न, अज्ञातव्यावृत्तिरूपतया तदन्यव्यावृत्तिरूपात् ततस्तस्य व्यतिरेकात्। यदि च ततस्तस्याव्यतिरेकात् न रूपान्तरत्वम्; अन्वयव्यतिरेकयोरपि परस्परतो न भवेत् तदविशेषात्। व्यतिरेक एव तयो[6], भावाभावरूपत्वात्–सपक्षे भावो ह्यन्वयो विपक्षे चाभावो व्यतिरेक इति चेत्, कथमेवमितरवचनादितरस्यापि प्रतिपत्तिः? नियमवतस्तद्वचनस्य तथा सामर्थ्यात्, नियमवत् खलु तद्वचनं सपक्ष एवास्ति विपक्षे च नास्त्येवेति, तस्य तादृशी शक्तिर्यदेकमप्युभयं गमयतीति चेत्; कथं पुनर्वस्तुन्यसतो नियमस्य तेनाभिधानम्? तथा स्वरूपस्याप्यसत एव तत्प्रसङ्गात्। तथा च न तस्यापि त्रिरूपत्वम्, असतस्तदनुपपत्तेरित्येकं पक्षधर्मत्वमेव तद्रूपमवशिष्येत। ततः स्वरूपवत् सत एव तस्याप्यभिधानमिति कथं न परस्परं तयोरव्यतिरेकः? नियमवतोऽन्वयस्यैव व्यतिरेकत्वाद् व्यतिरेकस्यैव चान्वयत्वात्। भवतु नियमवत इतरस्याव्यतिरेकादरूपान्तरत्वं न केवलादिति चेत्, न, केवलस्येतरस्य चाविलक्षणत्वात्। व्यतिरेकोऽपि तद्वत इतरस्यास्त्येव विधिनिषेधरूपतयेति चेत्, युक्तमत्र[7] ज्ञातत्वस्यापि त्रैरूप्याद् व्यतिरेकः तद्विलक्षणव्यावृत्तिरूपत्वात्। तथापि तद्वचनादेव तदवगम्यते ज्ञातस्यैव तस्य तल्लक्षणत्वात्, अज्ञातस्य गमकत्वायोगात्। अतो [ऽ] रूपान्तरं तदित्यपि न सङ्गतम्, अन्वयादरपि तत्प्रापत्तेः। अन्यतरवचनाभिधेयत्वस्य स्वयमेवोपगमात्। पक्षधर्मत्वादित्रयस्य वा परस्परं तस्यापि तत्प्रापत्तेः। एवोक्तम्–कृतकमनित्यं प्रयत्नान्तरीयकमनित्यमिति हेतुवचनादेवाधिगते, हेतोर्विना तेनासम्भवात्। अत एवोक्तम्–"विदुषा वाच्यो हेतुरेव हि केवलः।" [प्र० वा० ३। २६] इति। अशक्तित तद्वचनात्, तदनवगच्छता पृथगेव तस्याभिधानाद्रूपान्तरमेव ततस्तदिति चेत्; न, ज्ञातत्वेऽप्येव तत्त्वोपपत्तेः। अतो रूपान्तरमेव तद्वक्तव्यम्।

एवमबाधितविषयत्वमपि, तदन्यस्यागमकत्वात्। नन्वबाधितत्वं नाम बाधकस्य

---

१ पक्षधर्मत्वादिकमपि। २ –षु भा– आ०, ब०, प०। ३ ज्ञातत्वात्। ४ 'अत्र त्रैरूप्यव्यावृत्तिरूपात् –ता० टि०। ५ त्रैरूप्यात्। ६ अन्वयव्यतिरेकयोः। ७ उत्तरमत्र आ०, ब०, प०। ८ –स्तद्रूपा –आ०, ब०, प०। ९ अरूपान्तरत्वम्।

निवृत्तिः, अनुपलब्धिर्वा भवेत् ? निवृत्त्यापि साध्याभावस्य निवर्तने व्यर्थो हेतुः, तावता साध्यसिद्धेः, अभावनिवर्तनस्य भावविधानरूपत्वात् । अनिवर्तने तु न तन्निवृत्तिः तल्लक्षणं तदनिवर्तनात् तत्प्रवृत्तिवत् । तन्न तस्य निवृत्तिरबाधितत्वम् । अनुपलब्धिस्तदिति चेत्; ततोऽपि यदि बाधकस्य निवृत्तिप्रसङ्गः पूर्ववत् । संशयश्चेत्; सिद्धः सत्यपि बाधके हेतुप्रयोगः, संशये पाक्षिकस्य तस्य भावात्, अन्यथा तदसम्भवात् । तन्न तदनुपलब्धिरप्यबाधितत्वं तद्रूपम् । तदुपलब्धावप्येवं तत्प्रयोगस्यानिवारणात् बाधोपगमस्येतरत्राप्यविशेषादिति चेत्, कथमेवमविनाभावोऽपि हेतुलक्षणम् ? कथं च न स्यात् ? उच्यते–स हि तावन्न साध्याननुपातिनो निश्चयस्य विषयः; तदपेक्षत्वात् । तदनुपातित्वे तु निश्चयस्य व्यर्थो हेतुस्तत एव साध्यसिद्धेः । स्यादयं प्रसङ्गो यदि धर्मिण्येव तन्निश्चयो न चैवं दृष्टान्ते तदुपगमादिति चेत्; धर्मिण्येव कुतो न तन्निश्चयः ? तत्र साध्याभावेऽपि हेतुसम्भवात्; न तर्हि तत्र ततः साध्यसिद्धिः, सत्यपि साध्ये शक्त्यभावादिति चेत्; कथं तर्हीदमर्चटेनोक्तम्[2]–"तस्मात् स्वसाध्यप्रतिबन्धाद्धेतुस्तेन व्याप्तः सिद्ध्यति, स च विपर्यये बाधकप्रमाणवृत्त्या साध्यधर्मिण्यपि सिद्ध्यतीति न किञ्चिदन्यत्रानुवृत्त्यपेक्षया ।" [ हेतुबि० टी० पृ०२५ ] इति ? सत्यामपि तत्र तन्निश्चयेन साध्यसिद्धौ न भवत्येव हेतोः प्रयोगः । समारोपव्यवच्छेदार्थ इति चेत्; न, निश्चिते समारोपाभावात्, अन्यथा बाधाविरहनिर्णयादपि तत्सिद्धौ तदर्थ एव तत्प्रयोगः स्यादिति न युक्तमेतत् हेतुबिन्दावुक्तम्–' 'तत्किमिदानीं हेतोः सामर्थ्यमबाधयैव साध्यसिद्धेः ।" [ हेतुबि० पृ०२०८ ] इति । तस्मादबाधितविषयत्वमपि रूपमेव हेतोरविनाभाववत् । तदभावे को दोषो येन तदपि तस्य रूपं परिकल्प्येत ? बाधितविषयस्यापि हेतुत्वं प्रसज्येतेति चेत्; न; सत्यविनाभावे तद्विषयत्वस्यैवासम्भवात् । सम्भवे तेन साध्यस्य निषेधोऽपि विधिश्चाविनाभावेनेति दुस्तरमेव दौस्थ्यं तस्यापद्येतेति चेत्; उच्यते–पक्षधर्मत्वादेरप्यभावे किं भवेत् यतस्तस्य तद्रूपत्वकल्पनम् ? अपक्षधर्मत्वादेरपि हेतुत्वं प्राप्नोतीति चेत्, न; असत्यविनाभावे तदसम्भवात् । सत्येवेति चेत्; तथापि कथं तस्याहेतुत्वम् ? त्रैरूप्याभावादिति चेत्; तदेव दौस्थ्यं तत्राप्यापतितं तदभावादहेतुत्वम् अविनाभावाच्च विपर्यय इति । अविनाभावोऽपि तदभावे नास्त्येव तस्य तत्रैव नियमादिति चेत्; न; तस्य निषेधात् । ततो न त्रैरूप्यस्यापि कल्पनमर्थवत् व्यवच्छेद्याभावात् । सम्भवमात्रेण तु कल्पनम्[3] अबाधि [त] विषयत्वेऽपि, सर्वत्र सम्भवेन ततस्तस्य विशेषाच्च ।

एवमसत्प्रतिपक्षत्वमपि रूपान्तरम् । किं पुनरिदमसत्प्रतिपक्षत्वम् ? असम्भवत्प्रतिहेतुत्वमिति चेत्; कुतस्तन्निश्चयः ? प्रतिहेतोरदर्शनात्; न; दर्शनेन भावस्याव्याप्तौ अदर्शनादभावनिश्चयस्यानुपपत्तेः । न च दृष्टप्रतिहेतुसदृशे ततस्तन्निश्चय, संशयस्यैव सम्भवात्–तत्रेवात्रापि किं भवति प्रतिहेतुः किं वा न वेति । तद्विलक्षण इति चेत्; तदेव तर्हि वैलक्षण्यं स्वलक्षणमस्तु हेतोः, तत

१ तस्यापि आ०,ब०,प० । २ -मर्चतेनो- श्रा०,ब०,प० । ३ -मबाधवि- आ०,ब०,प० ।

एवं तस्यासाध्यव्यावृत्त्या साध्यनिश्चयकारित्वात् व्यर्थमसत्प्रतिपक्षत्वम् । 'अप्रदर्शितप्रतिहेतुत्वम् असत्प्रतिपक्षत्वम्' इत्यपि न युक्तम्, प्रज्ञावता पुरुषेण कदाचित् तत्प्रदर्शनस्यापि सम्भवात् । यावत्तदप्रदर्शनं तावत् गमकत्वमेवेति चेत्; न तर्हि हेतुः [1]वस्तूनि स्वसाध्यप्रकृतीनि कृत्वा तत्प्रमाणकान् पुरुषानभ्युदयनिःश्रेयसाभ्यां संयोजयति, पुनश्च प्रतिभावता पुरुषेण प्रतिहेतूपदर्शनेनोत्कीलितसाधनसामर्थ्यं तानि [2]वस्तूनि तांश्च पुरुषान् वृद्धत्वसम्पदः स्वसाध्यप्रकृतित्वसम्पदोऽभ्युदयनिःश्रेयससम्पदश्च प्रच्याव्य भ्रष्टराज्य इव राजा तपोवनं गच्छेत् । कथं वा स्वयमतत्साध्यनियतस्तदुपदर्शनात् प्रागपि तत्र हेतुः ? तत्साध्ये नियते च कथं प्रतिहेतोः सम्भवः प्रदर्शनं वा विरोधात् ? अतो नासत्प्रतिपक्षत्वं हेतुरूपमुपपन्नमिति चेत्, कुतः पुनरेवं ब्रुवतस्तथापि हेतोर्गमकत्वम् ? प्रतिबन्धादेव तादात्म्यादेरिति चेत्; न, तन्निश्चयस्याप्यशक्यत्वेन वक्ष्यमाणत्वात् । ततो न कश्चिदपि हेतुः, तस्यापि सन्दिग्धस्यातल्लक्षणत्वात् । यदप्युक्तम्–तत्साध्यनियते चेत्यादि, तदपि न सङ्गतम्, विनाशनियतेऽपि तद्भावं प्रयत्नपेक्षणे परिणामसाधनतया तत्रैव प्रतिहेतोः सम्भवात् । प्रतिपादितं[3] चैतत् "परिणामस्वभावः स्यात्" इत्यादिना । अभिप्रेतं च विनाशनियतत्वं तस्य स्वयं ततस्तत्साधनात् । ततो [4]नातन्निश्चयमात्रादेव प्रतिहेत्वभावाभाव इति पृथगेवासौ तल्लक्षणतया वक्तव्य इत्युपपन्नम् अन्यथानुपपन्नत्वादिभिश्चतुर्भिः पक्षधर्मत्वादिभिश्च सप्तलक्षणो हेतुरिति त्रयेणेति किम् इति ।

अथवा त्रयेण कार्यस्वभावानुपलम्भरूपेणेति व्याख्येयम् । न हि तेनापि किञ्चित्, रूपान्तरेणापि हेतोर्भावात् । कार्यादिरूपादेवाविनाभावः ।

"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्न न दर्शनात् ॥" [प्र० वा० ३।३०] इति वचनात्,

तदभावे कथमविनाभावो यतो रूपान्तरेणापि हेतुत्वमिति चेत् ? कुतः पुनरिदं तत एव न तद्भाव (तदभाव) इति ? न तावत्तद्रूपत्वात्, रसादिकृत्तिकोदयादेः रूपादिशकटोदयादिसाधनस्य तदभावेऽपि तद्भावात् । न हि तादृशस्य ताद्रूप्यम्, अतिप्रसङ्गात् । वक्ष्यते[5] चैतत्–"तुलोन्नाम" इत्यादिना । नापि तज्ज्ञाप्यत्वात्, तत्र तदभावेऽपि तज्ज्ञप्तेर्भावात् । अपि च,

प्रत्यक्षत्वेन तत्तस्य ज्ञापकं नोपपत्तिमत् ।
अज्ञत्वात् पञ्चमस्यापि प्रत्यक्षस्य प्रसङ्गतः ॥१४८४॥
लिङ्गत्वाच्चेत् परस्तत्राविनाभावः प्रकल्प्यताम् ।
तस्यापि ज्ञप्तिरन्यस्मात् कार्यत्वादेस्ततो भवेत् ॥१४८५॥
एवं सत्यनवस्थानात् क्व तज्ज्ञप्तिः प्रकल्प्यताम् ।
लभ्यतेऽनुमितिर्यस्याः क्षणभङ्गादिसाधनी ॥१४८६॥
प्रमाणान्तरभावेन ततस्तज्ज्ञप्तिकल्पनम् ।
तव पथ्यं न वेत्येवं भवतैवावधार्यताम् ॥१४८७॥

---

१ वस्तुनि आ०, ब०, प० । २ हेतुरस्यापि आ०, ब०, प० । ३ न्यायवि० श्लो० २।१२३ । ४ न तन्नि– आ०, ब०, प० । ५ –स्वभाव इति आ०, ब०, प० । ६ न्यायवि० श्लो० ३३८ ।

अप्रमाणात् ततस्तस्य ज्ञप्तिं कल्पयता त्वया ।
प्रमाणचिन्तावैयर्थ्यं सर्वत्र स्यात् समर्थितम् ॥१४८८॥
कुतो वा तस्य संवित्तिः कार्यादेर्यंततो भवेत् ।
अविनाभावसंवित्तिरज्ञातात्तदसम्भवात् ॥१४८९॥
अविनाभावतश्चेत् स्यात्तस्यापि प्रतिवेदनम् ।
प्रत्यक्षादिविकल्पोक्तो दोषः सर्वोऽनुषज्यते ॥१४९०॥
कार्यादेरविनाभावविचित्तस्तस्याश्च तद्गतिः ।
इत्यन्योऽन्याश्रयो दोषो दुस्तरः प्रसजत्ययम् ॥१४९१॥
प्रत्यक्षात्तस्य संवित्तौ वक्ष्यामो वयमुत्तरम् ।
लिङ्गात्तु तत्परिज्ञानमनवस्थानमुद्वहेत् ॥१४९२॥
लिङ्गं तदविनाभावात् कार्यत्वादेश्च तद्गतिः ।
तस्यापि लिङ्गतोऽन्यस्मादविनाभाविनो गतिः ॥१४९३॥ इति ।

तत्र सज्ज्ञाप्यत्वात्तत एव स इति युक्तम्, ज्ञाप्यस्य ज्ञापकनियमाभावाच्च । ततो युक्तमन्यथापि हेतुभावात् कार्यादित्रयेण किमिति । एवं पूर्ववदादिना[1] संयोग्यादिना[2] वीतादिना[3] च त्रयेण किमिति व्याख्येयम् ? वक्ष्यते चैतत्–'एतेन' इत्यादिना[4] ।

भवतु नाम यत्रान्यथानुपपत्तिस्तत्र त्रयेण किमिति, तेनैव पर्याप्तत्वात्, अन्यथापि हेतुभावाद्यत्र नास्ति न तत्र, तत्र त्रैरूप्यस्यैव गमकत्वात् । हेतोश्च त्रिविधस्यैव भावादिति चेत्, न; अन्यथानुपपत्त्यभावे गमकत्वस्यासम्भवात् अतिप्रसङ्गात् । अगमकधर्मणश्च अहेतुत्वात् । एतदेव 'नान्यथा' इत्यादिना दर्शितम् । स्वपरप्रसिद्धं चैतद्, अत्र चोदाहरणं सकलमपि क्षणभङ्गाद्येकान्तसाधनं प्रतिपत्तव्यम् । तस्यान्यथानुपपत्तिवैकल्यञ्च यथाप्रतिभासमनेकान्तस्यैव ततः सिद्धेर्विरुद्धत्वात् यथाकल्पनमसिद्धेः इष्टवदितरत्रापि भावेन व्यभिचाराच्च । तदुक्तम्—

"असिद्धः सिद्धसेनस्य विरुद्धो देवनन्दिनः ।
द्वेधा[5] समन्तभद्रस्य हेतुरेकान्तसाधनः[6] ॥" [ सिद्धिवि० परि० ६ ] इति ।

तस्मादन्यथानुपपन्नत्वादेव हेतुः । सत्यसति च तस्मिन् त्रिरूपत्रैविध्ययोर्वैयर्थ्यात् । कुतस्तर्हि तत्प्रतिपत्तव्यमिति चेत् ? ननु नोक्तमेव वक्तव्यं–"साध्ये सति" इत्यादिना[7] । यद्येतावता न परितोषः, वक्ष्यामः । भवतस्तु स्वभावादिरूपस्य हेतोः कुतः प्रतिपत्तिः ? प्रत्यक्षादेवेति चेत्, न तत्र साकल्येन तदसम्भवात् । न हि तत् 'सर्वत्र सर्वदा शिंशपादिः वृक्षादिस्वभाव एव, धूमादिरग्न्या-

१ "अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतोदृष्टं च ।" –न्या० सू० १।१।५। २ "संयोगिसमवाय्येकार्थसमवायि विरोधि च ।" –वै० सू० ३।१।९। ३ "तत्र प्रथमं तावद्द्विविधम्–वीतमवीतं च ।" –सां० त० कौ० का० ५। ४ न्यायवि० श्लो० ३४२ । ५ अनैकान्तिकः । ६ "समन्तभद्रस्य सत्त्वादिरचलात्मनि । –प्रमाणसं० पृ० ११३। " विरुद्धो मल्लवादिनः" । –जैनतर्कवा० २५२ । स्या० र० पृ० १०३२ । ७ न्यायवि० श्लो० २।१२६ ।

दिजन्मैर' इतीयतो व्यापारान् कर्तुं समर्थम्, देशकालव्याप्त्या स्वयमप्रवृत्ते, प्राणिमात्रस्यापि सर्वदर्शित्वप्रसङ्गात् । अन्यत्र वृत्त तत्र करोत्येव तानिति चेत्, न, तत्राप्यपरामर्शरूपत्वात् । किंवा तत्र तत्करणेन ? तत एव साध्यस्यापि सिद्धेरनुमानवैयर्थ्यात् । उक्तञ्चैतत्–"सम्बन्धो यत्र" इत्यादिना । तत सामस्त्येनैव तत्करणमभ्युपगन्तव्यम् । तच्च ततो न सम्भवति । तदेवाह–

**प्रत्येति न प्रमा हेतु [ प्रत्येति पुनरप्रमा ] ॥१५५॥** इति ।

**प्रमा** प्रत्यक्षरूपा तदन्यरूपाया व प्रमाणत्वात्, **न प्रत्येति** न परिच्छिनत्ति **हेतुम्** उक्तरूपमुक्तादेव न्यायात् । मा सौ स्वं प्रतिगात्, तज्जन्मा तु विकल्प प्रत्येति तद्व्यावृत्ते परामर्शरूपत्वादिति चेत्; न, तस्यागृहीतग्रहाविसंवादाभ्या प्रत्यक्षानुमानयोरतल्लक्षणत्वेनानन्तर्भाविन प्रमाणान्तरत्वप्रसङ्गात् । अप्रमाणत्वे वा कुतस्ततो हेतुप्रतिपत्ति ? एतदेवाह–'प्रत्येति पुनरप्रमा' इति । नेति हेतुमिति चानुवृत्तम् । पुनरिति । पुनर्भावी विकल्प **पुनः प्रत्येति हेतुम्** । कस्माद् **अप्रमा** प्रमाण यत इति । मा भूत् प्रमाणात् तस्य प्रतिपत्तिरप्रमाणादेव भवत्विति चेत्, अत्राह–

**प्रमाहेतुतदाभासभेदोऽयं सुव्यवस्थितः ।** इति ।

प्रमा च हेतुश्च तयोराभासो च प्रमाहेतुतदाभासा, प्रमातदाभासौ हेतुतदाभासौ चेत्यर्थ । तेषा **भेदो** नानात्वम् **अय** प्रतीयमान **सुव्यवस्थितः** 'न व्यवस्थित' इत्यर्थ । उपहसनपरत्व वचनस्य । तथा हि–

यदि प्रमाणतो हेतु कुतश्चिन्नावगम्यते ।
नानुमान तदा तस्य हेतोरेव समुद्भवात् ॥१४९४॥
तदभावे कथन्नाम तदाभासव्यवस्थिति ।
सौगतैरवकल्प्येत प्रत्यक्षात्तदसम्भवात् ॥१४९५॥
अन्यथा तद्व्यवस्थाया कथ मानान्तरास्तिता ।
प्रमाणेतरसामान्यस्थितेरित्यादिनोच्यताम् ॥१४९६॥
अप्रमाणाद् गतो हेतोस्तदाभासादिसम्भवी ।
हेतुरन्यस्तदाभास सयोग्यादिरशेषत ॥१४९७॥
इति हेतुतदाभासभेदस्यावस्थिति कथम् ।
प्रमाणादेव तद्युक्तेरन्यथा नियमक्षते ॥१४९८॥

भवतु तर्हि प्रमाणादेवानुमानाद्धेतुप्रतिपत्तिरिति चेत्, अत्राह–

**नियमेन न गृह्णाति निःशङ्कं चतुरस्रधीः ॥१५६॥**
**अन्यथाऽसम्भवेऽज्ञाने [ त्वर्थश्चात्मव्यवस्थितः ] ।** इति ।

चतुरस्रधीरनुमानबुद्धि सकलव्यवहारनिबन्धनत्वेन तस्या एव चतुरस्रतोपपत्ते न गृह्णाति न

१ तानीति आ०,ब०,प० । व्यापारान् । २ न्यायवि० श्लो० २।७३। ३ प्रत्यक्षप्रमा । ४ हेतुम् ।

प्रत्येति 'हेतुम्' इति गतेन सम्बन्धः । ग्रहणं किंविशिष्टम् ? निःशङ्कं शङ्काया निष्क्रान्तम् । उपलक्षणमिदं तेन निर्विपर्ययमपि । कदा न गृह्णाति ? अन्यथासम्भवे साध्याविनाभावे हेतोरज्ञाने अविद्यमानपरिच्छेदे सति । केन कारणेन तदापि सा न तं गृह्णातीति चेत् ? नियमेन नियमः तदा सैव नास्तीति योगः तेन[1] । न तत्परिज्ञानजन्मा तद्धीस्तदभावे भवति, अभवन्ती च कथं गृह्णीयात्, सत्येव धर्मिणि तद्धर्मोपपत्तेः ? सत्येव तस्मिन् तज्ज्ञाने सा तं गृह्णातीति चेत्, अत्राह–'नियमेन' इत्यादि । चतुरस्रधीः न हेतुं निःशङ्कं गृह्णाति । कदा ? अन्यथासम्भवे यज्ज्ञानं तस्मिन् सति । केन ? नियमेन । यमः उपरमस्तस्याभावो नियमः निश्चितत्वं, तेन । चतुरस्रधिय इति विभक्तिपरिणामेन सम्बन्धः । तात्पर्यमत्र-यतस्ते तज्ज्ञानात्तद्धीः, तदपि तत एव परस्पराश्रयः–सत्यां तस्यां तज्ज्ञानं तस्मिंश्च तद्धीरिति । अन्यतस्तद्धिय इति चेत्, आगतस्तर्हि तदनुपरमः तन्निमित्तस्यापि ज्ञानस्यान्यतस्तद्धियो भावात्, पुनस्तन्निमित्तस्यापि तज्ज्ञानस्येत्येवं क्वचिदप्यवस्थानात् । तन्नानुमानमपि हेतुं प्रत्येति ।

मा भूत् प्रमाणतदाभासादिभेदः स्वयमप्यलङ्कारकृता तन्निरासस्येष्टत्वात्, अविचारितरम्यया कल्पनयैव तदुपगमात्, तत्त्वतस्तु संविदद्वैतमेव तस्य तत्त्वम्, तस्य च प्रमाणेतरविकल्पातिपातिनः स्वसंवेदनादेव प्रतिपत्तिरिति चेत्, अत्राह–'ह्यर्थश्चात्मव्यवस्थितः' इति । हि स्फुटम् अर्थश्च न केवलं तदेव ज्ञानम् आत्मना स्वभावेन न कल्पनया व्यवस्थितः तत्कथमद्वैतम् ? अर्थव्यवस्थितौ द्वैतस्यैवोपपत्तेरिति भावः । कुतस्तद्व्यवस्थितिरिति चेत् ? ज्ञानवत्प्रतीतेरेव, इयांस्तु विशेषः स्वतो ज्ञानस्यार्थस्य तु तत इति । तत इत्यपि कुत इति चेत् ? स्वत इत्यपि कुतः ? तथानुभवात् समानमन्यत्र । तथापि न तद्व्यवस्थितिस्तत्प्रतीतेर्भ्रान्तत्वात् स्वप्नतत्प्रतीतिवदिति चेत्, ज्ञानस्यापि न व्यवस्थितिः, तत्प्रतीतेरपि बाह्यप्रतीतिवद् भ्रान्तत्वात् । प्रतीतित्वेऽपि बाह्यस्यैव प्रतीतिर्भ्रान्ता न ज्ञानस्येति चेत्, अनुकूलमाचरसि–बाह्यप्रतीतिरपि स्वप्नवत्तत्र भ्रान्ता न परेत्यभिमतसिद्धेः । कथं चैवमनुमानमद्वैतवादे ? कथं च न स्यात् ? हेतुजन्मना तेनैव हेतुफलभावस्य तद्वादप्रत्यनीकस्यावतारणात् । नायं दोषः परिकल्पितत्वात्तद्वावस्येति चेत्, तर्हि तन्निबन्धमनुमानमपि कल्पितमेवेति कथं ततः क्वचिद्विभ्रमस्य विधिरविभ्रमवत् ? कथं वा क्षणक्षयादेरेव ततः प्रतीतिर्न नित्यादेरपि यतः सत्स्वपि स एव सत्त्वं नित्यादेरिति व्यवस्था शोभामनुभवतीति ? तन्न कल्पितस्तद्भाव उपपन्नः । तदाह–

प्रतिव्यूढस्तु तेनैव प्रभवोऽनलधूमयोः ॥१५७॥

प्रत्यक्षेऽर्थे प्रमाणेन विकल्पेन प्रकल्पितः । इति ।

प्रतिव्यूढः प्रतिक्षिप्तः तुरिति वितर्के । कः ? प्रभवः कार्यकारणभावः । कयोः ? अनलधूमयोः उपलक्षणमिदमन्येषामपि लिङ्गलिङ्गिज्ञानादीनाम् । कीदृशः ? प्रमाणेन विकल्पेन प्रकल्पित इति । सुबोधमेतत् । न चेदमसमञ्जसमेव परस्य–"निष्पत्तेरपराधीनमपि कार्यं स्वहेतुना । सम्बध्यते कल्पनया ।" [ प्र० वा० २।२६ ] इत्यभिधानात् । केन प्रतिव्यूढः ? तेनैव प्रागुक्तेनानुमानतदाभासभेदानवस्थितिन्यायेनैव नापरेण । तथा हि–

१ तेन विम– आ०, ब०, प० । २ तेन तर्हि प० । तेन नास्ति– आ०, ब० । ३ –ति न न– आ०, ब०,प० । ४ अनुमानेन ।

कल्पितप्रभवाधीनं क्षणिकाद्यनुमानवत् ।
नित्यत्वाद्यनुमानं च तदाभासि भवेत् कथम् ॥१४९९॥
तद्वद्धा पूर्वकस्यापि तदाभासत्वसम्भवात् ।
अनुमानतदाभासभेदोऽयं सुलभः कथम् ॥१५००॥

न केवलं तयोरेव प्रतिबन्धोऽपि तु प्रत्यक्षे स्वसंवेदने अर्थे तद्विषये च, अर्थतत्प्रत्यययोरपीत्यर्थः । अत्र 'तेनैव' इति निर्विकल्पेतरभेदानवस्थानेनेति व्याख्येयम् । तथा हि–

प्रत्यक्षं निर्विकल्पं चेत् कल्पितादर्थजन्मनः ।
सविकल्पकमप्येवं तत एव कथन्न तत् ॥१५०१॥
नास्त्यर्थः सविकल्पश्चेन्निर्विकल्पोऽस्त्यसौ कथम् ?
प्रत्यक्षात्तत्प्रतीतेश्चेद्विकल्पमल्पवर्जितात् ॥१५०२॥
नाविकल्पात्तत सिद्धात् सिद्धश्चार्थोऽविकल्पकः ।
तस्माच्च सिद्धात्तत्सिद्धिरित्यन्योऽन्यसमाश्रयात् ॥१५०३॥
अध्यक्षादन्यतोऽर्थश्चेदविकल्पः प्रसिद्धिमान् ।
अन्यस्याप्यविकल्पत्वे कथं नाध्यक्षमेव तत् ॥१५०४॥
विकल्पत्वे कथं तस्मादविकल्पार्थवेदनम् ।
विकल्पोऽवस्तुनिर्भासी यतो वः स मतोऽखिलः ॥१५०५॥
कल्पनात सतोऽप्यर्थात् प्रत्यक्षं यदकल्पकम् ।
सविकल्पकमेतातस्तत्र कस्मान्निगद्यते ॥१५०६॥
लोकस्य यद्यदेवेष्टं प्रत्यक्षमविगानतः ।
न लोकातिक्रमी युक्तस्तत्कल्पो लोकमिच्छताम् ॥१५०७॥
ततोऽर्थजन्मनः कल्पात् प्रत्यक्षं निर्विकल्पकम् ।
विकल्पकमुतेत्येव भेदोऽयं दुर्विनिश्चयः ॥१५०८॥

तस्मात्तद्भेदनिश्चयमभ्युपगच्छता तत्स्वत एवार्थज्ञानयोरनलधूमादेश्च प्रभवोऽयमभ्युपगन्तव्यः । एवमेव तत् प्रमाणेन प्रत्यक्षादेव तत्प्रतिपत्तेः । एतदेव दर्शयति–

**प्रत्यक्षानुपलम्भाभ्यां यदि तत्त्वं प्रतीयते ॥१५८॥ इति ।**

तत्त्वमनलधूमयोर्हेतुफलभावः प्रतीयते प्रत्यक्षादेव अनुपलम्भसहायात् अनुपलम्भाद्वा प्रत्यक्षसहायात्, ततस्तात्त्विक एवायम् । दृश्यते हि प्रागनलाभावेऽनुपलब्धो धूमः, तद्भावे दृष्टोऽपि तद्भावे पुनर्न दृश्यते च तदभावे, तस्मात् स तस्यैव कार्यम् अन्यथाऽस्य तत सकृदप्यसम्भवादिति भावः । परस्य तत्रोत्तरमाह–

१ एवमेतत् आ०, ब०, प० । २ तद्भावे आ०, ब०, प० । तद्भावे इति पदं व्यर्थम् ।
३ अकारणस्य आ०, ब०, प० ।

कल्पितोऽपि क्षणक्षीणे वस्तुन्येव स सम्भवी ।
तस्य प्रत्यक्षतः सिद्धेर्न नित्यादौ विपर्ययात् ॥१५१०॥
इत्यप्ययुक्तं प्रत्यक्षात्तस्याप्यप्रतिपत्तितः ।
जात्यन्तरगतत्वेन तस्य पूर्वं निवेदनात् ॥१५११॥
ततः साधारणात्मापि प्रतिबन्धोऽस्तु तात्त्विकः ।
प्रमाणमनुमानं हि नान्यथा स्यात्तदुद्भवम् ॥१५१२॥

तस्य च तर्कादेवाधिगतिर्न प्रत्यक्षात् । तस्याऽतद्विषयत्वे वा कस्यायं व्यापारः स्यात् ?

"अग्निस्वभावः शक्रस्य मूर्द्धा यद्यग्निरेव सः ।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत् ? ॥
धूमहेतुस्वभावो हि वह्निस्तच्छक्तिभेदवान् ।
अधूमहेतोर्धूमस्य भावे स स्यादहेतुकः ॥" [प्र० वा० ३।३५-३६] इत्यादि ।

प्रत्यक्षस्यैवेति चेत्; न, तस्याविकल्पस्यास्यैवं परामर्शासम्भवात् । तज्जन्मनो विकल्पस्येति चेत्; तथापि किमर्थं तन्निरूपणम् ? प्रतिबन्धस्यैव निर्णयार्थम्, प्रत्यक्षप्रतिपन्नस्यापि तस्यानिर्णीतस्य पुरुषार्थं प्रत्यनुपयोगादिति चेत्, विकल्पस्यापि तर्हि कथं तन्निर्णयं प्रत्युपयोगः ? न हि तस्यापि स्वतः परतो वा निर्णय इति । अभिहितञ्चैतत्–अनिर्णीतोऽपि स तत्रोपयुज्यते दृष्टत्वात्, एवं न प्रतिबन्ध' इति । किं कृतमेतत् ? समारोपभावाभावकृतमिति चेत्, तर्हि प्रतिबन्धे प्रतिबन्धसमारोपनिवारणार्थं तन्निरूपणमिति कथं तद्व्यापारवान् विकल्पो न प्रमाणम् ? अप्रमाणात्तन्निवारणायोगादनुमानवत् ।

एतदेवाह–

**सत्यप्यन्वयविज्ञाने स तर्कपरिनिष्ठितः ॥१६०॥**
**अविनाभावसम्बन्धः साकल्येनावधार्यते । इति ।**

अन्वयः प्रतिबन्धस्तस्य विज्ञानं प्रत्यक्षं तस्यैव परैरिष्टेस्तस्मिन् । कथम्भूते ? साकल्येन देशकालान्तरवर्तिसाध्यसाधनव्यक्तिसामस्त्येन अन्यथा सतोऽपि तस्यानुपयोगात् । सत्यपि विद्यमानेऽपि अपिशब्दः सम्भावनायां तस्यतः तदभावात्, अन्यथा प्राणिमात्रस्यापि सुगतविशेषणानुमानवैफल्यप्रसङ्गात् । स प्रसिद्धः स वा पात्रकेसरिस्वामिना निरूपितः अविनाभाव एव सम्बन्धो हेतुसाध्ययोर्न तादात्म्यादिस्तस्याव्यापकत्वात् । अवधार्यते निश्चीयते । कीदृशः ? तर्केण परितो नारोपयता निष्ठितो लब्धप्रतिष्ठः तर्कपरिनिष्ठित इति । साकल्येनेत्यत्रापि वक्तव्यं तथा च [1]किमन्वयविज्ञानेन सत्यपि तस्मिन् तर्कप्रामाण्यस्याशक्यप्रतिक्षेपत्वात् अन्यथा समारोपस्याव्यवच्छेदात् । ततः स एव प्रतिबन्धे प्रमाणयितव्यः परस्यापि "अग्निस्वभाव" [प्र० वा० ३।३५] इत्यादि ब्रुवाणस्य प्रसिद्धत्वान्न तद्विज्ञाने विप्रतिपत्तिरिति मन्यते । पुनरपि तर्कस्यैव प्रामाण्यं द्रढयन्नाह–

[1] किमन्वयवि– प० ।

**सहदृष्टैश्च धर्मैस्तं न विना तस्य सम्भवः ॥१६१॥** इति ।

तस्य अविनाभावस्य सम्भवः । कैः ? सहयुगपद्दृष्टैर्धर्मैः साध्यस्वभावैः रूपादिभिः रसादीनां चशब्दात् क्रमदृष्टैरपि शकटोदयादिभिः कृत्तिकोदयादीनाम् । स किम् ? तं न विना तर्कमन्तरेण न अवधार्यते इति गतेन सम्बन्धः । सहक्रमदर्शनस्य तदभावेऽपि सम्भवात् न ततस्तदवधारणमिति भावः । तर्कस्य यदि न स्वविषये प्रतिबन्धः कथं प्रामाण्यम् ? प्रत्यक्षस्यापि तत एव तद्भावात् । प्रतिबन्धे वा सोऽप्यनुमानमेव तन्निर्णयादुत्पत्तेः प्रसिद्धानुमानवत्, तत्कथं तस्य प्रमाणान्तरत्वमिति चेत् ? अत्राह–

**इति तर्कमपेक्षेत नियमेनैव लैङ्गिकम् ।** इति ।

इत्येवं तर्कमेव एवकारस्यात्र सम्बन्धात् नापरं तस्य प्रतिबन्धाविषयत्वात् अपेक्षेत किम् ? **लैङ्गिकम्** अनुमानं लिङ्गादागतत्वात् कथमपेक्षेत ? **नियमेन** अवश्यम्भावेन । तदनपेक्षत्वे तदनुत्पत्तेः । ततो न स लैङ्गिकं तत्कारणत्वात् । कार्याच्च कारणस्यार्थान्तरस्यात् । अनर्थान्तरमेव ततस्तल्लैङ्गिकमिति चेत्; न; तस्यापि प्रतिबन्धनिर्णयकृतस्तर्कादेवोत्पत्तेः, अन्यतस्तन्निर्णयस्यासम्भवात् । सोऽपि ततोऽपरं लैङ्गिकमेवेति चेत्; न; अनवस्थाप्रसङ्गेन लैङ्गिकवार्ताया अपि विलोपनात् । ततो न तस्य लैङ्गिकत्वम् । प्रतिबन्धे कथमतत्त्वमिति चेत् ? प्रत्यक्षेऽपि कथम् ? निर्णयनिरपेक्षत्वादिति चेत्; समानमिदं तर्केऽपि । कस्तर्हि तस्य स्वविषये प्रतिबन्ध इति चेत् ? योग्यतयैव प्रत्यक्षवत् । प्रत्यक्षेऽपि प्रतिबन्धान्तरस्य तदुत्पत्त्यादेर्निषेधात् । ततो योग्यतयैव प्रमाणं तर्कः । तदेवाह–

**तस्माद्वस्तुबलादेव प्रमाणं [ मतिपूर्वकम् ] ॥१६२॥** इति ।

तस्मात्तदभावे लैङ्गिकस्यासम्भवात् प्रमाणं तर्क इति विभक्तिपरिणामेन सम्बन्धः । स्वतो वस्त्वेव न कल्पितं यद्बलं योग्यतालक्षणं तस्मादेव न तदुत्पत्त्यादेः ।

यद्येवं भवतोऽपि तत्तृतीयं प्रमाणं प्राप्तं प्रत्यक्षवत् परोक्षेऽप्यनन्तर्भावादिति चेत्; आह–

**मतिपूर्वकम् ॥**

**षड्भेदं श्रुतं साक्षात् पारम्पर्येण चेष्यते ।**

श्रुतमित्यस्पष्टज्ञानमुच्यते "श्रुतमस्पष्टतर्कणम्" [त० श्लो० १।२०] इति वचनात् । अस्पष्टं परोक्षमेव । ततः श्रुतमिष्यते तर्क इत्यर्थः । मतिपूर्वकमित्यस्पष्टज्ञानस्य श्रुतव्यपदेशे निमित्तमुक्तम् 'मतिपूर्वं श्रुतम्' इति, स्मृत्यादौ अस्पष्टज्ञान एव तद्व्यपदेशस्य [3]सूत्रे कृतत्वात् । मतिश्चेयमवग्रहादिधारणापर्यन्तज्ञानमुच्यते "तन्मतिज्ञानं चतुर्विधम्" [लघी०श्लो० ६] इति वचनात् । सा पूर्वं कारणं यस्य तद्यथोक्तं श्रुतमिति । तथापि न तर्कस्य श्रुतत्वम् । मतेः स्मृत्यादिना तस्य व्यवधानादिति चेत्, न,साक्षादिव परम्परयापि तत्पूर्वस्य तदुपगमात् । अत एवोक्तम्–'साक्षात् पारम्प-

१ –देशनि– आ०, ब०, प० । २ –ज्ञानमेव आ०, ब०, प० । ३ "श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम्" –त० सू० १।२० इत्यत्र । ४ मतिश्चेह्यवग्र– ता० । ५ –त्वं ज्ञान– आ०, ब०, प० । ६ श्रुतत्वोपगमात् ।

र्येण च' इति । तच्च सूत्रे पूर्वग्रहणादवगतम्, तस्य व्यवहितत्वेऽपि प्रवृत्तिदर्शनेन तत्परिग्रहार्थत्वात्, अन्यथा 'मतिनिमित्तम्' इत्येव सूत्रे वार्तिके च कृतं भवेत् । बहुविधत्वं च तर्कश्रुतस्य क्वचिदेकत्रैव साधनधर्मे तत्सामान्यस्य साध्यसामान्येन पुनः क्षयोपशमवशात्तद्विशेषग्रहणे तस्य साध्यविशेषेण पुनस्ततोऽपि सूक्ष्मस्य तद्विशेषस्यावधारणे तस्यापि तद्विशेषेण तद्विशेषेण अविनाभावनिर्णयात् । यदपेक्षयेदं बौद्धेनोक्तम्– "सर्वाकारानुमानं यत् प्रत्यक्षात् तत्र भिद्यते ।।" [प्र० वार्तिकाल० १।१३८] इति । तथा देशादिव्यवहितस्य शब्दकृतकत्वादिधर्मिहेतुकलापस्यापि तत एव प्रतिपत्तिः ऊहापोहरूपत्वाच्च प्रतिपत्तव्यम् । ततो न तस्य प्रमाणान्तरत्वं परोक्ष एवान्तर्भावात् । बहुभेदत्वमेव तस्य दर्शयितुं तद्व्यापारानाह–

अर्थमात्रावबोधेऽपि यतो नर्ते प्रवर्तनम् ॥१६३॥
स युक्तो निश्चयो मुख्यं प्रमाणं [तदनक्षवत्] । इति ।

अर्थस्य नीलादेः मात्रा निरंशक्षणिकावस्था तस्या अवबोधः निर्विकल्पदर्शनम्, तस्मिन्नपि न केवलं तदभावे स प्रसिद्धो निश्चयो नीलादिव्यवसायो युक्तः उपपन्नः । किम् ? प्रमाणम् । कथम् ? मुख्यं नौपचारिकम् । कुत एतत् ? यतो यस्मान्निश्चयात् ऋते न प्रवर्तनं जलादौ तदर्थिन इति । एतदुक्तं भवति–प्रवर्तकमेव प्रमाणं परस्याप्यभिमतम्, "धीप्रमाणता, प्रवृत्तेस्तत्प्रधानत्वात् ।" [ प्र० वा० १।५ ] इति वचनात् । प्रवृत्तिश्च निश्चयादेव न तदवबोधनात् क्षणक्षयादिवत् । अतः स एव मुख्यं प्रमाणम् । तथा च "कल्पनापोढम्" [प्र० समु० श्लो० ३] इति प्रत्यक्षलक्षणमसम्भवदोषं निश्चये तदभावात्, निर्विकल्पस्य मुख्यतः प्रामाण्याभावात् । एतदेवाह–'तदनक्षवत्' इति । तदिति निपातः स इत्यस्यार्थे । सोऽर्थमात्रावबोधः अक्षादन्यत्वात् सन्निकर्षादिरनक्षं तद्वदिति । एतदुक्तं भवति–यथा सन्निकर्षादेः मुख्यप्रामाण्याभावाद् न तत्र लक्षणं तथा तदवबोधेऽपीति । कदा पुनर्निश्चयात् प्रवर्तनम् ? अभ्यास इति चेत्; न, तदा दर्शनादेव तद्भावान्न निश्चयात्, तस्यैवाभावात् । नानभ्यासे, तदाप्यनुमानादेव तद्भावादिति चेत्; कथं तर्हि "गृहीतग्रहणान्नेष्टं सांवृतम्" [प्र० वा० १।५] इत्यनेन तस्याप्रामाण्यमुक्तम् ? क्वचिदप्यसतस्तद्योगात् । तदयं तमेव नेच्छति तस्याप्रामाण्यं च वक्तीति कथमनुन्मत्तः ? भवतु तर्हि तस्य गृहीतग्रहणादेवाप्रामाण्यमिति चेत्; किं पुनः सामान्यं दर्शनविषयो येनैवं स्यात् ? सत्यम्, दृश्यविकल्प्ययोरेकत्वाध्यवसायादिति चेत्; वस्तुतस्तर्हि अपूर्वार्थ एव स इति कथन्न प्रमाणम् ? तद्विषयस्य सामान्यस्यावस्तुत्वादिति चेत्; एवं तर्हि वक्तव्यम्–'अवस्तुविषयत्वं न प्रमाणम्' इति, न पुनरेवं 'गृहीतग्रहणात्' इति हेतोरसिद्धिदोषात् । एकत्वाध्यवसायान्नासिद्धिरिति चेत्, न; एकत्वादवस्तुभूतादवस्तुतो गृहीतग्राहित्वासम्भवात् । तदपि तादृगमेवेति चेत्; वस्तुतस्तर्हि नासिद्धिदोषः परिहृत इति न किञ्चिदेतत् । अस्तु तस्यावस्तुविषयत्वादेवाप्रामाण्यमिति चेत्; न, अनुमानेऽपि तत्प्रसङ्गः । समारोपव्यवच्छेदादेः प्रयोजनविशेषस्य ततो भावादिति चेत्,

१ अत एव आ०, ब०, प० । २ तथा आ०, ब०, प० । ३ नाप्यन- आ०, ब०, प० । ४ परिगृहीत आ०, ब०, प० । ५ अनुमानतः ।

तदेव निश्चयेऽपि समानमिति तद्व्यापारान्तरोपन्यासेन दर्शयति–

**लिङ्गसंवृतयोस्तुल्या गृहीतग्रहणादपि ॥१६४॥**
**व्यवच्छेदाविसंवादव्यवहर्तृप्रवृत्तयः ।** इति ।

लिङ्ग क्षणभङ्गाद्यनुमान लिङ्गोऽर्थत्वात्, **सांवृतं** निश्चयज्ञान तयो 'प्रामाण्यम्' इति वक्ष्यमाणेन सम्बन्ध । 'तुल्यम्' इति वचनपरिणामेन । कुतस्तुल्यमिति ? तयोर्यत **तुल्याः** समाना । के ? **व्यवच्छेद**श्च समारोपस्य **अविसंवाद**श्चाविप्रतिसार **व्यवहर्तृप्रवृत्ति**श्च व्यवहारिप्रवर्तनं ता । कुतोऽपि तास्तुल्या तद्वा तुल्य तयो **गृहीतग्रहणादपि** अपिशब्दात् अवस्तुविषयत्वात् । अत्रापि तुल्यत्वादिति विभक्तिपरिणामेन सम्बन्धनीयम् । अयमर्थो यदि गृहीतग्रहणमाश्रित्यापि अनुमानस्य प्रामाण्य व्यवच्छेदादे प्रयोजनात्, तत निश्चयेऽपि तुल्य तदाश्रयणस्य तत्प्रयोजनस्य च तत्रापि तुल्यत्वादिति । अविसंवादव्यवहारयोर्निश्चये[2] परस्यापि प्रसिद्धत्वात् । तत्र व्यवच्छेद दर्शयन्नाह–

**शब्दाद्ययोगविच्छेदे तत्प्रामाण्यं न किं पुनः ॥१६५॥** इति ।

**शब्द आदि**र्यस्य घटादेस्तस्य **अयोग** स्वरूपेणाघटनम् अभेदवादिपरिकल्पितस्तस्य **विच्छेदो** निश्चयात् । न हि निश्चितस्यायुक्तिरभेदेऽपि तत्प्रसङ्गादिति तस्मिन् **तत्प्रामाण्यं** निश्चय प्रामाण्य **न किम्** ? भवत्येव । **पुन**रिति वितर्के । तद्विच्छेदस्याप्यनुमानादेव भावात् किं निश्चयेनेति चेत् ? अत्राह–

**अनुमानं तु हेतोः स्यात् [ अविनाभावनिश्चयात् ]** ।इति ।

*तात्पर्यमत्र–हेतोः अनुमानं स च भेदरूपत्वेन पर प्रत्युक्त एवेति कथ ततोऽनुमानम् अन्यतरासिद्धे ?* तदयुक्तेरप्यनुमानान्तराद् व्यवच्छेदे तदेवोत्तरम्–'अनुमान तु हेतोः स्यात्' इति । पुनस्तदयुक्तेरपि तदन्तराद्व्यवच्छेदेऽनवस्थाप्रसक्तिरिति । ततो निश्चयादेव तद्व्यवच्छेद इत्युपपन्नमिदं 'तत्प्रामाण्य न किं पुनः' इति । ननु निश्चयस्यापि भेदरूपस्यायुक्तिर्यदि निश्चयान्तराद् व्यवच्छिन्ना अनवस्थानमिति चेत्, न, अभेदनिश्चयवत् स्वत एव तस्य युक्ततया[3] अवस्थानात् । हेतुरूपप्रतिपादनव्याजेन पुनरपि तद्व्यापार दर्शयन्नाह–'अविनाभावनिश्चयात्' इति । स्पष्टमिदम् । अत्र-हेतुरिति विभक्तिपरिणामेन सम्बन्ध । स्यान्मतम्–तन्निश्चयस्यापि तदुत्पत्त्यादिनिश्चयादेव भावात् तत एव हेतुरिति वक्तव्यमिति, तन्न, अनवस्थाप्रसङ्गात् । यथैव हि धूमादेर्विशेषधर्मै कण्ठाविकारकारिभिर्गमकत्वं तथा सामान्यधर्मैरपि मूर्तत्वादिभिर्भवेत् तैरपि तस्याग्न्यादिकार्यत्वात्, तथा च किं तद्विशेषावधारणार्थेन प्रयत्नेन ? यत इदं सूक्तम्–"इष्टं विरुद्धकार्येऽपि देशकालाद्यपेक्षणम् ।" [ प्र०वा० ३।५ ] इति । विशेषरूपैरेव गमकत्व तत्रैवाव्यभिचारनियमादतो न व्यर्थ तदवधारणार्थो यत्न इति चेत्, न, तन्नियमस्यापि कार्यत्वादेव भावात् तस्य च रूपान्तरेष्वप्य

---

१ तत्तुल्यं प० । २ –येति प– आ०, ब०, प० । ३ –तया व्य– आ०, प० । ४ तदनि– आ०, ब०,प० ।

विशेषात् । अन्यथा तेषामहेतुकत्वेन नित्यत्वप्रसङ्गात् । अग्निं मुक्त्वैव तेषामहेतुकत्वं न हेत्वन्तरमपीति चेत्; न तर्हि तेषां धूमरूपत्वं सामग्र्यन्तरादुत्पत्तेः पदार्थान्तरवत् । हेत्वन्तरमप्यनलादिसामग्र्यन्तर्गतमेवेति चेत्; सिद्धमनलं मुक्त्वापि तेषां कार्यत्वमिति क्वचिन्न ततस्तत्र तन्नियमः [1]; तथाप्यभावे न तन्निर्णयाच्चन्निर्णयः सत्यपि तस्मिन् तदभावात् । विशिष्टस्यैव तस्य निर्णयान्निर्णयस्तन्नियमस्य न तन्मात्रस्येति चेत्; ननु विशेषोऽपि तस्य तन्नियम एव नापरस्तस्येतरत्रापि सम्भवात् । तथा च निर्णयेऽपि[2] तन्नियमस्य तद्विशिष्टतया कार्यनिर्णयस्ततोऽपि तन्नियमस्येति परस्पराश्रयणं नाम प्रतिषेधमनुपतति । अन्यतस्तन्निर्णये[3] वा तावता गमकत्वात् व्यर्थं तदर्थं कार्यत्वकल्पनम् । तथा तत्स्वाभाव्यकल्पनम् । यतो हि गमकत्वे प्रयत्नजन्यत्वं प्रत्यनित्यत्वस्यापि तद्भवेत्, तन्मात्रानुबन्धिनस्तस्य घटादौ प्रतिपत्तेः, तदनुबन्धित्वेन[4] साध्यधर्मे कृतकत्वादेरपि हेतुत्वस्य परिदृष्टत्वात् । तस्य तदनुबन्धित्वमेव नास्ति विद्युदादौ सत्यपि तस्मिन्नभावादिति चेत्; तदा अनित्यत्वमपि क्वचिन्न कृतकत्वादौ सत्यपि तथा न भवेत् । भवत्येव तथा दर्शनादित्यपि न युक्तम्; घटादिभाविनस्तस्य प्रयत्नजन्यत्वेन व्यभिचारात्, सर्वत्र भाविनश्च तस्यार्वाग्दर्शित्वभावात् । तथापि कथमदृष्टस्तद्भाव क्वचित् कल्प्यत इति चेत्; न कल्प्यते किन्तु संशय्यते तज्जातीये प्रयत्नजन्यत्वे दर्शनात् । अथ तादृशस्तस्य नियमोऽस्ति यत् सति तस्मिन् भवत्येवेति अतो न संशयस्तत्रेति चेत्; सोऽपि कुत तदनुबन्धादिति चेत्; न, अन्योऽन्यसंश्रयात्–ततो नियमो नियमाच्च स इति । अन्यतो नियमनिर्णये वा 'तावता' इत्यादेर्दोषात् । तत तदुत्पत्त्यादिनिर्णयात्[5] हेतु पृथगविनाभावनिश्चयादेव तदुपपत्ते । तदेवं कार्यादावन्यथानुपपन्नत्वादेव हेतुत्वमवस्थाप्य अनुपलम्भेऽपि तत एव तदवस्थापयन्नाह–

यथा कार्यं स्वभावो वाप्यन्यथाशङ्क्यसम्भवः ॥१६६॥
हेतुश्चानुपलम्भोऽयं तथैवेत्यनुगम्यताम् । इति ।

कार्यं धूमादि स्वभावः कृतकत्वादिः 'वा' इति समुच्चये । यथा येनोक्तन्यायप्रकारेण अन्यथाशङ्क्यसम्भवः साध्याभावेनाशङ्कनीयात्मलाभो हेतुर्न तदुत्पत्त्यादिप्रतिबन्धात् तथैवानुपलम्भोऽपि चशब्दस्य अपिशब्दार्थत्वात्र सम्बन्धात् । अयं प्रसिद्धो हेतुरित्यनुगम्यताम् अन्यथाशङ्क्यसम्भव एवेति । तथा च दृश्यविशेषणमन्तरेणास्यापि तादृशस्य गमकत्वमिति मन्यते । युक्तं चैतत्, कथमन्यथा क्वचिद्विज्ञानादिनिरोधलक्षणस्य मरणस्य तत प्रतिपत्तिः ? न हि विज्ञानादेर्दृश्यत्वम्; दर्शनप्रत्ययसाकल्येऽपि[6] स्वभावविशेषस्याभावात्, तदुभयरूपत्वाच्च दृश्यत्वस्य । अस्त्येव स्वशरीरे तत्तस्येति चेत्; किं पुन शरीरान्तरे तन्निषेधो मरणम् ? तथा चेत्, न, सर्वदा तत्प्रसङ्गात् । तज्जातीयत्वात्तदन्तरगतमपि[7] दृश्यमेवेति चेत्, किमिदानीमदृश्यं नाम यत्रानुपलम्भात् संशयः स्यात् ।

---

१ अपरस्येतर– ता० । २ –ये हि त– आ०,ब०,प० । ३ –वेन ता– आ०,ब०,प० । ४ तदनुबन्धित्वेन आ०, ब० प० । ५ –त्वे तु आ०, ब०, प० । ६ –न्यः सा –ता० । ७ –तदनन्तरगतम– आ०, ब०, प० । शरीरान्तरगतमपि ।

पिशाचादेरपि तथा दृश्यत्वोपपत्ते. । ततो न स्वभावानुपलम्भात्तन्निषेधः । नापि कार्यानुपलम्भात्, ततोऽपि तदुपलम्भनिषेधादेव तन्निषेधात् । "अनिषिद्धोपलम्भस्याभावासिद्धेः" [ ] इत्यभिधानात् । न चादृश्यस्य तन्निषेधेऽपि निषेधः संशयोपगमात् । भवन्नपि व्याहारादिकार्यानुपलम्भात्तस्य निषेध. अप्रतिबद्धशक्तिकस्यैव स्यान्नापरस्य, तत्कथं तद्विवेकानिश्चयाद्दाहादिसाहसकरणं पातकप्रसङ्गात् । अथ व्याहारादौ तत् प्रतिबन्धविकलमेव ततो भवत्येव तदनुपलम्भात्तस्य निषेधः, सति तस्मिन् तस्यासम्भवादिति चेत्; आगतोऽसि पन्थानम्, अदृश्यविशेषणस्यापि तस्यान्यथानुपपत्त्या गमकत्वोपगमात् । इदमेव केवलमपरीक्षितमुक्तवानसि "नावश्यं कारणानि कार्यवन्ति भवन्ति" [ हेतुबि० टी०पृ० २०१ ] इति । अवश्यं तद्वतोऽपि विज्ञानादेः भावात्, अन्यथा तत्प्रभवादनुपलम्भात्तन्निषेधानुपपत्तेः । तच्चावश्यम्भावित्वं तर्कादेव[1] शक्यनिर्णयमुपायान्तराभावात् । तदेवमदृश्यानुपलम्भस्य गमकत्वमन्यथानुपपत्तिबलेनोपपाद्य दृश्यानुपलम्भस्यापि तत एव [2]तत्, न तदन्तरेणेति दर्शयन्नाह–

**प्रत्यक्षानुपलम्भश्च विधानप्रतिषेधयोः ॥१६७॥**
**अन्तरेणेह सम्बन्धमहेतुरिव लक्ष्यते ।** इति ।

उपलभ्यत इति उपलभ्यतेऽनेनेति वा उपलम्भः तदन्यः **अनुपलम्भः** भावान्तरमुपलम्भयोग्यं तज्ज्ञानं वा । **प्रत्यक्षस्य** दृश्यस्य स **च** सोऽपि न केवलं कार्यादिरेव **अहेतुरिव** अगमक इव **लक्ष्यते** । कथम् ? **इह** अन्यथानुपपत्तौ **सम्बन्धं** साकल्यम**न्तरेण** विनेति । क ■ तथा लक्ष्यते ? **विधानप्रतिषेधयोः** विधानं प्रदेशादेः प्रतिषेधो घटादेस्तयोरिति । तथा हि–न तावत् प्रतिषेधःकस्यचित्तुच्छोऽनभ्युपगमात् । प्रदेशादिभावान्तरस्वभावत्वेऽपि न तत्र अनुपलम्भस्याऽप्रतिपन्नस्य हेतुत्वम्; असिद्धस्यान्यथानुपपत्तिविकल्यात् । प्रतिपत्तिरपि तस्य यदि प्रतिषेधरूपत्वेनान्यतोऽनुपलम्भात्; अनवस्थापत्तिः । स्वतोऽपि यदि[3] निश्चयरूपा; तदेवाहेतुत्वम् । निश्चयात्मिकायां तु व्यर्थं तस्य तत्र हेतुत्वम्; तन्निश्चयादेव प्रतिषेध्याभावस्यापि निश्चयात्, तद्विषयतयैव तत्र तदुत्पत्तेः । न तन्निश्चयार्थं तस्य तत्त्वमपि तु तत्रासदिति ज्ञानार्थम्; इत्यपि न युक्तम्; अनुपलम्भस्यैव [4]तदसज्ज्ञानत्वात् । ततोऽपि तदन्तरकल्पनायामनवस्थादोषात् । तदभिधानार्थमित्यपि नोत्तरम्; उत्पत्तावेव निश्चयरूपस्य तस्य साभिधानत्वात् । अनभिधानत्वेऽपि कुतस्तस्य तादर्थ्यम् ? तस्य करणात्, ज्ञापनाद्वा ? करणादिति चेत्; न; ज्ञापकस्याकारकत्वात् । ज्ञापनादिति चेत्; तथापि कथं तज्ज्ञापकस्य प्रतिषेधज्ञापकत्वम् ? तस्यापि तद्विषयस्यैव ज्ञापनादिति स चेत्; यद्यस्ति, किं ततस्तज्ज्ञापनेन ? प्रत्यक्षादेव ज्ञप्तेः । अथ नास्ति; नास्ति ज्ञापनमसतस्तद्योगात् । प्रतिषेधस्य तद्योग्यत्वज्ञापनमेव तज्ज्ञापनमिति चेत्; न; असति तस्मिन् योग्यत्वस्यापि तदपेक्षस्यासम्भवात् । सम्भवेऽपि किमर्थं तज्ज्ञापनम् ? अभिधानादिव्यवहारार्थमिति चेत्; ■ किमनुपलम्भविषयादेव ततो न भवति येन ततस्तज्ज्ञापनं[5] ततश्च स इति पारम्पर्यं परिकल्प्यते ? तथा चेत्; अनुपलम्भेऽपि तदन्यज्ञापितादेव स

१ तत्कार्यादेव आ०, ब०, प० । २ गमकत्वम् । ३ यद्यपि निश्चयरूपात्तदे- आ०, ब०, प० । ४ तदस- आ०, ब०, प० । ५ -पकत- आ०, ब०, प० ।

ततो भवति तदन्यत्राप्येवमिति कथमनवस्थातो निर्मुक्ति ? तत्र स्वत सिद्धमेव ततस्तद्भावे दृश्याभावेऽपि तत्सिद्धादेव स भवतीति व्यर्थं ततस्तज्ज्ञापनम्। कथं च तज्ज्ञापनमेव व्यवहारस्य ज्ञापनम् ? अविनाभावादिति चेत्, सर्वत्र हेतुज्ञापनमेव साध्यज्ञापनमित्यनुमानमुद्रा दोद्रूयेत। कथं वा तदविनाभावित्वं तस्य स्वयं तत्कारणत्वेनातत्कार्यत्वात् ? अत एव अतत्स्वभावत्वाच्च। स्वहेतोस्तथैवोत्पत्तेरिति चेत्, कुत इदमवगन्तव्यम् ? तदुत्पत्त्यादेरवगमोपायस्याभावात्। विचारादेव कुतश्चिदिति चेत्; सिद्धं तर्हि तद्विषयादेकलक्षणबलादेवानुपलम्भस्य हेतुत्वं न तदन्तरेणेति। तत सूक्तम्–'अन्तरेण' इत्यादि। विधानेऽपि तस्य तत एव हेतुत्वोपपत्ते। कस्य पुनर्विधानं यत्र तस्य हेतुत्वम् ? निषेध्यस्यैवेति चेत्, न, असति तस्मिन् तस्यैव विरोधात। भूतलादेरिति चेत्, न, तस्याविप्रतिपत्तित्वेनासाध्यत्वात्। न हि साङ्ख्यस्यापि तत्र विप्रतिपत्ति "सर्वं सर्वत्र विद्यते" [ ] [2]इत्यागमारोपितसंस्कारस्य दृश्यनिषेध एव तस्य स तद्भावात्, अत स एव तेन साध्यते–यद्यत्र दर्शनलक्षणप्राप्तं न दृश्यते तत्तत्र नास्ति यथा चेतनात्मनि प्रधानरूपत्वम्, न दृश्यते च तादृशो घटादि प्रदेशादिविशेषे इति, ततस्तत्रैव हेतुत्वं तस्य न तद्विधान इति चेत्; न, तथा कार्यस्वभावयोरपि 'नेहानग्नि धूमात्, नेह निःसत्त्व कृतकत्वात्' इत्यनग्न्यादिप्रतिषेध एव तद्विप्रतिपत्तिविषये हेतुत्वप्रसङ्गात नाग्न्यादिविधौ अपि प्रतिपत्तेः। एवं च कथमिदं सङ्गतम्–"तत्र द्वौ वस्तुसाधनौ" [ न्यायबि० पृ० ३९ ] इति। तदारोपितानग्न्यादिविविक्ते अग्न्यादौ वस्तुन्येव तस्य हेतुत्वादिति चेत्, निषेध्यविविक्ते प्रदेशे वस्तुन्यनुपलम्भस्यापि किन्न तथा हेतुत्वं यत इदं सूक्तं भवेत्–"एक प्रतिषेधहेतुः" [न्यायबि० पृ० ३९] इति। ततो युक्तं विधानेऽप्येकलक्षणबलात्तस्य हेतुत्वम्।

इदानीं तत्प्रपञ्चं दर्शयति–

**प्रपञ्चोऽनुपलब्धेर्नोपक्षे प्रत्यक्षवृत्तितः ॥१६८॥**

**प्रमाणं सम्भवाभावाद्विचारस्याप्यपेक्षणात्। इति।**

अनुपलब्धेः प्रपञ्चः स्वभावानुपलब्ध्यादिरूपो भेद प्रमाणं भवतु प्रतिषेधविषये विधौ तद्विरुद्धस्योपलम्भस्य प्रत्यक्षव्यपदेशस्य प्रवृत्तित इति चेत्, न, अपक्षे प्रत्यक्षवृत्तितः किन्तु सम्भवाभावादनुपलम्भस्य। सोऽपि तत्र तद्वृत्तिरेव ततस्तत एव प्रमाणमिति चेत्, न, प्रतिषेधे नियमस्यैव तदभावात्। तन्नियमोऽपि तद्वृत्तित एवावगम्यते इति चेत्, न; निरूपितरूपात् विचारादेव तदवगमात्। अत एवाह–'विचारस्याप्यपेक्षणात्' इति। अपिः अवधारणे विचारस्यैव तदवगमे प्रत्यपेक्षणात्। तत एव सप्रमाणं न तत्र तद्वृत्तित इति। तत्र स्वभावानुपलब्धिर्यथा 'न भावेषु क्षणक्षयैकान्तोऽनुपलब्धे' इति। असिद्धानुपलब्धिः प्रत्यक्षतः सर्वत्र तर्थ्यैवोप

१ –भावादिति आ०, ब०, प०। २ यो वा सत्त्वोऽप्यन्तविभुः सर्वं सर्वत्र विद्यते इत्या प्रदर्शनात्।" –प्र० वार्तिकाल० ४।२६३। ३ प्रदेशावस्तु आ०, ब०, प०। ४ विधानस्यापि– आ०, ब०, प०। ५ –प्रतिपत्तस्यैव आ०, ब०, प०।

लब्धेरिति चेत्, किमिदानीं तत्रानुमानेन[1] ? आरोपव्यवच्छेद[2] इति चेत्, तेनापि किम् ? सत्यप्यारोपे प्रवृत्त्यादिव्यवहारस्य प्रत्यक्षादेव तत्समर्थादुपपत्ते । तद[3]समर्थेऽपि तस्मिन् न किञ्चित् तद्व्यवच्छेदेन; सत्यपि तस्मिन् व्यवहारस्यासम्भवात् । अथ स[4] एव त[5]स्य तत्सामर्थ्य तदयमदोषः, कथमर्थान्तरं स तस्य सामर्थ्यमतिप्रसङ्गात् ? सम्बन्धादिति चेत्; न, भेदे सत्युपकारादन्यस्य त[6]स्यासम्भवात् । न च तस्योपकार्यत्वं नित्यवत् क्षणिकस्यापि निरंशस्य तदयोगात् । भवत्वनुमानादेव त[7]स्योपलब्धिरिति चेत्; न, तस्याप्यनिर्णयरूपस्याप्रामाण्यात् तत्क्षणक्षयसंवेदनवत् । निर्णयरूपमेव तदिति, कुतस्तस्य परिज्ञानम् ? स्वत इति चेत्; [8]तत्तस्यानिश्चयरूपमेव [9]प्रत्यक्षत्वात् नीलादिप्रत्यक्षवत् । स्वाभिमुखमेव रूपं तस्यानिर्णयस्वभावं न बाह्याभिमुखमिति चेत्, तस्य तर्हि कुतः परिज्ञानम् ? स्वाभिमुखात्तदयोगात् । स्वत एवेति चेत्, तदप्यनिश्चयमेव पूर्ववत् प्रत्यक्षत्वादिति न निश्चयरूपं तस्योत्पश्याम । [10]पुनस्तदन्तरकल्पनायामनवस्थाकल्पनात् । निश्चयान्तरात् तत्परिज्ञानमेतेन प्रतिव्यूढम् । तन्न ततोऽपि तस्योपलब्धिरिति कथमसिद्धिरनुपलब्धेः ?

तथा न क्षणक्षयैकान्ते कार्यं कारणानुपलम्भात् । न हि तत्र कारणत्वं कस्यचित्; तत्समये [11]कार्यानुपगमात्, [12]सन्तानाभावप्रसङ्गाच्च । नापि भिन्नसमये; स्वयं तदानीमसत्त्वात् । तथा हि— यत्कार्यकाले नास्ति न तत्तत्कारणं यथा अनुत्पन्नम्, नास्ति च तत्काले प्रध्वस्तमिति ।

अपि च, असतोऽपि कारणत्वे यथा ततोऽनन्तरं कार्यं तथा ततः पुनस्ततोऽपि पुनः[13] किन्न स्यात् ? असतः तदापि तस्याविशेषात् । एवं च कथं [14]तस्यानित्यत्वमनुपरमात् ? कारणस्यानुपरतिहेतोरेव[15] भावात् । अथ तदपहस्त्य स्वयमेवोपरतिः, एवं सति उपरतिवत् उत्पत्तिरपि तस्य स्वाधीनैव स्यात् । तादृगुत्पत्तिर्नित्यैव भवेदिति चेत्, उपरतिरपि स्यात् ।

तथा च हेतुसामर्थ्यादुत्पत्त्या तस्य भूयताम् ।
स्वतः किं वोपरत्येति दुस्तरं दौस्थ्यमापतेत् ॥१५१३॥
क्षणादेवोर्ध्वमस्थानं तस्य चेत् स्यात् स्वशक्तितः ।
क्षण एव ततः स्थानं तस्य कस्मान्न कल्प्यते ॥१५१४॥
उत्पन्नस्य स्वतः शक्तिः शक्तादुत्पत्तिरिष्यते ।
अन्योऽन्याश्रयदोषाच्चेन्नैष [16]पक्षोऽवकल्पते ॥१५१५॥

---

१ "सर्वं क्षणिकं सत्त्वादित्यादिना"– ता० टि० । २ तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः । भ्रान्तेर्निश्चीयते नेति साधनं सम्प्रवर्तते ।" इति वचनात् । ३ व्यवहारासमर्थेऽपि । ४ आरोपव्यवच्छेद एव ।' –ता० टि० । ५ प्रत्यक्षस्य । ६ सम्बन्धस्य । ७ क्षणिकत्वस्य । ८ तस्यानि–आ०, ब०, प० । ९ "सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमिति वचनात् । –ता० टि० । १० सुगतस्त–आ०, ब०, प० । ११ कार्येऽनुपग– ता० । १२ यदि कारणकाले कार्यं स्यात्तदा सर्वस्योत्तरोत्तरक्षणस्य आद्यक्षणवृत्तित्वप्रसङ्गः, अनन्तरं च नाशात् सन्तानाभावः स्यादिति भावः । १३ उत्तरोत्तरक्षणेषु । १४ तस्यान्तिकत्वमनु–आ० ब०, प० । १५ यतः कारणादनुपरतिः तस्य कारणस्य सद्भावात् । १६ पक्षोऽत्र क– प० ।

निर्त्यं सत्त्वमहेतोरित्येवं तर्हि वृथा वचः[1] ।
अहेतुत्पत्तिसद्भावे सत्येवं वच· स्थितेः ॥१५१६॥

अनुत्पन्नमपि पूर्वस्य कारणमेव ततः साध्यविकलं निदर्शनमिति चेत्; न; तस्य तत्कार्यत्वात् । न हि कार्यदेव कारणम्; अन्योऽन्याश्रयदोषात् । अन्योऽन्यमविनाभावादेव हेतुफलव्यपदेशो नान्योऽन्यस्मादुत्पत्तेस्तदयमप्रसङ्ग इति चेत्, उत्पत्तिस्तर्हि कुतः ? न कुतश्चित्; कथं सत्त्वम् ? उपलम्भादेव, "उपलम्भः सत्ता" [प्र० वार्तिकाल० २।५४ ] इति वचनात् । नित्यं तत्किन्नेति चेत्; नित्योपलम्भाभावादेव । ततो न तस्य कार्यत्ववत् कारणत्वमपि व्याहतमिति चेत्; न; एवमपि भवतो व्याघातस्य प्रसङ्गात् । तथा हि–

कार्यत्वादायचित्ते स्यादविनाभावनिश्चयः ।
व्यभिचारविशङ्कापि हेतुत्वेन प्रसज्यते ॥१५१७॥
तच्छङ्कया ततो न स्यादनुमा पूर्वजन्मनि ।
तन्निर्णये भवेच्चापि सैवा[2] ते दुस्त्यजा रुजा ॥१५१८॥
कार्यत्वादनुमासिद्धौ तच्छङ्का क्रियते न चेत् ।
न हेतुबलभाविन्याः स्वेच्छया वारणात्ययात् ॥१५१९॥

तस्मात् प्राग्जन्मचित्तस्य तत् कार्यमेव न कारणम्, उत्तरस्य च कारणमेव[3] पूर्वत्वात् मङ्गलचित्तवत्, तदपि तदुत्तरस्य तावदेवं यावदन्त्यं [4]चित्तम्, तदपि भाविभवाद्यचित्तस्य । कथं पुनः कारणात्तत्तदनुमानमिति चेत् ? [5]कार्यादिवाविनाभावनिर्णयादिति ब्रूमः । चतुर्थं तल्लिङ्गं स्यादिति चेत्; यद्येतन्न्यायादापतति किमत्र कुर्मः ? तत्र प्राग्भाविनो हेतुत्वमिति भवत्येव असतस्तदभावे [illegible] दृष्टान्तः । ततः–

अन्योऽन्याश्रयणादौ चेदुक्तं गजनिमीलनात् ।
कारणं भावि वक्तव्या तथा तस्य क्षणस्थितिः ॥१५२०॥
कुतो वा तस्य सा शक्तिर्यतः प्रध्वंसते स्वतः ।
स्वहेतोश्चेदवस्थानप्रध्वंसौ युगपन्न किम् ॥१५२१॥
तादृशी यदि शक्तिः सा संततौ[6] क्रमभाविनी ।
'नाक्रमात्क्रमिणो भावाः'[7] इत्येतद्दुर्घटं भवेत् ॥१५२२॥
तत्रानुपरतौ हेतौ तस्योपरतिरात्मनः ।
इत्यनित्यत्ववार्ता ते तत्र दूरं पलायते ॥१५२३॥
इदमेवोदितं पूर्वैः स्याद्वादन्यायवेदिभिः ।
देवोऽपि कुरुते येषु विनयालङ्कृतं वचः ॥१५२४॥

१ 'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् ।' –प्र०वा० ३।३४ । २ तेषां ते आ०,ब०,प० । ३ –यमपू– आ०, ब०, प० । ४ चित्त भावि–आ०, ब०, प० । ५ कार्यादिवावि– आ०, ब०, प० । ६ स्वतस्तौ आ०, ब०, प० । ७ प्र० वा० १।४५।

"प्रध्वस्तस्य न हेतुत्वं यथैव प्रागभाविनः ।
असतश्चेह भावेऽथ पश्चात्किन्न भविष्यति ॥" [ ] इति ।

अप्राग्भाविनोऽपि इदमेव हेतुत्वं भाविजन्मादद्यचित्तादाधुनिकस्य मरणचित्तस्योत्पत्तेः, अन्यथा ततस्तदनुमानासम्भवात्, कथमसौ असतो हेतुत्वे दृष्टान्त इति चेत् ? नन्वेवं मरणचित्तं कस्य हेतुः ? अहेतोः अवस्तुत्वप्रसङ्गात् । तत्पूर्वस्येति चेत्; तदपि तर्हि तत्पूर्वस्य तदप्येवं यावदाद्यचित्तमिति । ततः कथं प्राग्भवचित्तस्यानुमितिः कारणलिङ्गस्यानुपगमात् ? अन्यथा मरणचित्तस्यापि तल्लिङ्गत्वादेव गमकत्वात् कार्यत्वकल्पनं वृथैव स्यात् । अथ तत् उत्तरचित्तस्येव प्राग्भवचित्तस्यापि कार्यमेव तदयमदोषः; तर्हि न कस्यचिदपि कारणमिति न वस्तु भवेत् । अथ तदपि तयोरन्यतरस्य हेतुरेव न तर्हि ततस्तस्यानुमानम् । ततो नासतः कारणत्वमिति सिद्धा कारणानुपलब्धिः ।

तथा कार्यानुपलब्धिरपि । तद्यथा, न तदेकान्ते[1] कारणं कार्यानुपलम्भात् । नहि तस्य सत्कार्यम्, निरपेक्षत्वात् । नाप्यसत्; विनापि तेनाभावात्[2] । रूपान्तरेण [3]तत्तस्य कार्यमिति चेत्; तदपि सत्; कथं [4]तस्य ? असच्चेत्; स एव प्रसङ्गो 'विनापि' इत्यादिरनवस्था च । यदि चासत् सद्रूपमापद्यमाने तस्य कार्यम्; न क्षणभङ्गः, तस्य पूर्वापरीभूतस्यैकस्योपगमात् । न पक्षान्तरे[5]ऽपि अयं प्रसङ्गः; क्रमेण चित्रवस्तुन्येव तत्र हेतुफलव्यवहारात् । तस्य च चित्रैकज्ञानवत् प्रतीत्युपारूढत्वात्, न तथा [6]तदेकान्तस्य । ततः कार्यानुपलब्धिरपि गमिकैव । व्यभिचारशङ्कया तदगमकत्वकल्पनायां नित्यादेरनिषेधापत्तेः ।

तथा विरुद्धोपलब्धिरपि । तद्यथा– न नित्यो जीवः परिणामादिति । नित्यत्वविरुद्धस्य परिणामस्य जीवे दर्शनात् तत्र नित्यत्वप्रतिषेधोपपत्तेः कैंचिदुष्णत्वोपलब्ध्या[7] शीतप्रतिषेधवत् ।

तथा विरुद्धव्याप्तोपलब्धिरपि । तद्यथा, नेदं निरात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति । नैरात्म्यविरुद्धेन सात्मकत्वेन व्याप्तस्य प्राणादिमत्त्वस्य जीवच्छरीरे दर्शनात् तत्र नैरात्म्यप्रतिषेधोपपत्तेः, क्वचिच्छू[8]रत्वस्य वनस्पतित्वविरुद्धवृक्षत्वव्याप्तस्य दर्शनात् वनस्पतित्वप्रतिषेधवत् ।

एवं विरुद्धकार्योपलब्धिरपि । तद्यथा कल्पनापोढमभ्रान्तमपि ज्ञानं न प्रमाणं विसंवादादिति । प्रामाण्यस्योक्तविशेषणे ज्ञाने तद्विरुद्धाऽप्रामाण्यकार्यस्य विसंवादस्योपलम्भेन निषेधोपपत्तेः, क्वचिद्रोमहर्षादिविशेषस्य शीतकार्यस्योपलम्भेन तद्विरुद्धपावकप्रतिषेधवत् । न चासिद्धा विसंवादो[9]पलब्धिः, तत्र निरंशादिरूपेण [10]दृष्टस्यापि विषयस्य स्थूलादिरूपेण प्राप्तेः, अयथादर्शनप्राप्तेश्च विसंवादार्थत्वात् । एवमन्या अप्यनुपलब्धयो वृत्तिप्रतिपादिता गमिकाः प्रतिपत्तव्याः ।

स्यान्मतम्–यदि क्षणक्षयैकान्तादेर्न प्रतिपत्तिः कथं स क्वचिन्नास्तीति तदनुवादी निषेधः ? 'नास्तीह घट.' इति प्रतीतस्यैव [11]तस्य [12]तद्दर्शनात् । प्रतिपत्तौ तु कथमनेकान्तनियमो भावेष्विति ?

---

१ क्षणिकैकान्ते । २ असद्रूपत्वात् । ३ असत् । ४ असत । ५ "स्याद्वादिपक्षे" –ता० टि० । ६ क्षणिकैकान्तस्य । ७ कश्चिदुष्ण– आ०, ब०, प० । क्वचिदुपल– ता० । ८ सालत्वस्य । शूरः सालवृक्षविशेषः । ९ –वादस्योप– आ०, ब०, प० । १० दृष्टस्यादृष्टस्यापि प०, ता० । ११ घटस्य । १२ निषेधदर्शनात् ।

तन्न सारम्, एव नित्येऽर्थक्रियानिषेधेऽपि चोद्यात् । न ह्यप्रतिपन्ने तत्र तन्निषेध, प्रतिपन्न एव प्रदेशे मशकादिनिषेधोपलम्भात् । न च तस्य प्रतिपत्ति प्रमाणात्, क्षणभङ्गवादव्याघातात् । कल्पनात श्चेत्, निषेध्यत्वमपि तद्विषयस्यैव स्यात्, अर्थक्रियाया अपि तादृश्या एव तत्त्वात् । प्रत्यक्षत एव तस्या क्षणभङ्गे प्रतिपत्तिरिति चेत, नैतम्, अनिश्चयात् । निश्चये वा किं नित्ये तन्निषेधेन ? स हि ततस्तद्भङ्गसाधनाय, निश्चिते च किं तत्साधनेन ? समारोपस्यापि तत्रानुपपत्तेस्तद्व्यवच्छेदस्याप्यसम्भवात् । अनिश्चयेऽपि यदि प्रतिपत्ति, तथापि किमर्थं तत्साधनम् ? व्यवहारार्थमिति चेत्, न, तस्यापि तत एव भावात्, कथमन्यथा ततो नित्ये तन्निषेधव्यवहार । तन्न प्रत्यक्षतस्तत्र तस्या प्रतिपत्ति, इत्यारोपिताया एव निषेधस्तथा तद्भङ्गादेरपीति सूक्तम्–'नापक्षे प्रत्यक्षवृत्तितः' इति ।

यत्पुनरेतत्–वैशेषिकादे 'सामान्यसमवायादिकं निराकुर्वन् यदि न प्रतिपद्यते तन्निषेधहेतोराश्रयासिद्धत्वम् । प्रतिपद्यते चेत्, कथं निषेध ? तत्प्रतिपत्त्या बाधनात्' इति, तदप्यनेन प्रतिविहितम्, प्रमाणत प्रतिपत्तावेव तदनुपपत्तेर्न कल्पनात । तत्प्रतिपन्नस्य च तस्य परै निषेध कल्प्यते । अभ्युपगन्तव्यं चैतत्, कथमन्यथा स्वयमपि क्षणभङ्गादेर्निराकरणम् । न हि तस्यापि सौगतादिकल्पितस्य क्वचित् प्रमाणत प्रतिपत्तिः बुद्ध्यादावपि षट्क्षणस्थायित्वादेरेव स्वयमवगमात् । अथ न तस्य निषेध, कथं तद्वादी पराजीयताम् ? अप्रतिक्षिप्तपक्षस्य तदनुपपत्ते । तद्विपर्ययस्य नित्यादेर्विधानादेवेति चेत, न, अप्रतिपन्ने तस्मिन् तद्विपर्ययत्वस्यैव क्वचिदनधिगमात् । तत कल्पनयैव तस्यापि प्रतिपत्तिरित्यलमनुबन्धेन ।

साम्प्रतम् उन्नामादेस्तदुत्पत्त्याद्यभावेऽपि गमकत्वोपदर्शनेन हेतुत्रैविध्यमपि विध्वंसयन्नाह–

**तुलोन्नामरसादीनां तुल्यकालतया न हि ॥१६९॥**
**नामरूपादिहेतुत्वं न च तदव्यभिचारिता ।** इति ।

तुलाया उन्नाम ऊर्ध्वगमन रसश्च तावादी येषामर्वाग्भागसास्नादीनां तेषां न हि स्फुटम् । किम् ? नामश्चाधोगमन रूपं चादिर्येषां परभागविषाणादीनां त एव हेतवो येषां तेषां भावस्तत्त्वम् । कया युक्त्या तत्तेषां न ? तुल्यकालतया समसमयतयेति । न हि समसमयत्वे युक्तो हेतुफलभाव परस्परमनुपयोगात्, सव्येतरनारीकुचचूचुकवदनभ्युपगमात् । न चैवमहेतुत्वम्, अव्यभिचारात् । न हि नामादेरुन्नामादिव्यभिचारो निर्व्यभिचाराया एव ततस्तत्प्रतिपत्तेरुपलम्भात् । न ततस्तस्य प्रतिपत्तिरपि तु गौरवादे तस्य तत्कारणत्वात्, ततस्तु नामादिसहभाविन उन्नामादेरिति चेत, तथापि व्याघात एव त्रैविध्यस्य कारणस्यापि लिङ्गत्वोपगमात्, तथा रसादे रूपाद्यधिगमाच्च । ततोऽपि न तस्याधिगम अपि तु तत्कारणस्यैव पूर्वरसादिस्तत्क्रम्येति चेत; न, रूपादेरेव समसमयस्य तद्दर्शनात् । तत्कारण-

१ नित्ये । २ अर्थक्रियाया । ३ अर्थक्रियाया । ४ 'अथ यदि परेण प्रमाणादप्रतिपन्न तेनैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य । ..' – प्रश० व्यो० पृ० ५६ । ५ 'जैनादि – ता० टि० । ६– तावदनुप– आ०, ब०, प० । ७ जैने.' ता०टि० । ८ वैशेषिकादिना –ता०टि० । ९–विशेषणा– आ०, ब०, प० । १० –तुरव्यभि– आ०, ब०, प० । ११ लिङ्गस्योप– आ०, ब०, प० ।

प्रतिपत्तिरेव ( त्तेरेव ) तत्प्रतिपत्तिस्तस्य रूपादिजननधर्मतया तत प्रतीते । अत एवोक्तम्–

"एकसामग्र्यधीनस्य रूपादे रसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥" [ प्र० वा० ३।८ ]

इति चेत्; कथं पुनस्तद्धर्मेण प्रतीतेरेव तत्प्रतीतिः ? अव्यभिचारादिति चेत्; उक्तमत्र– 'हेतुप्रतिपत्तिरेव साध्यस्यापि प्रतिपत्तिरित्यनुमानमुत्सीदेत्' इति । न च प्रतिपन्नात्ततस्तत्प्रतिपत्तिः; [1]कारणलिङ्गप्रसङ्गात् । नचैवं पारम्पर्यप्रतिपत्ति–रसादेस्तत्कारणस्य ततोऽपि रूपादेरवगम इति, रूपादेरेव झटिति ततस्तद्दर्शनात् । सत्यम्, स तु न [2]स्वतोऽविनाभावात्,अपि तु तदुत्पत्तिप्रयुक्तादेव । तदुक्तमर्चटेन–"रूपादिनापि रसादेरव्यभिचारो न स्वतः किन्तु स्वकारणाव्यभिचार-द्वारक ।" [ हेतुबि० टी० पृ०८ ] इति चेत्; किं पुनरेवं नियमः 'स्वकारणमव्यभिचरत-स्तत्कार्येणाव्यभिचार.' इति ? तथा चेत्; न; असता तदयोगात् । सतैवेति चेत्; कुतः सत्त्वम् ? कारणभावादिति चेत्, न; नियमाभावात् "नावश्यम्[3]" [ हेतुबि० टी० पृ० २१० ] इत्यादि-वचनात् । नियम एव रसादेस्तस्यानुमानात्; अन्यथा तदयोगादिति चेत्; न; परस्पराश्रयात्–सति तत्सत्त्वनियमे तत्र रसादेस्तदव्यभिचारद्वारकोऽविनाभावः, ततश्च तदनुमानात्तन्नियम इति । तन्नियम-स्यान्यतः प्रतिपत्तौ तु व्यर्थमेव रसादिलिङ्ग भवेत् । तस्मात् स्वत एव तस्य तत्र अविनाभावो न तस्मात्, नापि तत्कारणादुत्पत्तेः ।

यत्पुनरत्रोक्तं तेनैव– "आकस्मिकस्तर्हि सर्ववस्तूनां स्वभाव इति न कस्यचित् स्यात् । नह्यहेतोर्देशकालद्रव्यनियमो युक्तः ।" [ हेतुबि० टी० पृ० ९ ] इति; तन्न; स्वहेतु-प्रकृतेरेव नियतविषयतया तस्योत्पत्ते., तत एव तत्प्रकृतेरप्यवगमात् । नियतविषया हि तदुत्पत्तिः कुतश्चिदवगम्यमाना तत्प्रकृतिमवगमयत्येव, उत्पत्तिनियमस्य तदन्यत्रापि तदधीनत्वात् । अत इदमपि [5]तस्यायुक्तमेव–"तच्चाव्यभिचारकारणं यथोक्तादन्यन्न युज्यते ।" [ हेतुबि० टी० पृ०९ ] इति; तदुत्पत्त्यादेरुक्तादन्यस्यापि [6]तत्प्रकृतेर्भावात् ।

किञ्चेदं तस्य तत्कारणत्वम् ? उत्पादकत्वमिति चेत्; न तर्हि तस्मिन् सत्यप्यव्यभिचारः कारणे कार्यभावस्यानियमात् । ततो यथेदमुच्यते–

"संयोग्यादिषु येष्वस्ति प्रतिबन्धो न तादृशः ।
न ते हेतव इत्युक्तं व्यभिचारस्य सम्भवात् ॥" [ प्र० वा० ४।२०३ ] इति ।

तथेदमपि वक्तव्यम्–

धूमादावपि यत्रास्ति प्रतिबन्ध. स तादृशः ।
न सोऽपि हेतुर्वक्तव्यो व्यभिचारस्य सम्भवात् ॥१५२५॥ इति

---

१ कारणं लि– आ०,ब०,प० । २ स्वतोपि भावात् आ०,ब०,प० । ३ "नावश्यं कारणानि कार्यवन्ति भवन्तीति सौगतवचनम्"–ता० टि० । ४ 'उत्पत्तेरित्ययं शब्दोऽत्रापि सम्बन्धनीयः ।" –ता० टि० । ५ अर्चटस्य । ६ तत्प्रकृतेमा– आ०, ब०, प० ।

तन्नोत्पादकत्वं कारणत्वम् । अस्तु तन्नियामकत्वम्, तन्निवृत्तौ नियमेन तस्यापि निवृत्तेः; इत्यपि न युक्तम्; कारणत्वाद्यभावे तस्याप्ययोगात् ।

"तस्मात् तन्मात्रसम्बन्धः स्वभावो भावमेव वा ।
निवर्त्तयेत्कारणं वा कार्यमव्यभिचारतः ॥" [प्र० वा० ३।२२] इति वचनात् ।

भवतु कारणत्वस्योक्तसमाधित्वात् स्वभावत्वादेव तस्य तन्नियामकत्वमिति चेत्; न, तन्मात्रसम्बन्धाभावात् । न ह्यव्यभिचारमात्रस्य तेन व्याप्तिः; असत्यपि तस्मिन् रूपादौ तद्भावात् । ततो यदुक्तम्– "यस्य येन सह तादात्म्यतदुत्पत्ती न स्तो न [illegible] तदविनाभावी यथा प्रमेयत्वादि (दे) नित्यत्वादिना, न स्तश्च केनचित्तादात्म्यतदुत्पत्ती स्वभावकार्यव्यतिरेकिणामर्थानामिति व्यापकानुपलब्धिः" [ हेतुबि० टी० पृ० ९ ] इति, तत्प्रतिविहितम्; तदभावेऽपि रसादे रूपाद्यविनाभावव्यवस्थापनेनानुपलब्धेर्व्यभिचारात् । तन्न नियामकत्वमपि कारणत्वम् । ज्ञापकत्वं तु प्रागेव प्रतिविहितम् । ततो न किञ्चिदपि कारणार्थमुत्पश्यामः । ततः स्थितं रसादेरकार्यस्यापि हेतुत्वान्न त्रैविध्यमिति ।

तथा अर्वाग्भागसास्नादेरपि । न हि तस्यापि परभागविषाणादिकार्यत्वं तुल्यकालत्वाविशेषात् । तथापि कार्यमेव सत्येव तस्मिन् भावादिति चेत्; न किञ्चिदिदानीमकार्यलिङ्गं सर्वस्य साध्ये सत्येव भावात् । अभेदे स्वभावहेतुरपीति चेत्; न; तदा हेत्वधिगमेनैव साध्यस्याप्यधिगमात्, अन्यथा भेदापत्तेः । न कृतकत्वादेस्तदव्यतिरिक्तमनित्यत्वं साध्यम्, अपि तु तद्व्यवहारस्तदन्यव्यवच्छेदो वेति चेत्; सिद्धं तर्हि तस्य तत्कार्यत्वं व्यतिरेके सत्यविनाभावादिति न स्वभावहेतुर्नाम कश्चित् । [1]किमेवं कार्यत्वकल्पनेन ? अविनाभावनिर्णयादेव गमकत्वोपपत्तेः । ततो न तुलोन्नामादीनां तदुत्पत्त्या गमकत्वम् । नापि तादात्म्येन; तदभावात् । कथं पुनस्तदभावो यावता तुलादिद्रव्यादव्यतिरेकादस्त्येव कथञ्चित् तेषामन्योऽन्यमपि तादात्म्यमिति चेत्; अत्राह–

**तादात्म्यं तु कथञ्चित् स्यात् ततो हि न तुलान्तयोः ॥१७०॥** इति ।

तुलान्तयोरुन्नामावनामवतोस्तुलाग्रयोः तादात्म्यमभेदो न तु नैव [2]तोरवधारणार्थस्यात् । कुत एतत् ? ततः तस्मात् तुल्यकालत्वात् हि स्फुटम् । न हि तादात्म्ये तुल्यकालत्वं तस्य [3]भेदद्वित्वनिष्ठत्वात् । सर्वथा भेद एव तद्विरुद्धं न कथञ्चिदिति चेत्; न; तथा स्वमतव्यापत्तेः, एकान्तनिरंशक्षणक्षीणस्वलक्षणवादविलोपस्यावश्यम्भावात् । ततः 'कथञ्चित्' इत्यत्र अपिशब्दो द्रष्टव्यः, ततः कथञ्चिदपि न केवलं सर्वथा स्यात् भवेत् तादात्म्यं तुलान्तयोः । नत्विति सम्बन्धः । न केवलं तुल्यकालत्वात् कथञ्चिद्भावे चानिष्टापत्तेस्तुलान्तयोरेव न तादात्म्यमपितु अन्येषामपीत्याह–

**[4]सास्नाविषाणयोरेवं चन्द्रार्वाक्परभागयोः ।** इति ।

प्रसिद्धार्थमेतत् । तदेवमुन्नामादेरकार्यस्वभावस्यापि लिङ्गत्वोपपादनेन त्रैविध्यनियमं प्रतिषिध्य पात्रकेसरिस्वामिनापि तन्नियमः प्रतिषिद्ध इति दर्शयंस्तद्वचनमाह–

१ किं चैवं आ०, ब०, प० । २ तुशब्दस्य । ३ भेदद्वित्वनिष्ठ– आ०, ब०, प० । भेदनिष्ठत्वात् । ४ सर्वदा स्या– आ०, ब०, प० । ५ सास्नादीनां च– आ०, ब०, प० ।

**उपलब्धेश्च हेतुत्वादन्तर्भावात् स्वभावतः ॥१७१॥**
**तयोरनुपलम्भेषु नियमो न व्यवस्थितः ।** इति ।

उपलब्धेः उपलम्भस्य न केवलं कार्यादेरेवेति । अपिशब्दार्थः चशब्दः । **हेतुत्वात्** गमकत्वात् **नियमः** कार्यादिभेदेन त्रिविधमेव लिङ्गमित्यवधारण **न व्यवस्थितः** । न हि कार्यादेरन्यस्यापि हेतुत्वे तन्नियमोपपत्तिः । अस्ति च तस्या हेतुत्वम् 'अस्त्यात्मोपलब्धेः' इत्यात्मसद्भावस्य ततः प्रतीतेः । आत्मनो यद्यन्यतः प्रतिपत्तिरस्ति किमुपलब्ध्या कर्तव्यं सिद्धोपस्थायित्वात् ? अथ नास्ति न तस्या हेतुत्वमाश्रयासिद्धेरिति चेत्; भवेदेवं यद्याश्रयबलेन गमकत्वम् । न चैवम्, अन्यथानुपपत्तित एव तद्भावात् । निवेदितं चैतत्–'असिद्धधर्मिधर्मत्वेऽपि' इत्यादिना[1] । कथं पुनस्तदपरिज्ञाने कुतश्चित्तदन्यथानुपपत्तेरप्यवगमः ? इत्यपि न चोद्यम्; कार्यादावपि तत्प्रसङ्गात् । अप्रतिपन्नेऽपि साध्ये तस्य तत्स्वभावत्वात् भवत्येव परिज्ञानम्' इत्यपि समाधानम् उपलम्भेऽपि न विमुखभावमाविर्भावयति । कथं पुनरुपलब्धेर्गमकत्वं व्यभिचारस्यापि दर्शनात् ? न ह्युपलब्धिरित्येव भावास्तथा भवन्ति विभ्रमाभावप्रसंगेरिति चेत्; न; तन्मात्रस्य[2] हेतुत्वानभ्युपगमात्, अन्यथानुपपत्तिसंवलितशरीराया एव तस्यास्तदभ्यनुज्ञानात् । न च तस्या व्यभिचारोऽनुपलब्धिवत् । क्व पुनरियमुपलब्धिर्यतस्तदस्तित्वं साध्यत इति चेत् ? इयमेव येयं तत्र तत्र बुद्धिविवर्तेष्वन्वितरूपतया अहमिति प्रतिभाति । न तत्र कश्चिदात्मा नाम तद्व्यतिरिक्तः प्रतिभातीति चेत्; सत्यम्; तस्या एवात्मत्वोपगमात् । न चैवमुपलब्धेर्वैयर्थ्यम्; व्यवहारसाधनार्थत्वादनुपलब्धिवत् । एवमप्युपलब्धेस्तद्विषयाविष्वग्भावेन स्वभाव[3] एवान्तर्भावात् कथं तया नियमाव्यवस्थितिरिति[4] चेत् अनुपलब्धिवत् साध्यभेदेनेति[5] ब्रूमः । ततो भवत्येव तया तदव्यवस्थितिः अन्यथाऽनुपलब्धेरपि तत्रैवानुप्रवेशात् द्वैविध्यमेव स्यात् । तथा **तयोः** कार्यस्वभावयोः **स्वभावतः** स्वरसतोऽन्त**र्भावा**दनुप्रवेशात् । क्व ? **अनुपलम्भेषु** त्रैविध्य**नियमो न व्यवस्थितः** सर्वस्यानुपलम्भत्वेन ऐकविध्यस्यैवोपपत्तेः । तथा हि–परस्यायं स्वभावहेतुः अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति । तत्र प्रयत्नानन्तरीयकत्वं यदि प्रयत्नानन्तरं निष्पत्तिः, इयं विरुद्धव्याप्तोपलब्धिरेव नित्यत्वविरुद्धेन अनित्यत्वेनास्य व्याप्तत्वात् । अथ तज्ज्ञानम्; तथापि विरुद्धकार्योपलब्धिरेव तस्य नित्यविरुद्धानित्यकार्यत्वात् । ततः कथमनुपलम्भेषु तयोरन्तर्भावो विरुद्धविधेरनुपलम्भभेदत्वेन स्वयमभ्युपगमात् । बहुवचनं कार्यादिबहुत्वेन तद्रूपानुपलम्भानामपि बहुत्वात् ।

स्यान्मतम्–यदा निषेधपरः प्रयोगो न नित्य इति तदा भवतु तत्रान्तर्भाव, यदा तु विधिपर एव अनित्य इति तदा स्वभावादित्वेन तयोर्हेतुत्वान्न तन्नियमाव्यवस्थितिरिति; तन्न; सर्वदा लिङ्गस्य सामान्यविषयतया तन्निषेधपरतयैवावस्थानात्, अन्यथा तद्विषयत्वायोगात् । न हि सामान्यं नाम अन्यव्यवच्छेदादपरं परस्य सम्भवति । तथा चोक्तम्[6]– "अतद्रूपपरावृत्तवस्तुमात्रप्रसाधनात् ।" [ ] इत्यादि । विधिपरत्वे वा कथन्न वस्तुविषयत्वम् ? इष्टमेव[7] लेशतस्त-

१ न्यायवि०श्लो० २।६। २ उपलब्धिमात्रस्य । ३ "स्वभावहेतौ"– ता०टि० । ४ "त्रैविध्यनियमाव्यवस्थिति" –ता०टि० । ५ साध्याभेदेनेति आ०,ब०,प०। ६ "यदुक्तं धर्मकीर्तिना–अतद्रूपपरावृत्त..." –अष्टसह० पृ०२८ । "आह चात्र–अतद्रूप"–प्र० वार्तिकाल० १।२। ७ –व ततस्तदपीति आ०,ब०, प०।

दपीति चेत्; न; निरंशे वस्तुनि लेशाभावात् । तत एवोक्तम्–"एकस्यार्थस्वभावस्य" [ प्र० वा० ३।४२ ] इति । यद्येवमिदं कथमुक्तम्–"वस्तुलेशस्य चाश्रयः" [ ] इति ? पर एवेदं प्रष्टव्यो य एवमन्योऽन्यव्याहतमभिव्याहरति । ततः प्रतिषेधपर एव प्रयोगो युक्तः । कार्यहेतोरपि सामान्यविषयस्यातत्परतयैव स्वयं प्रतिजानात् । ततो न सङ्गतमिदम्–"तत्र द्वौ वस्तुसाधनौ" [ न्यायबि० पृ० ३९ ] इति । न न सङ्गतम्; तद्विषयस्य सामान्यस्य वस्त्वेकत्वाध्यवसायादिति चेत्; न; अनुपलम्भस्यापि तत्साधनत्वापत्तेः । अभावस्यापि भावाव्यतिरेकिण एव लौकिकैर्व्यवसायात् । तत इदं व्याहतम्–"एकः प्रतिषेधहेतुः" [ न्यायबि० पृ० ३९ ] इति । ततोऽनुपलम्भत्वेन सर्वस्यापि प्रतिषेधहेतुत्वादसङ्गतमेव तत्रेत्यादि ।

पुनरपि [1]नियममेव विधुरयितुं लिङ्गान्तरमुपदर्शयन्नाह—

अभविष्यत्यसम्भाव्यो धर्मो धर्मान्तरे क्वचित् ॥१७२॥
शेषवद्धेतुरन्योऽपि गमकः सुपरीक्षितः । इति ।

धर्मः कृत्तिकोदयादिः क्वचित् कस्मिंश्चित् धर्मान्तरे शकटोदयादौ साध्ये हेतुः । कीदृशः ? अभविष्यति अजनिष्यमाणे धर्मान्तरे तस्मिन् असम्भाव्योऽसम्भवितया[2] कल्पनीयः तदविनाभावितया निश्चित इति यावत् । कथं हेतुः ? शेषवत् शेषं परोक्तात् कार्यत्वादन्यदकार्यत्वादि तद्वद्यथा भवति । कार्यमेव कृत्तिकोदयः शकटोदयस्येति चेत्; कुत एतत् ? [illegible] उत्पत्तेरिति चेत्; न; ततः प्रागेव निष्पत्तेः । निष्पन्ने च किं तेन कर्तव्यम् ? अकिञ्चित्करस्य कारणत्वेऽतिप्रसङ्गात् । तदविनाभावात् तत्कार्यमिति चेत्; नन्वेवमपि तस्य स्वभाव एव स्यात्, साध्यस्य तस्मिन्नर्थान्तरनिरपेक्षत्वेन भावात् अन्त्यक्षणप्राप्तकारणवत् । अन्यथा तत्कारणस्यापि कार्यत्वादेव लिङ्गत्वोपपत्तेः किमिति स्वभावत्वेन तदुपपादितं यत इदमर्थवत्–

"हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः ॥" [प्र०वा० ३।६] इति ।

[3]कीर्तिनैव तथा तदुपपादितं न प्रज्ञाकरेण भाविकारणवादिनेति चेत्; किं पुनः[4] कीर्तिस्तद्वादी न भवति ? तथा चेत्; कथं तद्ग्रन्थ एव "सत्तोपकारिणी" [प्र०वा० १।५१] इत्यादिस्तद्वा[5]दपरतया अलङ्कारकृता व्याख्यातः[6] ? तदपि तस्यानभिप्रेतार्थमेव व्याख्यानमिति चेत्; नेदानीं तत्कारणत्वं शास्त्रार्थः शास्त्रकारानभिप्रेतत्वादिति कथं तद्बलेन तदुदयस्य लिङ्गान्तरत्वप्रतिक्षेपान्नियमविघाते तत्संव्यवस्थानम् ? कथं वा तन्मतमुपपादयितुं प्रवृत्तेन तदनभिप्रेतस्य क्वचिदुपपादनं नित्यादेरपि प्रयोजनवशात् क्वचित् तत्प्रसङ्गात् । भवत्येव कीर्तिरपि तद्वादी, तथापि नान्त्यकारणस्य स्वभावत्वकल्पनं व्याहतं तत्र उभयधर्मसद्भावादिति चेत्; तथापि कथं तन्नियमः ? केवलात् कार्यात् स्वभावाच्च तदुभयात्मनस्तस्य

---

१ नियमेन आ०,ब०,प० । २ –यावक– आ०,ब०, प० । ३ धर्मकीर्तिना । ४–न स की– आ०, ब०, प० । ५ भाविकारणवाद । ६ "तदेतदानन्तर्यमुभयापेक्षयापि समानम्, यथैव भूतापेक्षया तथा भाव्यपेक्षयापि । न चानन्तर्यमेव तत्त्वे निबन्धनं व्यवहितस्यापि कारणत्वात् ।" –प्र० वार्तिकाल० ३।५१ ।

हेत्वन्तरत्वात् । भवतु स्वभाव एव कृत्तिकोदयादिरपीति चेत्; न; धूमादेरपि तत्त्वप्रसङ्गात्, अविनाभावस्य तद्व्यवस्थाहेतोः तत्रापि भावात् । भेदप्रतिभासान्नेति चेत्; तदुभयादेरपि न भवेदविशेषादिति सूक्तम्–'शेषवत्' इति । तद्वद् अन्योऽपि कृत्तिकोदयादेरपरोऽपि [1]पक्ष्यादेरपि गमकः प्रत्यायकः साध्यस्य । कीदृशः ? सुपरीक्षितः सुष्ठु साध्यनिष्ठानियमवत्त्वेन परीक्षितः तर्केण विचारित इति । अस्ति ह्याकाशे पक्षिदर्शनात् अध छायामण्डलस्य, तद्दर्शनाच्चोपरि पक्षिणः प्रतिपत्तिः । न ह्यत्र कार्यत्वम्; तुल्यकालत्वात् । न स्वभावत्वम्; भिन्नदेशत्वात् । परीक्षया तु अविनाभावाद् गमकत्वमतो न [2]तन्नियमः । सत्यप्यत्र कार्यादित्वे न तद्व्यवस्थितिः, पक्षधर्मत्ववैकल्येन तद्धतोऽस्य भेदात्, न ह्यत्र पक्षिणः पक्षधर्मत्वम्; भूप्रदेशे तस्यासम्भवात् । तस्य[3] हि पक्षत्वं छायावत्त्वेन साधनात् । नापि तन्मण्डलस्य; आकाशे तस्याभावात् । न च भूप्रदेशाकाशसमुदायस्य[4] पक्षत्वम्; तत्रै हि अत्रेति निर्देशः स्यात् साध्यस्य न पुनर्यत्र लिङ्गं तत ऊर्ध्वमधस्ताद्वेति । तथैव च तत्प्रतिपत्तिर्दृश्यत इति ।

साम्प्रतं नैयायिकादिकल्पितमपि तन्नियममतिदेशेन विधुरयन्नाह–

**एतेन पूर्ववद्वीतसंयोग्यादौ कथा गता ॥१७३॥** इति ।

पूर्ववद्वीतसंयोगिशब्दानामादिशब्देन बहुव्रीहिः । तस्य च प्रत्येकमभिसम्बन्धात् पूर्ववदादिः वीतादिः संयोग्यादिरिति[6] भवति । तत्राद्येन शेषवत्-सामान्यतोदृष्टयोः, द्वितीयेन अवीतवीतावीतयोः, तृतीयेन समवाय्येकार्थसमवाय्य (यि) विरोधिनामवरोधः, तस्मिन् पूर्ववद्वीतसंयोग्यादौ या कथा हेतुत्वनियमान्वाख्यानं सापि एतेन पूर्वोक्तेन न्यायेन गता निवृत्ता । नह्येवं नियमः– 'पूर्ववदादिरूपेण त्रिविधमेवानुमानम्' इति; अधिकस्यापि कस्यचिद्भावात् । तथा हि–पूर्ववदिति कारणात् कार्यस्यानुमानम्, पूर्वं कारणमस्यास्तीति व्युत्पत्तेः । शेषवदिति कार्यात् कारणस्य, कार्यस्यैवोपयुक्तकारणादन्यतया शेषशब्देनाभिधानात् । सामान्यतोदृष्टमिति चाकार्यकारणादकार्यकारणस्य । न च 'अस्त्यात्मा उपलब्धेः' इत्यादि सत्तासाधनम् एतेषामन्यतममपि; सामान्यतोदृष्टेऽपि तस्यापक्षधर्मत्वादित्वेनानन्तर्भावात् । तद्गमकत्वस्य च समर्थितत्वात् ।

किञ्च, पूर्ववदादेर्गमकत्वं त्रैरूप्यात्, पाञ्चरूप्याद्वा, तदन्यतरस्यैवाविनाभावपर्यवसानादिति स्वयमभ्युपगमात् ? तथा च यदेतत् पूर्ववतो भाष्यकारेणोदाहरणमुक्तम्–"मेघोन्नत्या भविष्यति वृष्टिः" [ न्यायभा० १।१।५ ] इति, तत्कथं गमकम् अपक्षधर्मत्वात् ? नह्यत्र वृष्टेः पक्षत्वम् असिद्धेः, सिद्धौ चानुमानवैफल्यात् । मेघस्य च सिद्धत्वेऽपि न पक्षत्वम्, असाध्याधिकरणत्वात् । न हि वृष्टेस्तदधिकरणत्वं भावित्वात् । यत् पुनरत्र विश्वरूपेण समाधानमुक्तम्–"**कारणस्यैव मेघादेः सिद्धत्वात् धर्मित्वं तद्वृष्ट्युत्पादकत्वं साध्यो धर्मः उन्नतत्वादिना तद्धर्मेणैवानुमीयते ।**" [ ] इति; तन्न सम्यक्; न ह्येवमपि कारणे पक्षधर्मत्वस्यावस्थापनमपि तु तद्धर्म एवोन्नतत्वादौ ।

---

१ पक्ष्यादेरपि आ०, ब०, प० । २ त्रैविध्यनियम । ३ तस्य प्रत्यक्ष छा– आ०, ब०, प० । भूप्रदेशस्य । ४ –स्य सप– आ०, ब०, प० । ५ न हि तद्वत्र प० । ६ –ति प्रभ– प० । ७ –समवायवि– प० । ८ –मित्यादिकस्या– आ०, ब०, प० । ९ द्रष्टव्यम्– न्यायभा०, न्यायवा०, न्यायवा० ता० १।१।५। १० शेषवत्त्वेनाभि– आ०, ब०, प० ।

तदपि न कार्ये साध्ये किन्तु कारणधर्म एव तदुत्पादकत्वे । तथा चान्यत्र प्रश्ने अन्यश्चोत्तरं ब्रुवत पश्यत विश्वरूपस्य न्यायकौशलम् ! भाष्यविरोधश्चैवम्–तत्र कारणेन कार्यस्यैवानुमानवचनान्न कारणधर्मेण तद्धर्मान्तरस्य । तेन तदन्तरानुमानमेव कार्यानुमानं भाष्यस्याप्येवमभिप्रायत्वादिति चेत्, कथं पुनः तदुत्पादकत्वस्यानुमानं वृष्टेः ? न तावदभेदात्, कार्यस्य कारणधर्मादवश्यन्तया भेदात् । अविनाभावादिति चेत्; व्यर्थमिदानीं तदुत्पादकत्वस्याप्यनुमानम् उन्नतत्वादितल्लिङ्गज्ञानादेव तज्ज्ञानत्वोपपत्तेरविनाभावाविशेषात् ।

लिङ्गज्ञानस्य तत्साध्यज्ञानत्वे प्रलयं व्रजेत् ।
सिद्धयत्यत्रैवानुमानं त्रैविध्यं यत्र कथ्यते ॥१५२६॥

तदुत्पादकत्वात् वृष्ट्यनुमानोपपत्ते तदनुमानमेव वृष्ट्यनुमानमुच्यत इति चेत्; ततोऽपि कथं व्यधिकरणात् तदनुमानम् ? उन्नतत्वादिवत्ततोऽपि कारणधर्मस्यैवापरस्यानुमानेन तदनुमानकल्पनायां चानवस्थापत्ते । तत्राविनाभावात्तदनुमानमेव वृष्ट्यनुमानम् । तद्विशिष्टत्वादिति चेत्; स्यादेतत् वृष्ट्युत्पादकत्वं वृष्टिविशिष्टम् अत तज्ज्ञानमेव वृष्टेरपि ज्ञानमिति, तन्न; ततोऽपि भेदस्यानपाकरणात् । नहि तद्विशिष्टमित्येव तस्य ततोऽनर्थान्तरत्वम्; तद्विशिष्टत्वस्यैवाभावप्रसङ्गात् । तदनपाकरणे तु कथं तज्ज्ञानं तदर्थान्तरस्य विशिष्टस्य विशेषणापेक्षणादिति चेत्; एवमपि भवति तज्ज्ञानाद्विशेषणस्यानुमानं न तु तदेव तस्येति अन्यथा कारणस्यापि कार्यापेक्षत्वात् तज्ज्ञानमेव कार्यस्यापि ज्ञानमिति व्यर्थं पूर्ववल्लिङ्गकल्पनं भवेत् । अनुमानं तु ततस्तस्यानवस्थयैव दत्तोत्तरम् । तन्न तदुत्पादकत्वानुमानमेव वृष्टिपरिज्ञानम् । ततो दुर्भाषितमिदं परस्य–"भविष्यद्वृष्ट्युत्पादकत्वं धर्मो यदानुमितं तदा वृष्टेरनुमानं कथ्यते ।" [ ] इति ।

यदपीदं शेषवत उदाहरणं भाष्ये प्रदर्शितम्–"पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च स्रोतसो [3]दृष्ट्वाऽनुमीयते भूता वृष्टिः [न्यायभा० १।१।५] इति । अत्रापि विश्वरूपेण तात्पर्यमुक्तम् –"नदीशब्दवाच्यो गर्तविशेषो धर्मी तस्य उपरि वृष्टिमद्देशसम्बन्धित्वं साध्यो धर्मो धर्मिगतेन पूर्णत्वादिना धर्मेणानुमीयते ।"[ ] इति । तत्रापि तदेव वक्तव्यम्–कथं पुनः कार्यधर्मस्यैवानुमानं तदर्थान्तरस्य भूताया वृष्टेरपीति ? अविनाभावादिति चेत्; उक्तमत्र लिङ्गज्ञानस्येत्यादि । ततः पुनस्तदनुमानेऽप्यभिहितमेवानवस्थानं विशिष्टस्य तद्धर्मस्य तद्वृष्टिविशेषणापेक्षत्वादित्यपि प्रतिविहितम् 'एवमपि' इत्यादिना । तन्न उपरिवृष्टिमद्देशसम्बन्धित्वपरिज्ञानमेव भूतवृष्टिपरिज्ञानमप्युपपन्नम् ।

यदपि सामान्यतोदृष्टस्य भाष्ये प्रतिपादितम्–आदित्यवज्यानुमानमुदाहरणप्रतिनिधित्वेनावस्थाप्य [4]स्वयमुदाहरणमुक्तं रूपेण स्पर्शानुमानमिति, तत्रापि पक्षधर्मत्वादिकमपेक्षितव्यम्, अन्यथाऽविनाभावेन गमकत्वायोगात् । सत्यम्, अपेक्ष्यत एव, रूपमिदं स्पर्शाविनाभाविरूपत्वात् प्रतिपन्नरूपवदिति तत्प्रवृत्तेरिति चेत; तर्हि तदेवात्रापि वक्तव्यम्–कथन्नाम रूपस्य स्पर्शाविनाभावित्वस्य परिज्ञानं तदर्था-

१ –त्वस्ये– आ०, ब०, प० । २ कारणज्ञानमेव । ३ दृष्ट्वानुमी– आ०, ब०, प० ।
४ विम्बरूपेण ।

न्तरस्य स्पर्शस्येति ? अविनाभावादेः पूर्ववदेव प्रत्यवस्थानम् । भवतोऽपि कथं धूमोऽयमग्निमान् धूमत्वादित्यग्निमत्त्वज्ञानमेवाग्निज्ञानमिति चेत् ? अग्नितद्धर्मविषयतया लिङ्गादेव तस्योत्पत्तेः । न चैवं भवन्मते सम्भवति, लिङ्गस्य अग्न्यपेक्षया व्यधिकरणत्वेनापक्षधर्मत्वात् । स्याद्वादिमते तु अपक्षधर्मस्यापि गमकत्वात् । न चाविनाभावस्य पक्षधर्मत्वादावेव पर्यवसायः, 'सन्ति प्रमाणानि इष्टसाधनात्, उदेष्यति शकटं कृत्तिकोदयात्' इत्यादौ तदभावेऽपि भावात् । तन्न कारणादिभेदेन लिङ्गत्रैविध्यस्य सम्भव इति ।

वार्तिककारेण तु 'पूर्ववच्छेषवत् सामान्यतो दृष्टम्' इत्येतदेवं त्रिसूत्रीकृत्य तद्विषयतया अन्वय्यादिभेदेन त्रैविध्यं लिङ्गस्योक्तम् । तत्र पूर्ववच्छेषवदित्येकं सूत्रम् । पूर्वशब्दः पक्षवाची पक्षस्यैव कथात्रयेऽपि पूर्वमभिधीयमानत्वेन पूर्वत्वात्, स व्याप्त्या विद्यतेऽस्येति पूर्ववत् पक्षे विद्यमानमित्यर्थः । शेषः सपक्षः तस्यैव लिङ्गाङ्गत्वेन प्रस्तुतयोः पक्षसपक्षयो पक्षस्योपयोगे सत्युद्धरितत्वेन शेषत्वोपपत्तेः स विद्यतेऽस्येति शेषवत्, सपक्षे देशतः कार्त्स्न्यतो वा विद्यमानमिति यावत् । अनेनान्वयी हेतुरुक्तः । पूर्ववत्सामान्यतोऽदृष्टमिति द्वितीयम् । पूर्ववदिति व्याख्यातम् । विपक्षे सामस्त्येनान्यथा वा यत्र दृष्टं तत् सामान्यतोऽदृष्टम् अनेन व्यतिरेकिसाधनमभिहितम् । पूर्ववच्छेषवत्सामान्यतोऽदृष्टमिति तृतीयम्, अनेन चान्वयव्यतिरेकीति । तत्र सपक्षैकदेशवृत्तेरन्वयिन उदाहरणम्–परमाण्वादयः कस्यचित् प्रत्यक्षाः सत्तासम्बन्धित्वात् घटादिवत् । [7]तद्वृत्तित्वं चास्य घटादावेव सपक्षे भावात्, सपक्षेऽपि सामान्यादौ विपर्ययात् । न चेदमत्राशङ्कनीयम्–'त्रैरूप्यादेरत्रासमग्रत्वादहेतुत्वमन्वयिन इति; 'तत्समग्रताया अन्वयव्यतिरेकिण्येवाभ्युपगमात्, इतरयोस्तु यथासम्भवं तदुपगमात् । अत एव चित्रभानोर्वचनम्–"'अन्वयादीनि रूपाणि साकल्येन अन्यतमवैकल्येन वा यत्र सन्ति तदनुमानम्" [ ] इति । तत्रोच्यते–यद्यन्वयिनोऽविनाभावो नास्ति कथं गमकत्वं व्यभिचारसम्भवात् ? अथास्ति; क्व तस्य प्रतिपत्तिः ? पक्षधर्म एव तस्याबाधितविषयत्वासत्प्रतिपक्षत्वाभ्यां प्रतीयमानस्याविनाभावित्वस्यैव प्रतिपत्तेरिति चेत्; न किञ्चिदिदानीं सपक्षे सत्त्वेन ? अविनाभावाधिगमादेव हेतोर्गमकत्वात् । तस्य च विनैव तेन भावात् । भवतु [10]सपक्षे सति तत्प्रतिपत्तिरिति चेत् ; न तत्राप्यन्वयस्यैव सति सत्त्वलक्षणस्य प्रतीतेर्नाविनाभावस्य । न चान्वय एवाविनाभावः असत्यसत्त्वस्य [11]तत्वात्, अभावस्य च भावभेदिन एवाभ्युपगमात् । अथाबाधितविषयत्वादिकमेव अविनाभावित्वम्, तच्चान्वयिनः स्वरूपमेव, ततः सपक्षे तत्प्रतिपत्तिरेवाविनाभावित्वस्यापि प्रतिपत्तिरिति; तत्रोच्यते–किं तद्विषयत्वादिना तस्याक्षेपात्तदेव तदित्युच्यते, किं वा ततोऽर्थान्तरं तन्नेति ? प्रथमविकल्पे [12]कथमाक्षिप्ताविनाभावस्यैवान्वयस्य प्रतीते. अन्वयव्यतिरेक्येवायं हेतुर्न भवेत् ? अविनाभा-

---

१ मतेनान्वय- आ०, ब०, प० । २– व सू- आ०, ब०, प० । ३ "त्रिविधमिति अन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति"–न्यायवा० पृ० ४० । तुलना–"तदनेन न्यायवार्तिकटीकाकारव्याख्यानमनुमानसूत्रस्य त्रिसूत्रीकरणेन..."–त० श्लो० पृ० २०६ । प्रमेयक० पृ० ३६२ । ४ वादजल्पवितण्डालक्षणकथात्रयेऽपि । तयाऽन योपि आ०, ब०, प० । ५ सत्वव्या- आ०, ब०, प० । ६ अवशिष्टत्वेन । ७ सपक्षैकदेशवृत्तित्वम् । ८ तत्र सम- आ०,ब०,प० । ९ अन्वयादी- ता० । १०–चे तत्र- आ०, ब०, प० । ११ अविनाभावत्वात् । १२ कथमाक्षिप्तौ वि- आ०, ब०, प० ।

त्वस्य व्यतिरेकत्वात् । अन्वयिनि तदाक्षेपरहिते निदर्शनान्तरे तदप्रतिपत्तेरिति[1] चेत्; अन्वय्यपि न भवेत् घटादौ अनाक्षिप्तव्यतिरेके अन्वयस्याप्यप्रतिवेदनात् । अन्वयस्य प्राधान्यात् अन्वय्येवायमिति चेत्; न; साध्यप्रतिपत्त्यावविनाभावस्यैव प्राधान्यात्, सत्येव तस्मिन् व्यभिचारनिवृत्तेर्निर्णयात् । तदाक्षेपकत्वेन इदमन्वयस्यैव प्राधान्यमिति[2] चेत्; अस्तु तर्हि पक्षधर्मस्यैव प्राधान्यम्, असति तस्मिन् अन्वयस्याकिञ्चित्करत्वात् । ततो न तदाक्षेपात् सदैव तदित्युपपन्नम् । नापि ततोऽर्थान्तरं तन्नेति; व्यतिरेक्यादौ अर्थान्तरस्यैव तस्य भावात् । विपक्षव्यावृत्तिरूपं स्वरूपविनाभावित्वमेव तत्र व्यतिरेकः । तच्चाबाधितविषयत्वादेः अर्थान्तरमेव, अन्यथा रूपभेदेन लिङ्गलक्षणत्वानुपपत्तेः । तत्राप्यबाधितविषयत्वादिकमेवाविनाभावित्वं विपक्षव्यतिरेकस्तु तन्निर्णयार्थं एवेति चेत्; कुतस्ततस्तस्य निर्णयः ? सति तस्मिन् तस्यावश्यम्भावात्; तर्हि साध्यस्यैव स्यात् तदविशेषात्, तत्किमन्तर्गडुनाऽबाधितविषयत्वादिना साध्यसद्भावनियमाभावे तस्यापि दुर्लभत्वात् । ततस्तस्मादर्थान्तरमेवाविनाभावित्वम्, तस्य चान्वयिन्याक्षेपे अन्वयव्यतिरेकित्वमेव तस्य नान्वयित्वम् ।

असिद्धत्वाच्च[3] । तस्य अर्थान्तरस्य सत्तायास्तत्सम्बन्धस्य च प्रतिक्षिप्तत्वात् । सिद्धस्यापि न गमकत्वं व्यभिचारात् । स च तेनैव प्रत्यक्षेण, यद्विषयत्वं साध्यं परमाण्वादीनाम्, सत्यपि तस्य[4] सत्तासम्बन्धित्वे प्रत्यक्षत्वाभावात् । प्रत्यक्षमेव तदप्यन्येन प्रत्यक्षेणेति चेत्; तेन तर्हि व्यभिचारः स्यात् । तस्यापि तदन्तरेण प्रत्यक्षत्वे स एव वक्तव्यमनवस्थानं च । तेन सर्वस्य[5] प्रत्यक्षत्वम्, तस्य त्वन्येन तत्रानवस्थानमिति चेत्, न; तेन स्वविषयस्य प्रत्यक्षत्वे स्वरूपवेदनप्रसङ्गात् । [6]न हि स्वरूपमप्रतिपद्यमानं तद्विषयतया परं प्रत्यक्षयितुमर्हति । भवतु तर्हि स्वत एव तस्य प्रत्यक्षत्वमिति चेत्; न; स्वसंवेदनस्यासन्निकर्षजत्वेनाप्रत्यक्षत्वे ततः कस्यचित् प्रत्यक्षत्वानुपपत्तेः । परप्रसिद्ध्या प्रत्यक्षमेव स्वसंवेदनं स्पष्टावभासित्वादतो न व्यभिचार इति चेत्; [7]स्वप्रसिद्ध्या तर्हि तदभावाद्व्यभिचारश्चेति दुस्तरं व्यसनमापतितम् । तन्नेदमुदाहरणमुपपन्नम् ।

यदप्यन्वयिनः [8]सपक्षव्यापिनस्तदुपदर्शितम्–परमाण्वादिय कस्यचित् प्रत्यक्षाः प्रमेयत्वात् कुम्भादिवदिति; तदपि न युक्तम्; व्यभिचारस्य तत्राप्यविशेषात् । अपि च, यदि [10]प्रमितिरेव प्रमेयत्वम्; न पक्षधर्मत्वम्, तस्याः प्रमातृनिष्ठत्वेन परमाण्वादिष्वभावात् । तत्सम्बन्धः तदिति चेत्; तस्य यदि प्रत्यक्षत्वेऽपि न प्रमेयत्वं न सपक्षव्यापित्वं प्रमेयत्वे[11] तत्राप्यपरस्तत्सम्बन्धः, तस्यापि प्रमेयत्वे[12] पुनरपरस्तत्सम्बन्धः इत्यपर्यवसायी तत्सम्बन्धः प्राप्नुयात् । न चैवं प्रतीतिः प्रमेयत्वस्यानवस्थिते । अथ स एव न स्वप्रमितिसम्बन्धं तेषां प्रतिपद्यते यतोऽयं प्रसङ्गः, अपि तु पर एव, तेनापि स्वतत्सम्बन्धस्य न प्रतिपत्तिः, ततोऽपि परेणैव प्रतिपत्तेरिति; तन्न; स्वयमप्रमितस्याज्ञातासिद्धत्वप्रसङ्गात्[13] । अस्त्येव वादिना परमाण्वादिषु तस्य प्रतिपत्तिस्तत्सम्बन्ध एव तस्य तेनाप्रतिपत्तिरिति चेत्;

१– त्तिरि–आ०, ब०, प० । २ चेत्तर्हि आ०, ब०, प० । ३– च्च तदर्था– आ०,ब०, प० । ४ व्यभिचार । ५ कस्यचित् प्रत्यक्षत्व । ६ वस्तुनः । ७ तर्हि आ०, ब०, प० । ८ परप्र– आ०, ब०, प० । ९ स्वप–आ०,ब०,प० । १० प्रमितेरेव प० । ११–यत्वात् आ०, ब०, प० । १२– त्वेन पु– आ०, ब०, प० । १३ –त्वस्यासिद्धत्वप्र– आ०, ब०, प० ।

न; पक्षीकृते तत्रापि तदप्रतिपत्तौ तदवस्थत्वात् भागतस्तदसिद्धत्वस्य। तदपक्षीकरणे तु नात्र कस्यचिदिति सर्वदर्शी निर्दिष्टः स्यात्; भवतु कस्यचित् सातिशयज्ञानस्य योगिन एव तथानिर्देश इति चेत्; न; अत्रापि व्यभिचारसम्भावनस्यानिवृत्तेः। शक्यं हि वक्तुं यथा तस्य विद्यमानोऽपि तत्सम्बन्धो न प्रत्यक्षस्तथा परमाण्वादयः प्रमेया अपि [2]विरोधाभावात्, कुम्भादौ विद्यमानस्यापि साध्यान्वय[3]स्याप्रतिपत्तेरविशेषात्। ततो योगिनोऽपि प्रत्यक्ष एव वक्तव्यः इति तस्याप्रमेयत्वे न सपक्षव्यापित्वम्। प्रमेयत्वेऽपि तस्य स्वयमप्रमितौ भागासिद्धत्वम्। प्रमितौ पुनः तत्सम्बन्धस्यापि स्वयमेव प्रमितिः पुनरपि तत्सम्बन्धस्येति कथन्न तस्यापर्यवसायिन एव प्राप्तिः? पर्यवसाने वा तद्वर्तिनस्तस्याप्रमेयत्वमेव प्रत्यक्षत्वेऽपीति न सपक्षव्यापित्वमस्य।

यदपि व्यतिरेकिण उदाहरणमुपपादितम्[4]–नेदं निरात्मकं जीवच्छरीरम्, प्राणादिमत्त्वात्, यत्तु निरात्मकं न तत्प्राणादिमत् यथा लोष्टादि, प्राणादिमच्च जीवच्छरीरम्, अतो निरात्मकं नेति; तत्र [5]यद्यात्मा न प्रतिपन्नः कथं 'यत्र नैरात्म्यं न तत्र प्राणादि' इति तन्निवृत्त्या प्राणादिनिवृत्त्युपदर्शनम्? अप्रतिपन्नस्य निवृत्त्युपदर्शनायोगात्। प्रतिपन्नश्चेदन्यतः, व्यर्थमिदम्, अतोऽपि तत्प्रतिपत्तेरेव साध्यत्वात्। उपायवैचित्र्यान्न दोष इति चेत्; भवेदेव यदि तदनपेक्ष्यैवायमुपायः स्यात्, न चैवं तदपेक्ष्यैवात्राप्यात्मनिवृत्त्युपदर्शनात्। अत एव तु तत्प्रतिपत्तौ भवति परस्पराश्रयः—सत्यामतस्तत्प्रतिपत्तौ व्यतिरेकनिर्णीतिः, ततश्च तत्प्रतिपत्तेः। अथ मा भूत् तत्प्रतिपत्तिः, तथापि भवितव्यं तेन विशेषेण यो लोष्टादौ स्वनिवृत्त्या प्राणादीन्निवर्तयति। स्वरसतस्तन्निवृत्तौ जीवच्छरीरेऽपि प्रसङ्गात्। तस्यैव चेह साध्यत्वम्, आत्मव्यपदेशस्यापि तत्रैव करणादिति; तदपि न युक्तम्; चार्वाकदृष्ट्या भूतपरिणामस्य सौगतकल्पनया चित्तसन्तानस्य च तद्विशेषस्य सम्भवात्। तस्य निषेधात्तदन्य एव स विशेष इति चेत्; तन्निषेधोऽपि यद्यन्यत्वमात्रे पर्यवसितः, तस्यैव तन्निवर्तकत्वं नाभिमतस्य। अतत्पर्यवसायित्वे तु सिद्धस्तत एवात्मेति तदवस्थमस्य वैयर्थ्यम्। नन्वतःप्रतीतस्यैव तन्निषेधादपि विशेषावधारणं तत्कथमस्य वैयर्थ्यमिति? तन्न; तथापि साक्षादस्य तत्प्रतिपत्तावनुपायत्वात्। अथ अत एव तन्निषेधसहितात्ततस्तत्प्रतिपत्तिः; न तर्हि पूर्वं विशेषमात्रस्य परिज्ञानमिति कथं निषेधावतारः? तस्य तत्परिज्ञाने पुनस्तद्विशेषप्रतीक्षायामेवोपपत्तेः। कथं वा तत्सहायादपि अतस्तत्प्रतिपत्तिः? कथं च न स्यात्? स्वनिवृत्त्या लोष्टादौ प्राणादिनिवर्तकस्यैव तदुपपत्तेः। न च भवदनुमतस्य तत्रापि निवृत्तिः सर्वगतत्वात्। स्वरूपतस्तदभावेऽपि सम्बन्धविशेषतोऽस्त्येव सेति चेत्; तस्यैव तर्हि साध्यत्वं निवर्तकत्वात्, नात्मनः। सत्यमिदम्, तस्यैवात्मशरीरसंयोगमेवात्मनो जीवच्छरीरे साधनादिति चेत्; कथमात्मनि विप्रतिपत्तौ तमसाधित्वा[7] तद्विशेषस्य साधनम्, आम्रान् पृष्टस्य [8]कोविदाराख्यानवदुपपन्नम्? अप्रस्तुताभिधानेन निग्रहावाप्तेश्च। विप्रतिपत्तिरपि तत्रैवेति चेत्; न, तथाप्यात्मन्यसाधिते तत्साधनस्यायोगात्। आत्मगतो हि धर्मस्तत्सिद्धावेव शक्यसाधनो नान्यथा।

---

१ पक्षे कृते आ०, ब०, प०। २ विरोधात् आ०, ब०, प०। ३– न्वयप्र– आ०, ब०, प०। ४ 'नेदं निरात्मकं जीवच्छरीरमप्राणादिमत्त्वप्रसङ्गात्'। न्यायवा० पृ० ४६। ५ यद्यात्मनात्र– आ०, ब०, प०। ६ निवृत्तिः। ७ तमनावहितत्वात्त– आ०,ब०,प०। ८ 'कचनार' इति भाषायाम्।

प्रमाणान्तरावगतत्वादात्मनो नायुक्तं तत्साधनमिति चेत्; न; तथाप्यतिप्रसङ्गात् । तथा हि–यथा प्राणादेर्घटादिव्यावृत्तस्य दर्शनाज्जीवच्छरीरे तद्विशेषस्य साधनं तथा बालशरीरादिव्यावृत्तस्य विशेष-तारतम्याधिष्ठानस्ये तस्य युवादिशरीरे दर्शनात् पूर्वपूर्वविलक्षणैः सम्बन्धविशेषस्तत्र साधयितव्यः प्राप्नुयात् । प्राप्नोतु न कश्चिद्दोष इति चेत्; शास्त्रं तर्हि न्यूनं प्राप्तं तथा तस्यानिरूपणात् । न प्राप्त[1] प्रकृतविशेषनिरूपणादेव तस्यापि तज्जातीयत्वेनाभ्यूहोपपत्तेरिति चेत्; आत्मनिरूपणादेव तर्हि प्रकृतस्यापि तद्धर्मत्वेनाभ्यूहात्तन्निरूपणमपि न भवेत् । तदपि न क्रियत एव प्रज्ञाशालिनं प्रति मन्दानुग्रहायैव तत्करणादिति चेत्; तदर्थं तर्हि परापरस्यापि तत्साधनस्य निरूपणं कर्तव्यमिति कथं शास्त्रमतत्करणात् न्यूनमेव न भवेत् ? कुतश्चासौ तद्विशेषो जीवच्छरीरे एव न लोष्टादावपि तत्कारण-स्यात्मनस्तत्रापि भावात् ? न ह्यविकले कारणे कार्यानुत्पत्तिः, नित्यस्य सहकारिप्रतीक्षायाश्च प्रतिक्षेपात् । तन्नेदं व्यतिरेकिलिङ्गमुपपन्नम् ।

यदप्यन्वयव्यतिरेकिणः सपक्षैकदेशवृत्तेरुदाहरणम्[3]–अनित्यः शब्दः [ सामान्यवत्त्वे सति ] अस्मदादिबाह्यकरणप्रत्यक्षत्वात् कुम्भवदिति; तत्र कः पुनरसौ अस्मदादिः ? आत्मैव संसारीति चेत्; किं तस्य बाह्यकरणेन कर्तव्यं यतस्तेन [4]विशिष्येत ? विषयोपलब्धिरिति चेत्; सापि[5] तस्येति कुतः सम्बन्धात् ? समवायादिति चेत्; तस्य यदि सम्बन्धत्वमेव रूपम्; समवायादिति निर्विषया श्रुति-र्र्थाभावात् । सम्बन्धत्वस्यैव तादर्थ्ये पौनरुक्त्यम् । यदि पुनः समवायशब्दवाच्यमन्यदेव तस्य रूपम्; तदपि न युक्तम्; सम्बन्धश्रुतौ पूर्ववद्दोषात् । कुतश्चैवं तस्य प्रतिपत्तिः ? इहेदंप्रत्ययवशात् [6]लिङ्गादिति चेत्; क तस्य तेन व्याप्तिः ? इह कुण्डे दधीति प्रत्यय इति चेत्, न; तस्य संयोगादेव भावात्, तस्य च समवायविलक्षणत्वात् । अविलक्षणत्वमपि सम्बन्धत्वेनेति चेत्; अस्ति तर्हि तत्र सम्बन्धत्वं साधारणं च समवायशब्दवाच्यं रूपम् । तयोश्च कस्तत्र सम्बन्धः ? समवाय एवेति चेत्; न, तस्यैकस्यैवोपगमात् । अनेकत्वेऽनवस्थाप्रसङ्गात् । संयोग इति चेत्; न; तस्य गुणत्वेन द्रव्या-श्रयत्वात्, समवायतद्रूपयोश्चाद्रव्यत्वात् । तद्विशेषणत्वमिति चेत्; न; तस्य सम्बन्धायत्तत्वेन स्वयम-सम्बन्धत्वात् दण्डादिवत् । सम्बन्धत्वेऽपि तस्य समवायतद्रूपाभ्यामन्यत्वे कुतस्तयोरिति व्यपदेशः ? पुनरप्यन्यत तद्विशेषणत्वादिति चेत्; कथमनवस्थातो निर्मुक्तिः ? भवत्वभेद एव तत्र तयोः सम्बन्ध इति चेत्; न; तस्याप्येकान्तेन भावे स एवेहेति दोषात्, अनेकान्तस्य च भवद्भिरनभ्यनुज्ञानात् । तत्र समवायो नाम सम्बन्धो येनास्मदादेस्तदुपलब्धिः । [7]तत्कार्यत्वात् सा तस्येति चेत्; व्यर्थं तर्हि बाह्यकरणम्, अस्मदादेरेव तद्भावात् । ततोऽपि [8]तत्सहायादेव न केवलादिति चेत्; सापि द्वयोरेव स्यात् न केवलस्य । एवञ्च–

---

१– स्य यु– आ०, ब०, प० । २–ण.थ– आ०, ब०, प० । ३ "अनित्यः शब्द सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् ।" –न्यायसा० पृ० ६ । ४ विशेष्येत आ०, ब०, प० । ५– पि क्व त– आ०, ब०, प० । ६ "इह तन्तुषु पट इत्यादिप्रत्ययः सम्बन्धपूर्वकः इहेदम्प्रत्ययत्वात् इह कुण्डे दधीति प्रत्ययवत्" –ता० टि० । ७ अस्मदादिकार्यत्वात् उपलब्धिः अस्मदादेः । ८ बाह्यकरणसहायादेव ।

द्वयोरेवोपलब्धृत्वं न प्रत्येकं तथा सति ।
जीव एवोपलब्धेति व्यवहारः कथं भवेत् ? ॥१५२७॥
तत्रैव समवायाच्चेदुपलब्धेर्न तत्क्षते ।
कारणत्वाविशेषात् स करणे[2]ऽपि कुतो न वः ? ॥१५२८॥
केवलस्यैव हेतुत्वं [3]तस्मात्तस्योपवर्ण्यताम् ।
उपलब्धौ ततः प्राप्तं वृथैव करणं बहिः ॥१५२९॥
हेतुत्वादपि तस्योपलब्धिस्तन्न व्यवस्थिता ।
तत्कथं तत्कृते तस्य करणं बाह्यमुच्यताम् ? ॥१५३०॥

तस्मादस्मदादिसम्बन्धविशिष्टस्य बाह्यकरणस्यासम्भवात् असिद्धमेव तत्प्रत्यक्षविषयत्वं लिङ्गमिति कथमस्यान्वयव्यतिरेकित्वम् ? सिद्धस्यैव तदुपपत्तेः ।

यदपि सपक्षव्यापिनस्तस्योदाहरणम्–अनित्यः शब्दः कृतकत्वात् घटादिवदिति । तद्व्यापित्वं चास्य सर्वत्रानित्ये भावात् । पूर्वकस्य तु तदेकदेशवृत्तित्वं चानित्यत्वेऽपि बुद्ध्यादावविद्यमानत्वादिति प्रतिपत्तव्यमिति । अत्रोच्यते–नास्य सपक्षव्यापित्वम्, अनित्येऽपि प्रागभावे भावात् । नित्य एव स इति चेत्, कुतः कार्यकालेऽपि नोपलब्धिः ? तस्याः कार्येण प्रतिबन्धादिति चेत्, न; विषयस्य तज्जननशक्तौ तदयोगात् । कार्यमपि प्रतिबन्धे शक्तमेवेति चेत्; उभयं तर्हि युगपत्प्राप्तमुपलब्धिस्तत्प्रतिबन्धश्चेति । न चैतन्न्याय्यं व्याघातात् । शक्तिरेव तेन तस्य प्रतिबध्यते इति चेत्; सिद्धं तर्हि तस्यानित्यत्वं शक्तिप्रतिबन्धस्यैव तत्प्रतिबन्धत्वात् तस्यास्तदव्यतिरेकात् । व्यतिरेके शक्तिशक्तिमद्भावस्य प्रतिषेधादिति कथन्न सपक्षैकदेशवृत्तित्वमस्यापि । न चास्य गमकत्वं प्रध्वंसेन व्यभिचारात्, तस्य कृतकत्वेऽप्यनित्याभावात् । किं पुनरस्य कृतकत्वमिति चेत् ? प्रागसतः कुतश्चिदात्मलाभ एव घटादिवत् । प्रागसतः सत्तासम्बन्ध एव कृतकत्वं नात्मलाभ इति चेत्, न; अनात्मलाभे तत्सम्बन्धस्यायोगात् तस्य द्विष्ठत्वेन तदभावेऽनुपपत्तेः । सत्यात्मलाभे किं तेन भावव्यवहारस्य तावता सिद्धेरिति चेत्; यथेव जानासि निर्मुच्यतां तत्र निर्बन्धः । कथमर्थान्तरतत्सम्बन्धाभावे सन्ति द्रव्यादय इति विशिष्टप्रत्ययो दण्डीत्यादेरर्थान्तरदण्डसम्बन्धनिबन्धनस्यैव तस्य दर्शनादिति चेत्; न; तत्रापि तन्निबन्धनत्वस्य प्रतिक्षिप्तत्वात् । कथं वा [6]तत्सम्बन्धे सत्प्रत्ययः ? तत्र [7]तदन्यस्याभावात् अनवस्थापत्तेः । अस्ति चायम्–अस्ति सत्तासम्बन्ध इति भवता व्यवहारात् । उपचारादयं तत्रेति चेत्; किं पुनर्वस्तुतः स नास्त्येव ? तथा चेत्; कथं विशेषणम् ? स्वरूपतो विद्यमानत्वादिति चेत्; ननु स्वरूपतो विद्यते इत्यपि विशिष्टप्रत्यय एव, अर्थान्तरव्यवच्छेदेन तद्विद्यमानत्वस्य स्वरूपेण विशेषणात् । तथा च कथं द्रव्यादिष्वपि विशिष्टप्रत्ययादर्थान्तरसत्तासिद्धिः ? अनेन व्यभिचारात् । तत्र सत्तासम्बन्धः कृतकत्वम्, आत्मलाभस्यैव तत्त्वात् । तथा च कृतक एव प्रध्वंसः कारणादात्मलाभात् । भवत्वनित्य एव [8]स इति

१ उपलब्धा ज्ञाता ज्ञायक इति यावत् । २ कारणे–आ०, ब०, प० । ३ कस्मा– आ०, ब०, प० । ४ कारण आ०, ब०, प० । ५ तस्मान्– आ०, ब०, प० । ६ सत्तासम्बन्धे । ७ भिन्नस्य सत्तासम्बन्धस्य । ८ प्रध्वंस ।

चेत्; न तर्हि मुक्तेर्नित्यत्वं तस्या अपि सकलवैशेषिकगुणविच्छित्तिरूपायाः प्रध्वंसत्वात् । तथा च कथं तदर्थितया प्रेक्षावतां तत्त्वज्ञानाधिगमाय प्रवृत्तिर्यतः शास्त्रप्रणयनं फलवद्भवेत् ? अस्त्वेव निर्वाणस्याप्यनित्यत्वं तथापि न संसारस्योन्मज्जनं तदनित्यत्वस्यापि तद्विरोधादिति चेत्; न, तद्विरोधिविरोधिनः[1] तद्विरोधित्वानुपपत्तेः। तस्य हि संसारस्य विरोधि निर्वाणं तद्विरोधि चानित्यत्वं कथन्नाम संसारस्य विरोधि स्यात् ? अन्यथा नैरात्म्यविरोधिनस्तत्प्रतिषेधस्य आत्मविरोधित्वमपि स्यादिति कथमात्मसिद्धिः ? मा भूच्च भवतां व्यतिरेकलिङ्गोपक्रमेण तत्साधनप्रवृत्तिः, साधितेऽपि तस्मिन् आत्मसिद्धेः तस्य तद्विरोधित्वेनाभावात् । तथा च कथं चित्रमता उक्तम्–"शरीरादौ च तद्विरहप्रतिषेधात् स एव प्रसिद्ध्यति प्रतिषेधस्य प्रतिषेधाद्विधिस्वभावैः[2] सत्त्वात् (स्यात्)" [ ] इति ? ततो यथा तत्प्रतिषेधस्य नात्मना विरोधः तद्विरोधित्वात् तथा निःश्रेयसस्यानित्यत्वस्यापि संसारेणेति भवितव्यमेव तदा तदुन्मज्जनेन । तदनिच्छता च न प्रध्वंसस्यानित्यत्वमभ्युपगन्तव्यमिति स्यादेव तेन व्यभिचारात् अस्यागमकत्वम् । तन्न अन्वय्यादयोऽपि हेतवः ।

नापि तथा त्रैविध्यनियमः, उन्नामादीनामपूर्वत्वेन तत्रानन्तर्भावात् । पूर्ववतामेव स्वयमन्वय्यादीनां व्याख्यानात् ।

भवतु तर्हि वीतादिभेदेन तन्नियमः । वीतं[3] हि नाम विधिमुखेन साध्यसाधनम्, अवीतं प्रतिषेधपरम्, उभयपरं च वीतावीतमिति, न चान्यथोन्नामादीनामपि तत्साधनं सम्भवतीति चेत्; तन्न; वीतेन विपक्षस्याप्रतिषेधे पक्षस्याप्यसिद्धेः, निराकृतप्रतिपक्षतया सिद्धस्यैव पक्षस्य सिद्धत्वोपपत्तेः, अन्यथा कुतश्चिज्जलादेः सिद्धावपि तद्विपक्षसद्भावाशङ्कया तदर्थिनामपि तत्राप्रवृत्तिप्रसङ्गात्, प्रतिवादिनश्च पराजयाभावापत्तेः । प्रतिषिद्धप्रतिपक्षत्वं तस्य अवीतादवगम्यत इति चेत्, न तर्हि वीतस्य हेतुत्वम्, अवीतादेव विशिष्टस्य साध्यस्य सिद्धेः । न चैवं तस्याप्यवीतत्वम्, प्रतिषेधाधिष्ठानतया विधिमुपस्थापयतो वीतत्वस्यैवोपपत्तेः । किं वा वीतत्वादिभेदकथनेन कर्तव्यं गमकत्वस्यान्यथानुपपन्नत्वादेवोपपत्तेः । सत्यम्, न तदर्थं तत्कथनम्, अपि तु व्यापारभेदेन लिङ्गभेदप्रतिपादनार्थमिति चेत्; न, तथापि त्रैविध्यस्यानवस्थानात् । त्रिविधस्य सतः कालभेदापेक्षया नवविधत्वस्य, नवविधस्यापि पुनरव्युत्पन्नसन्दिग्धविपर्यस्तरूपप्रतिपाद्यापेक्षया सप्तविंशतिविधत्वस्यापि सम्भवात् । तन्निबन्धनं भेदमनपेक्ष्य व्यापारमात्रकृतेन भेदेन त्रैविध्यमुच्यत इति चेत्; तमप्यनपेक्ष्य अन्यथानुपपत्तिनिबन्धनमेकविधत्वमेव तर्हि वक्तव्यम् । विस्तरेण शिष्यव्युत्पादनस्य नवविधत्वसप्तविंशतिविधत्वाभ्यामपि सम्भवात् । तन्न वीतादिभेदकल्पनमप्युपपन्नम् ।

तथा संयोग्यादिभेदकल्पनमपि, तत्रापि प्रागुक्तहेतूनामनन्तर्भावात् । न हि कृत्तिकोदयः शकटोदयस्य संयोगी; कालव्यवधानेन परस्परमप्राप्तेः । यदपि संयोगिन उदाहरणं[4] वह्नेर्धूम इति,

---

१ तद्विरोधिन- आ०, ब०, प० । २– सत्वादिति ता० । ३ "अन्वयमुखेन प्रवर्तमानं विधायक वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्"– सा० त० कौ० का० १-५ । ४ "तथा धूमोऽग्नेः संयोगी"– प्रश० व्यो० पृ० ५७२ ।

तदपि न युक्तम् ; विभिन्नान्तरालादपि तस्मादविनाभावनिर्णये पर्वतशिरसि पावकस्य प्रतिपत्तेः[1] । [2]तद्व्यवधानादेव नासौ[3] तस्य समवायी । यत्पुनरत्रोदाहरणम्–समवायी गोर्विषाणमिति; तन्न युक्तम्, विषाणे गोसमवायस्य निषिद्धत्वात् । अनिषेधेऽपि गवयादावपि तद्भावेन व्यभिचारात् । नायं दोषोऽवधारितविशेषस्यैव गमकत्वादिति चेत्; न; समवायित्वादेव तदवधारणासम्भवात् । अन्यतस्तत्सम्भवे च तत एव गमकत्वात् किं समवायित्वेन ? यदप्युदाहरणान्तरं समवायी शब्द आकाशस्येति; तदपि न युक्तम्; शब्दस्य पुद्गलपर्यायत्वेनाकाशसमवायस्य प्रतिषेधात् । कथं वा तत्र तत्समवाये तद्विकलमप्याकाशम् ? व्याप्त्या तत्र तस्यासमवायादिति चेत्; कथमव्याप्तिः ? तदवष्टब्धादन्यस्याकाशरूपस्याभावात् । तदवष्टम्भोऽपि तत्प्रदेशस्यैवेति चेत्; न; प्रदेशवत्वे तस्य कार्यत्वेनानित्यत्वप्रसङ्गात् घटादिवत् । न चैतदिष्टम्, "द्रव्यत्वनित्यत्वे वायुना व्याख्याते ।" [ वैशे० २। १। २८ ] इत्यस्य व्याघातात् । न व्याघातः कल्पनयैव प्रदेशोपगमादिति चेत्; प्रदेशस्यैव तर्हि तदवष्टब्धस्य लिङ्गं शब्द इति न युक्तमिदं सूत्रम्–"शब्दो लिङ्गमाकाशस्य" [ वैशे० २। १। २७ ] इति, प्रदेशस्यानाकाशत्वात् ।

यदप्येकार्थसमवायिलिङ्गस्योदाहरणमुक्तम्–रूपं स्पर्शस्य एकार्थसमवायिलिङ्गम् । एकत्र कारणे तेजस्यर्थे तत्कार्ययोः साधनसाध्ययोः रूपस्पर्शयोः समवायात्, पाण्यादिकं वा पादादेर्लिङ्गम्, एकस्य तत्कार्यस्यार्थस्य शरीरस्य तयोः समवायादिति; तदपि न युक्तम्; रूपादेरपि स्पर्शवत् गन्धादेरप्यनुमानापत्तेः, तेनापि तस्यैकार्थसमवायित्वस्य पृथिव्यादावुपलम्भात् । तस्य तत्रासम्भवदनुभवत्वान्नेति चेत्; न; तादृशस्यापि उष्णस्पर्शस्य सुवर्णादावनुमितेः । सजातीये सम्भवदनुभव एव स इति चेत्; समानं गन्धादावपि, पृथिव्यादौ तस्यापि तथाविधत्वात् । कुतः पुनः पृथिव्यादेस्तज्जातीयत्वमिति चेत् ? तेजसोऽपि हेमजातीयत्वं कुतः ? भासुराद्रूपादिति चेत्; रूपमात्रादितरस्यापि स्यात् । नन्वेवं वाय्वादावपि स्पर्शादेव गन्धादेरप्यनुमानोपपत्तेः कथं पृथिव्यादिभेदेन भूतानां चातुर्विध्यमिति चेत् ? न; उद्भवापेक्षया तदुपपत्तेः । यत्र हि स्पर्शस्यैवोद्भवः स वायुः, यत्र तु सरूपस्य तत्तेजः, यत्र सरूपरसस्य ता आपः, यत्र सरूपरसगन्धस्य सा पृथिवीति । ततो न युक्तमिदम्–"रूपरसगन्धस्पर्शवती पृथिवी रूपरसस्पर्शवत्य आपो द्रवा स्निग्धाश्च तेजो रूपस्पर्शवत् वायुः स्पर्शवान् ।" [ वैशे० २।१।१-४ ] इति; रूपादीनां सर्वेषामपि सर्वत्र भावात् ।

यदपि पाण्यादिकं पादादावेकार्थसमवायिलिङ्गमुक्तम्; तदप्यनुपपन्नम्; व्यभिचारात्, पादाद्यभावेऽपि पाण्यादेः सम्भवात् । यदेव निश्चिताव्यभिचारं तदेव लिङ्गम्; अत एव न रूपादपि तेजसि गन्धादेरनुमानं स्पर्शाव्यभिचारस्यैव तत्रापि निश्चयादिति चेत्; न, एकार्थसमवायात्तन्निश्चये[10] प्रकृतापरित्यागात्[11] । अन्यतस्तन्निश्चये तत्समवायकल्पनवैफल्यात् । न तन्निश्चयार्थं संयोग्यादित्वकल्पनं तस्य

१ प्रतिपत्तिप्रसङ्गात् । २ कालव्यवधानादेव । ३ कृत्तिकोदयः । ४ शकटोदयस्य । ५ महिषादिव्यावृत्तविशिष्ट विषाणम् । ६ शब्दसमवाये । ७ शब्दावष्टम्भोऽपि । ८ वायुना ता० । ९ "परिशेषाल्लिङ्गमाकाशस्य" –वैशे० सू० । १०–वायानिश्चये आ०,ब०,प० ।११ प्रकृतस्य एकार्थसमवायिलिङ्गव्यभिचारस्य तदवस्थत्वात् ।

लिङ्गभेदप्रदर्शनार्थत्वादिति; अत्राप्युक्तम्–नवविधत्वेन सप्तविंशतिविधत्वेन च तद्दर्शनं कर्तव्यमिति। कथं चैवं कृत्तिकोदयादेः गमकत्वम्, संयोगिसमवायिनोरिव एकार्थसमवायिन्यपि तस्यानन्तर्भावात् ? न हि तदुदयादितत्साध्ययोः क्वचिदेकत्र समवायः, नापि तयोः कस्यचित् तत्कार्यस्येति। तत्र संयोग्यादिभेदेनापि त्रैविध्यवर्णनमुपपन्नम्। ततः स्थितम्–'एतेन' इत्यादि। न केवलं तेषां भेद एवैवं प्रत्याख्यातव्योऽपि त लक्षणमपीत्याह–

**तल्लक्षणप्रपञ्चश्च निषेद्धव्यो दिशाऽनया।** इति।

तेषां पूर्ववदादीनां लक्षणमसाधारणं रूपं तस्य प्रपञ्चः पक्षव्यापित्वे सत्यन्वयव्यतिरेकावबाधितविषयत्वमसत्प्रतिपक्षत्वं चेतिरूपः सोऽप्यनया सौगतहेतुलक्षण निराकरणरूपया दिशा **निषेद्धव्यः** इति। तथाहि–

अन्यथानुपपत्तिश्चेत् पाञ्चरूप्येण किं फलम् ?
विनापि तेन तन्मात्रात् हेतुभावावकल्पनात् ॥१५३१॥
नान्यथानुपपत्तिश्चेत् पाञ्चरूप्येण किं फलम् ?
सताऽपि व्यभिचारस्य तेनाशक्यनिराकृतेः ॥१५३२॥
अन्यथानुपपत्तिश्चेत पाञ्चरूप्येऽपि कल्प्यते।
[1]षाड्रूप्यात् पञ्चरूपत्वनियमो नावतिष्ठते ॥१५३३॥
पाञ्चरूप्यात्मिकैवेयं नान्यथानुपपन्नता।
पक्षधर्माद्यभावेऽपि चास्या सत्त्वोपपादनात् ॥१५३४॥

ततः **तल्लक्षण** इत्याद्यपि स्थितम्। सम्प्रति हेत्वाभासं दर्शयन्नाह–

**अन्यथानुपपन्नत्वरहिता ये विडम्बिताः ॥१७४॥**
**हेतुत्वेन परैस्तेषां हेत्वाभासत्वमीक्ष्यते।** इति।

**परैः** एकान्तवादिभिः [2]ये न हेतवः अपि तु **हेतुत्वेन विडम्बिताः** कल्पिताः **तेषां हेत्वाभासत्वं** हेतुवदाभासमानत्वम् **ईक्ष्यते**। कुत एतत् ? **अन्यथानुपपन्नत्वरहिता** [3]**यत** इति। अथ अन्यथानुपपत्तिवैकल्येऽपि हेतुत्वम्; तदाभासत्वमेव न क्वचिद्भवेत्, कल्पनया सर्वत्र हेतुत्वस्यैवोपपत्तेः। कथं पुनस्तद्विडम्बितानां तद्रहितत्वमिति चेत् ? उक्तमेतत्–'असिद्धत्वादिदोषस्य तेषु सर्वेषु[4] सम्भवात्' इति। इदमत्रोदाहरणं यथा क्षणिकः शब्दः सत्त्वादिति। न हि क्षणिकं सन्नाम अर्थक्रियायास्तत्रासम्भवात्। निरूपितं चैतत्–'यस्मिन्नसति यज्जातम्' इत्यादौ[6]। तत्कथं तस्यान्यथाऽनुपपन्नत्वम् ? 'अन्यथाऽनुपपन्नत्वमसिद्धस्य न सिद्ध्यति' [सिद्धिवि० परि० २] इति न्यायात्। सिद्धमेव तत्रापि तत् संवृत्येति चेत्; न; नित्येऽपि [7]तथा तद्भावात्। तथापि कथमन्यथाऽनुपपन्नत्वम् ? व्यभिचाराद्विरुद्धत्वाच्च, वस्तुतः सत्त्वस्य परिणाम एव भावात्। निवेदयिष्यते

१ –दप्रतिद– आ०, ब०, प०। २ ताद्रूप्यात् ब०। ३ ये हेतव ता०। ४ य इति श्रय–आ०, ब०,प०। ५–षु भावादिति ता०। ६ न्यायवि० श्लो० १५३। ७ संवृत्या।

चैतत्–'सत्ता सम्प्रतिनद्धैव परिणामे' इत्यादिना । तदनेन कृतकत्वादयोऽपि तदाभासतया प्रतिवक्तव्या तेषा सत्त्वविशेषत्वात् । यद्यन्यथानुपपत्तिवैकल्यमेकान्ततः सत्त्वादीनाम्, क्षणभङ्गादिवत् परिणामेऽपि न तेषा हेतुत्व स्यादिति चेत्; न; एकान्तत तदभावात् । एतदेवाह–

**विरोधादन्वयाभावाद् व्यतिरेकाप्रसिद्धितः ॥१७५॥**
**कृतकः क्षणिको न स्यात् नैकलक्षणहानितः ॥**

अपेक्षितपरव्यापारो भाव कृतकः[1] । उपलक्षणमिद तेन सन् प्रयत्नजन्यश्च शब्दादि । किम् ? क्षणिको न स्यात् क्षणमात्रवृत्तिर्न भवेत् । कुत एतत् ? अन्वयाभावात् । न हि क्षणिकत्वेन तस्य कचिदन्वय, प्रदीपादावपि तस्यानिश्चयात् । कथमन्यथा परापरतैलादिव्यापारवैफल्यप्रकल्पनेन तत्र तदुपपादनम्, अविप्रतिपत्तिविषये तदनुपपत्तेः ? भवतु तेनैव तत्र तदुपपादनमिति चेत्, न, तस्य कचित्तेनानन्वयात्, तन्निदर्शनेऽपि तस्यासिद्धे । पुनस्तत्रापि परापरतत्कारणव्यापारवैफल्येन तदुपपादने अनवस्थापत्ते । तदुपपादनमनुमानमेव तदयमदोष इति चेत्, न तर्हि प्रमाणं परामर्शात्मकत्वेन प्रत्यक्षत्वस्याप्यभावात् । प्रमाणान्तरत्वे च प्रमाणद्वयसङ्ख्यानियमव्यापत्ते । अप्रमाणाच्च तत्प्रतिपत्तावन्यत्रापि प्रमाणकल्पनावैफल्यात् । मा भूदन्वयो व्यतिरेकादेव गमकत्वोपपत्तेरिति चेत्, न; अन्वयाभावे तस्यैवासिद्धे । न हि कचित् क्षणभङ्गेनान्वयस्याप्रतिपत्तौ तन्निवृत्त्या कचिद्धेतुव्यावृत्ते शक्योऽवगम, बुद्धिसस्पर्शविरहिणस्तस्यैव निवृत्तेरनवगमात् । कथ पुनरन्वय व्यतिरेकयोरभावेऽपि कृतकत्वादेरहेतुत्व ताभ्या हेतुत्वस्य अव्याप्तेरिति चेत्; सत्यमिद वस्तुवृत्त्या, परेण तु तयोस्तद्व्याप्तेरभिधानादेवमुक्तम् । वस्तुतस्तर्हि तस्य कुत क्षणिकत्व प्रत्यगमकत्वम् ? अन्यथाऽनुपपत्तिवैकल्यादिति चेत्, तत तर्हि तस्यैकान्तिकमिति कथ परिणामेऽपि तस्य हेतुत्वमिति चेत् ? अस्य समाधानम्–'नैकलक्षणहानितः' इति । एकस्य लक्षणस्यान्यथाऽनुपपन्नत्वस्य येयमेकान्ततो हानिः तत कृतकः क्षणिको न स्यादित्येतत् न अपि तु क्षणक्षयाद्यपेक्षयैव कथञ्चिद्धाविन्य इति याक्त । अत्रैवोपपत्ति 'विरोधात्' इति । तात्पर्यमत्र–यत क्षणक्षयादिव्यावृत्त्या तद्विरुद्धस्य परिणामस्य तत्र साधन ततो नैकान्तत तत्र तद्धानिरिति । कथ पुनरप्रतिपन्ने क्षणभङ्गे तदन्वयव्यतिरेकयोरिव कचित्तद्विरोधस्यापि प्रतिपत्तिः ? तथापि तद्भावे किमन्वयव्यतिरेकाभ्यामपराद्ध यतस्तावपि न प्रतीयेते इति चेत ? न, प्रतिपत्तेरपि तल्लक्षणानुगमेन तत्र भावात्, केवल प्रमाणतस्तदनवगमादेव तदन्वयव्यतिरेकयोर्निषेधात् नित्यान्वयव्यतिरेकवत् । विरोधमेव दर्शयन्नाह–

**सत्ता सम्प्रतिबद्धैव परिणामे क्रियास्थितेः ॥१७६॥**
**निर्व्यापारो हि भावः स्यान्नित्यत्वे वा निरन्वये । इति ।**

एवकारो भिन्नप्रक्रम परिणाम इत्यत्र दर्शनात् । तत सत्ता सत्त्व सम्यक् प्रतिबद्धा । क ? परिणाम एव न क्षणभङ्गादौ । ततस्तत्रैव सा हेतुरित्यर्थ । एतदेव कुत ? क्रियास्थितेः, परिणाम

१ 'अपेक्षितपरव्यापारो हि भाव स्वभावनिष्पत्तौ कृतक इति ।' –न्यायवि० पृ० ६७ ।
मुद्रस–आ०,न०,प० । ३–मिदमत्र–आ०,ब०,प० । ४–स्तभि–आ०,ब०,प० । ५ चेत्तर्हि आ०,ब०,प० ।

एव क्रियायाः कार्यकारणस्य स्थितेः अवस्थानात् । एतदपि कस्मात् ? निर्व्यापारो व्यापारातिक्रान्तो हि यस्मात् भावः चेतनादि स्यात् भवेत् । कस्मिन् सति ? निरन्वये क्षणभङ्गे । केन ? नित्यत्वे वा नित्यत्व इव, वाशब्दस्य इवार्थत्वात् । निरन्वय इव वा नित्यत्वे इति । कुत पुनर्निरन्वये निर्व्यापारत्वं भावस्योच्यते ? तस्य यदुत्पत्तेरूर्ध्वं व्यापार कथ निरन्वयत्व स्वयमपि तदा तस्य भावात् । व्यापार एव तदा न भाव इति चेत, व्याहतमिदम्—स नास्ति तद्व्यापारोऽस्तीति । कथ वा स तस्य व्यापार ? तत्कार्यत्वादिति चेत, तत्रापि तर्हि कार्यवद् व्यापारान्तरं मृगयितव्यम् । तस्यापि पश्चाद्भाविन कथ तद्व्यापारत्वम् ? तत्कार्यत्वादेवेति[1] चेत, न, 'तत्रापि' इत्यादि प्रसङ्गादनवस्थितेश्च दोषात्, व्यापारस्याव्यापारादेव भावाद्भावे व्यर्थ व्यापारकल्पन कार्यस्यापि तत एव भावात् । अथोत्पत्तिसमय एव व्यापारः उत्पत्तेरेव [2]तत्त्वात, तर्हि तदेव कार्यतद्व्यापारौ पुन तत्कार्यतद्व्यापारावपीत्येकक्षणमेव जगत्प्राप्नुवत् सन्तानस्य तन्निबन्धनस्य प्रवृत्त्यादिव्यापारस्य चाभावमाविर्भावयेत् । अथायं कार्यस्य स्वभावो यत्सत्यपि तद्व्यापारे पश्चादेव भवतीति तदयमप्रसङ्ग इति, कथ पुन उपरतव्यापारे तस्मिन् भवतस्तस्य तत्कार्यत्वम् ? यदि स्यात् नित्यकार्यत्वमपि स्यात् । अतत्कार्यस्य कथ देशादिनियम इति चेत् ? तत्कार्यस्यापि कथ तत्कालादिक्रम ? तथास्वाभाव्यादिति चेत्, अत एव तन्नियमोऽपि स्यात् । असति च कारणे भवत्कार्यं पश्चादिव प्रागपि किन्न स्यात् अभावाविशेषात् ? भवत्येव, भाविनो राज्यादे प्रागेव तत्कार्यस्य हस्तरेखादेर्दर्शनादिति चेत्, तर्हि सुगतत्वमपि तदुपायाभियोगात् प्रागपि भवेदिति पूर्वं सुगतः पश्चात् संसारीति प्राप्तम्, संसारिण इव तदभियोगसम्भवात् । किं वा पुनस्तदभियोगस्य फल निष्पन्ने ओदने पाकवत् ? तन्न निरन्वयस्य सव्यापारत्वम् । नापि नित्यस्य ।

"भवतु निर्व्यापारत्व तस्य, न हि तस्य व्यापारबलेन कार्यकारित्व सहकारिसहितान्निर्व्यापारादेव तदुपपत्तेः । तथा हि व्यापारो नाम शक्तिरतीन्द्रिया, क्रिया वा भवेत् ? तयोश्च किं पदार्थेन सहोत्पन्नयोर्यावत्पदार्थभावित्वम्, आहोस्वित् सामान्यवत्तयोस्तेन सहानुत्पन्नयोस्तत्र सद्भावः ? पक्षद्वयेऽपि कार्यस्य सततोदयप्रसङ्गः । न हि शक्तेर्व्यापारनिष्टे च कारणे कार्यस्य क्षेपः । अथैतन्मा भूदिति तयोस्तत्र कादाचित्कत्व कार्यवत्तत्रापि वक्तव्यम् । कादाचित्कत्वे तयोः कारणपूर्वकत्वमवश्यम्भावि । तत्र सति विकल्पद्वयम्—किं स्वाश्रयपदार्थकारणमात्रभावित्वं तयोः, उतस्वित् सहकारिकारणापेक्षत्वम् ? पूर्वस्मिन् पक्षे पुनरपि सर्वदा कार्योत्पत्तिप्रसङ्गः । सहकारिकारणापेक्षत्वे कार्यमेव कारणद्वयात् सम्मिलितादस्तु किं शक्तिव्यापाराभ्याम्" [ ] इति विश्वरूप, तन्न युक्तम्, अशक्तस्य कारणत्वे व्योमकुसुमादौ प्रसङ्गात् । तस्य नीरूपत्वान्नेति चेत, न, अशक्तित एव तस्यापि तत्त्वात्, तस्याश्च नित्येऽप्यविशेषात । शक्तमेव नित्यम्, केवलमतीन्द्रियशक्तिप्रतिषेधादेवाशक्त तदुच्यत इति चेत, ऐन्द्रियी तर्हि तच्छक्ति, विशेषप्रतिषेधस्य शेषाभ्यनुज्ञानाविनाभावात् । तथा च

१–स्वादिति आ०, ब०, प० । २ व्यापारत्वात् ।

कथं तत्राव्युत्पत्त्यादि प्रत्यक्षादेव तन्निर्णये तदनुपपत्तेः । अस्ति चासौ वस्तुदर्शनेऽपि कस्यचित् तत्रानिश्चयात् अपरस्य संशयात् अन्यस्य विपर्ययाच्च । कथमन्यथा तत्परिज्ञानाय तद्विदुपासनम् ? सामग्रीसन्निपाते नास्त्येव तत्राव्युत्पत्त्यादिः[2] तदैव ततस्तन्निर्णयात् । अतएव तेनोक्तम्–"सामग्री तु यदा कार्यं जनयति तदा तस्याः कारणत्वं निश्चीयते, द्वयोरपि कार्योत्पादकाले सामग्रीकार्ययोर्निश्चयात् ।" [ ] इति [3]चेत्; अन्यदा तर्हि मात्रस्याप्यनिश्चयः तदनिश्चयात् । कथमन्यथा स्वरूपमेव शक्तिः निश्चितादनिश्चितायाः अर्थान्तरत्वस्यैवोपपत्तेः । अथास्त्येव तदापि तन्निश्चयः केवलं कार्यतयैव शक्तेर्भेददर्शनात्, तत् तदाभिमुख्यमेव तस्या न निश्चीयते, अत एवाऽव्युत्पत्त्यादेरपि तत्रैव भाव इति; तदपि न समीचीनम्; [4]कस्मात् ?

तत्तत्कार्याभिमुख्यं चेच्छक्तेः रूपं स्वभावतः ।
अनिश्चये कथं तस्य निश्चिता शक्तिरुच्यताम् ॥१५३५॥
आभिमुख्यं स्वरूपं च विना तेन च निश्चयः ।
शक्तेरिति [5]क आहैवं विश्वरूपात् परो बुधः ॥१५३६॥
आभिमुख्यं ततो यस्मिन् यस्मिन् कार्ये यथा यथा ।
सामग्र्या सर्वथा तस्याः सर्वदा स्याद्विनिश्चयः ॥१५३७॥
तथा च वैद्यशास्त्रादौ व्यर्थ एव परिश्रमः ।
विनापि वस्तुशक्तीनां तेन निश्चयसम्भवात् ॥१५३८॥
सर्वदर्शित्वमप्येवं सर्वस्य प्राणिनो भवेत् ।
जगद्व्यपेक्षयैकत्र शक्त्यशक्त्योर्विनिश्चयात् ॥१५३९॥

तथा हि–यदेकं वस्तु कतिचिदेव देशकालावस्थाभेदिनः कार्यग्रामानपेक्ष्य तत्सामग्रीश्च शक्तम्, तदपरापेक्षया तर्हि तदशक्तम्, तच्च तथा कुतश्चिन्निश्चीयमानमपेक्ष्य निश्चयमन्वाकर्षति विना तेन स्वयमनिश्चयात् । *तथापि तन्निश्चये कारणनिश्चयमन्तरेणापि क्वचित्कार्यत्वनिश्चयः स्यादिति न* युक्तमिदं तस्य वचनम्–"न च सम्बन्धग्रहणे प्रमाणान्तरेण कार्यकारणयोः सम्बन्धग्रहः।" [ ] इति । तस्मादतीन्द्रियैव शक्तिः । यदप्यत्र तेनोक्तम्–"कारणस्य शक्तस्य व्यापारवतश्च कार्यकर्तृत्वाभ्युपगमे तयोरपि कार्यत्वात् परव्यापारशक्त्यन्तरकल्पना तत्राप्यन्या तत्राप्यन्येत्यनवस्था ।" [ ] इति; तदपि नित्यैकान्तमभ्युपगम्य तद्वादिनामेव दूषणं न स्याद्वादिनाम्, तन्मतेन पूर्वपूर्वस्मादेव शक्तिव्यापारपरिणामात् उत्तरोत्तरस्य तस्योत्पत्तेः । न चानवस्थानमत्र [6]दूषणम्; अनादित्वेनानवस्थानस्यैव तत्प्रबन्धस्वभावत्वात् । कुतः पुनरतीन्द्रियायाः शक्तेः प्रतिपत्तिः ? कार्यादेव लिङ्गादिति चेत्; क्व तया सह तस्याविनाभावप्रतिपत्तिः ? तदन्यत्रेति चेत्;

१ तज्ज्ञान्वेषणम् । २–दिस्त्विति–आ०, ब०, प० । ३ चेत्तर्हि आ०, ब०, प० । ४ यतस्मात् आ०, ब०, प० । ५ 'कः आह इति पदच्छेदः' – ता० टि० । कथा ह्येवं आ० ब० प० । ६ 'मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् । वस्त्वानन्त्येऽप्यशक्तौ च नानावस्था विचार्यते ॥'–ता० टि० ।

न; तत्रापि प्रत्यक्षतस्तद्ग्रहात् । कार्यादेव तु ग्रहणेऽनवस्थापत्तेरिति चेत्; इदमपि न दूषणं पक्ष एवास्माभिः सम्बन्धग्रहणस्याभ्युपगमात्, सम्बन्धस्य कार्यस्वरूपत्वेन अप्रतिपन्नायामपि शक्तौ शक्यावसायत्वात् । प्रमाणस्य च तत्र तर्काभिधानस्य निवेदितत्वात् । तत्र शक्तेः प्रतिषेधो न्याय्यः ।

नापि व्यापारस्य,तथा हि-यदि नित्यस्य सामग्रीसन्निपातेऽपि प्राच्यस्वभावापरित्यागः कथं कारणत्वं पूर्ववत् । तत्परित्यागे वा कथमव्यापारत्वं तत्परित्यागस्यैव व्यापारत्वात् । नास्त्येव तस्य तत्परित्यागो नित्यत्वहानेः कारणत्वं तु तदा[1] तस्य तत्सन्निधानादिति चेत्, तत्किं पूर्वं नास्ति ? तथा चेत्; कथं नित्यत्वम् ? अस्ति चेत्; कुतो न कार्यम् ? सहकार्यभावादिति चेत्; कुतस्तदभावे तदभावः ? तस्य तत्कारणत्वादिति चेत्; यथा तर्हि सहकारी तत्कारणत्वात् स्वनिवृत्त्या कार्यं निवर्तयति तथा तत एव [3]नित्यमपि स्वप्रवृत्त्या तत्प्रवर्तयेत् । न चेत्; तदपि न निवर्तयेदिति वक्तव्यम् । प्रवृत्तिनिवृत्तिभ्यां निर्मुक्तस्य कीदृशी तदा कार्यस्य गतिरिति ? न नित्यस्य केवलस्य कारणत्वं यदेवं स्यात्, अपि तु सहकारिसहितस्यैव । न च तत्सहितं [4]तत्प्रागस्ति यतः कार्यं स्यादिति चेत्; तथापि कथं नित्यत्वं तत्सहितस्य तत्स्वभावस्यैव पूर्वमभावात् । सहकार्यभाव एव तत्सहिताभावो न तत्स्वभावाभाव इति चेत्; तत्सद्भाव एव तत्सहितसद्भावोऽपि स्यात्, तथा च तत्सहितं नित्यं कारणमिति सहकार्येव कारणमित्युक्तं स्यात् । न नित्यं सहकारि वा केवलं कारणम् अपि तु तत्समुदाय इति चेत्; एकैव तर्हि तद्रूप शक्तिरिति कथं तद्भेदकल्पनं सहकारिशक्तिः स्वरूपशक्तिरिति च । तद्भेदे वा कथं प्रत्येकमेव न कारणत्वं (णं) शक्तित एव तत्त्वात् । समुदायस्यैव कारणत्वे च न नित्यस्य सहकारिणो वा वस्तुत्वम् अकारणत्वात् । समुदायकारणत्वमेव तयोरपि कारणत्वं तद्व्यतिरेकेण तदभावादिति चेत्; तथापि समुदायतयैव वस्तुत्वं न पृथगिति कथन्न (कथं) नित्यं वस्तु पृथगेव स्यात् ? ततः प्रत्येकं भावानां वस्तुत्वमुररीकुर्वता समुदायदशायां प्राच्यरूपपरित्यागात्मा व्यापारस्तेषां कारणत्वोपपादी वक्तव्य एव । स च नित्यत्वे तेषामनुपपन्न एव, सति तस्मिन् तत्प्रच्युतेः । ननु यदि शक्तिः किं व्यापारेण ? तस्मिन् वा किं शक्त्या ? तदन्यतरत[5] एव कार्यनिष्पत्तेरिति चेत्; न, शक्तेरेव कार्यं प्रत्युन्मीलनस्य व्यापारत्वात् । तदुन्मीलने च शक्तेरेव कार्यनिष्पत्तिः न व्यापारादिति चेत्; न; शक्तेरेव सत्युन्मीलने व्यापारत्वात् । ततो युक्तं निरन्वयविनाशनित्यत्वयोर्भावस्य निर्व्यापारत्वात् परिणाम एव क्रियाया अवस्थितिरिति । कः पुनरयमन्वयो नाम यतो निरन्वयो निर्व्यापारत्वमुच्यते इति चेत् ? अत्राह-

**अवस्थादेशकालानां भेदेऽभेदव्यवस्थितिः ॥१७७॥**
**या दृष्टा सोऽन्वयो लोके व्यवहाराय कल्पते । इति ।**

अवस्थादयः प्रसिद्धाः, तेषां भेदो नाम पक्व इति परभागोऽर्वाग्भाग इति नवः पुराण इति च नानात्वं तस्मिन् सति या दृष्टा प्रतिपन्ना अभेदस्य कथञ्चित्तादात्म्यस्य व्यवस्थितिः साङ्कर्यादिपरिहारेणावस्थानं लोके लोकग्रहणेन तद्दृष्टेर्लोकप्रसिद्धतया अशक्याऽपह्नवत्वं दर्शयति । स तद्व्यवस्थितिरन्वयः कल्पते । किमर्थोऽसौ ? व्यवहाराय तन्निमित्तमिति । ततो [6]यत्परमतम्-नामपक्व-

१ तथा तस्य आ०,ब०, प० । २ सहकार्यभावे कार्याभावः । ३ नित्योऽपि प० । ४ नित्यम् । ५- तत एव आ०, ब०, प० । ६ वैशेषिकमतम् ( प्रश० व्यो० पृ० ४४८)।

योर्घटयोरेकत्वमिति; तदप्यनिविदितम्, एकत्वप्रत्ययेन तस्य व्यवस्थिते । नैतदस्ति [1]बाधकत्वात् । अस्ति ह्यत्र बाध । तथा हि–आमादर्थान्तर पक्वो घटस्तदारम्भकसंयोगविलक्षणसंयोगारब्धत्वात् पाषाणवत् । आमस्य हि घटस्यारम्भकोऽवयवसंयोग प्रशिथिलरूपो निबिडश्च पक्वस्य कठिनतयैव तस्य प्रतीते । अतो न तत्राभेदव्यवस्थितिस्तात्त्विकीति चेत्, उच्यते–यदि न प्रतिपत्ति पक्वस्य तस्य हेतोराश्रयासिद्धि । प्रतिपत्तिश्चेत्, न तस्य आमादर्थान्तरत्व शक्यसाधन तत्प्रतिपत्त्यैव बाधनात् । प्रतिपत्तिर्हि तस्य [2]कुतश्चिदामादनर्थान्तरस्यैव नात्यन्ताय विभिन्नस्य, अन्यथा तत एव साध्यसिद्धेर्व्यर्थमिदमनुमान भवेत् । विप्रतिपत्तेरचाभावात्, भावे तद्घटेऽपि तदापत्ते नाश्रयासिद्धे प्रतिक्षेप स्यात् । न तत्र तदापत्तिर्निश्चयादिति चेत्, न, साध्येऽपि तुल्यत्वात् । अन्यथैकैव प्रतिपत्ति निश्चयेतरात्मा भवेत् । तथा च कथमामपक्वात्माऽप्येके भावो न भवेत् । आमस्तदारम्भकसंयोगनिवृत्त्या निवृत्त एव कथ तस्य कथञ्चिदप्यवस्थानमिति चेत्; न, तत्संयोगनिवृत्तेरप्युत्तरनिबिडसंयोगादर्थान्तरस्याप्रतिपत्ते । तद्रूपत्वे च कथ निवृत्तिर्यतस्तदारब्धस्य आमस्यापि निवृत्ति ? कथञ्चित्तु या तन्निवृत्ति तयाऽस्त्येव, तस्यापि निवर्तनम् ? अभेदवत् आमपक्वयोर्भेदस्यापि प्रतिपत्ते । एतेन तण्डुलनिबिडावयवसंयोगात ओदनस्य शिथिलावयवसंयोगत्वेन यदत्यन्ताय भेदकल्पनम्, तदपि प्रतिक्षेप्तव्यम्, तुल्यत्वान्न्यायस्य ।

यदपीद पैठरस्य[3] मतम्–सत्यम्, आम एव पच्यते घट केवल तस्य रूपाद्य एवाग्निसंयोगात् नश्यन्ति तद्विलक्षणानामेव तेषा पश्चात् प्रादुर्भावादिति, तत्र बुद्ध्यामहे । तथा हि–घटो नाम तत्परिणतिविशेष एव नापर, तस्याऽप्रतीते प्रतिक्षेपाच्च, तत कथ तेषा विनाशस्तस्यैव तत्त्वसङ्गात् ? तदात्माऽपि स तिष्ठति ते च नश्यन्तीति विरोधात् । ततो युक्तम्–आमस्यैव घटस्याग्निसम्पर्कात् अन्यथाभावेनावस्थानम्, अवस्थाभेदिनो लोकप्रसिद्धं सोऽन्वय इति, एवं देशभेदेऽपि प्रतिपत्तव्यम् । तत्राप्यवस्थिति स एवायमर्वाग्भागेऽपि घटो य परभाग इति प्रतीते । तत्र समवेतस्यैव तस्य तथा प्रतीतिर्न तदात्मन इति चेत्; न, तस्य निषेधात् । एव स एवाय घट पुराणो जातो यो मया नवो दृष्ट इति प्रतिपत्ते कालभेदिनोऽप्यवस्थान प्रतिपत्तव्यम् । उक्तमर्थं श्लोकाभ्या सगृह्णन्नाह–

**सर्वसन्तानविच्छेदः सति हेतौ फलोदयः ॥१७८॥**
**अन्यथा नियमाभावादानन्तर्यं विरुद्ध्यते ।**

सति क्षणिके नित्ये च यदा हेतौ फलोदयस्तदा सर्वस्य कार्यस्य य सन्तान क्रमवान प्रबन्धः तस्य विच्छेदो विरहः तत्कार्यत्वात कार्यकार्यस्यापि परापरस्य, यदि वा परापरस्यापि कार्यस्य सकृदेव भावात्, कारणस्याक्रमे कार्यक्रमस्यायोगात् । अन्यथेति यद्यसति हेतौ फलोदयो यदि वा नित्ये तदविच्छेद –तदा यदेतदानन्तर्यं कारणानन्तरभावित्व कार्यस्य यद्वाय नियमस्य प्रत्यासन्नत्व तत्सन्तानस्य तद्विरुद्ध्यते

१ बाधकत्वा–आ०, ब० । २ 'प्रमाणविशेषात्'–ता० टि० । ३ अवयविपाकवादिनो नैयायिकस्य । ४–द्वे सो–आ०, ब० । ५ प्रतिपत्तिर्न आ०, ब०, प० ।

कस्मात् ? नियमाभावात्– असतो हेतोरनन्तरमेव कार्यं न पूर्वं नापि पश्चादित्यवधारणस्याभावात् तदसत्त्वस्य तदाप्यविशेषात् । ततश्चिरव्यवधानेन प्रागपि च तद्भवेदिति मन्यते । यदि वा, हेत्वा यत्तमेव कार्यमित्यस्य नियमस्य अभावात् । न हि समर्थे नित्यहेतावनुत्पन्नस्य पुनः स्वेच्छया यथा कालं भवतस्तदायत्तत्वमुपपन्नमतिप्रसङ्गात् इत्याद्येतेत । ततः क्षणिकादेरर्थक्रियाव्यावृत्तिनिर्णयात् तदात्मकं सत्त्वं कृतकत्वादयस्तु तद्विशेषास्तत्साधनाय प्रयुक्ता विरुद्धा एव, परिणामस्यैव साधनादित्यावेदयति–

**सत्त्वमर्थक्रियाऽन्ये वा वस्तुधर्माः क्षणक्षये ॥१७९॥**
**हेत्वाभासा विरुद्धाख्याः परिणामप्रसाधनाः । इति ।**

सत्त्वमित्यस्यैव अर्थक्रियेति व्याख्यानम् अर्थक्रियात एव सत्तासम्बन्धस्यापि सम्भवात् नान्यथा व्योमकुसुमादिवत् । अतोऽर्थक्रियैव सत्त्वम् अन्ये वा कृतकत्वादयश्च, वेति समुच्चयात् ते हेत्वाभासा विरुद्धाख्या क्षणक्षये । उपलक्षणमिदं तेन नित्येऽपि । कुतस्ते तथा ? परिणामप्रसाधना यत इति ।

सम्प्रत्यनैकान्तिकान् तदाभासानाह–

**सर्वज्ञप्रतिषेधे तु सन्दिग्धा वचनादयः ॥१८०॥ इति ।**

वचनमादिर्येषां पुरुषत्वादीनां ते सन्दिग्धा अन्यथानुपपत्त्येति शेषः । ततोऽनैकान्तिका एव निश्चितान्यथानुपपत्तीनामेवैकान्तिकत्वोपपत्तेः । क्व पुनस्ते तथा ? सर्वज्ञस्य यावज्ज्ञेयव्याप्तिज्ञानसम्बन्धिनः पुरुषस्य, उपलक्षणमिदं तेन परिक्षीणदोषस्य च प्रतिषेधे साध्ये इति । निवेदयिष्यते च तेषां तत्र सन्दिग्धत्वम् । येषां तु त्रैरूप्याद् गमकत्वं तन्मत्या हेतव एवेत्याह–

**रागादिसाधनाः स्पष्टा एकलक्षणविद्विषाम् । इति ।**

रागादेरादिशब्दादसर्वज्ञत्वस्य साधना वचनादयः । केषाम् ? एकलक्षणविद्विषां सौगतादीनां सन्दिग्धा, तेषामपि कथं ते तथेति चेत् ? न, स्पष्टाः पक्षधर्मत्वादौ सन्देहविकला यत इति । तथा हि–'सुगतो रागादिमान् सर्वज्ञो वा न भवति, वक्तृत्वादेः रथ्यापुरुषवत्' इति । अत्र तावत् स्पष्टमेव पक्षधर्मत्वम्, सुगते पुरुषत्वादिवत् वक्तृत्वस्यापि भावात् । कुड्यादावेव तन्न सुगत इति चेत्, न, "ज्ञानवान् मृग्यते" [ प्र० वा० १।३२ ] इत्यादिना सुगत एव तस्योक्तेर्न कुड्यादौ तस्याचेतनत्वात् । कुड्यादिगतमेव तत्तत्रोच्यते उपचारान्न तत्त्वत इति चेत्, तत्त्वतः तत्र तत् कस्मान्न भवति ? रागादेस्तद्धेतोरभावादिति चेत्, कुड्यादावपि न भवेत् । तत्तदभावेऽपि भवति न सुगत इति निर्निबन्धनैव कल्पना । तन्न पक्षधर्मत्वमप्रसिद्धम् । नापि सपक्षे सत्त्वम्, रथ्यापुरुषे रागादिमत्यसर्वज्ञे च दर्शनात् । नापि विपक्षाद् व्यावृत्तिः, पाषाणादौ तस्याप्रतिपत्तेरित्युपपन्नमेव तत्र तेषां गमकत्वम् । परकीयं तत्रोत्तरं दर्शयति–

---

१ सुगतसन्निधानात् कुड्यादिभ्यः देशना निस्सरन्तीति मनसिकृत्य सौगत प्राह । २ ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये । अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥ –ता० टि० । ३ वक्तृत्वम् । ४ कुड्यादौ । ५ रागाद्यभावेऽपि ।

**धर्मिधर्मस्य सन्देहे व्यतिरेके ततो भवेत् ॥१८१॥**
**असिद्धिः प्रतिबन्धस्येत्यपरे प्रतिपेदिरे ।** इति ।

भवतु नाम पाषाणादौ वक्तृत्वाद्यभावो रागादिनिवृत्तेः, न तावता व्यतिरेकनिश्चयः क्वचित् सत्यामपि तस्यां [2]तद्भावस्याविरोधात् ।

निवृत्तरागः सर्वज्ञो वचनादिर्नोपलभ्यते ।

इति चेत्; मा नामोपलम्भि न तावता तस्याभावः, अनुपलब्धिलक्षणप्राप्तानुपलम्भात् अभावासिद्धेः । ततो **धर्मिधर्मस्य** सुगतलक्षणे धर्मिणि विद्यमानस्य वक्तृत्वादेर्योऽसौ ततो विपक्षाद्व्यतिरेके सन्देहः तस्मिन् सति भवेदसिद्धिः अनिश्चयः प्रतिबन्धस्य तादात्म्यतदुत्पत्तिरूपस्याविनाभावस्य । न हि सन्दिग्धव्यतिरेके तत्सिद्धिः, निश्चित एव तस्मिन् तदुपपत्तेः । तदसिद्धौ च न रागादिसाधनत्वं वचनादीनाम् इति एव मन्यमानाः अपरे सौगताः प्रतिपेदिरे प्रतिपन्ना इति । अत्रोत्तरमाह–

**वाचो विरुद्धकार्यस्य सिद्धिः सर्वज्ञबाधनी ॥१८२॥**
**शिरःपाण्यादिमत्त्वाच्च विरुद्धव्याप्तसिद्धयः ।** इति ।

इदमेवासिद्धं यद्वाचो विरुद्धकार्यत्वं शिरःपाण्यादिमत्त्वादेर्वा विरुद्धव्याप्तत्वम्; सर्वज्ञलक्षणे विपक्षे तद्व्यावृत्तेः सन्देहेन तदसिद्धेर्निरूपितत्वात् । अथ अत एव विपक्षाभावस्य निश्चये तत्सन्देहस्य निवृत्तिः; तदयुक्तम्; परस्पराश्रयात्–सिद्धावतो विपक्षनिषेधस्य तद्द्वारेण तन्निवृत्तिः, ततोऽपि तत्सिद्धिरिति चेत्; न; तद्व्यावृत्तेः सपक्षदर्शनादेव निश्चयाद् धूमादिवत् । न हि धूमादेरप्यन्यदेव विपक्षव्यावृत्तिनिश्चये निमित्तम् अन्यत्र सपक्षदर्शनात् । तच्च वचनादावपि, रागादिमत्यसर्वज्ञ एव रथ्यापुरुषादौ तस्य दर्शनात् । तथापि तस्यान्यत्र भावे धूमादेरपि स्यादिति कथं निश्चिता ततोऽपि पावकादिप्रतिपत्तिः ? ततो यथा न धूमादिः शिंशपात्वादिर्वा पावकादेर्वृक्षादेर्वाऽन्यत्र भवति भूयस्तन्निष्ठतयैवोपलब्धेरेवं न वचनादिशिरःपाण्यादिमत्त्वादिकं वा किञ्चिज्ज्ञादेरन्यत्र, भूयोऽपि तन्निष्ठतयैव तस्यापि दर्शनात् । अथ सर्वज्ञादिरपि किञ्चिज्ज्ञादेरन्यो न भवति चेतनत्वादिना तुल्यजातीयत्वात् तत्कथं तत्र तदभाव इति ? तर्हि द्रव्यान्तरमपि न पाकादेर्वृक्षादेर्वा अन्यदेव मूर्तत्वादिना समानजातीयत्वादिति तत्रापि धूमादिना शिंशपात्वादिनापि भवितव्यम् । अवान्तरभेदापेक्षया तस्य तद्विजातीयत्वं प्रकृतेऽपि समानम् । ततो युक्तं विरुद्धकार्यत्वं वाचः, सर्वज्ञविरुद्धात् किञ्चिज्ज्ञादेव तस्या उत्पत्तेः । ततस्तस्याः **सिद्धिर्भवत्येव सर्वज्ञस्य बाधनी** तया तद्विरुद्धं किञ्चिज्ज्ञत्वमुपानयन्त्या तस्य प्रतिक्षेपात् यथा धूमसिद्धिः शीतस्पर्शस्य । एवं **शिरःपाण्यादिमत्त्वमा**द्यम् आदौ भवं

---

१ रागादिनिवृत्तौ । २ वक्तृत्वस्य । ३–पादिर्वा आ०, ब०, प० । ४ बाधनीयतया आ०, ब०,प० ।

यासां पुरुषत्वादीनां[1] सिद्धीनां ता अपि सर्वज्ञस्य बाधन्य इति वचनपरिणामेन सम्बन्धः। कुतस्तास्तद्बाधन्य इति चेत्; विरुद्धेन निषेध्यप्रत्यनीकेन किञ्चिज्ज्ञत्वेन व्याप्तास्ता एव सिद्धय इति उपलब्धयो यत इति। तत्रोदाहरणं यथा न वेदाः प्रमाणं दृष्टेष्टविरोधादिति। प्रामाण्यविरुद्धं खल्वप्रामाण्यं तद्व्याप्तश्च दृष्टेष्टविरोध इति। प्रसिद्धं चेदं बौद्धस्येति न निवृत्य कथ्यते। तदेवं विरुद्धकार्योपलब्धिं विरुद्धव्याप्तोपलब्धिं च प्रतिपाद्य व्यापकविरुद्धोपलब्ध्यादिनाऽपि तद्बाधनं दर्शयन्नाह–

**सत्सम्प्रयोगजत्वेन विरुद्धः सकलग्रहः ॥१८३॥**
**स्वभावकारणासिद्धिरेकलक्षणविद्विषाम्। इति।**

सद्भिर्विद्यमानैरर्थैः अक्षाणां यः समीचीनप्रयोगः तस्माज्जातं तस्य भावः सत्सम्प्रयोगजत्वं तेन प्रत्यक्षज्ञानधर्मेण विरुद्धः सकलस्य देशादिविप्रकृष्टस्य ग्रहः सकलवेदित्वम्। तस्य हि व्यापकमसत्सम्प्रयोगजत्वं तद्विरुद्धञ्चेदं सत्सम्प्रयोगजत्वं ताथागतेऽपि प्रत्यक्षे प्रतीयमानं स्वप्रत्यनीकाऽसम्प्रयोगजत्वव्यावर्तनद्वारेण तद्व्याप्यं सकलग्रहं व्यावर्तयतीति युक्ता व्यापकविरुद्धोपलब्धिः। यथा नात्र तुषारस्पर्शो वह्नेरिति। वह्नेर्हि शीतस्पर्शविरुद्धस्योपलब्ध्या तद्व्याप्यस्य तुषारस्पर्शस्यात्र प्रतिक्षेप इति प्रसिद्धमेवात्र तद्विरुद्धोपलब्धित्वम्। अथ ताथागते ज्ञाने सत्सम्प्रयोगजत्वमसिद्धम्; भावनाप्रकर्षपर्यन्तादेव तस्योत्पत्तेरिति; तन्न; तस्यापि प्रत्यक्षत्वादेव साधनात्। ताथागतमपि प्रत्यक्षं सत्सम्प्रयोगजं प्रत्यक्षत्वात् अस्मदादिप्रत्यक्षवदिति। एतदपि स्वसंवेदनप्रत्यक्षेण व्यभिचारीति चेत्; न; निरंशवस्तुवादिनः स्वसंवेदनमर्थवेदनं चेति स्वभावद्वयस्यैकत्रासम्भवात्।

तथा, स्वभावकारणासिद्धिरपि बाधनी तत्र भवेत्। नन्वेवं स्वभावासिद्धिः स्वभावानुपलब्धिः; यथा नास्ति सर्वज्ञोऽनुपलब्धेरिति। कथं पुनरदृश्यानुपलब्धेर्गमकत्वं सत्यपि वस्तुनि सम्भवात् परचेतोवृत्तिविशेषवदिति चेत्; किं पुनः सर्वज्ञस्य अदृश्यत्वम्? तथा चेत्; न; स्वयमपि तत्प्रसङ्गात्। परापेक्षतयैवादृश्यत्वमिति चेत्; न; निरंशैकान्ते स एव दृश्यश्चादृश्यश्चेति स्वभावद्वयानुपपत्तेः, ततो दृश्य एवासाविति कथं तदनुपलब्धिरदृश्यानुपलब्धिर्यतो न गमिका भवेत्? नन्वेवं न काचित् दृश्यानुपलब्धिः; सर्वस्य येनचिद्दृश्यस्य सर्वैरपि दर्शनादिति चेत्; अयमपि भवत एव निष्कलवस्तुवादिनो दोषः।

तथा कारणसिद्धिः कारणानुपलब्धिः। यथा नातीतादिविषयं योगिप्रत्यक्षं तदभावात् इति, अतीतादिकं हि तत्प्रत्यक्षस्य कारणं "नाकारणं विषयः" [ ] इत्यभिधानात्। न चातीतादेर्भावः; प्रध्वस्तत्वेनातीतस्य अनागतस्य चानुत्पन्नत्वेनाभावग्रस्तत्वादिति। एवमेते वचनादयः कार्यस्वभावानुपलम्भरूपतया त्रैविध्यमपरित्यजन्तोऽप्यन्यथाऽनुपपत्तिवैकल्यादेव अगमकाः। तदेव दर्शयति–

**कथन्न सम्भवी वक्ता सर्वज्ञस्तस्य तेन नो ॥१८४॥**
**यावत् प्रकृप्यते रूपं तावत् कार्यं विरुध्यते। इति।**

१–दीनां ता आ०, ब०, प०। २–न कृत ब–आ०, ब०, प०। ३ तत्र स्वभा– आ०, ब०, प०। ४ परचेतोनिवृ– आ०, ब०, प०। ५ –चिद्दृश्या– आ०, ब०, प०।

वचनस्य विज्ञानमेव कारणम्, असति तस्मिन्निच्छायामपि तदभावादिति निवेदनात्। तच्च तस्य यावत् यत्प्रमाणं प्रकृष्यते रूपं तावत् तत्प्रमाणं कार्यं वचनं तेन नो विरुद्धयते अपि तु तदपि प्रकृष्यत एव। सति विशिष्टे वह्निप्रकर्षे धूमेऽपि तत्कार्ये प्रकर्षस्यैव दर्शनात्। ततः प्रकर्षपर्यन्तगतेऽपि ज्ञाने वचनस्याविरोधात् कथन्न सम्भवी वक्ता सर्वज्ञः ? किन्तु सम्भव्येव सकलवेद्यपि वक्ता। तन्नान्यथाऽनुपपत्तिरत्र। स्यादेवं यदि विज्ञानाद्वचनम्, न चैवं विवक्षायास्तत्कारणत्वात्। सा च रागविशेषत्वेन दोषात्मिका सती विधूताशेषदोषतो निःशेषतत्त्वज्ञानान्निवर्तमाना वचनमपि निवर्तयत्येव, तत्कथं नान्यथाऽनुपपत्तिर्यतस्तत्सुगतादौ अनिवर्तितप्रसरतया प्रवर्तमानं विवक्षादोषोपस्थापनेन निःशेषवेदित्वं न व्यापादयेदिति चेत् ? अत्राह–

**विवक्षामन्तरेणापि वाग्वृत्तिर्जातु वीक्ष्यते ॥१८५॥**
**वाञ्छन्तो वा न वक्तारः शास्त्राणां मन्दबुद्धयः।** इति।

न सर्वदा वक्तुकामतयैव वचनप्रवृत्तिर्विनापि तया गोत्रस्खलनादौ तदुपलब्धेः, तदापि प्रमादनिबन्धनत्वात् तस्या न विज्ञानहेतुकत्वम्। ततो यदि विवक्षातः प्रमादाद्वा तत्प्रवृत्तिरुभयथापि दोषजातेरनतिवर्तनात् भवत्येव ततः क्वचिद्दोषोपस्थापनद्वारेण सकलज्ञत्वप्रतिक्षेप इति चेत्; इदमप्ययुक्तम्; तदुभयाभावेऽपि तत्प्रवृत्तेर्दर्शनात्। यथा तीव्राभियोगवतो निरन्तरा संस्कृतप्रवृत्तिः। नहि तत्र प्रमादः; लक्षणस्य क्रियाकारकान्वयस्य चापरिभ्रंशात्। नापि इच्छाऽनुगमः; अतः परमिदमुच्चारयामीत्यभिनिवेशाभावात्। ततो विज्ञानस्यैव तद्धेतुत्वं निर्ह्रासातिशयानुविधानात्। अनुविधत्ते हि तत्प्रवृत्तिर्विज्ञानस्य निर्ह्रासातिशयञ्च, मन्दे तस्मिन् मन्दायाः पटीयसि च पटीयस्याः तस्या अपि प्रतिपत्तेः। अपि च, यदि वाञ्छायाः तद्धेतुत्वं मन्दमतयोऽपि शास्त्राणां व्याख्यातारो भवेयुः। न चैवम्, वाञ्छतामपि तेषां तदप्रतिपत्तेः। अतो विज्ञानहेतुकैव तत्प्रवृत्तिः एतदेव दर्शयन्नाह–

**प्रज्ञा येषु पटीयस्यः प्रायो वचनहेतवः ॥१८६॥**
**विवक्षानिरपेक्षास्ते पुरुषार्थं प्रचक्षते।** इति।

येषु बुद्धयः पटीयस्यो भवन्ति पुरुषेषु प्रायः सामस्त्येन वचनहेतवः कदाचिदपि तदभावे तदप्रवृत्तेः ते प्रचक्षते कथयन्ति। किम् ? पुरुषार्थं धर्मस्तत्प्रयोजनादिकम्। कीदृशाः ? विवक्षानिरपेक्षास्ते वक्तुकामतानिर्व्यपेक्षाः। तत एवोक्तम्–

"आसिसिपादिविरहितः स्वासनगमनप्रमापणस्थानाद्यैः।
निरवद्यचित्ररचितैः प्रवरगुण त्वमसि चित्रचरितो नाम्ना॥" [ ] इति।

भवतु वा विवक्षा तथापि न दोष इत्याह–

**अप्रमत्ता विवक्षेयमन्यथा नियमात्ययात् ॥१८७॥** इति।

इयं सकलवेदिनि परैः परिकल्प्यमाना विवक्षा वक्तुमिच्छा अप्रमत्ता प्रमादरहिता कस्मात् ? अन्यथा अन्येन प्रमत्तप्रकारेण योऽसौ नियमस्तत्कृतस्य वचनप्रबन्धस्य स्थानत्रयेऽपि अविसंवादावधारणं तस्या अत्ययोऽभावस्तस्मात्। नहि प्रमादवद्धेतुनिबन्धनस्य तन्नियमः सम्भवति, अस्ति चायं प्रत्यक्षविषये प्रथमेन अनुमानवेद्ये द्वितीयेन अत्यन्तपरोक्षे च तृतीयेन प्रस्तावेन तन्नियमस्य प्रसाधनात्। ततः सा प्रमादरहितैव ततो न दोषवतीत्याह–

**इष्टं सत्यं हितं वक्तुमिच्छा दोषवती कथम्।** इति।

इष्टं श्रेयोऽर्थिभिरभिलषितं संसारतत्कारणादिकं सत्यं न सौगतादिवत् कल्पितम्। अत एव हितं पुरुषार्थभूतं वक्तुमिच्छा कथयितुकामता कथं दोषवती न कथञ्चिदिति ? कुतः पुनः कस्यचित् सकलज्ञानं यतः कथमित्याद्युच्यत इति चेत् ? अत्राह–

**प्रज्ञाप्रकर्षपर्यन्तभावः सर्वार्थगोचरः ॥१८८॥** इति।

प्रज्ञायाः सकलश्रुतार्थबुद्धेर्योऽसौ प्रकर्षो भाव्यमानाया अतिशयगमनस्य ( न तस्य ) यः पर्यन्तभावः परिस्फुटव्यापारात्मा स सर्वार्थगोचरः सर्वदेशकालादिव्यवहितोऽर्थो जीवादिर्गोचरो यस्य स तथोक्त इति। एतदुक्तं भवति–सकलश्रुतार्थभावनायां तत्पर्यन्ते सा परिस्फुटसकलवस्तुप्रभाववती भवति कामिन्यादिभावनावत्। तद्वांश्च सर्वज्ञ इति। भवतु वक्ता सर्वज्ञः तद्वचनस्य तु कथं यथार्थत्वं यतस्तत्त्वज्ञानार्थिनामयमन्वेषणीयः स्यात् ? स्वरसत एव शब्दानामयथार्थबुद्धिहेतुत्वेन तदुक्तानामपि वस्तुगोचरत्वानुपपत्तेरिति चेत्; अत्राह–

**तत्कार्योत्कर्षपर्यन्तभावः सर्वहिताभिधा।** इति।

तस्य तत्पर्यन्तभावस्य कार्यं वचनं तस्योत्कर्षः एकान्तप्रवादापेक्षोऽतिशयोऽविमति-सारलक्षणः तस्य पर्यन्तभावः स्वविषये सर्वत्र सत्त्वम्, सर्वेभ्यो हितस्य श्रेयसः तन्मार्गस्य च अभिधा प्रकाशनमिति। तात्पर्यमत्र–

वाचां हि तत्प्रयुक्तानामविसंवादभावत।
प्रतीयते यथार्थत्वं कथं तेनायथार्थता ॥१५४०॥
अयथार्थं वचः सर्वमिदं चेदर्थवद्वचः।
अयथार्थं वचः सर्वमिति सन्धा विलिप्यते ॥१५४१॥
इदमप्ययथार्थं चेद्यथार्थं स्याद्वचः परम्।
अयथार्थायथार्थत्वे यथार्थत्वव्यवस्थिते ॥१५४२॥
यथार्थत्वे स्वतः सर्वं वचः किन्न तथेति चेत्।
चक्षुरादि तथा किन्न सर्वमर्थवदुच्यताम् ॥१५४३॥
अर्थवद्गुणवत्तच्चेन्मिथ्यार्थमितरन्मतम्।

१ "स्थानत्रयाविसंवादि श्रुतज्ञानं हि वद्वते।" –स० श्लो० पृ० १३। प्रत्यक्षानुमेय-अत्यन्तातीन्द्रियलक्षणे स्थानत्रये। २–यमुन्मेषणी–आ०, ब०, प०।

वचस्यपि विभागोऽयं प्रशस्यः कल्प्यतां त्वया ॥१५४४॥
सर्वज्ञश्चेन्न वक्तव्यः कल्पितः किं त्वयाऽप्यसौ ।
प्रयोजनं विना यस्मान्न मन्दोऽपि प्रवर्तते ॥१५४५॥
तत्सन्निधानतस्तत्त्वज्ञानं स्यादिति चेत् कुतः ।
तज्ज्ञानं येन तत्सन्निधानादित्यभिजल्पसि ॥१५४६॥
तत्त्वज्ञानोदयाच्चेत् स क पुनस्तत्कृतो[1] गतः ।
निरन्वयस्य यद्धेतोर्गमकत्वं न वाञ्छसि ॥१५४७॥
कुतो वा सन्निधिस्तस्य नियतेष्वेव सम्मतौ ।
अदृष्टनियमाच्चेत् स्यात् तत्त्वज्ञानं ततो न किम् ? ॥१५४८॥
तत्र तत्सन्निधानेन किञ्चिदस्ति प्रयोजनम् ।
विनाप्येवं यतस्तेन तज्ज्ञानमुपपत्तिमत् ॥१५४९॥ इति ।

ततो न युक्तमिदं राहुलकीर्तेः—"चिन्तारत्नोपमानो जगति विजयते विश्वरूपोऽप्यरूपः ।" [ ] इति । तदुपमानत्वस्यैव सन्निधिबलात् तत्त्वज्ञाननिबन्धनरूपस्यानवगमात् । [2]ततो नोपमानादेव तत्त्वपर्यवसायिनस्तस्य परिज्ञानमिति कथन्न वक्तृत्वं तस्य कथं वायथार्थत्वं वचसाम् ? इत्युपपन्नमुक्तम्—'तत्कार्यं' इत्यादि । तदेवं वक्तृत्वस्य सर्वज्ञत्वेनाविरोधमुपपाद्य पुरुषत्वादेरप्युपपादयन्नाह—

**यथा वचनसर्वज्ञकार्यकारणभूतयोः ॥१८९॥**
**अविरोधेन [3]वाग्वृत्तेराद्रेकस्तन्निषेधने ।**
**तथैव पुरुषत्वादेरक्षयाद्बुद्धिविस्तरे ॥१९०॥**

तथैव हि[4] या [ग्] वृत्तेः हेतोस्तस्य सर्वज्ञस्य निषेधेन केवलम् आद्रेकः शब्दोत्साह एवार्थरहितः । मीमांसकस्य [5]स एवेति । केनेति चेत् ? वचनसर्वज्ञकार्यकारणभूतयोरविरोधेन वचनस्य सर्वज्ञस्य च योऽयमुक्तन्यायेन कार्यकारणभूतयोरविरोधस्तेनेति । तथैव पुरुषत्वादेरादिशब्दात् शिरःपाण्यादिमत्त्वादेरपि तन्निषेधने आद्रेक इति सम्बन्धः । एतदेव कुत इति चेत् ? तस्यैव पुरुषत्वादेर्बु[6]द्धिविस्तरे प्रज्ञाप्रकर्षे सत्यपि अक्षयादिति । यदि हि तस्य तेन विरोधः सति बुद्धिप्रकर्षतारतम्ये[7] तदप्यपकृष्यमाणमुपलभ्येत उष्णातिशयतारतम्ये शीतवत् । न चैवम्, अतो न तस्य तेन विरोध इति । केवलं [8]ततोऽपि तन्निषेधनमाद्रेक एव । स्यान्मतम्— नियतविषया एव निसर्गतो बुद्धयः तत्कथं तासां भावनावशादपि सकलं तद्विषयं ( सकलतद्विषयत्वम् ? ) न

१ तत्कुतो आ०, ब०, प० । २ ततोऽनुपमा- आ०,ब०,प० । ३ वा वृ- ता० । ४ हिम- यात् आ०, ब०, प० । ५ आद्रेक एव । ६- तम्येनैव त- आ०, ब०, प० । ७ पुरुषत्वादेरि ।

हि तोयस्य पावकत्वेन परिभावितस्यापि पावकमयत्वमिति, तन्न, स्वशक्तित एव तासामशेषविषयत्वात्, अन्यथा व्याप्तिज्ञानानुपपत्तेरिति निवेदितत्वात्। किमिदानीं [1]तद्बलेनेति चेत्? न, तेन तद्गतस्यैव स्पष्टासाधारणाकारप्रतिभासप्रत्यर्थिनः कर्ममलस्यैव प्रत्याख्यानात्, चैतन्योन्मीलनप्रत्यर्थिनो विषोपलेपस्येवामृतप्राशनबलेन। अत एवाम्नन्ति–"तपसा निर्जरा च" [त० सू० ९।३] इति। तदेव दर्शयति–

**सर्वप्रकाशसामर्थ्यं ज्ञानावरणसंक्षयात्। इति।**

ज्ञानमाव्रियते येन तज्ज्ञानावरणं कर्म वक्ष्यमाणसङ्घातं तस्य संक्षयः समन्तात् परिक्षयः श्रुतविषयभावनात्। ततः सर्वस्य यः प्रकाशः स्पष्टासाधारणाकारप्रतिभासरूपः तत्र सामर्थ्यं बुद्धीनामिति शेषः। एतदेव स्पष्टयन्नाह–

**अक्षयात् पुरुषत्वादेः प्रतिपक्षस्य संक्षयात् ॥१९१॥**
**सर्वतोऽक्षमयं ज्योतिः सर्वार्थैः सम्प्रयुज्यते। इति।**

ज्योतिर्ज्ञानमेव प्रभास्वरत्वात् अक्ष आत्मा प्रकृतः प्रकर्षेण निश्चितो यस्मिन्नित्यक्षमयम् आत्मस्वरूप स्वरूपादन्यत्र तन्निश्चयानुपपत्तेः। तत् सर्वार्थैः ग्राहकत्वेन सम्प्रयुज्यते। किमेकस्मिन्नेव मुखे? न, सर्वतः सर्वात्मना ऊर्ध्वमधस्तादग्रतः पृष्ठतः सर्वतश्च। कुतस्तथा? प्रतिपक्षस्य ज्ञानावरणस्य संक्षयात् निःशेषापगमात्। तथा च प्रवचनम्–

"निरावरणमाभासद्दिव्यबोधमहोमयी।
प्रख्यायोर्ध्वमधस्तिर्यक् प्रतिव्यक्ति प्रकाशते॥" [ ] इति।

प्रतिपक्षपरिक्षये तदाहितविशेषस्य ज्ञानस्यापि परिक्षयात्। कथं तस्य[2] पुनः सर्वार्थैः सम्प्रयोग इति चेत्? न; तदापि[3] तद्विशेषस्यैवास्पष्टप्रतिभासविभ्रमरूपस्य व्यावृत्तेः न ज्ञानमात्रस्यापि, निरन्वयाया वस्तुनिवृत्तेः प्रमाणाभावात्। अत एवेदम्–'अक्षयात् पुरुषत्वादेः' इति। पुरुषत्वमन्वित जीवरूपम् आदिशब्दाच्चेतनत्वादीति तस्यैवेति चेत्; [4]ननु चेतनत्वमेव पुरुषत्वं तत्कथं तदन्यत् यत आदिपदेन सङ्ग्रह इति चेत्? न, तदापि तद्विशेषस्यैवास्पष्टप्रतिभासविभ्रम [रूप] पुरुषत्वस्य[5] साधारणेतरस्वभावस्य अविद्रूपतन्मात्रत्वात्, चेतनत्वस्य चोपयोगव्यपदेशस्य असाधारणरूपत्वात्। अत एवोक्तम्–"उपयोगस्वात्मान्यो वस्तुत्वादिस्तदुभयभावो जीवः" [ ] इति। यदि प्रतिपक्षपरिक्षयाज्ज्योतिः छद्मस्थानां तदभावात् कथं रूपादिवेदनमिति चेत्? अत्राह–

**कथञ्चित् स्वप्रदेशेषु स्यात् कर्मपटलाच्छता ॥१९२॥**
**संसारिणां तु जीवानां यत्र ते चक्षुरादयः। इति।**

---

१ भवानाबलेन। २ पुनस्तस्य आ०, ब०, प०। ३ तथापि आ० ब० प०। ४ न चेत– आ०, ब०, प०। ५ –स्य ता०।

भवेदयं प्रसङ्गोऽपि यदि संसारिणां तु छद्मस्थानामपि जीवानां स्वप्रदेशेषु कथञ्चित् कर्मपटलस्य ज्ञानावरणापरव्यपदेशस्य अच्छता रूपादिवेदनप्रतिबन्धिशक्तिवैकल्यलक्षणपरिणतिविशेषो न स्यात्। अस्ति चेयम्, अतोऽयं न प्रसङ्ग इति। यद्येवं तदच्छताया एव स्वरूपादिग्रहणोपपत्तेः किं चक्षुरादिभिरिन्द्रियैरिति चेत्; अत्रोत्तरम्–यत्र येषु तत्प्रदेशेषु कर्मपटलाच्छतेति सम्बन्धः। ते चक्षुरादय आदिशब्दाद्रसनादयश्च नापर इति। न हि गोलकादेरिन्द्रियत्वमन्यत्रोपचारात्। मुख्यतः क्षयोपशमविशेषस्यैव तत्त्वात्। अत एव गवाक्षसमत्वं तेषां तत्त्वविदः प्रतिपद्यन्ते[1]। यदि तेषां न मुख्यत इन्द्रियत्वं किन्न तदभावेऽपि तद्वेदनमिति चेत्? भवत्येव तदच्छतायाम्। कथमन्यथा पिहितगोल(पिहितगोल)कादिव्यापारस्यापि स्वप्नादौ सत्यरूपादिवेदनम्? निरूपितं चैतत् प्रथमप्रस्तावे।

'सर्वार्थैः' इत्युक्तम्। सर्वे चार्था वर्तमानवदतीतानागताश्च। न च तेषां ग्रहणं ज्ञानकाले अविद्यमानत्वात्, कथमिदं तैः सम्प्रयुज्यत इति चेत्? अत्राह–

**साक्षात्कर्तुं विरोधः कः सर्वथावरणात्यये ॥१९३॥**

**सत्यमर्थं तथा सर्वं यथाऽभूद्वा भविष्यति । इति ।**

तात्पर्यमत्र–यदि ज्ञानेन तत्कालासन्निहितस्याग्रहणं तर्हि तदात्मतद्देशयोरप्यसन्निहितस्याग्रहणात् न स्वरूपादन्यत्प्रमेयं नाम भवेत्। [2]यदि न तत्सन्निधानात् प्रयोजनमावरणापाये [3]ताभ्यामसन्निहितस्यापि परिज्ञानादिति; तर्हि कालसन्निधानस्यापि न किञ्चित् फलम्, अतीतादेरपि तदपायादेव प्रतिपत्तेरित्यावेद्यते। यथा[4] येन अनादित्वेनानन्तत्वेन च प्रकारेण अभूत् भूतं भविष्यति भावि च वेति समुच्चयार्थत्वात्, तथा तेन प्रकारेण सत्यमविप्रलब्धं यथा भवति सर्वं साक्षात्कर्तुं को विरोधो न कश्चित्। कदा? सर्वथावरणात्यये इति।

कालेनाऽसन्निकृष्टस्य न चेत् सर्वविदा ग्रहः ।
वेदेनापि तदर्थस्य भाविनः स्यात् कथं ग्रहः ॥१५५०॥
आनन्त्यात् भाविनोऽर्थस्य वेदार्थस्यापि तत्समम् ।
सर्वज्ञेनेव तज्ज्ञानं तद्वेदेनापि दुष्करम् ॥१५५१॥
तदर्थानन्त्यवित्तिश्चेन्नास्ति वेदाद्विनीष्यते ।
[5]ततस्तस्य ततो वित्तौ कुतस्ते तत्प्रवेदनम् ॥१५५२॥
नास्त्येव तच्चेद्वेदोऽपि स्यादनन्तः कथं तव ?
तथापि तस्यानन्त्ये स्यात् अर्थशून्या व्यवस्थितिः ॥१५५३॥
ततो यथा स्वकालस्थमपि वेदोऽर्थवेदनम् ।
वेदार्थानन्त्यवित्तद्वत्सर्वज्ञोऽपीति गम्यताम् ॥१५५४॥

---

१ "अनेकगवाक्षान्तर्गतप्रेक्षकवत्"– प्रश० भा० पृ० ३३। २ अथ न आ०, ब०, प०। ३ तदात्मतद्देशाभ्याम्। ४–थानादि– ता०। ५ समंतस्य–आ०, ब०, प०।

यदि परदुःखादिकं सर्वज्ञो न जानाति कथं तज्ज्ञत्वम् ? जानाति चेत्, कथन्न दुःखादिमान् ? नहि परस्यापि तत्साक्षात्करणादपरं दुःखादिमत्त्वमिति चेत्, अत्राह–

[1]परदुःखपरिज्ञानाद्दुःखितः स कथं भवेत् ॥१९४॥
स्वतो हि परिणामोऽयं दुःखितस्य न योगिनः । इति ।

परेषां छद्मस्थानां दुःखं तस्य, उपलक्षणमिदं तेन रागादेश्च परिज्ञानात् दुःखितः स[2] सर्वज्ञः कथं नैव भवेत् ? न हि दुःखपरिज्ञानादेव दुःखितत्वम् अपि तु स्वतस्तथा परिणामात् । न चायमस्ति योगिनः अपि तु दुःखितस्य संसारिण एव । तत्र स एव दुःखी न तज्ज्ञानमात्रेण योग्यपि । न हि पितुरपि पुत्रदुःखपरिज्ञानादेव दुःखित्वं किन्तु स्वतस्तथापरिणामादेव, अन्यथा दुश्चरितपुत्रपरिक्लेशपरिज्ञानादपि तस्य दुःखितत्वं प्राप्नुयात् ।

किं पुनर्भावनापाटवात् कुतश्चिद् बुद्धिप्रकर्षो दृष्टोऽस्ति यतः सकलवेदनमपि ततो भवेदिति चेत् ? बाढमस्तीत्याह–

[3]भावनापाटवाद् बुद्धेः प्रकर्षोऽयं [ मलक्षयः ] ॥१९५॥ इति

वैद्यकादिशास्त्रार्थस्य चेतसि मुहुः पुनर्मिलनं भावना तस्याः पाटवं शक्तिविशेषस्ततो बुद्धेः साध्यासाध्यरोगविभागतन्निदानादिप्रतिपत्तेः प्रकर्षोऽतिशयपर्यन्तप्राप्तिः अयं प्रसिद्धो लोके तथा सर्वोऽपि जीवादिपदार्थेष्विह प्रवचनोपनीतया प्रज्ञयोपसंगृह्य परिभाव्यमानः तत्प्रकर्षकाष्ठामधितिष्ठतीति भावो देवस्य[4] । तथा हि–विवादापन्ना बुद्धिः स्वविषये प्रकर्षमधितिष्ठति, भाव्यमानत्वात्, वैद्यकादिबुद्धिवत् । प्रकर्षस्वरूपमाह–'मलक्षय' इति । 'अयम्' इत्यत्रापि योज्यम्, अयमुच्यमानः प्रकर्षो मलस्य प्रकाशावरणादेः पर्यन्ते क्षयो नापरम्, स्वरसासंभविरूपापादनं भावनाशतेनापि तस्याशक्यत्वात् । कुतः पुनस्तत्क्षय एव स इति चेत् ? उच्यते–विवक्षितो बुद्धिप्रकर्षो मलक्षयरूपस्तत्त्वात् काचकामलाद्युपशमरूपचक्षुरादिबुद्धिप्रकर्षवत् । तत्क्षयः किम् ? इत्याह–

कारणासम्भवाक्षेपविपक्षः सम्प्रतीयते । इति ।

कारणस्य सकलज्ञेयप्रतिपत्तिनिमित्तस्य असम्भवाक्षेपः स्वीकारस्तस्य विपक्षो विरोधी सम्प्रतीयते निश्चीयते । तथाहि–यस्य यत्र मलक्षयः स तं साक्षात् करोति यथा कश्चिदपगतलोचनमलो लोचनमलो नीलधवलादि, मलक्षयश्च कस्यचिद् जीवादिनिखिलागमार्थविषय इति । किं पुनस्तद्बुद्धेः मलः यत्परिक्षयो हेतुः ? न तावदयं रागादिः, सत्यपि तस्मिन् बुद्धेर्भावात् । नापि शरीरादिः, सकलवेदिन्यपि तदभ्युपगमात् । अत एव न दूरदेशादिरपीति चेत्, न, शरीरेन्द्रियादिव्यतिरिक्तस्य आत्मसमवायिपुद्गलपरिणतिविशेषस्य सत्त्वात् । कुतस्तदस्तीति चेत् ? उच्यते–'यत् स्वविषये ज्ञानमस्पष्टं तत्तादृशमलनिमित्तं यथा मदिरोपयोगिनः सन्निहितेऽपि घटादौ अस्पष्टवेदनम्, अस्पष्टं च सर्वत्रापि स्वविषये प्रवचनज्ञानम् ।'

---

१ तुलना– 'संवेदनाद्रागिता चेत् ज्ञोऽपि न स्यात्तन्निरूपणात् । सम्बन्धाद्रागिता तस्य न तु रागादिवेदनात् ।'–प्र० वार्तिकाल० १।२२३। २ अकलङ्कदेवस्य । ३–सम्भवी रूपादा– आ०, ब०,प० । ४–प्रपाटवादि– ता० । ५ चिदपिजी– आ० प० ।

इति मलसद्भावादुपपन्नं तत्परिक्षयस्य सकलज्ञेयप्रतिपत्तौ कारणत्वमिति सूक्तम्- 'कारण' इत्यादि। तदेवमनैकान्तिकत्वं वक्तृत्वादीनामभिधाय साम्प्रतमसिद्धमपि हेत्वाभासं दर्शयन्नाह-

**असिद्धश्चाक्षुपत्वादिः शब्दानित्यत्वसाधने ॥१९६॥** इति।

शब्दस्य यत् अनित्यत्वं तस्य साधने कर्तव्ये चाक्षुपत्वं चक्षुर्ग्राह्यत्वमादिर्यस्य रासनत्वादेरसौ असिद्धः, असिद्धिः शब्दे धर्मिण्यसम्भवात्। 'चक्षुःश्रवसो भुजङ्गाः' इति तु प्रवादमात्रमिदं न वस्तुबलप्रवृत्तम्, अन्यथा पिहितलोचनानां पन्नगानां न शब्दश्रवणं भवेत्। अस्ति च तत्तेषाम्, रूपमपश्यतामपि शब्दश्रवणेन पलायनोपलम्भात्। भवतु शब्दे तस्यासम्भवः तथापि सिद्ध एव घटादौ भावात्, अन्यथा व्यर्थैव चक्षुरादिकल्पना भवेदिति चेत्; न; तत्र सतोऽपि शब्दानित्यत्वं प्रत्यगमकत्वात्। घटाद्यनित्यत्वस्य हि तन्नान्तरीयकत्वेन ततः प्रतिपत्तिर्न शब्दानित्यत्वस्य, तदभावात्।

ननु तदभावोऽपि नापक्षधर्मत्वात्; सत्यपि तस्मिन् कृत्तिकोदयादौ तदभावात्। 'न ह्युदेष्यति शकटं कृत्तिकोदयात्' इत्यत्र पक्षधर्मत्वम्; शकटे तदुदयवत् कृत्तिकोदयस्याभावात्। कृत्तिकासु वा तदुदयवत् इतरोदयस्यासम्भवात्। कालादेश्च धर्मिणः सौगतकल्पितस्य शास्त्रकारेणैव प्रतिक्षेपात्। तत्र अपक्षधर्मत्वेन तदभावः। शब्दानित्यत्वाभावेऽपि तत्र भवतो बाधकाभावादेव तर्हि तस्य भवतु तदभाव इति चेत्; नेदानीं तस्यासिद्धत्वम्, सिद्धस्यैव प्रत्यगमकत्वप्रतिपादनादिति चेत्; सत्यम्; घटादिगतस्य तस्यैवमगमकत्वं शब्दगतस्य तु नैवम्, असिद्धत्वादेव तस्यागमकत्वात्, अन्यथाऽनुपपत्तिवैकल्यस्य तत्र तन्मूलत्वात्। कः पुनः शब्दगतत्वेनैव चाक्षुपत्वादिकं हेतुमभिदधत् अनिभिहितस्यासिद्धितोद्भावनाऽनुपपत्तेरिति चेत् ? 'सर्वं सर्वत्र' इति ब्रुवन् साङ्ख्य एवेति ब्रूमः। न च तस्य शब्दानित्यत्वमनभिप्रेतम्; आविर्भावादिरूपेण तदभ्युपगमात्। असिद्धत्वञ्चैतस्य तत्राप्रतिपत्तेः। नन्वप्रतिपन्नं सिद्धं नाम अतिप्रसङ्गात्। ततः स्थितम् -'असिद्ध' इत्यादि। हेत्वाभासत्वमन्यथानुपपत्तिवैकल्यात्। तस्य चैकविधत्वात् तदाभासानामप्येकविधत्वमेव प्राप्नोति, बहुविधत्वञ्चेष्यते तत्कथमिति चेत् ? अत्राह-

**अन्यथासम्भवाभावभेदात् स बहुधा स्मृतः।** इति।

अन्यथासम्भवाभावः अन्यथाऽनुपपन्नत्वस्याभावः तस्य भेदो नानात्वं तस्मात् स हेत्वाभासो बहुधा बहुप्रकारः स्मृतो मत इति। कैः कृत्वा स बहुधेत्याह-

**विरुद्धासिद्धसन्दिग्धैरकिञ्चित्करविस्तरैः ॥१९७॥** इति।

---

१- भरतम- आ०, ब०, प०। २ अविनाभावाभावः। ३ नान्तरीयकत्वे। ४ पक्षधर्मत्वाभावात्। ५ "यदा च ■ एव कालो धर्मी तत्रैव च साध्यानुमानं चन्द्रोदयश्च तत्सम्बन्धीति कथमपक्षधर्मत्वम्।"-प्र० वा० स्ववृ० पृ० ११। ६ "कालादिधर्मिकल्पनायामतिप्रसङ्गः" -प्र० मी० पृ० १०४। 'यदि पुनराकाशं कालो वा धर्मी तस्य उदेष्यच्छकटवत्त्वं साध्यं कृत्तिकोदय साधनं पक्षधर्म एवेति मतम्; तदा धरित्रीधर्मिणि महोदध्याधाराग्निमत्त्वं साध्यं महानसधूमवत्त्वं साधनं पक्षधर्मोऽस्तु, तथा च महानसधूमो महोदधौ अग्निं गमयेदिति न कश्चिदपक्षधर्मो हेतुः स्यात्।" -प्रमाणपरी० पृ० ७१। अक० टि० पृ० १७५। ७ शब्दादिनि -ता०।

व्याख्यातं प्रागेवेदम् । तत्र विरुद्धो नाम साध्यासम्भव एव भावी । स च द्वेधा विपक्षव्यापी तदेकदेशवृत्तिश्चेति । तत्र तद्व्यापी निरन्वयविनाशसाधनः सत्त्वकृतकत्वादिः, तेन परिणामस्यैव तद्विपक्षस्य साधनात्, सर्वत्र च परिणामिनि भावात् । तदेकदेशवृत्तिः प्रयत्नानन्तरीयकत्वश्रावणत्वादिः, तस्य [1]तत्साधनस्यापि विद्युदादौ परिणामिन्यप्यभावात् । तथा साध्ये सत्यसति च यस्यासिद्धिरसौ असिद्धो नाम । [2]स तु अनेकधा चायम्–अज्ञातसन्दिग्धस्वरूपाश्रयप्रतिज्ञार्थैकदेशासिद्धविकल्पात् । तत्राज्ञातासिद्धः सर्वोऽप्येकान्तवादिपरिकल्पितो हेतुनिवहः, तत्परिज्ञानस्य "परोक्ष [ ज्ञान ] विषय" इत्यादिना[3] "विमुखज्ञानसंवेद:" इत्यादिना[4] च प्रतिक्षेपात् । सन्दिग्धासिद्धो यथेह निकुञ्जे मयूरः केकायितादिति । तत्र हि यदा स्वरूप एव सन्देहः किमयं मयूरस्यैव स्वरः आहोस्वित् मनुष्यस्येति ? तदाश्रये वा किमस्मान्निकुञ्जात् केकायितापात आहोस्विदन्यत इति तदा भवत्येव सन्दिग्धासिद्धत्वमस्य ।

स्वरूपासिद्धो यथा–"सहोपलम्भनियमादभेदो नीलतद्धियोः"[5] [ ]

इत्यत्र[6] यदि युगपदुपलम्भनियमो हेत्वर्थः; सोऽसिद्ध एव विपर्यदर्शनेऽपि सन्तानान्तरगतस्य तज्ज्ञानस्य कुतश्चित्तत्प्रतिपत्तावपि तद्विषयविशेषस्य अनवगतेरिति प्रथमप्रस्तावे निरूपितत्वात् । अथैकोपलम्भनियमः; सोऽपि तादृश एव । न ह्येकस्य ज्ञानस्यैवोपलम्भो बहिरर्थस्यापि सद्भावात् । क पुनरयं बहिरर्थो नाम यस्योपलम्भात् एकोपलम्भस्यासिद्धि: ? नीलधवलादिरिति चेत्; न तन्मात्रेण तत्त्वमपि तु ज्ञानादर्थान्तरत्वे [7]तद्वेद्यत्वे च, तन्मात्रस्य ज्ञानत्वेऽप्यविरोधात् । न च नीलादेरन्यज्ज्ञानं पश्यामो यतोऽर्थान्तरत्वं तद्वेद्यत्वं वा तस्य भवेत् । अव्यतिरेके तु न तस्य बहिरर्थत्वं सुखादिवत् ज्ञानत्वस्यैवोपपत्तेः । अथ नीलमहं पश्यामीति प्रतीतेः कथमर्थान्तरस्य ज्ञानस्याभावः अहंबुद्धिवेद्यस्य [8]तत्त्वादिति ? तदपि न युक्तम्, कर्तृकर्मक्रियारूपस्यापि विभागस्याविभागरूपे नीलादावेव कल्पितरूपत्वात्, शिलापुत्रस्य शरीरमित्यादिवत् अतात्त्विकत्वात् । न हि तत्त्वतोऽहम्प्रत्ययस्य तत्र व्यापारः । व्यापारे वा तत्रापि तद्वेद्ये व्यापारान्तरेण भवितव्यं तत्राप्यपरेणेत्यनवस्थानं भवेत् । व्यापारमव्यापार [9]एव स प्रत्येति चेत्; नीलादि किन्न तथा प्रत्येति ? प्रत्येतु को दोष इति चेत्; सर्वं तर्हि प्रतीयात् अविशेषात् । न चाहमित्यपि शरीरादन्यः, स्थूलोऽहमिति तत्सामानाधिकरण्येन प्रतीतेरन्यथाऽसम्भवात् । शरीरस्य च ग्राहकत्वे ग्राह्यमपि तदेवेति सिद्धं नीलादितज्ज्ञानयोरनर्थान्तरत्वमिति कथं तस्य बहिरर्थत्वमिति चेत् ? उच्यते–तदेव तदर्थान्तरं ज्ञानं यस्यायं भवद्विचारो व्यापारः । सोऽपि नोऽस्मदादीनामन्यतमस्यैवेति चेत्; न; तस्य स्वरूपादन्यत्राऽप्रवृत्तेः । न हि तत् नीलादिकमशेषमविषयीकुर्वत् तद्व्यतिरिक्तज्ञानाभावप्रतिपत्तौ

१ अनित्यत्वसाधनस्यापि । २ 'स तु' एते पदे व्यर्थे । त्वनेक– ता० । ३ न्यायवि० श्लो० १।११ । ४ न्यायवि० श्लो० २।१९ । ५ "धर्म्यत्र नीलाकारतद्धियौ तयोरभिन्नत्वं साध्यधर्मः यथोक्तः सहोपलम्भो हेतुः । ईदृश एव आचार्यीये प्रयोगे हेत्वर्थोऽभिप्रेतः ।" –तत्त्वसं० पं० पृ० ५६७ । प्र० वा० ३।३८७ । ६ –यसन्द– प० । ७ एतल्लोप– आ०,ब०,प० । ८ –मत्तज्ञा– आ०, ब०, प० । ९ –यत्वस्य आ०,ब०,प० । १० ज्ञानत्वादिति । ११ एव प्र– आ०, ब०, प० ।

समर्थम्, व्यतिरिक्तभावप्रतिपत्तेर्व्यतिरेचयितव्यवस्तुप्रतिपत्तिनान्तरीयकत्वात्। अथ तदेव नीलादिकं यथास्वमात्मनि ज्ञानान्तराभावमवैति तत्किं तदर्थेन व्यतिरिक्तज्ञानेनेति चेत्? न; विना तेन तदेवेत्यादेरपि दुरवबोधत्वात्। न ह्येकेन तस्य सर्वस्याऽनवगमे युक्तमिदं तदेवेत्यादिकम्, एकज्ञानव्यापारतयैवास्य प्रतीतेः। ततोऽस्त्येव ज्ञानमर्थान्तरं नीलादेः। कथं पुनस्तेनाप्यव्यापारेण तस्य ग्रहणम्? सव्यापारत्वेऽनवस्थानस्य प्रतिपादनादिति चेत्; न, स्वत एव तस्य व्यापारत्वेन व्यापारान्तरकल्पनावैफल्यात्। स्वतोऽपि सर्वग्रहणव्यापारमेव तत् कस्मान्न भवतीति चेत्? नीलमपि स्वतो नित्यं व्यापि च कस्मान्न भवति? स्वहेतोरेव नियतकालदेशतयोत्पत्तेरिति चेत्; न; अन्यस्यापि तत एव नियततद्व्यापारत्वेनोत्पत्तेरविशेषात्। यत्पुनरुक्तं मस्तकस्फोटविज्ञानप्रकरणे–

"अदृष्टं पश्यतीत्येतत् सुतरामतिदुर्घटम्।
दृष्टं च पश्यतीत्येतत् व्यर्थकत्वात् सुदुर्घटम्॥" [ ] इति।

तदपि न युक्तम्; अदृष्टस्यैव पावकादेरनुमितस्य पुनर्दर्शनात्। तदपि दृष्टमेव दृष्टस्यैव तत्रानुमानस्यापि प्रवृत्तेरिति चेत; न, दर्शनाभावे दृष्टत्वस्यासम्भवात्। दर्शनभावे व्यर्थतैव अनुमानस्य सन्निहिततद्रूपत्वादिति निवेदितमेव तत्पूर्वं सविस्तरमिति नातीव निर्बध्यते[1]। कुतश्च दृष्टत्वं नीलादेर्यतः परेण तद्दर्शनं व्यर्थमुच्यते? स्वत एवेति चेत्; न; परस्य तद्विषयस्य दर्शितत्वात्। सतोऽपि परस्य कथं तद्विषयत्वं तत्र व्यापाराभावात्? न हि समसमयस्य तत्प्रतिभासस्य तदायत्तत्वमुपपन्नम्, अन्यथा दीपप्रतिभासोऽपि तुल्यकालतदन्तरायत्तः प्राप्नुयात्। तन्नेदं समञ्जसमुपकल्पितम्। अभिहितं चेदं तत्रैव प्रकरणे–

"समानकालयोरेव कार्यकारणता यदि।
भवेदेवं यदि भवेद्व्यापार इह कस्यचित्॥
प्रदीपयोरपि भवेत् ग्राह्यग्राहकता तथा।
घटयोरपि तेनेदमसमञ्जसवृत्तिकम्॥" [ ]

इति चेत्; अहो भवान् अश्वारूढोऽपि अश्वं न पश्यति, यतोऽनेन विचारेण नीलतज्ज्ञानद्वयं पश्यन्नपि परतस्तत्प्रतिपत्तिं प्रतिषेधति। न हि विचारस्यातद्विषयत्वे तेन तत्र ग्राहकभावस्यान्यस्य वा निराकरणमुपपन्नम् अप्रतिपन्ने भूतले कलशनिषेधवत्। ततो यथा स्वहेतुतस्तथोत्पत्तेर्विचारस्य तद्विषयत्वं तद्भावनिषेधविषयत्वं वा समसमयस्यापि तथा दर्शनस्यापि नीलादिगोचरत्वमुररीकर्तव्यं तथाप्रतीतेः। न प्रदीपादिभिरतिप्रसङ्गापादनं तत्र तत्प्रतीतेरभावात्। ततोऽस्ति बाह्यस्याप्युपलम्भ इत्यसिद्धिरेवैकोपलम्भस्य हेत्वर्थस्य।

तथा पृथगनुपलम्भस्यापि। न हि तत्र किञ्चित्प्रमाणम् अप्रतिबन्धात्। न हि तत्र तस्य तादात्म्यम्; तद्वद्रूपत्वापत्तेः। तस्यापि पुनःप्रमाणान्तरेण तदात्मना ग्रहणेऽनवस्थापत्तेः। नापि तस्मात्

१ निर्बध्यते आ०, ब०, प०। २ –पवदर्शनात् प०।

उत्पत्ति, अवस्तुन्येव तस्याहेतुत्वात्। न च प्रतिबन्धान्तरम्। अप्रतिबद्धस्य च न तद्विषयत्वमतिप्रसङ्गादिति।

आश्रयासिद्धो यथा भावमात्रानुषङ्गी विनाशो भावाना निर्हेतुकत्वादिति। निरन्वयो ह्यत्र भावप्रध्वंसो धर्मी निर्दिष्ट चासिद्ध एव। अन्यथा किमनेन हेतुना तस्यैवातोऽपि साधनात्? तत्कथमसिद्धावस्य सिद्धि सिद्ध एव धर्मिणि तद्धर्मसिद्धेरुपपत्ते। असिद्धिश्चास्य सान्वयस्यैव विनाशस्य प्रतीतेः, यथा बाल्यादेर्यौवनादौ। न हि तत्रान्वयो नास्ति, 'स एवायम्'[1] इत्यपरिस्खलितात् प्रत्ययात्। हेतुफलभावादेवाय नान्वयादिति चेत्; न, तन्निमित्तत्वेऽतिप्रसङ्गस्याभिहितत्वात्। भवतु तर्हि सान्वयनिरन्वयविशेषविवक्षारहित तदुभयसाधारण विनाशमात्र धर्मी सिद्धत्वादिति चेत्, न; विशेषद्वयस्य असम्भवात्। न हि निरन्वयोऽपि विनाश कचिदवगतिपथप्रस्थायी सान्वयस्यैव प्रतीते, तत्कथ तयो किञ्चित् सामान्य नाम यस्य हेतु प्रत्याश्रयत्वमुपकल्प्येत? तदेवाह—

**सर्वथा नास्ति सामान्य परिणामविनाशयोः।**
**यो हेतोराश्रय [अनिष्टेरिष्टः स्वात्मा विशेषतः]॥१९८॥ इति।**

व्यक्तमेतत्। भवतु तर्हि परिणामात्मैव विनाशो धर्मीति चेत्, आह—अनिष्टेरिति। न हि परिणाम सौगतस्येष्टो यतस्तस्य भावमात्रानुषङ्गित्व साध्यते। न च तत्साधनमुपपन्न जैन प्रति विवादाभावात्। कस्तर्हि सौगतस्येष्ट? इत्याह—'इष्ट. स्वात्मा विशेषत.' इति। विशेषेण हि निरनुगमलक्षणेन सौगतस्येष्टो वस्तुस्वभावो न परिणामेन। स च प्रमाणाभावादसिद्ध इति कथमस्याश्रयासिद्धत्व न भवतीति मन्यते? निरशवस्तुवादिन सत्त्वादि सर्वोऽपि प्रतिज्ञार्थैकदेशासिद्ध। तद्यथा अनित्य शब्द सत्त्वात् कृतकत्वात् उत्पत्तिमत्त्वाच्चेति। प्रतिज्ञार्थो हि[2] अत्र धर्मिसाध्यधर्मसमुदाय। तदेकदेश पुन शब्दोऽनित्यत्व च, तत्र यथा अनित्यत्वस्य न हेतुत्व साध्यत्वेनासिद्धत्वात् तथा शब्दस्यापि। अत एव शब्दत्वादेस्तत्स्वभावस्य परैस्तत्त्वमनभिप्रेत तद्व सत्त्वादेरपि भवेत्, शब्दस्वभावस्य सत्त्वादिनानाधर्मस्याभावात्, अन्यथा निष्कलनिखिलवस्तुप्रतिज्ञाव्यापत्ते। वस्तुरूप एव तत्र न विद्यत एव नानाधर्मो व्यावृत्तिरूपस्तु विद्यत एव व्यावर्त्यभेदेन तद्भेदस्य प्रतिष्ठिते, "यावन्ति पररूपाणि तावन्त्यस्तन्निवृत्तय।" इति [ ][3] वचनादिति चेत्, न, तद्भेदस्याप्येकस्वभावनिबन्धनस्य कार्यभेदवदसम्भवात् अनेकस्वभावस्य च शब्दे वस्तुन्यभावात्। भाव एव व्यावृत्तिरूपम्येति चेत्, न, तन्निबन्धनस्यापि पुनस्तद्रूपानेकस्वभावस्य कल्पनायामनवस्थापत्ते। सत्यमेतत्, केवल विकल्पा एवाविचारितरम्या व्यावृत्तिभेदेन तद्भेदमुपकल्पयन्तीति चेत्, न तर्हि तत कस्यचित् सिद्धिरवस्तुसस्पर्शित्वात्, अन्यथा तत साध्यस्यैव सिद्धेरनर्थक लिङ्गसमर्थनम्। तत्र कल्पनासिद्धस्य सिद्धत्वमित्यसिद्ध एव सत्त्वादि। एतदेवाह—

**साध्यसाधनभावो न शब्दे नाशित्वसत्त्वयोः। इति।**

---

१ स एवायमिति प्रत्यय। २ अर्थध– आ०, ब०, प०। ३ 'तस्मादस्य भावस्ययावन्ति पररूपाणि तावन्त्यस्तदपेक्षया व्यावृत्तय।' –प्र० वा० स्वपृ० पृ० ११९।

न हि शब्दे धर्मिणि नाशित्वस्य साध्यभावः साधनभावो वा सत्त्वस्य उपलक्षणमिदं तेन कृतकत्वादेश्च, तस्य वस्तुतः कल्पनया चावस्तुत्वात्। अत्रैव प्रतिवस्तूपमया दृष्टान्तमाचष्टे–

**अनलः पावकोऽग्नित्वात् [इत्यनेकान्तविद्विषाम् ] ॥१९९॥** इति।

यथैव हि अनले धर्मिणि पावकत्वाग्नित्वयोर्न साध्यसाधनभावः शब्दभेदेऽपि वस्तुभेदाभावात् तथा प्रकृतयोरपि। न हि तत्रापि वस्तुभेदो विकल्पभेदस्यैव भावात्। केषां पुनस्तत्र तयोर्न तद्भावः ? इत्याह–'इत्यनेकान्तविद्विषाम्' इति। विकल्पबुद्धौ अनेकान्तं ये विद्विषन्ति तेषामिति। न हि अत्राभिलाप्येतराकारस्यानेकान्तस्याभावे विकल्पो नाम, यतः विकल्पितादपि हेतुसिद्धिर्भवेत्। भवतु कल्पितस्तत्र अनेकान्त इति चेत्; न; अनवस्थादोषस्योद्घोषितत्वात्। भवतः कथं तत्र तयोस्तद्भाव इति चेत् ? आह–

**सर्वान्यसदृशः शब्दः सत्त्वादिपरिणामतः।**
**सर्वान्यार्थासमः शब्दः शब्दादिपरिणामतः ॥२००॥** इति।

साधारणेतरस्वभावो हि शब्दः स्याद्वादिनां प्रतीतिबलात्। प्रतीयते हि तत्र साधारणस्वभावत्वं सत्त्वज्ञेयत्वादिना परिणामेन, तद्रूपेण तस्य सर्वापरपदार्थसादृश्यात्, असाधारणरूपत्वं च शब्दत्वश्रावणत्वादिना, तस्य तदन्यत्र सर्वत्राभावात्। अतः शब्दानित्यत्वसाधनेन तेषां सत्त्वादेः प्रतिज्ञार्थैकदेशासिद्धत्वम्। शब्दादसाधारणपरिणामात्मनस्तस्य तद्विपरीतत्वेन न निरंशवादिनामिति भावः। शब्दस्य परिणामत्वे परिणामिना भवितव्यं तस्य तद्धर्मत्वात्। न चासौ कश्चिदपि अस्तीति चेत्; न; पुद्गलपरमाणूनां भावात्। एतदेवाह–

**अणूनां श्रुतयोग्यत्वातिशयादानहानयः।**
**शब्दोत्पत्तिविनाशाः [तत्साध्यसाधनसंस्थितिः ] ॥२०१॥** इति।

शब्दस्य हि उत्पत्तिर्नाम पुद्गलपरमाणूनां ताल्वादिभिः श्रावणज्ञानविषयभावयोग्यस्कन्धरूपातिशयोपादानमेव, विनाशोऽपि कुतश्चिदतिशयपरिहाणिरेव, नासतः सर्वथा प्रादुर्भावो नापि नीरूपः प्रध्वंसः प्रमाणाभावात्। ततो युक्तं परिणामत्वं शब्दस्य पुद्गलपर्यायत्वात्। न चेदमसिद्धमवबोद्धव्यं तृतीये निरूपयिष्यमाणत्वात्। बहुवचनं तु उभयत्रापि व्यक्तिबहुत्वापेक्षं प्रतिपत्तव्यम्। ततः किम् ? इत्याह–तत्साध्यसाधनसंस्थितिः। तत् तस्मात् साधारणेतरस्वभावसद्भावात् साध्यसाधनानामनित्यत्वसत्त्वादीनां संस्थितिरस्तीति शेषः। एवमन्येऽप्यसिद्धा हेत्वाभासा अभ्यूहितव्याः।

सम्प्रत्यनैकान्तिकस्तदाभास उच्यते। कथं पुनर्विरुद्धेत्यादौ कारिकायामनुक्तस्तदाभासः कथ्यते तदुक्तस्यैव विवरणीयत्वादिति चेत् ? न; सन्दिग्धशब्देन तस्यैव अभिधानात्। सन्दिग्धसाध्यविपयत्वेन तत्र तच्छब्दोपपत्तेः। स च यथा तनुकरणभुवनादिकं बुद्धिमद्धेतुकम् अचेतनोपादानत्वात् सन्निवेशविशिष्टत्वाच्च घटादिवदिति।

स्यान्मतम्–सत एव साध्ये तद्विपक्षे च भावादनैकान्तिकत्वम्। न च तन्वादौ तादृशम-

---

१ न्यायवि० श्लो० २।१९७।

चेतनोपादानत्वादिकमस्ति यस्य घटादौ साध्यानुगमः प्रतिपन्नः । यदि स्यात् जीर्णप्रासादादिवत् तत्रापि प्रतिपत्तुः स्वयमेव कृतबुद्धिः स्यादिति व्यर्थैवेयमनुमानकॢप्तिर्भवेत् । ततोऽसिद्ध एव तत्रायं हेतुवर्ग इति कथमनैकान्तिकत्वम् ? तदुक्तम्–

"सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत् ।
सन्निवेशादि तद्युक्तं तस्माद्यदनुमीयते ॥" [ प्र० वा० १।१३ ] इति,

तदयुक्तम्, प्रत्यवमर्शेन तत्रापि तत्सिद्धेः । अस्ति हि घटादाविव तन्वादावपि प्रत्यवमर्शः– 'अयमचेतनोपादानः, अयमचेतनोपादानः' इत्यादि, तत्कथं जीवति तस्मिन्नत्र तदसिद्धत्वकल्पनम् ? व्यपदेश एवायं केवलं न प्रत्यवमर्श इति चेत्; न, कृतकत्वादावपि एवं प्रसङ्गात् । शक्यं हि वक्तुं घटः कृतकः शब्दोऽपि कृतक इति व्यपदेशमात्रमेवेदं नात्रापि सामान्यप्रत्यवमर्शः कश्चित् । तथा चात्रासावपि असिद्ध एवेति न कश्चिदपि हेतुः सिद्धः स्यात् । ततो यथा कृतकत्वादौ प्रत्यवमर्श एव सामान्यविषयः, तद्वदचेतनोपादानत्वादावपि इति सिद्ध एवायम् केवलं साध्याभावेऽपि भावात् अनैकान्तिकः । तथा हि–बुद्धिमतो हेतोर्यच्छरीरं तद्यदि तेनैव बुद्धिमता बुद्धिमद्धेतुकं तन्निर्माणेऽपि तस्य शरीरान्तरं पुनस्तन्निर्माणेऽपीति न क्वचिदवस्थितिस्तच्छरीराणाम् । अन्येन बुद्धिमता तद्धेतुकं तदित्यपि न युक्तम्, तच्छरीरस्यापि तदन्येन तद्धेतुकत्वकल्पनायामव्यवस्थापत्तेः । अथाशरीरबुद्धिमद्धेतुकमेव तच्छरीरं तदयममसङ्ग, तन्न, तन्वादावपि तद्धेतुकस्यैव प्रसङ्गात् । अस्तु तर्हि तेन अतद्धेतुकमेवेति चेत्, सिद्धं तर्हि तेन व्यभिचारित्वम् अचेतनोपादानत्वादेः असिद्धे बुद्धिमति तच्छरीरस्याप्यसिद्धत्वात् कथं तेन व्यभिचारकल्पनम् ? सिद्धे सिद्धमेव तदिति चेत्, तथापि किं तत्कल्पनेन सिद्धस्य तेनैव व्यवस्थानानुपपत्तेरिति चेत्, सत्यं यदि प्रमाणसिद्धेन तेन तत्कल्पनम्, न चैवं पराङ्गीकारमात्रसिद्धेनैव तदुपपादनात्, तदङ्गीकारस्य अप्रमाणत्वात् कथं तद्विषयेण व्यभिचार इति चेत् ? कथं तादृशेनैव क्षणक्षयादिनाऽनुपलम्भस्य पक्षधर्मत्वं यतो 'नास्ति क्षणक्षयादिरनुपलम्भात् व्योमकुसुमादिवत्' इत्यनुमानमुज्जृम्भेत ? तदभावो न भावेषु साध्यते किन्तु तद्विरुद्ध-मति ( द्ध नि ) त्यत्वमात्रं कौटस्थ्यमेवेति चेत् अप्रतिपन्ने तस्मिन् कथं तत्र तद्विरुद्धत्वप्रतिपत्तिः ? पराङ्गीकारादप्रतिपन्नव्यभिचारबुद्धेरिति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम् । तस्य नास्त्येव शरीरमिति केचित् । तैरपि तत्र निदर्शनं वक्तव्यं यतोऽशरीरस्यैव तस्य तन्वादिकर्तृत्वं प्रतीयेत इति । उच्यत एव यादृशस्तेन अशरीरेणापि स्वशरीरविक्षेपादिकरणादिति चेत्, अबुद्धिमताऽपि तर्हि तेन तत्करणाद् बुद्धिमत्त्वमपि तस्य न स्यात् । कुविन्दादेः बुद्धिमत एव दर्शनात् तस्यापि बुद्धिमत्त्वे सशरीरत्वमपि स्यादविशेषात् । किमर्थं वा बुद्धिमतोऽपि तस्य तन्वादिकरणम् ? क्रीडार्थमिति चेत्, न, क्षीणक्लेशस्य क्रीडाऽसम्भवात् । क्लेशोऽपि विद्यत एव तस्य रागादिरिति चेत्,

---

१– स्तोपि तस्य शरीरान्तरं पुनस्तन्निर्माणेऽपीति प० । २ शरीरम् । ३ व्यभिचारकल्पनम् । ४ शरीरेण । ५ पराङ्गीकारमात्रसिद्धेनैव । ६ क्षणिकत्वाभाव । ७ क्षणिकत्वे । ८ –द्व्यप्रतिपन्ने व्य– आ०, ब०, प० ।

कथं तर्हि तस्य[1] दुस्तरासारसंसारघोरासातसागरोदरनिपातनिमित्ततां प्रतिपद्यमान एव तत्प्रयुक्त: क्रीडायां प्रवर्तेत ? बालप्रज्ञामलीमसमानसस्यैव तदुपपत्तेः । प्राकृतस्यैव[2] सोऽपि तन्निमित्त न विश्वलोकातिशयिशक्त्यधिष्ठानस्य महेश्वरस्य, न हि यथा पन्नगविषं मानुषाय[3] प्रतपत्येवं मयूरायापीति चेत्, न; तत्क्लेशोऽपि क्लेशात्वस्याविशेषात्। तथापि प्राकृतक्लेशस्यैव तन्निमित्तत्वं न तस्येति कल्पनायाम् अचेतनोपादानत्वाद्यविशेषेऽपि कलशमुशलादिकमेव बुद्धिमद्धेतुकं न तन्वादीति किन्न विभागकल्पनं यतो व्यभिचारदोषो दुष्परिहारो न प्राप्नुयात् ? किञ्च,

मुक्तानामपि तन्वादि कुर्वन् क्रीडति किन्न सः ।
प्रभावः स्यात् परं चैवमशक्यार्थोपकल्पनात् ॥१५५५॥
कर्मणां तन्निमित्तानामभावान्नेति चेदसत् ।
तेषामपि तदायत्तप्रादुर्भावतया स्थितेः ॥१५५६॥
अचिन्त्यां बिभ्रतः शक्तिं किं वा तेषामपेक्षया ।
सहायापेक्षिणी शक्तिरचिन्त्या वा कथं भवेत् ? ॥१५५७॥
तन्न क्रीडापरत्वेन युक्ता तन्वादिनिर्मितिः ।
प्राणिनामुपभोगाय तत्कृतिर्यदि कल्प्यते ॥१५५८॥
उपभोगोऽपि कर्तव्यः प्रीतिरेव तनूभृताम् ।
यद्यनुग्रहबुद्ध्याऽसौ तत्क्रियायां प्रवर्तते ॥१५५९॥
तथा च दुःखजन्मैषां न तत्कार्यतया स्थितम् ।
व्यभिचारेण तद्धेतून् योजयत्यपरंश्वर्यम् ॥१५६०॥
अस्ति निग्रहबोधोऽपि यदि तस्य मनीषिणः ।
द्रोहः कर्तैः कृतो येन स तत्र परिकल्प्यताम् ॥१५६१॥
द्रुह्यते सोऽपि चेदन्यैः तत्त्वैरप्रतिघशक्तिभिः ।
तत्प्रभावप्रवादाय त्वं प्रयच्छ जलाञ्जलिम् ॥१५६२॥
अद्रोहकृत्सु तत्रायं निग्रहस्तेषु युज्यते ।
कर्तुं बुद्धिमता दैवैरिदमन्यत्र भाषितम् ॥१५६३॥

"तन्वादिकरणात् सत्त्वान् भवक्लेशेन योजयेत् ।
बुद्धिमानीश्वरः कस्मात् स्वयं द्रोहमकुर्वतः ॥" [ सिद्धिवि० परि०७ ] इति।

निग्रहोऽपि तेषामुपकारायैव, फलोपभोगेन कर्मपरिक्षये निर्वाणपुरप्राप्तेर्भावादिति चेत्; अपरिपक्वानामेव तर्हि तेषां परिक्षयः कर्तव्यः स्यात् । एवं हि तेन जगदनुगृहीतं भवति, प्रभुर्य-

---

१ तस्य स दु- आ०, ब०, प० । २ साधारणजनस्यैव । ३ प्रभवत्येवं आ०, ब०, प० ।
४-श्चयः आ०, ब०, प० । ५-प्रभावाय आ०, ब०, प० । ६-र्पा क्षयः क परि- आ०, ब०, प० ।
७ जनानुगृहीतं आ०, ब० प० ।

देवेच्छति तत्करोतीति चानुसृतं भवति । यदि वा, कृत्वा परिशोधनात् कर्मणामकरणमेवोपपन्नम् "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" [ ] इति न्यायात् । तत्कर्मणामविद्यामलीमसाः प्राणिन एव कर्तारो न महेश्वरः तु तेषां फलमेवोचितं परिकल्पयतीति चेत्; तन्वादीनामपि त एव किन्न कर्तारो यतस्तेषामीश्वरकर्तृत्वमुच्यते । प्राणिनामज्ञत्वादिति चेत्; न; कर्मस्वपि समानत्वात् । तथा हि–यथा ते तन्वाद्युपादानादिकं न जानन्ति तथा कर्मवैचित्र्यनिमित्तमपि, अन्यथा दुष्कर्मकरणासम्भवात् । मा भूवंस्तेऽपि तेषां कर्तार इति चेत्; आगतस्तर्हि तैरपि हेतूनां व्यभिचारदोषोऽप्रतिविधानः । तन्नोपकारायापि निग्रहकरणमुपपन्नम् ।

प्रयोजननिरपेक्षमेव तस्य जगत्करणं स्वाभाव्यादिति चेत्; कथं तर्हि तत्कस्यचिदनुग्रहाय अपरस्योपघाताय च ? महेश्वरस्यैवं नाभिसन्धिर्जगतस्स्वभावादेव तद्विभाग इति चेत्; अनुबद्धस्तर्हि तेन व्यभिचारदोष इत्युपपन्नमनैकान्तिकत्वमचेतनोपादानत्वादीनाम् ।

तथा तत्पुत्रत्वादीनामपि । [1]'स श्यामः तत्पुत्रत्वादितरतत्पुत्रवत् । पक्वा एते तण्डुला. एकस्थाल्यन्तर्गतत्वात् उपभुक्ततण्डुलवत्' इत्यादयोऽपि तद्विपक्षे बाधकवैधुर्येण अन्यथाऽनुपपत्तिवैकल्यादेव अगमकत्वपदवीमासादयन्ति न पुनस्त्रैरूप्यवैकल्यात् । अस्ति ह्यत्र पक्षधर्मत्वं देशान्तरगते देवदत्तादौ तत्पुत्रत्वस्य भावात् । सपक्षे सत्त्वञ्च, पार्श्ववर्तिनि पुरुषे श्यामे तदुपलम्भात् । विपक्षव्यतिरेकश्च तत्पुत्रत्वस्य अश्यामस्याप्रतिपत्ते, अश्यामपुत्रस्य चातत्पुत्रत्वात् । नन्वत्र साध्यप्रतिबन्धो नास्ति–[2]न तत्पुत्रत्वं श्यामत्वस्य कार्यम्; तत. प्रागेव भावात्, विशिष्टाहारदेशादिबलेन पश्चादेव हि ततः श्यामत्वं भवति तत्कथं तद्धेतुकत्वं तत्पुत्रत्वस्य ? कथं वा तत्स्वभावत्वमिति प्रतिबन्धवैकल्यादेव अगमकत्वमत्र नान्यथाऽनुपपत्तिविरहादिति चेत्; कथं पुनस्त्रैरूप्ये सति तद्वैकल्यं कृतकत्वादावपि अविश्वासप्रसङ्गात् ? तदेवात्र नास्ति विपक्षव्यावृत्तेरभावात् अश्यामेऽपि बाल्यावस्थायां तत्पुत्रत्वस्योपलम्भादिति चेत्, शिंशपात्वेऽपि तन्न स्यात्, अङ्कुरदशायामवृक्षत्वेऽपि तद्भावेन विपक्षव्यावृत्तेरभावात् । वृक्षपरिणामयोग्यतयाङ्कुरस्यापि वृक्षत्वे श्यामपरिणामशक्तितया बालकस्यापि किन्न श्यामत्वं यतो विपक्षव्यतिरेको न भवेत् ? ततस्तन्मात्रानुबन्धित्वात् साध्यधर्मस्योपपन्नमस्य स्वभावहेतुत्वं शिंशपात्वादिवदिति न प्रतिबन्धवैकल्यादगमकत्वम्, अन्यथाऽनुपपत्तिविरहादेव तदुपपत्ते ।

सम्प्रति चिरन्तनाचार्यानुस्मरणेन पुण्यातिशयावाप्तिमभिसन्धानः श्रीमत्पात्रकेसरिवचनेन हेत्वाभासानामुपसंहारं दर्शयन्नाह–

**अन्यथाऽनुपपन्नत्वरहिता ये त्रिलक्षणाः ।**
**अकिञ्चित्कारकान् सर्वान् तान् वयं सङ्गिरामहे ॥२०२॥** इति ।

अन्यथाऽनुपपत्तिविरहादेव हि तत्पुत्रत्वादयोऽन्येऽपि हेत्वाभासा. साध्यप्रत्यायनवैकल्यात् अकिञ्चित्करा न त्रैरूप्यविरहात् । तदविरहस्योक्तरीत्या समर्थनादिति वयं स्याद्वादन्यायवेदिनः प्रतिपाद्यामहे ।

---

१ पक्वा– आ०, ब०, प० । २ नहि त– आ०, ब०, प० ।

तदेवमुपदर्श्य हेतुतदाभासान् सम्प्रति दूषणाभासं दर्शयन्नाह–

**तत्र मिथ्योत्तरं जातिः [ यथाऽनेकान्तविद्विषाम् ] । इति ।**

प्रमाणोपपन्ने साध्ये धर्मे यस्मिन् मिथ्योत्तरं भूतदोषस्योद्भावयितुमशक्यत्वेनासद्दूषणोद्भावनं सा जातिरिति । तत्केषामित्याह–'यथाऽनेकान्तविद्विषाम्' इति । यथेत्युदाहरणप्रदर्शने । अनेकान्तविद्विषः सौगतादयस्तेषामिति । कीदृशं तत् ? इत्याह–

**दध्युष्ट्रादेरभेदत्वप्रसङ्गादेकचोदनम् ॥२०३॥** इति ।

दधि चोष्ट्रश्चादिर्यस्य करभगुडादेस्तस्य एकचोदनमेकशब्दाभिधेयत्वम् । कुत एतत् ? अभेदत्वस्य दध्युष्ट्रादेरेकत्वस्य प्रसङ्गात् । प्रसज्यते हि अनेकान्तवादिनो यथा क्षीरविकारस्य दधित्वं तथा करभत्वमपि, अन्यथा 'सर्वो भावस्तदतत्स्वभावः' इति सिद्धान्तव्याघाते । तथा च दधिशब्देनैव क्षीरविकारस्येवोष्ट्रस्यापि तदेकतामापन्नस्याभिधानात् दधि खादेति चोदितेन करभेऽपि तद्भक्षणाय प्रवर्तितव्यम् । तदुक्तम्–"सर्वस्योभयरूपत्वे" [ प्र० वा० ३। १८१ ] इत्यादि । विद्यत एव दध्नि कश्चिद्विशेषो यतो न करभस्य तस्येति चेत्, तर्हि स एव दधीति वक्तव्यं तत एव तत्फलस्य तृप्त्यादेर्भावात्, ▪ च न करभादौ अस्तीति कथं तदतत्स्वभावस्य भावाना यत एकान्तवाद एव प्रशस्तो न भवेत् ? इदमप्यभिहितम्–

"अथास्त्यतिशयः कश्चित् येन भेदेन वर्तते ।

स एव दधि सोऽन्यत्र नास्तीत्यनुभयं वरम् ।।" [ प्र० वा० ३। १८२ ] इति ।

कथं पुनरस्यासदुत्तरत्वं यतो जातित्वमिति चेत्? प्रमाणबलावलम्बिन्यनेकान्ते प्रवृत्ते । प्रतिपादितं हि तदवलम्बितत्वमनेकान्तस्य प्रत्यक्षत,सत्त्वादिसाधनसमुद्भवादाभिनिबोधिकादपि तस्यैव प्रतिपत्ते सविस्तर समर्थितत्वात् । न च प्रमाणपरिशोधिते वस्तुनि दूषणसम्भव । तथा हि–सदपि [1]सदसदात्मके वस्तुनि दूषणमुद्भाव्यमानं न तावत् सामान्यविशेषात्मके भवितुमर्हति, दध्याद्यन्वयिन सामान्यस्यैकस्याभावात् । सदृशपरिणामो हि सामान्यम्, तच्च दध्यादिपर्यवसितमेव न किञ्चिदपि सत्त्वमन्यत्रा समन्वितमस्ति नीलतज्ज्ञानयोः सारूप्यवत् । तत्कथं दध्युष्ट्रयोरेकत्वं यत एकचोदनायामन्यत्रापि प्रवृत्तिः । नापि द्रव्यपर्यायात्मके, दधिद्रव्यस्य स्तब्धस्तब्धतरादिभि स्वपर्यायैरेव अभेदात् नोष्ट्रपर्यायै । एवमेव निर्बाधायास्तत्प्रतीतेरनुभवात्, अन्यथा विकल्पज्ञानस्यापि स्वगतेनेव तदन्तरगतेनाप्यभिलाप्याकारेणाभेदापत्ते ▪ भार्याविकल्पो मातृविकल्पाद्भिद्येत, तथा च तद्विकल्पप्रयुक्तस्य भार्यायामिव मातर्यपि प्रवृत्तिर्भवेत् । तत स्याद्वादिमतमनवबुद्ध्य तत्रेदमुच्यमानं धर्मकीर्तेर्विदूषकत्वमावेदयति–"पूर्वपक्षमविज्ञाय दूषकोऽपि विदूषकः ।" [ ] इति प्रसिद्धे । अस्तु वा दधिकरभयो सामान्यपर्यायाभेद चोदनाया दधिवत् करभेऽपि प्रवृत्ति ,न च दधिचोदनायास्तत्परत्व क्षीरविकारविषयतया विशेषपरताया एव तत्रोपलम्भात्, तद्विकाराच्च करभरूपस्य विशेषस्यार्थान्तरत्वात् । एतदेव परप्रसिद्धेन निदर्शनेन दर्शयन्नाह–

---

१ "सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् । असदेव विपर्यासात् "–आप्तमी० श्लो० १५ ।

▪ तदात्म–आ०, ब०, प० । ३ विकल्पान्तर ।

**सुगतोऽपि मृगो जातो मृगोऽपि सुगतः स्मृतः ।**
**तथाऽपि सुगतो वन्द्यो मृगः खाद्यो यथेष्यते ॥२०४॥**
**तथा वस्तुबलादेव भेदाभेदव्यवस्थितेः ।**
**चोदितो दधि खादेति किमुष्ट्रमभिधावति ॥२०५॥** इति ।

सुगतोऽपि न केवलमन्यो जातः पूर्वस्मिन् भवे मृगः मृगोऽपि न केवलं मनुष्य एव सुगतः स्मृतोऽनुमतः तदुत्तरभवे शाक्यैः । ततः किम् ? तथाऽपि मृगसुगतभवयो उपादानोपादेयतयैक-सन्तानत्वेऽपि सुगतो वन्द्यो न मृगो मृगस्तु खाद्यो न सुगत इति यथा येन अवस्थाभेदप्रकारेण इष्यते सौगतैः, तथा वस्तुबलादेव वस्तुशक्तित एव भेदाभेदयोरसाङ्कर्येण व्यवस्थिते चोदितो दधि खादेति कस्मात् उष्ट्रमभिधावति सत्येव तत्साङ्कर्ये तदुपपत्ते ।

सम्प्रति जात्यन्तरं दर्शयन्नाह–

**अत्रैवोभयपक्षोक्तदोषारेका [ अनवस्थितेः ] ।** इति ।

अत्रैव भेदाभेदव्यवस्थितावेव उभयपक्षः नित्यैकान्तपक्षः क्षणिकैकान्तपक्षश्च तत्र य उक्तः स्याद्वादिना दोषः "अर्थक्रिया न युज्येत नित्यक्षणिकपक्षयोः" [ लघी० श्लो० ८ ] इत्यादिः तस्य आरेका संशीतिर्जातिरिति वक्ष्यमाणेन सम्बन्ध । कुत इत्याह–अनवस्थितेः तदारेकायाः प्रमाणबाधितत्वेन स्थित्यभावात् । अन्यथा सर्वस्यापि प्रमाणस्य निर्विषयतापत्तेः । पुनरपि तदन्तरमाह–

**अनन्वयादिदोषोक्तेः प्रपञ्चो वा [ अनया दिशा ] इति ॥२०६॥**

वा इति समुच्चये अनन्वय सर्वानेकान्तसाधने सपक्षवैकल्यम् आदिशब्दात् अपक्षधर्मत्वं सत्त्वादिसाधने हेतुसाध्ये व्यावृत्त्यभावश्च स एव दोषस्तदुक्तेः प्रपञ्चः प्रबन्धो जातिरिति पूर्ववत्सम्बन्ध । कयोपपत्त्येत्याह–'अनया दिशा' इति । अनया पूर्वप्रतिपादितया दिशा अन्वयाद्यभावेऽपि गमक-त्वोपपत्तिवर्त्मनेति ।

ननु यथाऽन्यापि साधर्म्यादिसमा जातिर्नैयायिकादिना कथ्यते तथा त्वया किन्नेति चेत् ? अत्राह–

**मिथ्योत्तराणामानन्त्याच्छास्त्रे वा विस्तरोक्तितः ।**
**साधर्म्यादिसमत्वेन जातिर्नेह प्रतन्यते ॥२०७॥** इति ।

न पुनरिह शास्त्रे साधर्म्यवैधर्म्यादिसमा तथाऽपि जातिर्विस्तरेण निरूप्यते । कस्मा-दिति चेत् ? मिथ्योत्तराणां पुरुषाभिप्रायनिबन्धनत्वेनेयत्तापरिच्छेदाभावात् त्रिलक्षणकदर्थने वा शास्त्रे विस्तरेण श्रीपात्रकेसरिस्वामिना प्रतिपादनादित्यलमभिनिवेशेन ।

तदेवमनुमानतदाभासभेदे निरूपिते यथा जयेतरव्यवस्था तथा दर्शयन्नाह–

**प्रकृताशेषतत्त्वार्थप्रकाशपटुवादिनः ।**
**विब्रुवाणोऽब्रुवाणो वा विपरीतो निगृह्यते ॥२०८॥** इति ।

---

१ -त्वाससासा- आ०, ब०, प० । २ -साध्याव्यावृत्त्यभा- आ०, ब०, प० । -साध्या-व्यावृत्त्या भा- ता० । ३ न्यायसू० ५।१।१-३७ ।

**प्रकृतो** विधिमुखेन निषेधमुखेन वा साधयितव्यतया प्रक्रान्तो यः अशेषः समग्रः साध्यसाधनरूपः, **तस्यार्थो** न सौगतवत् कल्पितस्वभावस्तस्य प्रकाशः सभ्यचेतसि समर्पणं तत्र पटुवादिनः सकाशात् यो विपरीतः तत्प्रकाशपाटवविकलः स **निगृह्यते** पराजयं प्राप्नोति । तथाहि–यदा जैनो वादी सम्यक्हेतुप्रयोगेण स्वपक्षं प्रकाशयति–परिणामी भावोऽर्थक्रियाकारित्वात् । न हि नित्यैकान्ते तत्कारित्वं क्रमयौगपद्यविरोधात्, क्षणिकैकान्ते सदसत्समयविकल्पायोगाच्च । न च तदुभयविकल्पव्यतिरिक्तं प्रकारान्तरं सम्भवति यतस्तदेकान्ते तत्कारित्वावस्थितिस्तस्य बहिरन्तश्चाप्रतिपत्तेरिति तदा सौगतादिः प्रतिवादी पराजीयते । यदा वा जैन एव प्रतिवादी प्रकृतमेव हेतुं परप्रयुक्तं विरुद्धमुद्भाव्य ततः स्वपक्षमवद्योतयति तत्रापि परस्यैव पराजयावाप्तिस्तद्विपरीतत्वेनेति प्रतिपत्तव्यम् । अथ [1]यदा सौगतादिरेव वादी प्रतिवादी वा स्वपक्षे परपक्षे च साधनं वा किञ्चित् समीचीनमनवलोकयन् छलादिना प्रत्यवतिष्ठते सभाभीरुतया तूष्णीं वा तिष्ठति तदा तदनुद्भावने जैनस्यैव निग्रह इति चेत्; न; प्रकृतार्थप्रत्यायने सति तदनुद्भावनस्यादोषत्वात् । यदि च तत्प्रत्ययस्यानादिना जयः परस्य पराजयश्च तदनुद्भावनेन जैनस्य किमर्थास्तर्हि पक्षप्रतिपक्षपरिग्रहादयो विनापि तैस्तत्सम्भवात् । तदुक्तम्–

"वादिनो गुणदोषाभ्यां स्यातां जयपराजयौ ।
यदि साध्याप्रसिद्धौ च व्यपार्थाः साधनादयः ॥" [ ] इति ।

किञ्च, अनुद्भावितमे[2]वास्य तदनुद्भावनं यदि ।
निग्रहाय छलाद्येवं किन्न स्यात् प्रतिवादिनः ? ॥१५६४॥
उद्भावितं चेत् केनास्य कल्प्यमुद्भावनं त्वया ।
सभ्यैश्चेत् किन्न ते कुर्युश्छलाद्युद्भावनं तथा ॥१५६५॥
तद्वादिनैव चेत् सोऽयं स्वकौशलप्रकाशनम् ।
कुर्वन् कथं जयी नाम न परस्यास्ति सम्भवः ॥१५६६॥
तदुद्भावनतस्तस्य गुणतश्चेज्जयस्तदा ।
पक्षविक्षेपणादोषादजयोऽपि सकृद्भवेत् ॥१५६७॥
न च तौ युगपद्युक्तौ जन्ममृत्यू [3]इव क्वचित् ।
यथा वा तमआलोकौ यथा वा स्थितिविभ्रमौ ॥१५६८॥

ततो न परिक्षीणपक्षस्य तदुद्भावनं गुण इति पराजय एव तस्योपपन्न इति सूक्तमिदं **विब्रुवाणो** विसदृशं दूषणमभिदधानः अब्रुवाणो वा तूष्णीमासीनो वा विपरीत एव निगृह्यत इति । तदनेनासिद्धानैकान्तिकहेत्वाभासोद्भावनमपि न पक्षसिद्धिविकलस्य गुण इति प्रतिपादितं प्रतिपत्तव्यम्, अङ्गीकृतनिर्वहणस्यैव सर्वथा गुणत्वोपपत्तेः, तद्भावाभावाभ्यामेव जयपराजययोः सम्भवात् ।

किमर्थं तर्हि तदाभासोद्भावनमिति चेत् ? परस्यानुपायपक्षतां प्रतिपाद्य पुनः स्वपक्षव्यवस्थापनार्थम् । अत एवोक्तम्–

---

१ यथा आ०, ब०, प०। २–वितमेवा– आ०, ब०, प०। ३ इह आ०, ब०, प०।

"विरुद्धं हेतुमुद्भाव्य वादिनं जयतीतरः ।
आभासान्तरमुद्भाव्य पक्षसिद्धिमपेक्षते" ॥ [ ] इति ।

तस्मादेकस्य प्रकृतसिद्धेरेव परस्य निग्रहो न प्रकारान्तरेण । तदेवाह–

**असाधनाङ्गवचनमदोषोद्भावनं द्वयोः ।
न युक्तं निग्रहस्थानमर्थापरिसमाप्तितः ॥२०९॥** इति ।

सिद्धिः सिषाधयिषितवस्तुनिर्णीतिः साधनं तस्याङ्गं निर्वर्तकं प्रत्यक्षकं लिङ्गं वा तस्यावचनमनुच्चारणं वादिनो निग्रहस्थानं वादमभ्युपगम्य तूष्णीम्भवतो गत्यन्तराभावादिति । एतत् **न युक्तम्** । कस्मात् ? अर्थस्य वादप्रयोजनस्य साध्यनिर्णयलक्षणस्य **अपरिसमाप्तितः** तदा हि तस्य निग्रहस्थानमुपपन्नं यदा प्रतिवादिनः पक्षनिर्णयफलपरिसमाप्तिः, तदा तस्य जयाद्वादिनः पराजयोपपत्तेः, पराजयस्य जयसव्यपेक्षत्वात् । न च विना तत्परिसमाप्तेस्तस्य जयः तदर्थत्वात्तद्व्यापारस्य । न च वादिनस्तूष्णींभावादेव तस्य तत्परिसमाप्तिः, प्रमाणकल्पनवैफल्यात् । न तत्परिसमाप्तेः तस्य जयः किन्तु वादिदोषस्योद्भावनादिति चेत्; उक्तमत्र पक्षपरिग्रहादेर्वैफल्यमिति । कथं वादिनस्तूष्णीम्भावो दोषः, तावता तत्पक्षस्यापरिक्षयात् । शक्तिपरिक्षयादिति चेत्; न, शक्तस्यापि कुतश्चिज्जिह्वाकीलनादेस्तत्सम्भवात् । तस्मात् स्वपक्षं व्यवस्थाप्य जयवाञ्छया प्रवृत्तो यदि तत्र व्यवस्थापयति मा भूज्जय एव तस्य, कस्मात् पुनः पराजयः ? स्वपक्षासाधनादिति चेत्; न; साधनस्य जयनिमित्तत्वेन जयस्यैव तदभावे भावात् । तदभाव एव पराजय इति चेत्, न; तस्य प्रतिवादिन्यपि पक्षसिद्धिविकलत्वेन भावात् । न च द्वयोः पराजयः कस्यचिज्जयाभावे तदनुपपत्तेः ।

यदप्यत्र व्याख्यानम्–"प्रत्यक्षाविषयस्यार्थस्य सिद्धेरङ्गं त्रिविधं लिङ्गं तस्य वचनं समर्थनम्, तच्च यत्कृतकं तदनित्यं दृष्टं यथा घटादिकमिति साध्यसाधनयोः साकल्येन विपक्षे बाधकसामर्थ्यात् व्याप्त्युपदर्शनम्, अप्रदर्शितव्याप्तिकस्यानुक्तकल्पत्वेनागमकत्वात् । पक्षधर्मप्रदर्शनं वा, कृतकश्च शब्द इति, तदनुपदर्शनेऽपि गमकत्वासम्भवात् चाक्षुषत्वादिवत् । तस्यावचनमसाधनाङ्गवचनम् । तदुद्भाव्यमानं वादिनो निग्रहस्थानम् ।" [ ] इति; तदपि समीचीनम्; तदुद्भावनमात्रेण स्वपरपक्षसिद्धिप्रतिक्षेपयोरभावात्, तन्निबन्धनत्वाच्च जयेतरव्यवस्थायाः । यदि च, व्याप्तेरवचनमसाधनाङ्गवचनम्; कथं तदपरिज्ञात (त) तत्प्रतिबन्धं प्रति तदवचनं न दोषायेत्यभ्युपगमः ? यत इदं शोभेत–

---

१ "अकलङ्कोप्यभ्यधात्–विरुद्धं हेतुमुद्भाव्य .."–रत्नाकरा० पृ० ११४१ । उद्धृतोऽयम्–त० श्लो० पृ० २८० । सन्मति० टी० पृ० ७५९ । प्रमाणमी० पृ० ६५ । २ जयाभाव । ३ "साधनाङ्गस्यासमर्थनाद्वा । त्रिविधमेव हि लिङ्गमप्रत्यक्षस्य सिद्धेरङ्गम्–स्वभावः कार्यमनुपलम्भश्च । तस्य समर्थनं साध्येन व्याप्तिं प्रसाध्य धर्मिणि भावसाधनम् । यथा यत्सत्कृतकं वा तत्सर्वमनित्यं यथा घटादि, स-कृतको वा शब्द इति.. तस्यासमर्थनं साधनाङ्गावचनं तद्वादिनः पराजयस्थानमारब्धार्थाप्रसाधनात् । (पृ० १२) साधनं त्रिरूपहेतुवचनसमुदायः तस्याङ्गं पक्षधर्मादिवचनम्..."–वादन्या० पृ० ६१ । ४–ज्ञानम् आ०, ब० ।

"तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः ।
ख्याप्येते विदुषां वाच्यो हेतुरेव हि केवलः ॥"[ प्र०वा० २।३६ ] इति ।

अपरिज्ञातप्रतिबन्धं प्रति तद्वचनमसाधनाङ्गवचनमेवेति चेत्; तस्य तर्हि न प्रतिवादिनोद्भावनम् आत्मीयापरिज्ञानप्रकटनदोषात् । अथ सम्बन्धाभावमेवासौ तदानीमुद्भावयति; तर्हि साधनव्यभिचारदोषादेव वादिनो निग्रहो न व्याप्त्यनुपदर्शनादिति न किञ्चिदेतत् ।

तथा नापक्षधर्मवचनमपि असाधनाङ्गवचनम्; तद्वचनस्यैव तत्त्वात् । न हि सर्वं कृतकमनित्यमिति प्रतिपद्यमानः शब्दस्यापि कृतकस्यानित्यत्वं न प्रतिपद्यते सर्वानित्यताप्रतिपत्तेरेवाभावप्रसङ्गात्, तत्किं तद्वचनेन विनापि तेन साध्यसिद्धेः उपनयादिवचनवत् । परं प्रत्यर्थादापन्नस्यापि तस्य वचने परिज्ञातप्रतिबन्धं प्रति व्याप्तिवचनमपि स्यादिति असङ्गतमेतत्–"विदुषां वाच्यो हेतुरेव हि केवलः ।" [ प्र०वा० ३।२६ ] इति । ततो नेदं व्याख्यानमुपपन्नम् ।

इदं तर्हि स्यात्–"साध्यते विवादापन्नोऽर्थोऽनेनेति साधनं लिङ्गं तस्याङ्गं पक्षधर्मत्वादिकं तस्यावचनं वादिनो निग्रहस्थानम् । रूपस्यैव अवचने पक्षसिद्धेरनुपपत्तेः ।" [ ] इति चेत्; नेदमप्युपपन्नम्; प्रतिवादिनः परपक्षासिद्धिमात्रेण स्वपक्षसिद्धेरभावात् जयानुपपत्तेः ।

इदं तर्हि व्याख्यानं[2] शोभनम्–"यत्साधनाङ्गं न भवति प्रतिज्ञोपनयादि तदसाधनाङ्गं तस्य वचनं साधनवाक्ये तदङ्गत्वेनोपपादनम् । यथा अनित्यः शब्दः, कृतकत्वात्, यत्कृतकं तदनित्यं दृष्टं यथा घटादि, कृतकश्च शब्दस्तस्मादनित्यः इति । तदिदं वादिनो निग्रहाधिकरणमनर्थकाभिधानात् । अनर्थकं हि प्रतिज्ञादिकं विनाऽपि तेन 'यत्कृतकं तदनित्यं यथा घटादि कृतकश्च शब्दः' इत्येतावतैव शब्दानित्यत्वस्य प्रतीतेः, प्रतीतार्थस्याप्यभिधानेऽतिप्रसङ्गः प्रतिज्ञादिभिः पञ्चावयवस्येवान्वयव्यतिरेकाभ्यां षडवयवस्य संशयजिज्ञासाप्रयोजनशक्यप्राप्तिसंशयव्युदासैर्दशावयवस्यापि साधनवाक्यस्याभिधानोपनिपातात् ।" [ ] इति चेत्; अत्रोच्यते–

कृतकत्वं समर्थं चेच्छब्दानित्यत्वसाधने ।
प्रतिज्ञादिवचस्तस्य निग्रहाय कथं भवेत् ॥१५६९॥
प्रतीतार्थत्वदोषाच्चेत् पक्षसिद्धिमपीडयत् ।
[3]प्रतीतार्थत्वमात्रेण दोषस्तत्कथमुच्यताम् ॥१५७०॥
अन्यथा त्वप्रयोगेऽपि स्वार्थिकस्तद्धितस्तथा ।
यत्तत्पदं च दोषः स्यात् प्रतीतार्थतया स्थितेः ॥१५७१॥

---

१ तुलना–वादन्या० पृ० ६० । २ "तस्येन साधनस्य यन्नाङ्गं प्रतिज्ञोपनयनिगमनादि तस्यासाधनाङ्गस्य साधनवाक्ये उपादानं वादिनो निग्रहस्थानं व्यर्थाभिधानात्"–वादन्या० पृ० ६१ । ३ तत्प्रतीतार्थमा– आ०, ब०, प० । ४ त्वप्रयो–आ०, ब०, प० । ५ 'कृतकत्वात्' इत्यत्र ।

कृतं सर्वमनित्यं हि दृष्टं यद्वद्घटादिकम् ।
कृतश्च शब्द इत्येतन्मात्रात् साध्यस्य निर्णयात् ॥१५७२॥
संक्षेपत्र्यं ततस्तेन विनाऽपि वचनं त्वया ।
अन्यथा निग्रहादुक्तमिदं सिद्धिविनिश्चये ॥१५७३॥
"सर्वनाम्ना विना वाक्यं तद्धितेन विना पदम् ।
संक्षेपव्यं समासार्थनिग्रहस्थानभोरुणा[1] ॥१५७४॥" इति
तावन्मात्रेण तज्ज्ञप्तावशक्तं पुरुषं प्रति ।
सार्थत्वात् स्वार्थिकाद्युक्तिर्न दोष इति चेत्तथा ॥१५७५॥
प्रतिज्ञादिवचः कस्मादद्दोषो न प्रकल्प्यते ।
यतस्तद्वादिनो वादे निग्रहायोपदर्श्यताम् ॥१५७६॥
निग्रहश्चेत् प्रतीतार्थात् प्रकृतानुपयोगतः ।
शब्दालङ्कारदोषोऽपि निग्रहः किन्न कल्प्यते ॥१५७७॥
इयत्तानियमो येन निग्रहेष्वभिधीयताम् ।
न हि शब्दादिदोषाणां गणना काऽपि विद्यते ॥१५७८॥

केन वा तस्य तद्वचनान्निग्रहः कर्तव्यः ? प्राश्निकैरिति चेत्; साधु तेषां प्राश्निकत्वं यत् स्वपक्षसाधनसमर्थसाधनप्रयोगोदात्तगुणाधिष्ठानमप्यनल्पदोषेण निगृह्णन्तीति ? जयमपि ते तस्य तद्गुणेन कल्पयन्तीति चेत्; उक्तमत्र युगपत्तयोरेकत्रासम्भवादिति । ततस्तैस्तस्य गुणभूयसो जय एवापादयितव्यो न निग्रह, निरर्थकवचनदोषस्य सतोऽप्यसत्कल्पत्वात्, "कणिका विषस्य न दूषिका शीतशिवाम्बुराशौ" [ बृहत्स्व० श्लो० ५८ ] इति न्यायात् । तन्न तैस्तस्य निग्रहणम् । नापि प्रतिवादिना; गुणवतस्तेनापि निगृहीतुमशक्यत्वात् । ततो न स्वपक्षसिद्धिसम्पन्नस्य तद्वचनं निग्रहस्थानम् । तत्सिद्धिविकलस्येति चेत्; नेदानीमधिकवचनेन किञ्चित् तद्वैकल्यस्य निग्रहत्वात् । उभयमपि निग्रह एव "द्विर्बद्धं सुबद्धम्" [ ] इति न्यायात् चेत्; न; हेतुद्वयेऽप्यदोषापत्तेः । एकस्यैव साध्यप्रत्यायनसामर्थ्ये किं द्वितीयेन हेतुनेति चेत् ? न; दोषेणापि किं द्वितीयेन ? एकस्मादेव वादिनो निग्रहनिष्पत्तेरिति साम्यात् । तदुक्तम्–

"वादिनोऽनेकहेतूक्तौ निगृहीतिः किलेष्यते ।
नानेकदूषणस्योक्तौ वैतण्डिकविनिग्रहः ॥" [सिद्धिवि० परि० ५] इति ।

तदनेन छलादिकमपि, स्वार्थसिद्धिसम्पन्नस्य तद्विपरीतस्य चोक्तन्यायेन निग्रहाऽनुपपत्तेः । यत्पुनरेतत्[4]–"अन्वयवचनसामर्थ्यात् व्यतिरेकस्य तद्वचनसामर्थ्याच्चान्वयस्य प्रति-

१ सिद्धिवि० परि० ५ । २ न विद्यते अल्पो यस्मादसौ अनल्पः इति यावत् । ३ द्विबद्ध सुबद्ध प० । ४ "अन्वयव्यतिरेकवचनयोर्वा साधर्म्यवति वैधर्म्यवति च साधनप्रयोग एकस्यैवाभिधानेन सिद्धेर्भावात् द्वितीयस्यासामर्थ्यमिति तस्याप्यसाधनाङ्गस्याभिधानं निग्रहस्थानं व्यर्थाभिधानादेव ।"–वादन्या० पृ० ६५ ।

.तौ पुनः स्वशब्देन तद्वचनं प्रतीतार्थत्वेन निग्रहस्थानम्" [ ]इति[1]; तदपि न युक्तम्; त्रिरभिहितस्याप्यप्रत्युच्चारणे प्रतिवादिनो निग्रहप्रसङ्गात् परोक्तापरिज्ञानस्यापि दोषत्वात् । अथ .रोपरोधार्थो न महतां जल्पारम्भोऽपि तु परप्रतिपादनाय तत्र किं त्रिरेवेति नियमेन तावदभिधातव्यं यावत्परः साध्यं प्रत्यायितो भवति न पुनः त्रिरुच्चारितस्याप्रत्युच्चारणेन निगृहणीय इति चेत्; न; अस्यान्वयादिवचनेऽपि तुल्यत्वात् । शक्यं हि वक्तुं सामर्थ्यप्रापितमर्थं प्रतिपत्तुमशक्नुवन्तं प्रति तत्प्रतिपिपादयिषया तत्परं वचनमुच्चारयन्नपि वादी न निग्रहेण योजयितव्यो वचनवैफल्याभावात् ।

परमप्यत्र व्याख्यानम्–"संशयादिरहितत्वेन प्रतिपाद्यं[2] साधनम् कर्मरधे भावे प्रत्ययविधानात्, तदङ्गं स्वरूपं यस्य तत्साधनाङ्गं विवादापन्नं साध्यमेव, तस्मादन्यदसाधनाङ्गं तस्य वचनम् । तद्यथा आत्मनि विवादे नास्त्यात्मेति वयं बौद्धाः । के बौद्धाः ? ये बुद्धशासनमुपगताः । को बुद्धः ? यस्य शासने भदन्ताश्वघोषः प्रव्रजितः । कः पुनर्भदन्ताश्वघोषः ? यस्य राष्ट्रपालं नाम नाटकम् । कीदृशं च तन्नाटकमिति प्रसङ्गमारचय्य नान्द्यन्ते ततः प्रविशति सूत्रधार इत्यारभ्य नाटकग्रन्थं पठति नृत्यति गायति च, अपरस्य व्यामोहमनुवादे शक्तिव्याघातं च कर्तुमिति, तदपि वादिनो निग्रहस्थानमप्रस्तुताभिधानात्" [ ] इति; तदपि न प्रेक्षावतां प्रमोदमापादयति, तादृशात् प्रसङ्गपरम्पराकरणात् कथाविच्छेदस्यैवोपपत्तेः न पराजयस्य, तस्य प्रतिवादिविजयस्यापेक्षस्य तदभावेऽनुपपत्तेः । न हि तस्य तत्करणोद्भावनादेव जयः, तावता पक्षसिद्धेरभावात् । एवमन्यदपि तत्करणमनिग्रहस्थानत्वेन प्रतिपत्तव्यम् । तत्रासाधनाङ्गवचनं वस्तुनिर्णयं कुतश्चित् कुर्वाणस्य निग्रहाधिकरणमुपपन्नं जयस्यैवोपपत्तेः । नापि तदुद्भावयतोऽपि प्रतिवादिनो जयः; पक्षसिद्धिविकलतया पराजयस्यैवोपपत्तेः । एतदेव दर्शयति–

वादी पराजितो युक्तो वस्तुतत्त्वे व्यवस्थितः ।
तत्र दोषं ब्रुवाणो वा विपर्यस्तः कथं जयेत् ॥२१०॥ इति ।

वस्तुनः शब्दादेस्तत्त्वमनित्यादिकं तत्रैव व्यवस्थितः प्रमाणबलेन कृतोऽर्थो वादी कथं नैव पराजितः पराजयसम्बद्धो युक्तः,

वस्तुतत्त्वे स्थितस्यापि यदि बाधा कथाचन ।
पराजयो जयो लोके हन्त कस्योपकल्प्यताम् ॥१५७०॥

तथा तत्र वादिनि दोषं प्रतिज्ञावचनादिकं ब्रुवाणश्च न केवलमब्रुवाणो विपर्यस्तः पक्षसिद्धिविकलः प्रतिवादी कथं जयेत् नैव जयेदिति । अयमन्तरश्लोकः ।

यत्पुनरिदम्–अदोषोद्भावनमिति। तत्र व्याख्यानम्[6]–"वादिना साधने प्रयुक्ते स्वयमभ्युपगतोत्तरपक्ष एव प्रतिवादी यदा तत्र दोषान्नोद्भावयति तदा तदनुद्भावनं तस्य निग्रह-

---

१ द्रष्टव्यम्– वादन्या० पृ० ६६ । २–त्र तत्रासाधनाङ्गवचन धर्मरथभा–आ०, ब०, प० ।
३ यस्य स्वराष्ट्रपालन ना– आ०, ब० यस्य सुराष्ट्रपालनं ना–प० । ४–पारम्पर–आ०, ब०, प० । ५–दिनो द्वि–आ०, ब०, प० । ६ द्रष्टव्यम्– वादन्या० पृ० ६९ ।

स्थानं प्रतिपत्तव्यम् । दोषाश्च अवयवन्यूनत्वं प्रतिज्ञावचनादिकमसिद्धत्वमनैकान्तिकत्वं विरुद्धत्वं दृष्टान्तदोषाश्चाष्टादश वक्ष्यमाणाः" [ ] इति; तदप्यनुपपन्नमेव; यदि वादिनः सम्यक्साधनप्रयोगः, सति तस्मिन् दोषाणामसत्त्वेनानुद्भावनसम्भवात् प्रकृतार्थपरिसमाप्त्या तस्य जयस्य प्रतिवादिनः पराजयस्याप्युपपत्तेः । दोषवत्यपि साधने तस्य पराजय एव सतोऽपि दोषस्यापरिज्ञानेनानुद्भावनोपपत्तेरिति चेत्; न; तस्य वादिन्यपि भावात्, कथमन्यथा दोषवत्साधनप्रयोगः, जानत एव दोषं तदसम्भवात् ? वादोपक्रमेण प्रवृत्तो यदि स्वपक्षे सम्यक् [1]हेतुमपश्यन् तदन्यदपि न प्रयुञ्जीत स्यादैकान्तिकः पराजयः । तत्प्रयोगे तु यदि प्रतिवादी दोषमुद्भावयेत् भवति तस्य जयः, अन्यथा तु तदनुद्भावनात् तस्यैव पराजय इति निश्चितपराजयपरिहाराय सम्भवत्येव जानतोऽपि तस्य तत्प्रयोग इति चेत्; किं पुनस्तस्योद्भावित एव दोषः पराजयाय ? तथा चेत्, प्रतिवादिनोऽपि तदनुद्भावनमुद्भावितमेव तदर्थम् । तथा चेत्; कस्तस्योद्भावकः ? वादीवेति चेत्; न; तदसम्भवात् । न हि मया दोषवत्साधनं प्रयुक्तं त्वया तु न परिज्ञातमिति तस्य सचेतसो वचनं सम्भवति स्वयमेवात्मनो निग्रहार्पणात् । परोपदर्शितादेव दोषात् तस्य निग्रहो न स्वयं प्रकाशितादिति चेत्; न; चौर्यादेः स्वयं दर्शितादपि तदुपलब्धेः । भवतु प्राश्निका एव तस्योद्भावका इति चेत्; किं ते वादिदोषं न जानन्ति ? तथा चेत्; न प्राश्निकत्वम्, सिद्धान्तद्वयवेदिनां तत्त्वात् । जानन्तोऽपि प्रतिवादिनः तदुद्भावनेनैव तं निगृह्णन्ति न स्वयमुद्भावनेनाप्रत्यनीकत्वादिति चेत्; न; एवमनवस्थाप्रसङ्गात् । शक्यं हि वक्तुं यथा ते वादिनः सत्यपि दोषे प्रतिवादिनस्तदुद्भावनमपेक्षन्ते तथा तत्रापि वादिनः[2] परिहारं पुनस्तत्रापि परस्य तदुद्भावनं तावदेवं यावदनवधिरत्नमक्रम इति कथं तदुद्भावनापेक्षयापि ते वादिनः पराजयमारचयेयुः ? कथं वा स्वयमप्रत्यनीकत्वेन वादिनो दोषमनुद्भावयन्त प्रतिवादिन एव तमुद्भावयेयुः ? अनुद्भावितादेव दोषात्तस्य निग्रहो (हे) वादिनोऽपि स्यात् अविशेषादिति निरवसर एव प्रतिवादिनो निग्रहः । तन्नासम्यक्साधनवादिनि दोषानुद्भावनात् प्रतिवादिनो निग्रहोपपत्तिः । कः पुनरसौ दृष्टान्तो यद्दोषानुद्भावनं प्रतिवादिनो निग्रहं सङ्कल्पयन्ति सौगता इति चेत् ? अत्राह–

**सम्बन्धो यत्र निर्ज्ञातः साध्यसाधनधर्मयोः ।**
**स दृष्टान्तस्तदाभासाः साध्यादिविकलादयः ॥२११॥** इति ।

यत्र यस्मिन् साध्यसाधनधर्मयोरविनाभावस्य सम्बन्धस्य प्रतिपत्तिः स दृष्टान्तः । स च द्वेधा साधर्म्येण वैधर्म्येण च । तत्र साधर्म्येण कृतकत्वादनित्यत्वे साध्ये घटः, तत्रान्वयमुखेन तयोः सम्बन्धप्रतिपत्तेः । वैधर्म्येणाकाशं तत्रापि व्यतिरेकद्वारेण तयोस्तत्परिज्ञानात् । तद्वत् दृष्टान्तवदाभासन्त इति तदाभासाः ते च साध्यमादिर्यस्य साधनादेस्ते विकला ते चादयो येषां सन्दिग्धसाध्यादीनां ते साध्यादिविकलादयः प्रतिपत्तव्याः । तत्र नित्यः शब्दोऽमूर्तत्वादिति साधने कर्मवदिति साध्यविकलं निदर्शनम् अनित्यत्वात् कर्मणः । परमाणुवदिति साधनविकलं मूर्तत्वात् परमाणूनाम् । घटवदित्युभयविकलम् अनित्यत्वान्मूर्तत्वाच्च घटस्य । 'रागादिमान् सुगतः कृतकत्वात्' इत्यत्र रथ्यापुरुषवदिति

१ हेतु पश्यन्नपि आ०, ब०, प० । २ वादिनः ।

सन्दिग्धता च रथ्यापुरुषे रागादिमत्त्वस्य निश्चेतुमशक्यत्वात्, प्रत्यक्षस्याप्रवृत्ते व्यापारादेश्च रागादिमत्त्वस्यान्यत्रापि सम्भवात्, वीतरागाणामपि सरागवच्चेष्टोपपत्ते । 'मरणधर्माऽयं रागादिमत्त्वात्'[1] इत्यत्र सन्दिग्धसाधन तत्र रागादिमत्त्वाऽनिश्चयस्योक्तत्वात् । अत एव असर्वज्ञोऽयं रागादिमत्त्वादित्यत्र सन्दिग्धोभयम् । रागादिमत्त्वे वक्तृत्वादित्यनन्वयम्, रागादिमत्त्वस्यैव तत्रासिद्धौ तदन्वयस्यासिद्धे । अप्रदर्शितान्वय यथा शब्दोऽनित्य कृतकत्वात् घटादिवदिति । न ह्यत्र 'यद्यत्कृतक तत्तदनित्यम्' इत्यन्वयदर्शनमस्ति । विपरीतान्वय यथा यदनित्य तत्कृतकमिति । तदेव नव साधर्म्येण दृष्टान्ताभासा ।

वैधर्म्येणापि नवैव । तद्यथा नित्य शब्द अमूर्तत्वात्, यन्नित्य न भवति तदमूर्तमपि न भवति परमाणुवदिति साध्याव्यावृत्त परमाणुषु साधनव्यावृत्तावपि साध्यस्य नित्यत्वस्याव्यावृत्तेः । कर्मवदिति साधनाव्यावृत्त तत्र साध्यव्यावृत्तावपि साधनस्य अमूर्तत्वस्यावृत्ते । आकाशवदिति उभयाव्यावृत्तम् अमूर्तत्वनित्यत्वयोरुभयोरप्याकाशादव्यावृत्ते । सन्दिग्धसाध्यव्यतिरेक यथा सुगत सर्वज्ञोऽनुपदेशादिप्रमाणोपपन्नतत्त्ववचनात्, यस्तु न सर्वज्ञो नासौ तद्वचनो यथा वीथीपुरुष इति तत्र सर्वज्ञत्वव्यतिरेकस्यानिश्चयात् परचेतोवृत्तीनामित्थम्भावेन दुरवबोधत्वात् । सन्दिग्धसाधनव्यतिरेक यथा अनित्य शब्द सत्त्वात्, यदनित्य न भवति तत्सदपि न भवति यथा गगनमिति, गगने हि सत्त्वव्यावृत्तिरनुपलम्भात् तस्य च न गमकत्वमदृश्यविषयत्वात् । सन्दिग्धोभयव्यतिरेक यथा ससारी हरिहरादिरविद्यादिमत्त्वात्, यस्तु न संसारी स न तद्वान् यथा बुद्ध इति, बुद्धात् ससारित्वाविद्यादिमत्त्वव्यावृत्ते अनवधारणात् । तस्य च तृतीये प्रस्तावे निरूपणात् । अव्यतिरेक यथा नित्य शब्द अमूर्तत्वात् यन्न नित्य न तदमूर्तं यथा घट इति घटे साध्यनिवृत्तेर्भावेऽपि हेतुव्यतिरेकस्य तत्प्रयुक्तत्वाभावात् कर्मण्यनित्येऽप्यमूर्तत्वभावात्[2] । अप्रदर्शितव्यतिरेक यथा अनित्य शब्द सत्त्वात् वैधर्म्येण आकाशवदिति । विपरीतव्यतिरेक यथा अत्रैव साध्ये यत्सन्न भवति तदनित्यमपि न भवति यथा व्योमेति साधनव्यावृत्त्या साध्यनिवृत्तेरुपदर्शनात् । त इमे पूर्वसूचिता अष्टादशाऽपि दृष्टान्ताभासा । कुत पुनरेषामनुद्भाव(वना)त न निग्रहस्थानमिति चेत् ? अत्राह—

**सर्वत्रैव न दृष्टान्तोऽनन्वयेनापि साधनात् ।**
**अन्यथा सर्वभावानामसिद्धोऽयं क्षणक्षयः ॥ २१२ ।** इति ।

न खलु सर्वत्रापि प्रतिपाद्ये दृष्टान्तेन प्रयोजन विनाऽपि तेन परिज्ञातसम्बन्धस्य हेतुनैव साध्यस्य साधनात् । यथोक्तम्—"तद्भावहेतुभावो हि" [ प्र०वा० ३।२६ ] इत्यादि । तत्कथमनपेक्षितस्य दोषानुद्भावन निग्रहायातिप्रसङ्गादिति भाव । यदि वा, सर्वत्र सर्वस्मिन् हेतौ नैव दृष्टान्तोऽनन्वयेन सपक्षसत्त्वविकलेन अपिशब्दात् असपक्षासत्त्वरहितेनापि[3] साध्यस्य साधनात्, अत्रापि तात्पर्यं यदि हेतुवद् दृष्टान्तोऽपि साध्यसिद्धेरङ्ग तदा[4] भवत्यपि तद्दोषानुद्भावन निग्रहस्थानम् ।

१ रथ्यापुरुषवदिति । २ अनित्यत्व युक्त । ३ सर्वमभिधेय प्रमेयत्वात् इत्यादौ सर्वस्य पक्षत्वेन व्यतिरेकप्रदर्शनाभावात् । ४ भवत्यपि इत्यपि आ०, ब०, प० ।

न चैवमिति । अस्यानभ्युपगमे दूषणमिदम्--'अन्यथा' इत्यादि । अन्यथाऽन्येन सर्वत्र दृष्टान्तान्वेषणप्रकारेण सर्वभावानाम् अयं पराभिमतः क्षणक्षयोऽसिद्धः सिद्धो न भवेत्, तत्र सर्वेषां धर्मित्वेन सपक्षविपक्षयोरभावत्वेन द्विविधस्यापि दृष्टान्तस्याभावात् । तत्र दोषस्यानुद्भावनमिति व्याख्यानमुपपन्नम् ।

तथा, न दोषादन्यस्योद्भावनमित्यपि; दूषणादन्यदपि[1] हि प्रतिज्ञाहान्यादिकमुद्भाव्यमाने साधनवादिनि पक्षसिद्धौ यदि परस्य निग्रहस्थानम्, उपपन्नमेव, तद्वादिनो जयप्राप्त्या तन्निग्रहस्य न्यायादापत्ते । [2]तदसिद्धौ पुनरनुपपन्नम्, पराजयस्य जयसव्यपेक्षत्वेन तदभावे दुरुपपादत्वात् । न तत्सिद्धया तस्य तत्प्राप्तिरपि तु प्रत्यर्थिनो दोषादिति चेत्, स्वदोषात्तर्हि पराजयोऽपीति युगपदुभय प्राप्तम्, तच्चायुक्तं विरोधादित्युभयोरपि साम्यमेव न जय पराजयो वा कस्यचित्, तन्न सौगतोक्त निग्रहस्थानम् ।

नापि नैयायिकपरिकल्पित प्रतिज्ञाहान्यादिकम्, तस्यासद्‌दूषणत्वात् । अन्यथा वादेऽपि किन्न तदुद्भावनं यतो न्यूनाधिकापसिद्धान्तहेत्वाभासपञ्चकमित्यष्टावेव वादे निग्रहस्थानानीति नियमः[3] ? तस्य गुर्वादिभि शिष्टैः सह प्रवृत्तेरिति चेत्, किं पुनस्ते सताऽपि दोषेण न निग्राह्याः ? तथा चेत्, न्यूनादिनाऽपि न निगृह्येरन्नविशेषात् । को वा विशेषोऽयं नान्यस्य शस्त्रेण व्यापादनं मुष्टियुद्धेन वेति । कथं वा गुर्वादीनां शिष्टत्वम् ? मतभेदाभावादिति चेत्, कथ तैर्वादस्तस्य तद्भेद एव सम्भवात् । "प्रतिपक्षपरिग्रहो वादः" [ न्यायसू० १।२।१] इति तल्लक्षणश्रवणात् । अमत्सरित्वादित्यप्ययुक्तम्; तत्परिग्रहे मत्सरस्याप्यवश्यम्भावात् अन्यथा सौगतादेरपि न भवेत् । कस्य वा तदुद्भावनात् निग्रहस्थानम् ? सौगतादेरेवेति चेत्, कुत एतत् ? तत्र तद्धान्यादे सम्भवादिति चेत्, न, गुर्वादिष्वपि तदविशेषात् । तत्र[4] सतोऽपि निवारणबुद्धयैवोद्भावन न निग्रहबुद्धयेति चेत्; इतरत्र कुनस्तद्‌बुद्धया तदुद्भावनम् ? तस्य दस्युत्वादिति चेत्, तदेव कस्मात् ? तत्त्वविघटनादिति चेत्, यदि प्रमाणत, कथ दस्युत्वं तस्य ? कथं वा निग्रह प्रामाणिके अनुग्रहस्यैवोपपत्तेः ? अप्रमाणतश्चेत्, तदिति कुतश्चिच्छक्यनिश्चयम् ? तत एव तस्य निग्रहात् किं प्रतिज्ञाहान्यादिना कर्तव्यम् ? अपि न्यायेन द्वाभ्यामपि तस्य निग्रह इति चेत्, उक्तमत्र-'वादिनोऽनेकहेतूक्तौ' इत्यादि । यदि न शक्यनिश्चयम्; तर्हि तद्विघटनं न प्रमाणत इति रिक्ता वाचो युक्तिरिति । तन्न तद्धान्यादिक निग्रहस्थानमुपपन्नम् ।

छलादिकं तु प्रागेव निषिद्धमिति न सङ्गतमेतत्--"यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" [ न्यायसू० १।२।२ ] इति । कुतो वा निवारणबुद्धयैव वादे तदुद्भावनम् ? गुर्वादिस्तत्त्वाभिनिवेशेनादस्युत्वादिति चेत्, कथ तैर्विवाद ? स्वय तन्मताभ्यनुज्ञानस्यैवोपपत्ते । तदपि

१ वादन्या० पृ०७२ । २ वादिपदासिद्धौ । ३ न्यायभा०१।२।१। ४-ना विनि-आ०,ब०,प० । ५ वादे । ६ इतरत्रत्कुत आ०,ब०,प० ।

विचर्यैव क्रियते न पूर्वमिति चेत्; तदा तर्हि तेषां तदभिनिवेशापरिज्ञानात् दस्युत्वसम्भावनोपपत्तेः निग्रहबुद्ध्याऽपि तदुद्भावनं भवेत्। तथा च न युक्तमिदम्–"प्रमाणतर्कसाधनोपलम्भो वादः" [ न्यायसू० १।२।१ ] इति, निग्रहस्थानसाधनोपालम्भत्वस्यापि सम्भवात्। तत्र यौगस्यापि निग्रहस्थानमुपपन्नम्। किं पुनस्तर्हि तदुपपन्नमिति चेत्? उक्तमेवेदम्–

"स्वपक्षसिद्धिरेकस्य निग्रहोऽन्यस्य वादिनः।" [ ] इति।

क्व पुनरसौ वादो नाम यत्रेदं निग्रहस्थानमित्यत्राह वादलक्षणम्–

**प्रत्यनीकव्यवच्छेदप्रकारेणैकसिद्धये।**

**वचनं साधनादीनां वादः सोऽयं जिगीषतोः ॥२१३॥** इति।

अप्रसिद्धवस्तुनिर्णयनिबन्धनं प्रत्यक्षादिकं साधनं तस्य आदिशब्दात् दूषणतदाभासानामपि यद्वचनं स वादः। स च जिगीषतोः परस्परं जेतुमिच्छतो वादिप्रतिवादिनोः। द्विवचनान्नैकस्य न बहूनामपि। न ह्येकस्य वादः। न हि विप्रतिपन्ने वस्तुनि साधनादेः स्वयमप्रसिद्धस्य वचनम्। न च तत्प्रसिद्धौ विप्रतिपत्तिः विरोधात्। अथ पूर्वं विप्रतिपत्तिः पश्चात् तत्प्रसिद्धिः, तथाऽपि किं वचनेन? प्रसिद्धिरपि तत एव तस्येति चेत्, तस्यापि तर्हि साधनत्वेन तदन्तरादेव प्रसिद्धौ अनवस्थापत्तेः। न कदाचिदपि मौलस्य तस्य वचनं यत एकस्यापि वादो भवेत्। वचनसाधनं विनाऽपि तदन्तरेण प्रसिद्ध्यति न प्रत्यक्षादिसाधनमिति स्वमतानुरागमात्रम्। तन्नैकस्य वादः। नापि बहूनाम्, युगपत्तेषां तद्वचने कलकलमात्रश्रुत्या तदर्थानवधारणप्रसङ्गात्, तच्छ्रुतिमात्रेण कस्यचिदिष्टसिद्धेरयोगादतिप्रसङ्गाच्च। परिपाट्या तद्वचने तु द्वयोरेव तत्पर्यवसानादुपपन्नं द्विवचनं जिगीषतोर्वचनं च,[3] अन्यथा निग्रहाभावप्रसङ्गात्। अस्ति च वादेऽपि न्यूनाऽधिकादेः परैरपि वचनात्। निग्रहोऽपि तत्र अजिगीषायामेवेति चेत्, व्याहतमेतत्-अजिगीषा च निग्रहश्चेति, अन्यथा शिष्यादावपि स्यात्। भवत्विति चेत्, कथं तत्रानुग्रहः? सति निग्रहे तदयोगात्, निग्रहानुग्रहयोः परस्परपरिहारस्थितिरूपत्वात्। तथा च न विद्यागमः कस्यापीति नष्टः शिष्यादिव्यवहारः। ततो विजिगीषाविरहाच्छिष्यादेः सतो दोषान्न निग्रहस्तथा गुर्वादेरपि न भवेत्। अस्ति च, तस्माद्विजिगीषुविषय एव वादोऽपि। जल्पादिवदिति न युक्तमिदम्–"तं गुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात्" [न्यायसू० ४।२।४८] इति, साम्यसूत्रैरेव तस्याभ्युपगमोपपत्तेः। तस्य फलप्रदर्शनार्थं 'प्रत्यनीक' इत्यादि। अत्रैकस्मिन्निति द्रष्टव्यम् तत्रैव साध्यतत्प्रत्यनीकयोर्विरोधोपपत्तेः। न भिन्नधर्मिणि यथा जले शैत्यम् औष्ण्यमनाविनि। तदयमर्थः–एकस्मिन्नभिन्ने धर्मिणि प्रत्यनीकस्य साध्यविरोधिनो नित्यत्वादेर्धर्मस्य व्यवच्छेदप्रकारेणैकस्य तस्मादन्यस्यानित्यत्वादेर्धर्मस्य या सिद्धिर्निर्णीतिः तस्यै तदर्थमिति। एतेन तत्सिद्धेरन्यत् लाभादिकं तत्फलम्। वादिना च द्वयं कर्तव्य

---

१ उद्धृतोऽयम्– अष्टसह० पृ० ८७। प्रमेयक० पृ० ६७१। २–मङ्गात् प–आ०, ब०, प०।
३ उत्तरार्धं सम्बन्ध "–ता० टि०। ४ –व्यवस्था–आ० ब०, प०।

परपक्षप्रतिषेध स्वपक्षविधिश्चेत्येतच्च प्रतिपादित प्रतिपत्तव्यम्। यदि प्रत्यनीकव्यवच्छेद एव परस्य निग्रह कथमुक्तम्–'स्वपक्षसिद्धिरेकस्य निग्रहोऽन्यस्य वादिनः।" [ ] इति चेत्, न, तद्व्यवच्छेदस्य तत्सिद्धे कथञ्चिदनर्थान्तरत्वाभिप्रायेण तदभिधानात्। भेदनयेन तु तद्व्यवच्छेदे एव तस्य निग्रह। सोऽपि न निग्रहो मिथ्याध्यारोपनिषेधस्य निःश्रेयसहेतुत्वेन अनुग्रहरूपत्वात्। ततो लाभाद्यभाव एव निग्रहो वक्तव्य इति चेत्? अत्राह–

**आस्तां तावदलाभादिरयमेव हि निग्रहः।**
**न्यायेन विजिगीषूणां स्वाभिप्रायनिवर्तनम्॥ २१४॥** इति।

लाभस्य ग्रामहेमादिप्राप्तेरादिशब्दात् पूजादेश्चाभाव अलाभादि [1] परस्य निग्रह इत्यास्तां तस्य मुख्यवृत्त्या वादफलत्वाभावात्। प्रतिपन्नवस्तुप्रत्ययस्तमयादिव तत परस्य परिषदि पीडातिशयस्यापि अनुत्पत्तेः। तस्मादन्यदेव विजिगीषूणां परतिरस्कारकाम्यया प्रवृत्ताना न्यायेन प्रमाणबलेन स्वाभिप्रायस्य तत्सम्बन्धिनोऽभिनिवेशस्य निवर्तनम्। अयमेव निग्रहो वादोपक्रमस्यापि तत्परत्वेनास्यैवान्तरङ्गत्वात्। लाभादेश्चैतन्निबन्धनत्वेन मुख्यफलत्वाभावात्। कथ पुनर्मिथ्याज्ञाननिवर्तनस्य निग्रहत्वम्? निःश्रेयसहेतुत्वादिति चेत्, सत्यमिदम्; वस्तुवृत्त्या निग्रहत्व [2] तस्याभिप्रायकृतमौषधपानवत्, यथैव हि कश्चित् भेषजद्वेषी रोगी क्षीरादिव्याजेनौषध पायितेनानुगृहीतमात्मानं मन्यते तथा तत्त्वविद्वेषी परोपि युक्तिबलेन मिथ्याऽभिनिवेशादवरोप्यमाणो निग्रहापन्नमात्मानमभिमन्यते, तेनाक्षिप्ततया प्रवृत्तश्च साक्षिसमक्ष स्वपक्षपरिक्षयात् मनसि किञ्चित् परितप्यते, तत तदभिप्रायादेव तस्य निग्रहत्व न तत्त्वत। कथ पुनस्तस्य परितापकारिणः करणमपि परमकारुणिकत्वात् जिनमतावलम्बिनामिति चेत्? न, तस्य गुणानुबन्धित्वेनादोषगुणत्वात् (नादोषत्वात्) गुणानुबन्धि खलु तत्करण महत संसारदुःखस्य ततो निस्तरणात्। अन्यथा हि अनिवर्तितमिथ्याऽभिनिवेशप्रबलान्धकारपरिवर्तनपर परिवर्द्धितामय इव अमायावी को आनीयात् कीदृशी दुःखपरम्परा प्राप्नुयादिति? ततोऽध्ययनार्थो बालकनिग्रह इव तन्निग्रहोऽपि अदोषबुद्ध्या प्रतिपत्तव्य उपकारभूयस्त्वात्।

सम्प्रति वादाभास दर्शयति–

**तदाभासो वितण्डादिः [ अभ्युपेताव्यवस्थितेः। ]** इति।

वितण्डा जल्प एव पक्षस्थापनारहित "स प्रतिपक्षस्थापनाहीनो वितण्डा।" [ न्यायसू० १।२।३ ] इति वचनात्। आदिशब्दात् जल्पश्च "यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प" [ न्यायसू० १।२।२ ] इति लक्षित तदाभासो वादाभास सम्यग्वादो न भवति। कस्मात्? इत्याह–'अभ्युपेताव्यवस्थिते' इति। अभ्युपेत यत् वैतण्डिकादिना शब्दानित्यत्वादिक तस्य वितण्डादे सकाशात् अव्यवस्थितेः। तथा हि–वितण्डादौ यदि अभ्युपेतव्यवस्थाया

१–पदादिषी–प०। २ यथ संवत्त।

नियम., तदा वाद एव, तन्नियमादेव जयपराजययोर्भावात् । अनियमेऽपि तद्व्यवस्थाभावे वाद एव । तदभावे तु कथं वैतण्डिकादेर्जय. पक्षसिद्धिविकलतया परस्मादविशेषात् ? छलादिप्रयोगतदुद्भावनलक्षणाद् गुणादिति चेत्; परस्यापि तद्गुणसद्भावे का गतिः ? द्वयोरपि साम्यमिति चेत्; नेदानीं कथारम्भेण प्रयोजनं विनाऽपि तेन साम्यस्य भावात् ? कथं वा तस्य गुणत्वम् ? परत्रासम्भवादिति चेत्; न, तस्य छलजात्यादेरन्यस्यापि बहुल सम्भवात् । तथा हि–

वर्गं विहाय गद्येन कश्चित् पद्येन चापरः ।
अभ्यासम्भविना वक्ति सङ्गीतध्वनिना परः[१] ॥१५८०॥
प्रग्राह्यान्तरसश्लिष्टं पराऽशक्यं परः कृती ।
एवं विचित्रा वक्तारः सन्त्यभ्यासबलाश्रयाः ॥१५८१॥
जयिनस्तद्गुणैस्ते स्युरन्यासम्भविभिर्न किम् ।
भवन्त्येवेति चेत्; सैषा कथा तुर्या प्रसज्यते ॥१५८२॥
कथात्रयोक्तौ यत्तेषां जयहेतौ न संग्रहः ।
प्रकृतानुपयोगाच्चेन्न तेभ्यो जयसम्भवः ॥१५८३॥
छलादावपि तत्तुल्यं तस्मादपि कथं जयः ।
ऋषिणाभिहितत्वाच्चेद् गीतादावपि तत्समम् ॥१५८४॥
नारदादिर्यतिः प्राह गीताज्जयमभीप्सितम् ।
एकस्मादपि साधूक्ताच्छब्दात्पापक्षयं परः ॥१५८५॥
दुरपोहं महत्पापं येन जेयमुदीरितम् ।
तस्य वाग्यपि जेतव्य[२] प्रोक्त एव महर्षिणा ॥१५८६॥

तन्न मुनिप्रणीतत्वमात्रेण छलादेर्जयनिबन्धनत्वमतिप्रसङ्गात् । एतदेवाह–

**तदात्मोत्कर्षणायैव वाचो वृत्तिः [ अनेकधा ] ॥२१५॥** इति ।

तदिति तस्मिन्नित्यर्थे निपातत्वात् । वाच· वचनस्य वृत्ति छलादिप्रयोगतदुद्भावनलक्षणा सा आत्मनो वैतण्डिकादेर्यदुत्कर्षणं तत्प्रयोगायतिशयरूपं परासम्भवि तस्मा एव न जयायेत्येवकारः । कुत इत्यत्राह–'अनेकधा' इति । यतश्छलादिना अन्येन च रूपेण अनेकप्रकारा वाचो वृत्ति· ततोऽन्यप्रकारेणेव छलादिप्रकारेणापि सा तदुत्कर्षायैव न जयाय । अन्यथा चतुर्थ्या अपि कथाया. प्रसङ्गादिति भावः । तत. सूक्तम्–'अभ्युपेताव्यवस्थितेस्तदाभासो वितण्डादि' इति ।

साम्प्रतं प्रत्यक्षादिज्ञानानां सङ्ख्यादिकथननिरूपणे प्रयोजनमुपदर्शयितुकाम परेण प्रश्नं कारयति–

---

१ यतः आ०,ब०, प० । २ "एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति ।" –महाभा० ६।१।८४।

**प्रामाण्यं यदि शास्त्रगम्यमथ न प्रागर्थसंवादनात्**
**सङ्ख्यालक्षणगोचरार्थकथने किं कारणं चेतसाम् ।**
**आ म्नातं [ सकलागमार्थविषयज्ञानाविरोधं बुधाः**
**प्रेक्षन्ते तदुदीरितार्थगहने सन्देहविच्छित्तये ॥२१६॥] इति ।**

**चेतसां** प्रत्यक्षादिज्ञानानां सङ्ख्या च प्रत्यक्षं परोक्षमिति द्वैविध्यं लक्षणं च विशदं ज्ञानं प्रत्यक्षम् अविशदं परोक्षमिति, **गोचरश्च** अनेकान्तात्मा जीवादिर्भावः **अर्थश्च** प्रयोजनमव्यवधानेन स्वार्थव्यवसायो व्यवधानेनोपादानादिबुद्धिप्रवृत्त्यादिस्तेषां **कथने** शास्त्रारोपितनया निरूपणे **किं कारणं** निमित्तम् आम्नातं न किञ्चित् । लोकत एव तेषां प्रसिद्धेः । तदुक्तम्–

"प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृतः ।
प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् ॥" [ न्यायावता० श्लो० २ ]

प्रसिद्धानामेव तेषामनुवादः तदविसंवादेन प्रवचनप्रामाण्यनिर्णयार्थमिति चेत्; न, तेषामपि तन्निर्णयाय तदन्येषामनुवादप्रसङ्गादनवस्थापत्तेः । तन्निर्णयस्य तदविसंवादात् प्रागेवाभ्यासबलादुत्पत्तेर्न तदर्थस्तदनुवाद इति चेत्, न, तथा आगमप्रामाण्यनिर्णयस्यापि सम्भवात् । तदेवोच्यते– **'प्रामाण्यं यदि शास्त्रगम्यम्'** शास्त्रं तज्जनितं तदर्थज्ञानं तेन गम्यं निश्चेतव्यं प्रामाण्यमवञ्चकत्वम् । तदपि प्रत्यासत्तेः तस्यैव कथमवगम्यम् ? **प्राक्** पूर्वम् । कुतः ? **अर्थसंवादनात्** अर्थस्यागमाभिधेयस्य यत्संवादनं प्रत्यक्षादिनिबन्धनमविप्रतीसाररूपं तत इति । **यदि** चेत् इति । एतदुक्तं भवति–यथा प्रत्यक्षादौ प्रामाण्यनिर्णयस्ततः प्रागेव तथा यद्यागमज्ञानेऽपि व्यर्थं तदर्थाविसंवादनार्थं तेषां तत्कथनमिति । पक्षान्तरं द्योतयति–**'अथ न'** इति । अथ यदि ततः प्राक् शास्त्रगम्यं तत्प्रामाण्यं न भवति पश्चादेवागमादिति, अत्रोत्तरम्–**'संख्या'** इत्यादि । **चेतसाम्** आगमज्ञानानां **सङ्ख्या** द्वैयनेकादिरूपं परिगणनम् । **लक्षणम्** इति मतिपूर्वत्वादि, **गोचरः** ससंसारतत्कारणादिः **अर्थो** हेयोपादेयपरित्यागोपादानादिस्तेषां **कथने किं कारणमाम्नातं** न किञ्चित् । तथा हि–

इत्थाऽपि यदि तच्चेतःसङ्ख्यादिकथनं त्वया ।
तदर्थनिर्णयेऽपेक्ष्य प्रत्यक्षादिप्रमान्तरम् ॥१५८७॥
तत एवेष्टस सिद्धेर्व्यर्थं तत्कथनं भवेत् ।
अर्कादिव मधुप्राप्तौ पर्वतारोहणेन किम् ॥१५८८॥

अतो न युक्तं तत्कथनमिति । अत्रोत्तरमाह–**सकलागमार्थविषयज्ञानाविरोधं बुधाः प्रेक्षन्ते** इति । **सकलो** निरवशेषो य **आगमस्यार्थः** प्रत्यक्षादिस्थानत्रयगोचरस्तद्विषयं यज्ज्ञानमागमजनितमेव तस्याविरोधं प्रत्यक्षादिभिरबाधनं **बुधाः प्रेक्षन्ते** प्रकर्षेण निर्णयरूपेण

१ द्विभेदम्–अङ्गप्रविष्ट–अङ्गबाह्यभेदात् । अङ्गप्रविष्टं द्वादशविधम् अङ्गबाह्यमनेकविधम् । २ –एनत्र –ता० । ३– मस्तस्यार्थ आ०, ब०, प० ।

पश्यन्ति तत्कथनेन ततस्तस्मिन्[१] तदुत्प्रेक्षणं कारणमिति मन्यते । तदपि किमर्थमिति चेत् ? अत्राह– 'तदुदीरितार्थगहने सन्देहविच्छित्तये' इति । तेनागमेनोदीरितोऽर्थो जीवादि स एव गहनं सकलप्रज्ञाविकलाना दुरवगाहत्वात् तत्र यः सन्देह उपलक्षणमिदं तेन विपर्यासादिश्च तस्य विच्छित्तये विनाशाय । यदि हि तत्कथनेन तदविरोधं नोत्प्रेक्षेरन् बुधाः स्वामिसमन्तभद्रादयस्तदा यथास्वं परिकल्पितलक्षणैरध्यक्षादिभिरेकान्तवादिनस्तज्ज्ञानस्य विरोधं साधयन्तः सुकुमारप्रज्ञाना सन्देहादिकं तद्गहने परिकरयेयुः, सन्देहादिग्रहगृहीताश्च ते श्रेयसः प्रच्यवेरन् । अतो युक्तं परकीयलक्षणनिराकरणेन प्रत्यक्षादिकं व्यवस्थापयता तत्सङ्ख्यादिकथनेन तद्विषयज्ञानस्याविरोधोत्प्रेक्षणं सन्देहादिविच्छित्तेरेतस्य फलत्वात् । नन्वेवं प्रत्यक्षादिविषयेऽपि तद्विच्छित्तये परप्रत्यक्षादिभिरविरोध उत्प्रेक्षितव्यः पुनस्तत्राप्येवमित्यनवस्थाप्रसङ्ग इति चेत्, सत्यम्, तत्रापि विवादविषये तदविरोधात् तद्विच्छित्तिः, न चैवमनवस्थितिः, कियत्यन्तरमनुसृत्य तद्विच्छित्तिहेतोरविवादास्पदस्य प्रतिलम्भात् । निवेदितमेतत् प्रथमप्रस्तावे सविस्तरमिति नेह प्रतन्यते ।

कुतः पुनर्न्यायदर्शनादिनि श्रेयसनिबन्धनतया प्रसिद्धमपि शास्त्रान्तरं परित्यज्य पुरुषार्थसिद्धये भगवदाम्नाय एव भवतामभिरतिरिति चेत् ? अत्राह–

शास्त्रं शक्यपरीक्षणेऽपि विषये सर्वं विसंवादकं ।
मिथ्यैकान्तकलङ्कितं [ बहुमुखैरुद्वीक्ष्य तर्कागमैः ।
दाहार्तैः परिणामकल्पविटपिच्छायागतैः साम्प्रतं
निष्कल्पैरकलङ्करत्ननिचयन्यायो विनिश्चीयते ॥२१७॥] इति ।

सदसन्नित्यानित्याद्यसदेकान्तप्रवादमलीमसं हि सकलमपि परोदितं शास्त्रं परीक्षाशक्येऽपि प्रत्यक्षादिविषये विसंवादबहुलं तत्कथं तदभियोगे श्रेयस्कामानामभिरतिरिति भावः । तादृशं शास्त्रं किं कृत्वा पुनः किं क्रियते ? इत्याह– 'बहुमुखैरुद्वीक्ष्य तर्कागमैः दाहार्तैः परिणामकल्पविटपिच्छायागतैः साम्प्रतं निष्कल्पैरकलङ्करत्ननिचयन्यायो विनिश्चीयते ।' इति । आदितः प्रभृत्यापर्यवसानं विसंवादकमेव तत्कलङ्कितं शास्त्रमित्युद्वीक्ष्योर्ध्वमवलोक्य । कैः ? तर्कागमैः तर्कैस्तदनुग्राहकतया तच्छब्दवाच्यैः प्रत्यक्षादिभिरागमैश्च तत्सूत्रपरमार्गैः बहुमुखैः अनेकप्रकारैः साम्प्रतमिदानीं विनिश्चीयते स्थानत्रयेऽपि प्रमाणतया निर्णीयते । कोऽसौ ? अकलङ्करत्ननिचयन्यायो रत्नानीव रत्नानि सम्यग्दर्शनादीनि पुरुषार्थहेतुत्वात्तेषां निचयो निवहो यस्मिन् न्याये प्रवचनरूपे रत्ननिचयन्यायः स चाकलङ्कानामर्हतां नापौरुषेयः तदभावस्य निवेदनात् । कैः स विनिश्चीयते ? परिणामकल्पविटपिच्छायागतैः अनेकान्तरूपकल्पपादपच्छायामुपाश्रितैः । कुतस्तच्छायागतैः ? दाहार्तैः संसारधर्मोपतापकलुषितमानसैः, तेषां तच्छायागमनमन्तरेण तद्दाहोपशम-

१ –स्तया प्र– आ०, ब०, प० । २ –नामर्हताना पौ– आ०, ब०, प० ।

नासम्भवात् विसन्धैरिति च विशेषणं तेषां तच्छायागतत्वादेवोपपन्नं प्रतिपत्तव्यम् ।

कृत्वा निश्चयमेकलक्षणतया हेतुं विविच्यानुमां
हेत्वाभासमतः परं परमतो वादोचितं निग्रहम् ।
वादं तन्नियमव्यतश्च विवृतः सम्यग् द्वितीयो मया
प्रस्तावो भवतां दिशत्वनुदिनं रत्नत्रयाभ्युन्नतिम् ॥१५८९॥
यैरेकान्तकृपालुभिर्मम मनोनेत्रं समुन्मीलितं
शिक्षारत्नशलाकया हितपथं पश्यत्यदृश्यं परैः ।
ते श्रीमन्मतिसागरो मुनिपतिः श्रीहेमसेनो दया-
पालश्चेति दिविस्पृशोऽपि गुरवः स्मृत्याऽभिरक्षन्तु माम् ॥१५९०॥

इत्याचार्यस्याद्वादविद्यापतिविरचिते न्यायविनिश्चयविवरणे द्वितीयः प्रस्तावः ॥

---

१ पर आ०, ब०, प० ।

# तृतीयः प्रवचनप्रस्तावः

मायागः परमागमामृतरसाह्लादेन संतृप्तवान्

प्रद्युम्नारिमदच्छिदार्द्रकृपया सम्पूर्णदिव्याकृतिः ।

वागीशः कमलापतिर्गुणनिधिः श्रीमल्लिषेणो मुनिः

सोऽयं श्रीपरवादिमल्ल इति यस्त्रैलोक्यचूडामणिः ॥ १५९१ ॥

तदेवं प्रस्तुतप्रस्तावाभ्यां प्रत्यक्षानुमानयोः प्रामाण्यं निश्चित्य साम्प्रतं प्रवचनस्य तन्निश्चयमतीतप्रस्तावान्त्यवृत्तेन सूचितं दर्शयितुमाह—

**सकलं [ सर्वथैकान्तप्रवादातीतगोचरम् ।**

**सिद्धं प्रवचनं सिद्धपरमात्मानुशासनम् ॥ १ ॥ ]** इत्यादि ।

प्रकृष्टं वचनं प्रवचनं तच विषयत्वलक्षणस्य प्रकर्षनिबन्धनस्य गुणस्य भावात्, नापरतीर्थंकरशासनं तत्र तदभावात् । एतदेवाह—'सर्वथैकान्तप्रवादातीतगोचरम्' इति । सर्वथा सर्वेण धर्मिप्रकारेणैव धर्मप्रकारेणापि एकान्तो निष्कलस्वभावो भावो येषां ते सर्वथैकान्ताः मिथ्यावादिनः तेषां प्रवादाः अनेकान्ते संशयादिदोषाभिलापाः तदन्याभिलापानामतिक्रमानुपपत्तेः, तान् अतीतोऽतिक्रान्तोऽनेकान्तात्मा जीवादिर्गोचरो विषयो यस्य तत्तथोक्तम् । तदतिक्रमोऽपि तद्विषयस्य स्वयं प्रत्यक्षादिप्रमाणान्तरापरिपीडितशरीरत्वमेव । न हि प्रत्यक्षमन्यद्वा प्रमाणान्तरं तत्परिपीडनपरमुपलभ्यते तत्पोषणपरस्यैव तस्य प्रतीतेः । तदुक्तम्—

"तदेव च स्यान्न तदेव च स्यात्तथाप्रतीतेस्तव तत्कथञ्चित्" [बृहत्स्व० श्लो० ४२] इति ।

न चैवं सर्वथैकान्तशासनस्यैव तत्परिपोषितविग्रहविषयत्वम्, प्रत्यक्षादेः प्रमाणस्य तद्विषयपराङ्मुखस्यैव प्रतीतेः । ततो हि न स्वशास्त्रपरिकल्पितात् तस्य परिपोषणम्; तस्यैव निष्कलस्य स्वतोऽप्रतिवेदनात् । अन्यतो निष्कलादेव तस्यापि प्रतिवेदने पर्यनुयोगानतिवृत्तेरनवस्थापत्तेश्च । नापि लोकप्रसिद्धात्; ततोऽपि स्वयं स्वपरभावाभिमतानेकवस्तुगोचरानेकनिश्चयव्यापारात्मनोऽनेकान्तस्यैव परिपोषणोपपत्तेः, तद्विपरीतस्य च तस्य लोकप्रसिद्धस्याभावात् । ततो युक्तं प्रमाणान्तरापरिपीडितविषयतया भगवदर्हच्छासनमेव प्रवचनमिति । यदि पुनः प्रत्यक्षादेरपि प्रवचनार्थस्य परिपोषणं किं तत्र प्रवचनस्य प्रामाण्यनिश्चयेन प्रयोजनाभावादिति चेत् ? न; तत्र प्रमाणान्तराविसंवादेन तन्निश्चये सति तन्निदर्शनेन अत्यन्तपरोक्षेऽपि विषये निर्विवादस्य तन्निश्चयस्योपपत्तेः । अत एव प्रत्यक्षादेः प्रमाणान्तरस्य तदविसंवादोपदर्शनार्थं प्रागेव निरूपणं कृतम् । अनिरूपिते तस्मिन् तदविसंवादोपदर्शनासम्भवादित्यलं प्रसङ्गेन ।

---

१—स्तया ल-आ०, ब०, प० । २—स्यैतत्परि-आ०, ब०, प० ।

प्रवचनमिति धर्मिनिर्देशः, सकलमित्यपि तस्यैव विशेषणम् । न हि वेदवचनवत् प्रवचनस्य कश्चिदेव विभागः प्रतिपादितेऽर्थे प्रमाणमपरस्य तु प्रतिपादितार्थासम्भवात् अर्थवादत्वमित्ययं विभागः, सर्वस्यापि प्रतिपादितार्थे प्रामाण्यात् । तदाह–सिद्धमिति । सिद्धं प्रमाणमित्यर्थः । सिद्ध्यति निर्णयविषयतां गच्छत्यनेनार्थ इति सिद्धम् इति, करणे "कृतव्युदो बहुलम्" [        ] इति बहुलग्रहणेन निष्ठाविधानात् । सिद्धत्वं च तस्य सिद्धेः निर्णीतेः निमित्तत्वेनोपचारात्, मुख्यतो निर्णयात्मनो ज्ञानस्यैव सिद्धत्वात् । साधनं तत्र निर्बाधत्वम् । तथा हि–यत् स्वविषये निर्बाधं तत्प्रमाणं यथा प्रत्यक्षादि, निर्बाधं च स्वविषये जीवादौ प्रवचनमिति । निरूपितं जीवाजीवयोस्तस्य निर्बाधत्वम्, निरूपयिष्यते चास्रवादाविति । 'सिद्धमेतत् साधनमेव' इति च सर्वथेत्यादिना प्रतिपादितम् । हेत्वन्तरमाह–'सिद्धपरमात्माऽनुशासनम्' इति । सिद्धो निश्चितः परमात्मा सकलवस्तुयाथात्म्यदर्शी पुरुषविशेषोऽनुशासनः काले देशे च क्वचिदुत्पन्नत्वस्य[1] अनु पश्चाच्छासनः शास्ता यस्य तत्तथोक्तम् । यत एवं प्रवचनं तत सिद्धमिति । प्रवचनस्य वेदवत् अपौरुषेयत्वात् असिद्धं तदनुशासनत्वमिति चेत्; न; वेदस्यापौरुषेयत्वासिद्धेः । तथा हि–पौरुषेयो वेदः स्वार्थप्रतिपादनात् भारतादिवत् । स्वशक्तित एव तस्य तत्प्रतिपादनं न पौरुषेयत्वादिति चेत्; नियतार्था तच्छक्तिः, अनियतार्था वा ? द्वितीयकल्पनायां सर्वस्यापि ततः सर्वार्थप्रतिपत्तिर्भवेत् । तथा च,

नियोगमेव तस्यार्थं कथं ब्रूयात् प्रभाकरः ।
भावनामेव भट्टोऽपि तदर्थान्तरसम्भवे ॥ १५९२ ॥
समयापेक्षिणी शक्तिर्वेदार्थप्रतिपादिनी ।
समयश्च न सर्वत्र भट्टादेरिति चेत् कथम् ॥ १५९३ ॥
अन्यस्यान्यमताविधौ तत्र दूषणकल्पनम् ।
तन्मतप्रतिपत्तौ वा समयासम्भवः कथम् ॥ १५९४ ॥
समयोऽप्येष वेदश्चेत्तादृशस्यापि तादृशात् ।
समयात्प्रतिपत्तौ स्यादनवस्था कथन्न वः ॥ १५९५ ॥
समयः कृत्रिमश्चेत्तत्कर्ता वेदार्थविन्न चेत् ।
पृथग्जनवदेवासौ कुर्वीत समयं कथम् ॥ १५९६ ॥
विनाऽपि समयात्तस्य तद्वेदित्वे वृथैव सः ।
स्वकृतात् समयाद्वित्तौ भवेदन्योऽन्यसंश्रयः ॥ १५९७ ॥
सिद्धे वेदार्थवेदित्वे समयस्तत्कृतो भवेत् ।
तत्कृतात् समयात्तस्य तद्वेदित्वमिति स्फुटम् ॥ १५९८ ॥
नरान्तरकृतात्तस्य ततस्तद्विद्विकल्पने ।
नरान्तरं तदर्थावित् कथं तत्कर्तृतां भजेत् ॥ १५९९ ॥

---

१–दुत्पन्नत्वानु आ०, ब०, प० ।

यदि तस्यापि तद्वित्त्वं नरान्तरकृतात्ततः ।
तत्राप्येवं प्रसङ्गे स्यादव्यवस्थितिरञ्जसा ॥ १६०० ॥
समयानादिभावेन नैषा दोषश्च चेत् कथम् ।
तादृशादर्थसंवित्तिः समीची समयाद्भवेत् ॥ १६०१ ॥
यतो नरक्रमादेषा ह्यनादेरप्यतद्दृशः ।
समयस्थितिरुत्पन्ना भवत्यन्धपरम्परा ॥ १६०२ ॥
तादृङ्नरोपक्रमा हि सा तदर्थावगाहिनी ।
न तदर्थदृगायत्ता म्लेच्छाधीनेव[1] तत्कृतिः ॥ १६०३ ॥

ततो न तादृशसमयापेक्षणमनेकार्थप्रतिबन्धायाः शक्तेरुपपन्नं यतो नियतार्थप्रत्यायनमिति भवितव्यमेव ततः सर्वस्यापि सर्वार्थप्रतिपत्तौ तद्वादित्वेन[2] । न चैवम् , अतो न द्वितीयकल्पनोपपन्ना ।

नापि प्रथमकल्पना; नियतार्थप्रतिबद्धत्वे शक्तेः समयवशादप्यर्थान्तरे प्रवृत्त्यभावप्रसङ्गात् धूमादिवत् । न हि धूमादेर्नियत[3]पावकादिप्रतिबन्धस्य समयशतेनापि तदन्यत्र प्रवृत्तिः, न चैवम् , वेदवचनस्याग्निहोत्रादिवाक्यस्य मीमांसकपरिकल्पितादर्थादर्थान्तरे[4]ऽपि श्वमांसभक्षणादौ बौद्धसमयवशात् प्रवृत्तिदर्शनात् । तदुक्तञ्च–

"तेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुतेः ।
खादेच्छ्वमांसमित्येष नार्थ इत्यत्र का प्रमा ॥" [ प्र०वा० ३।३१८ ] इति ।

समयस्यैव तत्र प्रवृत्तिस्तत एव तत्प्रतिपत्तेर्न तद्वाक्यस्येति चेत्; मीमांसकाभिमतेऽपि न स्यात् , तस्यापि समयप्राधान्यादेव प्रतिपत्तेः, अन्यथा व्याख्यानवैयर्थ्यप्रसङ्गात् । न हि स्वशक्तित एव स्वार्थमवद्योतयतो व्याख्यानापेक्षणमुपपन्नम् । व्याख्यायमानस्य वाक्यस्यैव तत्र प्रवृत्तिस्तदनपेक्षायां व्याख्यानस्यैव निर्विषयत्वेनासम्भवादित्यपि समानं श्वमांसभक्षणेऽपि; तत्रापि परव्याख्यानविषयस्याग्निहोत्रादिवाक्यस्यैव प्रवृत्तेः, अन्यथा तद्व्याख्यानस्याप्यसम्भवात् । नियतार्थाऽपि नैसर्गिकी शक्तिर्वाक्यानां सम्भवति यतः पुरुषबलानपेक्षमभिधेयप्रतिपादनं तेषां सम्भाव्येत ।

स्यान्मतम् , वृद्धव्यवहारदर्शिनः प्रतिपत्तुरन्वयव्यतिरेकाभ्यां पदतदर्थव्युत्पत्तौ पुनस्तत एव वाक्यतदर्थयोरपि व्युत्पत्तिः पदतदर्थान्वयस्यैव वाक्यतदर्थान्वयत्वोपपत्तेः, ततः किं तदर्थेन पुरुषबलान्वेषणेनेति ? तदपि न साधीयः; तथा सति पदवाक्यव्युत्पत्तिकृतो व्याकरणस्य तदुभयार्थव्युत्पत्तिनिबन्धनस्य विचारग्रन्थस्य च वैयर्थ्यापत्तेः । ततः पुरुषबलादेव वेदस्यापि स्वार्थप्रतिपादनं न स्वशक्तित इति युक्तं तस्य पौरुषेयत्वं तद्वत् प्रवचनस्यापि[5] भवेत् । तस्य कश्चिदनुशास्ताऽस्तु, कुतो निरवशेषवस्तुयाथात्म्यदर्शित्वेन परमात्मेति चेत् ? तद्दर्शिनस्तदनुशासित्वायोगात् पृथग्जनवत्[6] ।

१–च्छादीनेव आ०, ब०, प० । २ तदुद्देशत्वेन आ०, ब०, प० । ३–तत्साधनादिप्र–आ०, ब०, प० । ४ अर्थान्तरे । ५ प्रतिवचन–आ०, ब०, प० । ६ "विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।"–ता० टि० ।

तस्याप्युपदेशबलेनोपपद्यत एव तदिति चेत्; उपदेष्टुस्तद्दर्शित्वे स एवास्मदभिमतः परमात्मा भवेत्। तदभावे कथमुपदेष्टृत्वम्? तद्वदेव तस्याप्यन्योपदेशबलेन तदिति चेत्; न, अन्यस्मिन्नप्युपदेष्टर्येवं-प्रसङ्गात्। पुनरन्योपदेशबलपरिकल्पनायां तदुपदेशपारम्पर्येणोपकल्पितत्वात् म्लेच्छादिधर्मोपदेश-प्रबन्धवत्। भवतु तर्हि तदनुशासिनस्तद्वेदित्वमस्मदादिप्रत्यक्षेणानुमानेन वा, नातीन्द्रियप्रत्यक्षेणेति चेत्; न; तन्निबन्धनस्य तत्परिज्ञानस्यात्यन्तपरोक्षाविषयत्वात् कथमयं तदर्थमुपदिशेन्नाम? प्रतिपन्नवदे-शाऽप्रतिपन्नेऽपि तत्परिकल्पनोपपत्तेः, अन्यथा सकलानुमानव्यवहारविलोपप्रसङ्गादित्युपपन्नं तस्य लोकोत्तरप्रत्यक्षबलेनैव निरवशेषपदार्थसार्थसाक्षात्करणसामर्थ्यसमन्वयेन परमात्मत्वम्। कथं पुनः पुरुषत्वाविशेषेऽप्यस्मदादेः प्रतिनियतविषयं परिज्ञानं तस्य तु सकलार्थविषयमित्ययं विभाग इति चेत्? न; अस्मदादावपि सकलार्थविषयस्य तस्य भावात्। कथमन्यथा साकल्येन साध्ये साध्य-साधनव्याप्तिपरिज्ञानम्? निरूपितं चैतत् मङ्गलव्याख्यायाम्। इयांस्तु विशेषः—अस्मदादेः तज्ज्ञानमस्पष्टं स्पष्टं तु परमात्मन इति। स्पष्टत्वं च तस्य अस्पष्टत्वनिबन्धनस्य आवरणस्य निर्मूलात् प्रलयात्। तच्चावरणमनुमानसिद्धम्, । तथा हि—सत् सर्वमनेकान्तात्मकमित्यादि व्याप्तिज्ञानं सावरणम्, अस्पष्टत्वात्, रजोनीहाराद्यन्तरितपादपादिज्ञानवत्। विवादापन्नं मिथ्याज्ञानं सावरणं मिथ्याज्ञानत्वात् विषाद्युपयो-गिनः उपलशकलादौ कलधौतज्ञानवदिति। तस्य क्वचिन्निर्मूलप्रहाणिरप्यनुमानादेव। तच्चेदम्—विवा-दापन्नमावरणं क्वचिन्निर्मूलं प्रहीयते, प्रकृष्यमाणहानिकत्वात्, यत्प्रकृष्यमाणहानिकं तत्क्वचिन्निर्मूलं प्रहीयमाणमुपलब्धं यथा हेमादौ किट्टकालिमादिकम्, प्रकृष्यमाणहानिकं च यथोक्तमावरणम्, तस्मात् क्वचिन्निर्मूलं प्रहीयत इति। न च प्रकृष्यमाणहानिकत्वमसिद्धम्, तस्यापि जीवेषु विज्ञानाति-शयदर्शनादेवानुमितेः। विज्ञानातिशयस्य च तत्कार्यदर्शनोपनीतप्रतीतिकस्याविप्रतिपत्तिविषयत्वात्। उक्तम्—

"जीवानामसहायासादा शास्त्रार्थविदः क्रमात्।
विज्ञानातिशये विद्वान् वै विप्रतिपद्यते ॥" [ सिद्धिवि० परि० ८ ] इति।

भवतु तस्य क्वचिन्निर्मूलं प्रहाणिः ततस्तु तन्निबन्धनमस्पष्टत्वमेव निवर्तेत 'कारणाभावात् 'कार्याभाव.' इति न्यायात्, स्पष्टभावस्तु कथमिति चेत्? न; तन्निवृत्तेस्तद्भावरूपत्वात् भावान्तरस्व-भावत्वेनाभावस्य व्यवस्थापितत्वात्। ततो युक्तं तन्निर्मूलप्रहाणौ विज्ञानस्य परिस्फुटत्वं तादृशनिरवशेष-वस्तुगोचरप्रत्ययाधिकरणस्य च पुरुषस्य परमात्मत्वम्। अतः सूक्तमिदम्—

**सकलं सर्वथैकान्तप्रवादातीतगोचरम्।**
**सिद्धं प्रवचनं सिद्धपरमात्मानुशासनम् ॥** इति।

भवतु नाम कश्चित् विश्वदर्शी परमवीतरागश्च, स तु कुतः प्रतिपत्तव्यः? प्रत्यक्षादिति चेत्; न; तस्य परचेतोवृत्तावप्रवृत्तेः। व्यापारव्याहारादिलिङ्गोपजनितादनुमानादिति चेत्; न; व्यापारादेर्नि-र्दोषभाविनो दोषवत्यपि सम्भवेन व्यभिचारात्, 'सरागा अपि वीतरागा इव चेष्टन्ते' इति प्रसिद्धेः।

१ तदुपदेशप्रबन्धो पा-ता०। २ "हेमज्ञानवत्। कलधौतं रूप्यहेम्नोरिति नानार्थवर्गे।" —ता० टि०। ३-नामतिश-आ०, ब०, प०।

न च प्रमाणान्तरमस्ति यतस्तत्प्रतिपत्तिः, अतः कथं तस्य प्रवचनानुशासित्वेन पर्येषणं प्रेक्षावद्भिरिति चेत् ? अत्राह–

**तथाऽन्यगुणदोषेषु संशयैकान्तवादिभिः।**
**पुरुषातिशयो ज्ञातुं यद्यशक्यः किमिष्यते ॥२॥** इति।

**तथा** तेन प्रमाणाभावप्रकारेण अन्यस्यात्मान्तरस्य ये **गुणाः** यथार्थदर्शनवैराग्यादयो ये च **दोषा** मिथ्याज्ञानरागादयस्तेषु **संशयस्यैकान्तो** नियमस्तं वदन्तीत्येवंशीलाः सौगताः। ननु प्रमाणाभावे तेषु तदभाववादित्वमेवोपपन्नं नित्यादिवत् तत्कथं तदेकान्तवादित्वमिति चेत् ? न; तदभावादपि दृश्यानुपलम्भरूपादेवाभावसिद्धेः आत्मान्तरगुणादेश्चादृश्यत्वेन तदनुपलम्भस्य संशयहेतुत्वात् तद्वादित्वस्यैवोपपत्तेः। तैः **पुरुषस्य** तथागतस्यान्यस्य वा **अतिशयः** परिशुद्धज्ञानवैराग्यादिलक्षणो गुणप्रकर्षो **ज्ञातुं** प्रमाणतो निश्चेतुं **यदि** चेत्, **अशक्यः** शक्यो न भवति **किं** कस्मात् **इष्यते** मृग्यते ? पुरुषार्थत्वसिद्धये हि तदन्वेषणम्, न चाशक्यपरिज्ञानात् ततस्तत्सिद्धिः यतः प्रेक्षावतां तदन्वेषणम्। ततो दुर्भाषितमेतत्–

"ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये।" [ प्र०वा० १।३२ ] इति।

न दुर्भाषितं संवृतिसिद्धस्य तस्य तदर्थमन्वेषणात्, परमार्थतस्तु न तस्यान्वेषणं दुरवबोधत्वादिति चेत्; कथं पुनः सत्यनुमाने तस्य दुरवबोधत्वम् ? तल्लिङ्गव्यापारादेस्तदन्यतोऽपि भावेन व्यभिचारादिति चेत्; ननु तदन्यतो भावोऽपि संवृत्यैव, "निष्पत्तेरपराधीनम्" [प्र० वा० २।२६] [2]इत्यादिवचनात्। ततः संवृतिसिद्धव्यभिचाराल्लिङ्गात्तस्य दुरवबोधत्वेनानिष्टत्वमपि संवृत्यैव न परमार्थतः। तथाप्युक्तं निष्पर्यायं तस्य संवृत्यैवेष्टत्वानिष्टत्वयोर्विरोधात्। कथं वा तद्व्यापारादेरन्यत्रापि भाव इच्छावृत्तित्वात् ? सत्यपि पुरुषातिशये तस्येच्छातो भावो न तन्मात्रादेव सर्वदा तत्प्रसङ्गात्, इच्छायाश्च तदतिशयविकलेऽपि भावादुपपन्नस्तत्रापि तद्भाव इति चेत्; न तर्हि तद्विकलव्यापारादेस्तद्वति सम्भवः तस्य तदिच्छाया असम्भवात्। सम्भवे वा तद्वत्त्वविरोधात्। न हि दोषवद्व्यापारं परोपतापपैशून्यादिकं चिकीर्षतस्तद्वत्त्वं नाम तच्चिकीर्षाभावरूपत्वात् तदतिशयस्य। ततो दुरालाप एवायम् 'वीतरागा अपि सरागा इव चेष्टन्ते' इति। या तु तस्य हितमधुरभाषणादिविषयेच्छा नासौ रागादिमतः सम्भवतीति कथं तन्निबन्धनस्य व्यापारादेस्तत्र भावः ? इच्छासामान्यभावादिति चेत्; पुद्गलसामान्यभावात् पाषाणादेरपि कुतो न धूमस्याभावः कार्यधर्मातिक्रमेणाहेतुकत्वप्रसङ्गात्। अन्वयव्यतिरेकानुविधाननियमो हि तद्धर्मः, न चैवमसौ पावके तस्य सम्भवति पाषाणादेरपि भावात्। नापि पाषाणादौ पावकादप्युत्पत्तेरिति तद्धर्मातिक्रमेणाहेतुकत्वमेव प्राप्तम्। तदुक्तम्–

"धूमः कार्यं हुतभुजः कार्यधर्मानुवृत्तितः।
सम्भवंस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥" [ प्र० वा० ३।३३ ] इति।

---

१–द्विनिर्णयो यतः आ०, ब०, प०। २ "निष्पत्तेरपराधीनमपि कार्यं स्वहेतुतः। सम्बध्यते कल्पनायां किमकार्यं कथञ्चन।"–प्र० वा०। ३–सत्येन त–आ०, ब०, प०। ४ कुतो धूमस्याभावः आ०, ब०, प०।

न चैवम्, अतो न दहनादन्यतस्तस्य भाव इति चेत्; तर्हि पुरुषातिशयभावी व्यापारादिरपि कथमन्यतो भवेत् ? तन्निर्हेतुकत्वस्याप्येवमुक्तन्यायेन सम्भवात्। तथा हि–

कार्यधर्मान्वयाद्यो हि पुरुषातिशयोद्भवी।
व्यापारादिर्विना तेन स चेन्निर्हेतुको भवेत् ॥ १६०४ ॥ इति।

दृश्यत एवान्यतोऽपि तद्व्यापारादिरिति चेत्; किं पुनः शक्रमूर्धनि धूमोऽपि न दृश्यते ? यदि दृश्यते तन्मूर्धाप्यग्निरेव, अनग्निस्वभावाद् धूमस्यानुत्पत्तेः। तदुक्तम्–

"अग्निस्वभावः शक्रस्य मूर्धा चेदग्निरेव सः।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत् ॥" [ प्र० वा० ३।३५ ] इति।

न चैवम्, अतो न तत्र धूमः, यस्तु दृश्यते बहलपाण्डरादिरूपः स बाष्पादिरेव न धूम इति चेत्; कथमिदानीं पुरुषातिशयजन्मा व्यापारादिः ? तदन्यतो दृश्यमानस्य च बाष्पादिवत् तद्विलक्षणत्वात्। अत एव तत्र विप्रलम्भव्याहारं तद्विदो निवेदयन्ति भूतविशेषे बाष्पादिव्यवहारवत्। ततो न रागादिमति तदन्यव्यापारादिर्यतः ततः पुरुषातिशयप्रतिपत्तिर्व्यभिचारिणी न भवेत्। एतदेवाह–

**परोक्षोऽप्यविनाभावसम्बद्धैर्गुणदोषयोः।**
**शास्त्रैर्निर्वर्तितैः शास्त्रकारवत् सम्प्रतीयते ॥ ३ ॥** इति।

**परोक्षोऽपि** प्रत्यक्षाविषयोऽपि गुणवांस्तद्विपरीतश्च **सम्प्रतीयते** सम्यगवगम्यते। कैः ? **शास्त्रैः** वचनप्रबन्धैः **निर्वर्तितैः** निष्पादितैः सामर्थ्याद् गुणदोषवद्भ्यामिति गम्यते, अन्यनिर्वर्तितैः तैस्तत्परिज्ञानानुपपत्तेः। वाग्व्यापारोपदर्शनमिदम्। उपलक्षणं चेदं तेन कायव्यापारविशेषैरित्यपि द्रष्टव्यम्। तैरपि दोषोपशमपरानुग्रहनिबन्धनैस्तद्विपरीतैश्च गुणवतो दोषवतश्च पुरुषविशेषस्य परिमुक्तारेकतया परिज्ञानात्। कीदृशैस्तैः स सम्प्रतीयते ? अविनाभावेनान्यथाऽनुपपत्त्या **सम्बद्धैः**। कयोः ? **गुणदोषयोः** यो यथार्थदर्शनवैराग्यातिशयपरमदयालुत्वादिलक्षणो गुणो योऽपि तद्विपर्ययरूपो दोषस्तयोरिति।

शास्त्रैर्गुणाविनाभावसम्बद्धैः भगवान् जिनः।
गुणवत्त्वेन बोद्धव्यस्तन्मुख्याम्भोजनिर्गतैः ॥ १६०५ ॥
विदाङ्कुर्वन्ति विद्वांसस्तेषामपि गुणान्वयम्।
दृष्टागमाविरुद्धार्थप्ररूपणतया स्थितेः ॥ १६०६ ॥
प्रत्यक्षं तन्निमित्तं च स्मरणाद्यनुमान्तिमम्।
दृष्टं तेन तदर्थस्य न विरोधो हि दृश्यते ॥ १६०७ ॥
तदर्थालम्बनत्वेन तस्यापि प्रतिपत्तितः।
तत्प्रत्ययेन तस्यापि पूर्वापरविभागिनः ॥ १६०८ ॥

१-बहुलधवल-आ०, ब०। -बहुलधवलरूप-प०। २-साफल्यै ता०। ३-न्तिमम् आ०, ब०, प०।

परस्पराविसंवादरूपेणैव व्यवस्थितेः ।
बन्धुरेव भवेल्लोके किं रिपुः शक्यकल्पनः ॥ १६०९ ॥
दृष्टागमविरुद्धार्थविषयैः शासनैस्तथा ।
दोषवन्तोऽवगन्तव्याः सर्वथैकान्तवादिनः ॥ १६१० ॥
तच्छासनानां तादर्थ्यं प्रागुक्तं वक्ष्यतेऽपि च ।
देवागमे त एवोक्तं निर्मलन्यायवेदिभिः ॥ १६११ ॥

"त्वन्मतामृतबाह्यानां सर्वथैकान्तवादिनाम् ।
आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते ॥" [आप्तमी० श्लो० ७] इति ।

भवतु नाम तेषां तद्विरुद्धार्थत्वं न तावता तैरतत्प्रणेतृ[१]णां दोषवत्त्वापरिज्ञानं परविप्रलम्भनाय गुणवद्भिरपि तत्प्रणयनसम्भवादिति चेत्; न; तद्विप्रलम्भनस्यैव दोषत्वात् । मिथ्याज्ञानोपजननं हि तद्विप्रलम्भनम् । मिथ्याज्ञानं चानर्थनिमित्तम् अहिविषादौ हारगुडादिविज्ञानवत् । अर्थोपरतिनिबन्धनं च हारगुडादौ अहिविषादिज्ञानवत् । अतः कथं तदुपजननं न दोषः पर[२]प्रत्यवायकारणत्वात् व्याधादेस्तदु[३]पजननवत् । तस्यापि तत्कथं दोष इति चेत् ? अशुभपुद्गलप्राप्ति[४]निमित्तत्वादेव । तथा हि—व्याधादेः परविप्रलम्भनमशुभपुद्गलप्राप्तिनिबन्धनं विप्रलम्भनत्वात् आत्मविप्रलम्भनवत् । दृष्टा खल्वात्मविप्रलम्भनादशुच्यादौ शुच्याद्यभिनिवेशरूपात् तत्प्राप्तिरिति न साध्यवैकल्यमुदाहरणस्य । या चासौ तत्प्राप्तिः सा[५]पायप्राप्तिः घोरदुःखसंसारसरित्पातनिबन्धनीति सिद्धं तन्निबन्धनस्य विप्रलम्भनस्य दोषत्वम् । भवतु नाम व्याधादेस्ततस्तत्प्राप्तिर्न शास्त्रकर्तॄणां योगसामर्थ्येन तत्प्रतिबन्धादिति चेत्; विप्रलम्भनस्यैव कुतो न तेन प्रतिबन्धः ? एवं हि ते महायोगिनो भवन्ति यदि परेषामहितं नानुतिष्ठेयुः, तत्प्रतिबन्धनतत्सामर्थ्यमिति चेत्; तत्कार्यप्रतिबन्धेऽपि न भवेदिति किञ्चिदेतत् । तन्न गुणवतां मिथ्यार्थं[६] शास्त्रप्रणयनं सम्भवति दोषवतामेव तत्सम्भवादित्युपपन्नं ततो दोषवत्त्वपरिज्ञानं सम्यगर्थात्ततो गुणवत्त्वपरिज्ञानवत् । शास्त्रकारवदित्यत्रैव निदर्शनम् । य[७]थैवमपि अर्हतः सुगतादेश्चान्योऽपि वैद्यकादिशास्त्रकारः चिरापक्रान्तोऽपि तच्छास्त्रैरेव सुविवेचितगुणदोषसम्बद्धैः गुणदोषवत्तया सम्प्रतीयते तद्वत्प्रकृतोऽपीत्यर्थः ।

सम्प्रति सर्वथैकान्तवादिनः सुगतादेर्दोषवत्त्वमेव तद्वृत्तापारसमधिगम्यमावेदयन्नाह—

सिद्धहिंसानृतस्तेयाब्रह्मचर्यप्रवृत्तितः ।
स प्रत्यस्तमिताशेषदोषो नेति प्रतीयते ॥ ४ ॥ इति ।

सः सुगतादिः प्रतीयते निश्चीयते । कथम् ? प्रत्यस्तमिताशेषदोषः प्रक्षीणनिरवशेषमिथ्याज्ञानकषायमलोपश्लेषो नेति । एवं कुतः प्रतीयते ? सिद्धहिंसानृतस्तेयाब्रह्मचर्यप्रवृत्तितः ।

१ किं पुनः त—आ०, ब०, प० । २ परप्रत्ययका—आ०, ब०, प० । ३ परप्रत्यवायोपजननवत् । ४—प्तिपरिज्ञाननिमि—आ०, ब०, प० । ५ सावायप्रा—प० । ६—तविप्र—प० ।
७ यथैवाप्यन्यदर्हतः आ०, ब० । यथैवाप्यन्यर्हितः प० ।

सन्तानरूपं दुःखसत्यम् "दुःखं संसारिणः स्कन्धाः" [ प्र० वा० १।१४९ ] इति वचनात्। उपादेयं च तस्यैव निःशेषप्रहाणस्वरूपं निरोधसत्यं. हेयोपादेयं तदेव तत्त्वं तस्य सोपायस्य हेयतत्त्वस्योपायोऽविद्यातृष्णारूपं समुदयसत्यम्, "दुःखे विपर्यासमतिस्तृष्णा वा तस्य कारणम्" [ प्र० वा० १।८३ ] इति वचनात्। उपादेयतत्त्वस्य नैरात्म्यभावनारूपं मार्गसत्यं तत्सहितस्येति। न हि दोषवत्त्वेन निर्ज्ञातस्य तत्त्वदर्शनं शक्यसम्भावनं यतस्तस्यासौ प्रवक्ता भवेदिति भावः। यदि वेदृश इति परोपकल्पितरूपो विधूतकल्पनाजाल इति प्रतिपत्तव्यं तस्यापि प्रवक्तृत्वानुपपत्तेः। कथमिति चेत्; विकल्पाभावादेव, विकल्पकार्यं हि वचनम् "विकल्पयोनयः शब्दाः" [ ] इति वचनात्। कथं तदभावे भवेत्? विकल्पादेव चिरापक्रान्तादिति चेत्; न; ततो विकल्पस्यापि दुर्भावेन तस्य विधूतकल्पनाजालत्वाभावापत्तेः। चिरापवृत्तादपि ततो वचनमेव न तज्जातीयो विकल्प इति नियमहेतोरशक्योपदर्शनत्वात्। तत्कालभाविन एव विकल्पसंस्कारात् तस्य वचनमित्यपि वाचोयुक्तिः न चतुरविचारसङ्क्रमोचितं सौभाग्यमुद्वहति, ततो वचनवद्विकल्पस्यापि प्रसङ्गेन प्रकृतदोषानतिवृत्तेः। तत्संस्कारस्य च विकल्पत्वे न तस्य विधूताशेषविकल्पत्वम्, अविकल्पत्वे च न ततो वचनम्। न च विकल्पाविकल्पव्यतिरेकेणापरः कश्चित्तत्स्वभावः। तद्भावे वा न ततो वचनम्। विकल्पकार्यत्वेन निश्चितस्यान्यतो भावे निर्हेतुकत्वापत्तेरिति दुष्परिहारोऽयं दोषोपनिपातः परस्य। तन्न यथागतस्य प्रवक्तृत्वं यतस्तदुक्तप्रतिपत्त्यर्थं प्रेक्षावता तदन्वेषणं भवेत्।

अथ कुड्यादीनां प्रवक्तृत्वमेव तस्यापि प्रवक्तृत्वं तस्य तत्सन्निधिनिबन्धनत्वादिति चेत्; अहो महदिदमद्भुतं यत्सकलज्ञानाधिष्ठानादपि तस्मादनुत्पन्नं ज्ञानगन्धेनापि शून्यात् कुड्यादेर्भवतीति! नायं दोषः तथागतप्रभावस्य तादृशत्वादिति चेत्; तत्तर्हि कुतस्तस्य स्वयमेव न प्रवक्तृत्वम्? एवं हि पारम्पर्यं परिहृतं भवति–सुगतात् कुड्यादेः प्रभावस्ततो वचनमिति। मा भूत्तस्य वचनम्, प्रवक्तृत्वं तु तस्य विनेयानां तत्सन्निधानात्तत्त्वज्ञानप्रादुर्भावादिति चेत्; तज्ज्ञानं यदि न प्रमाणं कथं तत्त्वविषयं विरोधात्? प्रामाण्यमपि न तस्य प्रत्यक्षत्वेन, इन्द्रियादिप्रत्यक्षेष्वनन्तर्भावात्। न हि तदिन्द्रियज्ञानम्; इन्द्रियादनुत्पत्तेः। नापि मानसम्; इन्द्रियज्ञानादप्रसूतेः, तस्य तद्विषयानन्तरविषयमार्गागोचरत्वाच्च। नापि योगिज्ञानम्; भावनाप्रकर्षनिरपेक्षत्वात्। नापि स्वसंवेदनत्वेन; सत्यचतुष्टयविषयत्वाभावापत्तेः। प्रत्यक्षान्तरत्वे च तज्ज्ञानचातुर्विध्यनियमव्यावर्णनव्याघातोपनिपातात्। नाप्यनुमानत्वेन; लिङ्गाभावात्। सुगतसन्निधानमेव लिङ्गमिति चेत्; सुगत एव तर्हि सत्यचतुष्टयस्यानुमितिर्भवेत् तत्रैव लिङ्गात्, न सत्त्वान्तरेषु पक्षधर्मत्वाभावात्, न च तत्र तदस्ति; तस्य शुद्धज्ञानस्वभावतया दुःखादिरूपत्वानभ्युपगमात्। न प्रमाणान्तरत्वेनापि; प्रमाणद्वयनियमोपगमात्। तन्न तत्सन्निधानात् तत्त्वज्ञानं विनेयानामुपपन्नं यतस्तदेव तस्य प्रवक्तृत्वं भवेदिति सूक्तम्–'हेय' इत्यादि, सर्वथा तस्य प्रवक्तृत्वाव्यवस्थितेः।

१ "उपाय इति अत्रापि सम्बन्धः।" –ता० टि०। २ तत्सन्धानमिति–आ०, ब०, प०। ३ सुगतात्। ४ प्रभावस्त–आ०, ब०, प०। ५ विनेयज्ञानस्य। ६ –मार्गो–प०। ७ तस्य प्रामाण्यमिति सम्बन्धः।

पुनरपि तदेव प्रतिक्षिपन्नाह—'धिगनात्मज्ञं तदसाध्यमसाधनम्' इति। तात्पर्यमत्र—विद्यमानस्यैव हेयादितत्त्वस्य सुगतोऽपि प्रवक्ता भवेन्नापरस्य व्योमकुसुमादिवत्। विद्यमानत्वं च न तस्य कार्यत्वेन, असति कारणे तदनुत्पादात्[1], असति च तदयोगान्निर्हेतुकत्वापत्तेः[2]। नापि कारणत्वेन; कार्यस्याप्यप्राप्य निवृत्तस्य निष्पाद्यकान्तर्वत्तदनुपपत्तेः। निरूपितं चैतत् सविस्तरमिति। पदार्थः कथ्यते—तत् हेयादितत्त्वम्। असाध्यं कस्यचिदप्यकार्यम् असाधनम् अकारणं च प्रतिसमयविलक्षणासिद्धिप्रह-दयोक्तनीत्याऽनुपपत्तेः। अन्यथारूपत्वे तदुपपत्तिरिति चेत्; इष्टादेतदेवं यद्यन्यथावादी सुगतः, न चैवम्। एतदेवोक्तम्—'अनात्मज्ञम्' इति। 'आत्मा' इत्यन्वय एवोच्यते अतति गच्छति तांस्तान् पर्यायानित्यात्मेति व्युत्पादनात्। तत्र जानाति नोपैति इत्यनात्मज्ञः सुगतस्तं तस्येत्यर्थः। धिक्-शब्देन योगे षष्ठीविषय एव द्वितीयाविधानात्। तदयमर्थः—यतस्तदनात्मज्ञस्य सम्बन्धि तस्माद् असाध्यमसाधनम् अतः धिक् कुत्सनमनात्मज्ञस्य तस्य वा। यदि वा, तदसाध्यं साधयितुमशक्यम्। कुत एतत्? असाधनम् अविद्यमानप्रमाणं यत इति। एतदपि कस्मात्? 'अनात्मज्ञम्' इति। आत्मा जीवः स चासौ ज्ञश्च जैनोपगतो न यौगकल्पितः आत्मज्ञः[3] स न विद्यते यस्य सोऽयम् अनात्मज्ञो बुद्ध एव तस्य सम्बन्धी यत इति।

ज्ञानमेव हि तस्य स्यात् साधनं तच्च नास्ति।
ज्ञप्त्यभावे नरेऽस्तीति पूर्वमेतन्निवेदितम् ॥१६१२॥
अज्ञातप्रमाणत्वादकार्यत्वादितोऽप्यसत्।
कथं हेयादिकं तत्त्वं बुद्धो वक्तुं प्रवर्तताम्? ॥१६१३॥
तस्मादयमसद्वादैर्भोलिशान्[4] विप्रलम्भयन्।
धिक्कर्तव्यः कथं नाम न भवेन्न्यायवेदिनाम् ॥१६१४॥

पुनरप्यत्रैवोपचयमाह—

सर्वथाऽसदुपादेयं हेयं सत् [तदकारणम्]। इति।

सर्वथा सर्वेण सकलरागादिक्लेशप्रकारेणेव परिशुद्धज्ञानरूपेणापि असत् अविद्यमानं निरोधसत्यम्। उपादेयं पुरुषार्थबुद्ध्या परिग्राह्यम् 'धिगनात्मज्ञम्' इति सम्बन्धः। कुतो धिक्कार इति चेत्? अनात्मज्ञत्वादेव। आत्मेति निरोधसत्यस्य स्वभावस्तस्य ज्ञानं बुद्धिः स न विद्यते यस्मिन् तद् अनात्मज्ञं तत्सत्यमेव यत एवं ततो धिगिति। तथा हि—निरुद्धसकलाकारं निर्वाणं न तावत् प्रत्यक्षतः प्रतिपत्तव्यं प्रतिबन्धाभावात्। न हि तस्य तत्कार्यत्वम्; नीरूपस्याकारणत्वात्, अन्यथा नीरूपत्वायोगात्। नापि तत्स्वभावत्वम्, स्वयं नीरूपत्वप्रसङ्गात्। न च नीरूपादेव तस्य परिज्ञान-कल्पनं विज्ञानकल्पनावैफल्योपनिपातात्। पुनरन्यतः प्रत्यक्षात् तत्परिज्ञानकल्पनायां प्रकृतपर्यनुयोगानतिवृत्तेः अनवस्थादोषविषमविषधरव्यापारप्रसरस्य च परिहर्तुमशक्यत्वात्। न चाप्रतिबद्धादेव ततस्तत्परिज्ञानम्, अनभ्युपगमात्[5], प्रतिबन्धान्तरस्य च[6]। तत्र प्रत्यक्षस्य तज्ज्ञानत्वम्।

१ कार्योत्पादानुपगमात्। २ कार्योत्पादायोगात्। ३ अज्ञान्। "निशान्त्रे च याम्निशः। इत्यमरः"–ज्ञा० टि०। ४ भिक्षवे–आ०, च०, प०। ५ "अनभ्युपगमादिति सम्बन्धः।"–ज्ञा० टि०। ६ निर्वाणविषयकज्ञानत्वम्।

नाप्यनुमानस्य; प्रत्यक्षाभावे तस्य तत्पूर्वकत्वेनाप्रवृत्तेः। लिङ्गस्य च तत्कार्यस्य तत्स्वभावस्य च विचारासहत्वेनाव्यवस्थितेः। ततो युक्तं तत्सत्यस्य अनात्मज्ञत्वम्, अतश्च तदुपादेयं धिगेव प्रमाणपथाऽतिवर्तिनो वस्तुवृत्तेनानुपादेयत्वात्। तथा सत् प्रशस्तं परिशुद्धज्ञानस्वभावं बुद्धस्य "प्रभास्वरमिदं चित्तम्" [ प्र० वा०-१।२१० ] इति वचनात्। तत् हेयं नैरात्म्यभावनापरिपाकबलेन परित्याज्यमित्यपि धिगेव, प्रशस्तस्य परित्यागानुपपत्तेः निर्वाणवत्। कथं वा तस्य तत्परित्यागे परात्मपरिज्ञानं यतः तदुपतापपरिहारपरवशतया तदुपायाभियोगमात्मसात्कुर्वीत नीरूपत्वेन तदनुपपत्तेः। एतदेवोक्तम्–'अनात्मज्ञम्' इति। आत्मा विनेयसन्तानस्तस्य ज्ञा बुद्धिस्तस्या अभावेऽनात्मज्ञम्, अर्थाभावेऽव्ययीभावात्। एतदुक्तं भवति-सतोऽपि स्वभावस्य परित्यागे तस्य परपरिज्ञानं न भवेत् अतस्तस्य हेयत्वं निन्दितमिति। नास्त्येव तस्य तत्परित्यागः "तिष्ठन्त्येव पराधीना येषां तु महती कृपा।" [ प्र० वा० १।२०१ ] इति[3] वचनादिति चेत्; कथं पुनर्नैरात्म्यभावनापरिपाके तत्कारणे सति तदभावः खड्गादेरपि ततस्तदभावप्रसङ्गात् ? अथ तत्परिपाकोऽपि कृपासम्पर्कविकल एव तद्धेतुः स खड्गादेरेव न महामुनेः, तस्य परार्थपरतया महाकृपालुत्वादिति चेत्; खड्गादेः[5] कस्मादकृपालुत्वम् ? परार्थवृत्तेरभावादिति चेत्; अस्तु नाम तस्य परत्राकृपालुत्वमात्मनि तु भवत्येव स्वार्थवृत्तेरवश्यम्भावात्, अन्यथा निर्वाणायोपक्रमानुपपत्तेः। अथ तस्य निर्वाणेनैवार्थित्वं नावस्थानेनेति। कुत एतत् ? तस्य निर्दोषत्वात् समानमिदमनव (मन) स्थानेऽपि, तस्यापि सकलमलविकलप्रभास्वरचित्तरूपत्वेन अभ्युपगमात्। अथ तच्चित्तेनावस्थितेनापि न किञ्चित् फलमिति न तत्रार्थित्वं तस्य; तर्हि तन्नाशेऽपि न भवेत् ततोऽपि कस्यचित् फलस्याभावात्, प्रत्युत तदेव मुमुक्षूणां फलं यत् सकलक्लेशपरिशुद्धज्ञानरूपतयाऽवस्थानम्, तच्चेत् कुतश्चित् सम्पद्येत किमन्येन ? फलेऽपि फलान्तरप्रतीक्षायामनवस्थापत्तेः। ततो युक्तं तत्रैव तस्यार्थित्वम्। अथ सत्यपि तत्र तस्यार्थित्वे न तस्यावस्थानं तदपरित्यागे तत्परिमिश्रक्लेशापरित्यागासम्भवात् अन्नापरित्यागे तत्परिमिश्रविषपरित्यागासम्भववदिति चेत्; न; तथा तायागतस्य चित्तस्यापि परित्यागप्रसङ्गात्। अथास्ति कश्चित् तस्योपायो यतोऽवस्थितेऽपि चित्ते तत्क्लेशपरित्यागः तस्य भवेत्; स तर्हि खड्गादेरपि[10] तेन वक्तव्यो येन न तच्चित्तमप्यवस्थितमेव परिगलितनिखिलक्लेशाभयपरिनिर्वाणपदं प्राप्नुयात्। एवं हि तेनात्मनस्तायित्वम्[11] सुस्पष्टं प्रतिष्ठापितं भवति स्वयं परिदृष्टमार्गोपदेशस्यैव तत्त्वात्, "तायः स्वदृष्टमार्गोक्तिः" [ प्र० वा० १।१४७ ] इति वचनात्। ततो यदि कृपामाहात्म्यात् अवस्थानं बुद्धचित्तस्य खड्गादिचित्तस्यापि स्यात्। न चेत्; इतरस्यापि न स्यादित्युपपन्नमुक्तम्–'हेयं सत्' इति। यदि वा, सत् विद्यमानं संसारिचित्तं हेयं धिगिति व्याख्येयम्, तस्य सत्त्वासिद्धेः, सत एव हेयत्वो-

१ कृत्सत्त्वस्य प०। २ जातु-आ०, ब, प०। ३ "निर्वाणेऽपि परे प्राप्ते कृपार्द्रीकृतचेतसः"। इति पूर्वार्धम्। ता० टि०। ४ वचनादेवेति प०। ५ -देर्न क-आ०, ब०, प०। ६ निर्वाणस्य। ७ अवस्थानपरित्यागाभावे। ८ तथाग आ, ब०, प०। ९ तच्चित्तस्यो -आ०, ब०, प०। १० -पित्तो न आ०, ब०, प०। ११ "प्रमाणभूताय जगद्धितैषिणे प्रणम्य शास्त्रे सुगताय तायिने।" -ता० टि०।

पपत्तेरिति मन्यते । तदसत्त्वे निमित्तमाह–'तदकारणम्' इति । तत् उक्तरूपं चित्तम् **अकारणम्** अपूर्वमुत्तरस्याजनकम्, अन्यथा चरमक्षणेऽपि स्यादिति निर्वाणाभाव इति भावः । तदानीं विजातीयस्यैव योगिज्ञानादेस्तत्कारणं न सजातीयोत्तरचित्तस्य तदयमदोष इति चेत्; कथमिदानीं परचैतन्यप्रतिपत्तिः ? शक्यं हि वक्तुम्–अतीतजन्मान्तिमचित्तं विजातीयमेव प्राणापानादिकं सजातीयोत्तरजनकं जनयित्वा प्रतिनिवृत्तं न सजातीयं चित्तं चरमक्षणवत् । ततो न प्राणादेः परशरीरे निश्चितात् तत्प्रतिपत्तिः, व्यभिचारशङ्कायां तदनुपपत्तेरिति । तथा चेत्; कथं सुगतभाविनः[2] पुरुषस्य परदुःखपरिज्ञानं यतस्तदक्षमतया प्रेरितस्तत्परिहारोपायाभियोगी ■ भवेदित्यसङ्गतमिदमवलोकयामः–

"निष्पन्नकरुणोत्कर्षः परदुःखात्प्रेरितः ।
दयावान् दुःखहानार्थमुपायेष्वभियुज्यते ॥" [ प्र०वा० १।१३३ ] इति ।

ततो यथा सजातीयं जनयत एव परचित्तस्य विजातीयजनकत्वं तथा चरमचित्तस्यापीति न सम्भवत्येव चित्तोच्छेदलक्षणं निर्वाणम् । तत्सम्भवे वा तच्चित्तमकारणमेव सजातीयवद्विजातीयस्यापीत्युपगतं तस्यावस्तुत्वमर्थक्रियाविरहात्, तथा तत्पूर्वस्यापि, अवस्तुनोऽर्थक्रियारूपत्वायोगेन तस्यापि तद्विरहाविशेषात्, तथा तत्पूर्वस्यापीत्यशेषस्यापि चित्तप्रबन्धस्य क्वचिदप्यनुपयोगात् उपपन्नमुक्तम्–'तदकारणम्' इति । भवत्वकारणत्वादसन्नेव तत्प्रबन्ध इति चेत्; तर्हि नित्यसिद्धत्वान्निर्वाणस्य किं तदर्थेन तपश्चरणरागादिना प्रयत्नेन ? तदेवाह–

**तदर्थोऽयं प्रयासश्च [ इत्यहो सत्यव्यवस्थितिः ] ॥ ६ ॥**

तदर्थो नित्यसिद्धनिर्वाणार्थोऽयं परप्रसिद्धः **प्रयासस्तपश्चरणादिरूपः** 'च' इति समुच्चये । न केवलं पूर्वोक्तमेव किन्त्वयमपि धिगिति, सिद्धे[3] प्रयासवैफल्यादिति धिक्कर्तुरभिप्रायः ।

चित्तप्रबन्धाभावे च प्रयासश्चेतनात्मकः ।
कथं विधेत येन स्यान्मार्गसत्यव्यवस्थितिः ॥ १६१५ ॥

तदेवाह–'इत्यहो सत्यव्यवस्थितिः' इति । एवमुक्तन्यायेन सत्यस्य मार्गरूपस्य व्यवस्थितिरवस्थानम् अहो नैवेत्युपहसनपरेण अहोशब्देन दर्शयति । यदि वा, तच्चित्तसन्तानोच्छेदलक्षणं निर्वाणमकारणमहेतुकमभावरूपत्वेन अनपेक्षत्वात् तत्किं तदर्थेन नैरात्म्यभावनादिना प्रयासेन ? तदेव दर्शयति–'तदर्थोऽयं प्रयासश्च' इति । धिक्शब्दानुवृत्त्या, व्याख्यानं पूर्ववत् ।

स्यान्मतम्–न साक्षात् तत्सन्तानोपमर्दनेन प्रयासस्य तादर्थ्यमपि तु तत्सहायं पूर्वपूर्वचित्तमुत्तरोत्तरचित्तं सजातीयकार्यं प्रत्यसमर्थादिरूपं जनयति ततः चरमस्यात्यन्तासमर्थत्वेन ततः चित्तान्तरस्यानुपपत्तेः चरमप्रच्युतेश्च प्राच्यस्य स्वरसभङ्गुरत्वेन प्रलयात् प्रशान्तनिर्वाणोपपत्तेः पारम्पर्येणैव तस्य तादर्थ्यमिति; तदपि न साम्प्रतम्; विचारानङ्गत्वात् । तथा हि प्रयासोऽयमुच्छेद्यसन्तानवर्ती, तदन्यसन्तानवर्ती वा ? प्रथमविकल्पे स एव न सम्भवति; चरमस्यावस्तुत्वेन सन्तानावस्तुत्वे तद्वर्ति-

१ –ता तथ्य–आ०, ब०, प० । २ सुगतस्य" –चा० टि० । ३ –त्वं नि–प० ।
४– देः प्र–आ०, ब०, प० । ५ –परिहारप– आ०, ब०, प० । ६ –प्रप्रसूतेश्च आ०, ब०, प० ।

नश्वरस्याप्यवस्तुत्वात् तादृशस्य पारम्पर्येणापि तादर्थ्यानुपपत्तेः व्योमकुसुमादिवत् । चरमस्यापि वस्तुत्वे न निर्वाणं तस्यापि सत्त्वात्, अन्यथा वस्तुत्वायोगस्य निवेदितत्वात् । ततः

निर्वाणं चेत् प्रयासो न प्रयासश्चेन्न निर्वृतिः ।
निर्वाणं च प्रयासश्चेत्येतदन्योन्यपीडितम् ॥ १६१६ ॥
अत एवोपहासेन यन्निर्वाणसत्ययोः ।
तदित्यादिकया श्रुत्यादिवैर स्थितिरुच्यते (?) ॥ १६१७ ॥

भवतु तदन्यसन्तानवर्त्येव प्रयास इति चेत्, तत्सन्तानोऽपि न निर्वातुरन्यत्र, तद्वर्तिनः प्रयासात् तस्य निर्वाणानुपपत्तेरतिप्रसङ्गात् । निर्वातुरेवेति चेत्, न, तदनुच्छेदेऽपि निर्वाणायोगात् । तदुच्छेदोऽपि यद्यन्यसन्तानवर्तिनः प्रयासात् कथमनवस्थापरिहारः? तत्रापि प्रकृतप्रसङ्गानतिवृत्तेः । एतदेवोक्तम्—'इति' इत्यादिना । इति एवमपरापरसन्तानवर्तिप्रयासपरिकल्पनाप्रकारेण अहो नैव सत्यस्य प्रयासपरनाम्नो मार्गसत्यस्य व्यवस्थितिरनवस्थैव भवेदित्यर्थः । ततः स्थितमिदम्—

**सर्वथा सदुपादेयं हेयं सत्तद्कारणम् ।**
**तदर्थोऽयं प्रयासश्चेत्यहो सत्यव्यवस्थितिः ॥** इति ।

इदमेव श्लोकेर्विवरीतुमाह—

**करुणा स्वपरज्ञानसन्तानोच्छेदकारणम् ।**
**इति नः करुणा [ अत्यन्तं परदुःख न गोचरः ] ॥७॥** इति ।

सत्त्वदृष्टिनिषेधार्थी बुद्धस्याभिप्रायवृत्तिः करुणा । "तथाभूतसत्त्वग्रहपरित्यजनाय य आशयः स दया" [ प्र० वार्तिकाल० १।१९५ ] इत्यलङ्कारात् । यद्येवं कथं तस्य सर्वथा निष्कल्पविकल्पस्य तदाशयस्य विकल्पत्वात् । न ह्यमुमनेन त्याजयामीति परामर्शवतस्तस्याविकल्पत्वम् । न तस्यैव तद्रूपस्य संस्काररूपतयैव भावात् । "अक्षीणशक्तिसंस्कारो येषां तिष्ठन्ति तेऽनया" [ प्र० वा० १।२०० ] इति वचनात्, इत्यपि न युक्तम्, संस्कारस्य चेतनोपादानस्याचेतनत्वायोगात् । चेतनत्वेऽप्यविकल्पत्वे न ततः श्रेय कथनं तस्य विकल्पयोनित्वेनोपगमात् । ततश्च तत्कथनमभिमतं "दयाया ( दयया ) श्रेय आचष्टे" [ प्र० वा० १।२८४ ] इति वचनादिति चेत्, सत्यम्, अयमपि पारस्य पर्यनुयोगः । सा च करुणा स्वस्य योगी परस्य विनेयवर्गः तयोर्ज्ञानानि तेषां सन्तानास्तेषाम् उच्छेदोऽत्यन्तविनाशस्तस्य कारणमिति एवं नोऽस्माकं कृपालूनां करुणा कृपा वर्तत इति शेषः । भवति हि महापुरुषाणां मन्दप्रज्ञानवलोक्य कृपोत्पत्तिः । अस्ति च प्रज्ञामान्द्यं सौगतानां ते स्वपरसन्ताननिनाशिन्याः जिघांसाया एव करुणात्वेन प्रतिपत्तेः । करुणैव साक्षादसौ तथा सकलदुःखपरिक्षयरूपस्य तदुच्छेदस्य करणादिति चेत्, न, सकलसुखपरिक्षयरूपस्यापि तया तस्य करणात् । न च सुखमेव संसारे नास्ति तस्यापि दुःखवदनुभवात्, सदपि तद् दुःखमेव दुःखछिद्रया

१ यत्सन्निरा–आ०, ब०, प० । यतसन्य मार्गसत्यम् । २ दयातत्त्वम् । ३ 'तेऽनघा' प्र० वा० । ४ कथं तस्य आ०, ब०, प० । ५ कथनस्य । ६ 'दयया'–प्र० वा० ।

तित्वादिति चेत्; दुःखमपि सुखमेव स्यात् तच्छिद्रपाताविशेषात्। विवेकिनां नैवमभिप्रायस्तेषां सर्वत्र दुःखाभिनिवेशस्यैव भावात्, "सर्वं दुःखं विवेकिनः" [योगसू० २।१५] इति वचनादिति चेत्; विवेकस्तर्हि पापीयांस्तेन सर्वत्र तदभिनिवेशकरणादिति तस्यैव तयोच्छेदः कर्तव्यो न ज्ञानसन्तानस्य, तदुच्छेदे तस्य सर्वत्र सुखबुद्ध्यैवावस्थानोपपत्तेः। यदि च तदभिप्रायवशात् सर्वं दुःखम्; सर्वं सुखमेव किन्न स्यात्? वासीचन्दनकल्पानां सर्वत्रौदासीन्यरूपस्य सुखस्यैव भावात्। सुखं च तद्रूपमनुकूलवेदनीयत्वात् प्रसिद्धसुखवत्। ततो नाभिप्रायवशादपि सर्वं दुःखमेवेति शक्योपपादनं यतः तदुच्छेदकरणात् करुणैवेयमिति प्रतिपत्तिः। इदमेवाह–'अत्यन्तं परदुःखं न गोचरः' इति। परैः सौगतैः कल्पितं दुःखं न गोचरो न विषयः प्रमाणस्य। कीदृशम्? अत्यन्तम् अन्तमतिक्रान्तम्। अन्तशब्देन सुखमत्रोच्यते तस्य दुःखं प्रत्यन्तत्वोपपत्तेः, सर्वथा सुखविकलं दुःखमेव न तद्विषयः सुखस्यापि तद्विकलस्य तद्विषयप्रतिपत्तेरित्यर्थः। तथा च कस्यचित् सुभाषितम्–"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा" [उ० मेघदू० श्लो० ४६] इति। ततः सुखापहारकारणत्वादुपपन्नं तस्याजिघांसत्वम्। नैकान्ततस्तस्यास्तत्त्वं दुःखापहारकरणत्वेन करुणात्वस्यापि भावादिति चेत्; न; जिघांसाकरुणयोरेकत्वविरोधात् तमःप्रकाशवत्। व्यतिरेके च तयोः परित्याज्य एव सुगतेन जिघांसाभागस्तस्यान्यथा महाकारुणिकत्वव्यापत्तेः। तथा च कथं तत्करुणया ज्ञानसन्तानस्य निर्मूलोच्छेदः सुखभागिकस्य तस्यावस्थानोपपत्तेः। करुणयैव तस्याप्युच्छेदो दुःखभागिकस्याप्यन्यथा तदयोगात्, मृष्टभोजनादिसुखप्रतिषेधेन विना प्रत्यग्रप्रवृत्तज्वरादिदुःखनिषेधायोगवदिति चेत्; उपपन्नमेवैतत्; परहितप्रवृत्तानां यदि ज्वरादिविनिर्मुक्तपुरुषवद्विगलितनिखिलदुःखपर्यायैरपि कस्यचित् चित्तभागस्यावस्थानं प्रतिलभ्येत, अन्यथा मृत्युविधायिनो भिषज इव तदुच्छेदविधायिनोऽपि परहितत्वानुपपत्तेः। कथं वा करुणया तदुच्छेदः, तया दुःखप्रबलवृत्तिनिमित्तसत्त्वदर्शनप्रत्यनीकस्य नैरात्म्यभावनारूपस्योपायाभियोगस्योपसमर्पणात्। ततश्च परिस्फुटस्य तत्त्वज्ञानादेः प्रादुर्भावात्तेनापि तत्त्वदेशनया विनेयवर्गस्य मार्गप्रवर्तनादिति चेत्; ननु तत्त्वं नाम सत्यचतुष्टयमेव भवतामभिमतम्। तच्च न योगिप्रत्यक्षेण समसमयम्; तस्य तद्विषयत्वाभावप्रसङ्गात्, समसमयस्याकारणत्वात्, कारणस्यैव च विषयत्वोपगमात्। तस्यापि कारणत्वे समुदयमार्गयोरपि तथाविधयोरेव दुःखनिरोधहेतुत्वापत्ते. यदेव समुदयस्तदेव दुःखं यदेव मार्गस्तदेव निरोध इत्यसमञ्जसं प्राप्नुयात्। अथ तयोर्भिन्नसमययोरेव तत्कारणत्वं कथमिदानीं तच्चतुष्टयस्य योगिप्रत्यक्षेणापि समकालत्वम्? दुःखादेस्तत्त्वे समुदयादेस्तदसम्भवात्, तस्य तत्त्वे वा दुःखादेस्तदनुपपत्तेः। अथ तत्प्रत्यक्षं प्रत्यभिन्नकालवद्भिन्नकालमपि कारणमिष्यते; तन्न; क्रमवतः कारणादक्रमस्य कार्यस्यानुत्पत्तेः, अन्यथा कारणादप्यक्रमात् कार्यस्य क्रमवतः प्रसङ्गात् असङ्गतमिदं भवेत्–"नाक्रमात् क्रमिणो भावाः" [प्र० वा० १।४५] इति। तस्मादभिन्न-

१ सर्वत्र दु– आ०, ब०, प०। २ वासीचन्दन– आ०, ब०, प०। ३ –प्रामाण्यस्य आ०, ब०, प०। ४ सर्वदा ता०, ब०। ५ –त्वाद्दु– आ०, ब०, प०। ६ मात्रस्त– आ०, ब०, प०। ७ ज्ञानसन्तानस्य। ८ –दो दुःखभागिकस्याप्युच्छेदो दुःख– आ०, ब०, प०। ९ –ज्वरा– आ०, ब०, प०। १० –र वि– ता०। ११ समकालयोरेव। १२ –प्रका– आ०, ब०, प०।

नश्वरस्याप्यवस्तुत्वात् तादृशस्य पारम्पर्येणापि तादर्थ्यानुपपत्तेः व्योमकुसुमादिवत् । चरमस्यापि वस्तुत्वे न निर्वाणं तस्यापि सन्तानात्, अन्यथा वस्तुत्वायोगस्य निवेदितत्वात् । ततः ,

निर्वाणं चेत् प्रयासो न प्रयासश्चेन्न निर्वृतिः ।
निर्वाणं च प्रयासश्चेत्येतदन्योन्यपीडितम् ॥ १६१६ ॥
अत एवोपहासेन येन्ननिर्वाणसत्ययोः ।
तदित्यादिकृया शृत्यादिर्वैरं स्थितिरुच्यते ( ? ) ॥ १६१७ ॥

भवतु तदन्यसन्तानवर्त्येव प्रयास इति चेत् ; तत्सन्तानोऽपि न निर्वातुरन्यत्र, तद्वर्तिनः प्रयासात् तस्य निर्वाणानुपपत्तेरतिप्रसङ्गात् । निर्वात्रैवेति चेत्; न; तदनुच्छेदेऽपि निर्वाणायोगात् । तदुच्छेदोऽपि यद्यन्यसन्तानवर्तिनः प्रयासात् कथमनवस्थापरिहारः ? तत्रापि प्रकृतप्रसङ्गानतिवृत्तेः । एतदेवोक्तम्–'इति' इत्यादिना । इति एवमपरापरसन्तानवर्तिप्रयासपरिकल्पनाप्रकारेण अहो नैव सत्यस्य प्रयासापरनाम्नो मार्गसत्यस्य व्यवस्थितिरनवस्थैव भवेदित्यर्थः । ततः स्थितमिदम्–

**सर्वथा सदुपादेयं हेयं सत्तदकारणम् ।**
**तदर्थोऽयं प्रयासश्चेत्यहो सत्यव्यवस्थितिः ॥** इति ।

इदमेव श्लोकैर्विवरीतुमाह—

**करुणा स्वपरज्ञानसन्तानोच्छेदकारणम् ।**
**इति नः करुणा [ अत्यन्तं परदुःखं न गोचरः ] ॥७॥** इति ।

सत्त्वदृष्टिनिषेधार्थी बुद्धस्याभिप्रायवृत्तिः करुणा । "तथाभूतसत्त्वग्रहपरित्यजनाय य आशयः स दया" [ प्र० वार्तिकाल० १।१९५ ] इत्यलङ्कारात् । यद्येवं कथं तस्य सर्वथा विकल्पविकलत्वं तदाशयस्य विकल्पत्वात् । न ह्यमुमनेन त्याजयामीति परामर्शवतस्तस्याविकल्पत्वम् । न तस्यैवं तद्वत्त्वं[2] संस्काररूपतयैव भावात् । "अक्षीणशक्तिसंस्कारो येषां तिष्ठन्ति [3]तेऽनया" [ प्र० वा० १।२०० ] इति वचनात्; इत्यपि न युक्तम्; संस्कारस्य चेतनोपादानस्याचेतनत्वायोगात् । चेतनत्वेऽप्यविकल्पत्वे न ततः श्रेयःकथनं तस्य[4] विकल्पयोनित्वेनोपगमात् । ततश्च तत्कथनमभिमतं "दयाया[6] ( दयया ) श्रेय आचष्टे" [ प्र० वा० १।२८४ ] इति वचनादिति चेत्; सत्यम्; अयमपि परस्य पर्यनुयोगः । सा च करुणा स्वश्च योगी परश्च विनेयवर्गः तयोर्ज्ञानानि तेषां सन्तानास्तेषाम् उच्छेदोऽत्यन्तविनाशस्तस्य कारणमिति एवं नोऽस्माकं कृपालूनां करुणा कृपा वर्तत इति शेषः । भवति हि महापुरुषाणां मन्दप्रज्ञानवलोक्य कृपोत्पत्तिः । अस्ति च प्रज्ञामान्द्यं सौगतानां ते. स्वपरसन्तानविनाशिन्या जिघांसाया एव करुणात्वेन प्रतिपत्तेः । करुणैव साक्षादसौ तथा सकलदुःखपरिक्षयरूपस्य तदुच्छेदस्य करणादिति चेत्; न, सकलसुखपरिक्षयरूपस्यापि तया तस्य करणात् । न च सुखमेव संसारे नास्ति तस्यापि दुःखवदनुभवात्, सदपि तद् दुःखमेव दुःखच्छिद्रपा-

१ यचन्निर्वा–आ०, ब०, प० । यत्सत्यं मार्गसत्यम् । २ दयावत्त्वम् । ३ "तेऽनघाः" प्र० वा० । ४ कथं तस्य आ०, ब०, प० । ५ कथनस्य । ६ 'दयया'–प्र० वा० ।

तित्वादिति चेत्, दुःखमपि सुखमेव स्यात् तच्छिद्रपाताविशेषात्। विवेकिनां नैवमभिप्रायस्तेषां सर्वत्र दुःखाभिनिवेशस्यैव भावात्, "सर्वं दुःखं विवेकिनः" [योगसू० २।१५] इति वचनादिति चेत्, विवेकस्तर्हि पापीयान् तेन सर्वत्र तदभिनिवेशकरणादिति तस्यैव तयोच्छेदः कर्तव्यो न ज्ञानसन्तानस्य, तदुच्छेदे तस्य सर्वत्र सुखबुद्ध्यैवावस्थानोपपत्तेः। यदि च तदभिप्रायवशात् सर्वं दुःखम्, सर्वं सुखमेव किन्न स्यात्? वापीचन्दनकल्पानां सर्वत्रौदासीन्यरूपस्य सुखस्यैव भावात्। सुखं च तद्रूपमनुकूलवेदनीयत्वात् प्रसिद्धसुखवत्। ततो नाभिप्रायवशादपि सर्वं दुःखमेवेति शक्योपपादनं यतः तदुच्छेदकरणात् करुणैवेयमिति प्रतिपत्तिः। इदमेवाह–'अत्यन्तं परदुःखं न गोचरः' इति। परैः सौगतैः कल्पितं दुःखं न गोचरो न विषयः प्रमाणस्य। कीदृशम्? अत्यन्तम् अन्तमतिक्रान्तम्। अन्तशब्देन सुखमत्रोच्यते तस्य दुःखमत्यन्तत्वोपपत्तेः, सर्वथा सुखविकलं दुःखमेव न तद्विषयं सुखस्यापि तद्विकलस्य तद्विषयप्रतिपत्तेरित्यर्थः। तथा च कस्यचित् सुभाषितम्–"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा" [उ० मेघदू० श्लो० ४६] इति। तत सुखापहारकारणत्वादुपपन्नं तस्याजिघांसत्वम्। नैकान्ततस्तस्यास्तस्य दुःखापहारकरणत्वेन करुणात्वस्यापि भावादिति चेत्, न, जिघांसाकरुणयोरेकत्वविरोधात् तमःप्रकाशवत्। व्यतिरेके च तयोः परित्याज्य एव सुगतेन जिघांसाभागस्तस्यान्यथा महाकारुणिकत्वव्यापत्तेः। तथा च कथं तत्करुणया ज्ञानसन्तानस्य निर्मूलोच्छेदः सुखभागिकस्य तस्यावस्थानोपपत्तेः। करुणयैव तस्याप्युच्छेदो दुःखभागिकस्याप्यन्यथा तदयोगात्, मृष्टभोजनादिसुखप्रतिषेधेन विना मत्स्यमप्रवृत्तज्वरादिदुःखनिषेधायोगवदिति चेत्, उपपन्नमेवैतत्, परहितप्रवृत्तानां यदि ज्वरादिविनिर्मुक्तपुरुषवद्विगलितनिखिलदुःखशाखेऽपि कस्यचित् चित्तभागस्यावस्थानं प्रतिलभ्येत, अन्यथा मृत्युविधायिनो भिषज इव तदुच्छेदविधायिनोऽपि परहितत्वानुपपत्तेः। कथं वा करुणया तदुच्छेदः, तया दुःखप्रबलवृत्तिनिमित्तसत्त्वदर्शनप्रत्यनीकस्य नैरात्म्यभावनारूपस्योपायाभियोगस्योपसमर्पणात्। ततश्च परिस्फुटस्य तत्त्वज्ञानादेः प्रादुर्भावात्तेनापि तत्त्वदेशनया विनेयवर्गस्य मार्गप्रवर्तनादिति चेत्, ननु तत्त्वं नाम सत्यचतुष्टयमेव भवतामभिमतम्। तच्च ■ योगिप्रत्यक्षेण समसमयम्, तस्य तद्विषयत्वाभावप्रसङ्गात्, समसमयस्याकारणत्वात्, कारणस्यैव च विषयत्वोपगमात्। तस्यापि कारणत्वे समुदयमार्गयोरपि तथाविधयोरेव दुःखनिरोधहेतुत्वापत्तेः यदैव समुदयस्तदैव दुःखं यदेव मार्गस्तदैव निरोध इत्यसमञ्जसं प्राप्नुयात्। अथ तयोर्भिन्नसमययोरेव तत्कारणत्वं कथमिदानीं तच्चतुष्टयस्य योगिप्रत्यक्षेणापि समकालत्वम्? दुःखादेस्तत्त्वे समुदयादेस्तदसम्भवात्, तस्य तत्त्वे वा दुःखादेस्तदनुपपत्तेः। अथ तत्प्रत्यक्षमपरभिन्नकालवद्भिन्नकालमपि कारणमिष्यते, तन्न, क्रमवतः कारणादक्रमस्य कार्यस्यानुत्पत्तेः, अन्यथा कारणादप्यक्रमात् कार्यस्य क्रमवतः प्रसङ्गात् असङ्गतमिदं भवेत्–"नाक्रमात् क्रमिणो भावाः" [प्र० वा० १।४५] इति। तस्मादभिन्न-

१ सर्वत्र दु– आ०, ब०, प०। २ वापीचन्दन– आ०, ब०, प०। ३ –शामाण्यस्य आ०, ब०, प०। ४ सर्वदा ता०, ब०। ५ –तत्परदु–आ०, ब०, प०। ६ भावस्त– आ०, ब०, प०। ७ ज्ञानसन्तानस्य। ८ –दो दुःखभागिकस्याप्युच्छेदो दुःख– आ०, ब०, प०। ९ –त्पन्नु– आ०, ब०, प०। १० –त्र वि–ता०। ११ समकालयोरेव। १२ –मका– आ०, ब०, प०।

कालत्वमेव तस्य तेन भवितुमर्हतीति व्यवस्थितमेवासामञ्जस्यम् । भवतु तर्हि तच्चतुष्टयस्य परस्परतस्तत्प्रत्यक्षादपि भिन्नकालत्वम्, इत्यपि न युक्तम्, तन्नेत्यादिना दत्तोत्तरत्वात् । सत्यपि तादृशस्य तत्कारणत्वे नातदाकारस्य तस्य तद्विषयत्वम् आकारवादसमर्थनवैयर्थ्यापत्ते । तदाकारत्वे च—

अक्रमेणार्पयन्त्यर्था स्वाकारास्तत्र सक्रमान् ।
क्रमेण वाऽर्पयन्त्यन्या गतिरत्र न विद्यते ॥ १६१८ ॥
यद्यक्रमेण बाह्यस्याप्यक्रमस्येव विद्भवेत् ।
अकारानुगुणत्वेनैवार्थरूपप्रवेदनात् ॥ १६१९ ॥
आकारातिक्रमादर्थवित्तौ नीलाकृतेविद ।
पीताद्यशेषविज्ञानात् सर्वे सर्वज्ञतां व्रजेत् ॥ १६२० ॥
क्रमेणैवार्पणे तेषां बुद्धिरेका तदात्मिका ।
वहन्ती कालतो दैर्घ्यं भवेदात्मैव तत्त्वत ॥ १६२१ ॥
आत्मदृष्टिभयं त्यक्तुमुपाय तस्य तत्त्वत ।
तदेव पुनरभ्रेऽभूदहो दैवं दुरत्ययम् ॥ १६२२ ॥
बुद्धिरेका न चेत्तस्या प्रत्याकार विभेदत ।
तत्सर्वज्ञत्ववादाय देयस्तर्हि जलाञ्जलि ॥ १६२३ ॥

तथा हि—न तावदेकया बुद्ध्या तस्य सर्वज्ञत्वम्, तयेकाकारस्यैकस्यैव प्रतिपत्ते । नाप्यनेकया, पृथग्जनस्यापि तथा तत्प्रसङ्गात् । अपि च, अनेकत्वमप्रतिपद्यमानस्तया कथमसौ तैया सर्ववेदी भवेत् ? "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" [ ] इत्यस्य विरोधात् । प्रतिपद्यत एव तदपि तदर्पितक्रमवदनेकाकारया परया बुद्ध्येति चेत्, न, आत्मदृष्टिभयपरिहाराभावस्य पुनरपि प्राप्ते । अथ दोषस्तद्बुद्धेरपि प्रत्याकार भेदादिति चेत्, न तर्हि तयाऽप्येकया अनेकवेदनम्, उक्तान्यायात् । नाप्यनेकया, तत्परिज्ञानेऽपि पूर्वप्रसङ्गानतिवृत्तेरनवस्थाप्राप्ते । अथ बुद्धीनां नानात्व न परबुद्धिवेद्य यतोऽय प्रसङ्ग किन्तु तास्य एव स्वसंवेदनत्वात् तासामिति, तन्न, स्वसंवेदनस्य स्वरूपादन्यत्राप्रवृत्ते, तेन नानात्वप्रतिपत्ते दुरुपपादत्वात् । तत्र एदुरुत्तिसारूप्याभ्या तत्त्वज्ञान तथ गतस्य । नाप्यनुदुरुपक्रमतदाकार च, स्वसिद्धान्तपरित्यागदोषात् । किञ्च,

तस्याप्यनेकशक्तित्वे युगपत्क्रमतस्तथा ।
तद्वत्त्वसम्भवात् प्रासमात्मदृष्टिभय पुन ॥ १६२४ ॥
एकशक्ति यदि ज्ञान न तेनानेकवेदनम् ।
अन्यथा तादृशाद्धेतो कार्यं नाना न किं भवेत् ? ॥ ॥१६२५ ॥
तथा सति न नित्योऽर्थो दूषितो भवति त्वया ।
निराकारमपि ज्ञान तत्र तस्योपपत्तिमत् ॥ १६२६ ॥

१ –सादृशि– आ०, ब०, प० । २ उक्त या– आ०, ब०, प० । ३ –भ्यः स्वस– आ०, ब०, प० । ४ नानात्वप्रवृत्ते आ०, ब० प० ।

तदभावे न वैराग्यवत्सल्त्वादिसम्भवः।
इति तद्धेतुना नैव कृपा या शुक्तिमृच्छति ॥ १६२७ ॥

तदेवाह–

**तत्त्वज्ञानाद्यनुत्पादहेतुरुन्मार्ग एव सः। इति।**

**सः** करुणाभिधानो बुद्धस्याशय **उन्मार्ग एव** न मनागपि मार्ग इत्येवकारः। कुत एतत्? तत्त्वस्य दुःखादेर्ज्ञानमादिर्यस्य वैराग्यादेस्तस्यानुत्पादहेतुः तदुत्पादस्य पारम्पर्येण निमित्तं न भवति यत इति। तत्त्वज्ञानादेरेवोक्तयुक्तिवैश्वानरपरिप्लोषभस्मभावोपनीतत्वेनासम्भवादिति भावः।

स्यान्मतम्–न तत्त्वतः सुगतज्ञानस्य बहिर्विषयत्वं स्वसंवित्तिमात्रपर्यवसितत्वात्, अत एव न तेन कस्यचित् सन्तानस्य दर्शनं यतस्तद्दुःखपरिहरणाय तस्य प्रवृत्तिः कृपापारवश्येनावस्थितिर्वा सर्वस्मिन्नस्मिन्नर्थे प्रमाणाभावात् केवलं संवृतिविभ्रमादेव तत्र सर्वमिदमवकल्प्यते। तदुक्तम्–

**"न च पश्यति सन्तानं नापि कश्चित् प्रवर्तते।**
**न तिष्ठति प्रमाभावात् केवलं भवतो भ्रमः॥"** [ प्र० वार्तिकाल० १।१९८ ] इति।

तत्राह–'तत्त्वज्ञान' इत्यादि। स सुगत **उन्मार्ग एव** मार्गणीयो न भवत्येव। कुत एतत्? तत्त्वज्ञानस्य सोपायहेयोपादेयभावपरिज्ञानस्यादिपदात् तदभ्यासस्य चानुत्पादहेतुत्वात्। न हि विकल्पारोपितस्य तद्धेतुत्वं स्वप्नोपलब्धतथागतवत्। न च तदर्थं तस्य प्रेक्षावद्भिरन्वेषणम् तद्रूपत्वस्यापत्तेः। सत्यं न तेषां तदन्वेषणम्, तेषां प्रहीणात्मदर्शनानां दुःखस्यैवाभावात्, तन्निवृत्त्यर्थत्वाच्च तदन्वेषणस्य, तस्मान्मूढानामेव तदन्वेषणम्, अन्यथा तेषामात्मदर्शनप्रहाणासम्भवेन आत्मस्नेहदुःख-निबन्धनस्य दुःखप्रबन्धस्यानुच्छित्ते स्वस्थत्वेनावस्थानानुपपत्तेः। तदुक्तम्–

**"यावदात्मनि न प्रेम्णो हानिः तं[3] परित्यस्यति।**
**तावद्दुःखितमारोप्य न च स्वस्थोऽवतिष्ठते॥"** [ प्र० वा० १।१९३ ] इति।

ते तर्हि कुतो हरिहरादीनामन्यतमं तत्त्वज्ञानाय नान्वेषयन्ति? तेषामपि आत्मदर्शन-वत्त्वेन मूढत्वादिति चेत्; न; सुगतस्यापि विकल्पारोपितरूपत्वेन तदविशेषात्। परिशुद्धज्ञानप्रबन्ध-रूपत्वान्न तदारोपितत्वं तस्येति चेत्; न; तत्प्रबन्धस्यैव पूर्वापरात्मनो विचारासहत्वस्य निवेदितत्वात्। ततः तस्यापि तदारोपितत्वेन मूढतया तत्त्वज्ञानाद्यनुत्पादहेतुत्वाविशेषेण ईश्वरादिवदन्वेषणीयत्वानु-पपत्तेः उपपन्नमुक्तम्–'उन्मार्ग एव सः' इति।

यत्पुनरेतत्[4]–**"यो हि बद्धो न तस्य मोक्षोऽस्ति तत्स्वभावत्वात्, मुक्तस्यापि न बन्धः सदा तस्य मुक्तस्वभावत्वात्, केवलं चित्तसन्तानस्य अपरिशुद्धस्य सतः सामग्री-विशेषतः परो भागो विशुद्ध उत्पद्यते।"** [ प्र० वार्तिकाल० १।१९० ] इति। तत्राह–

१–खकरणाय आ०, ब०, प०। २ क्षमामा–आ०, ब०, प०। ३ "स परित्यक्षि"–प्र० वा०। सम्प्रतिरस्यति आ०, ब०, प०। ४ बन्धस्तदा प०।

**मिथ्याविकल्पविज्ञानभावनापरिपाकतः ॥ ८ ॥**
**तत्त्वज्ञानमुदेतीति कुतस्तत्त्वविनिश्चयः ।** इति ।

क्षणक्षयनैरंश्यादिविषयमनुमानज्ञानं **मिथ्याविकल्पविज्ञानं** तस्यावस्तुसामान्यविषयतया मिथ्याविकल्पभावस्य भावात्, परिशुद्धज्ञानकारणतया परेण च तस्याभ्युपगमात् । तस्य **भावना** चेतसि परिमलनं तस्याः **परिपाकः** सामर्थ्यात् अतिशयगमनं ततः **तत्त्व**स्यार्यसत्यचतुष्टयस्य **ज्ञान**मखिलाविद्यातृष्णामद(मल)विकलम्–**उदेति** उत्पद्यते **इति** एवमस्य **तत्त्वस्य विनिश्चयो** निर्णयः **कुतो** न कुतश्चित् । तथाहि–न तावत् सुगतस्ततः तदुत्पत्तिमवैति; तेन मलिनभागेनेतरभागस्याग्रहणात्, तदाकारतया तस्यापि निर्मलत्वापत्तेः । पुनस्तस्याप्यन्येन तद्भागेन ग्रहणे स एव तत्प्रसङ्गः पुनरप्येवमित्यनादिपरिशुद्ध एव चित्तसन्तानः प्रसज्येत । तत इदमेव सूक्तम्–'**मुक्तस्यापि**'इत्यादि, एतत्तु दुरुक्तमेव '**केवलम्**'इत्यादि, स्वतोऽनादिशुद्धस्य सामग्रीनिरपेक्षत्वात् । तथा न निर्मलभागेनापि मलिनभागस्य ग्रहणम्; तस्यापि तदाकारतया मलिनतापत्तेः । तस्यापि पुनरन्येन तद्भागेन ग्रहणे स एव तत्प्रसङ्गः, पुनरप्येवमिति निरवधिरेवापरिशुद्धस्तत्रापद्येत । तदत्रापि '**यो हि**'इत्यादिकमेव सूक्तम् । '**केवलम्**'इत्यादिकं तु दुरुक्तमेव । निरवधित्वे मलबन्धस्य तत्प्रच्युतिहेतोः सामग्रीविशेषस्यैवासम्भवात् । न च मलबन्धतत्परिशुद्धिभ्यामपरामृष्टं ज्ञानान्तरं सम्भवति यतस्तदुभयपरिज्ञानम् । तदभावे च न तत्सम्बन्धस्य हेतुफलभावस्य प्रतिपत्तिः, सम्बन्धप्रतिपत्तेः सत्यामेव सम्बन्धिद्वयप्रतिपत्तावुपपत्तेः । "द्विष्ठसम्बन्धसंवित्तिः" [ प्र० वार्तिकाल० १।१ ] इत्यादेः स्वयमेवाभिधानात् । तन्न सुगतेन तस्य निश्चयः । नापि विनेयवर्गेण; तज्ज्ञानेनापि तन्मलिनभागवर्तिना तत्परिशुद्धभागस्य, तद्भागवर्तिना च तन्मलिनभागस्याप्रतिवेदनात् । क्रमभावितदुभयाकारैकज्ञानसम्भवे चासमसिद्धिदोषस्यापरिहारात् प्रतितद्भागं तज्ज्ञानभेदकल्पनायां तु कुतस्तज्ज्ञानमपि पौरस्त्यं –परिशुद्धिमदुत्पन्नम् ? स्वाकारमर्पयतस्तस्मादागतादेव तत्त्वज्ञानादिति चेत्; नेदानीमनुमानविकल्पात्मकमार्गाभियोगादेव परिशुद्धिमत्त्वं तत्त्वज्ञानस्य प्रकारान्तरादपि तद्भावात् । तथा च व्याहतमेतत्–

"उक्तो मार्गस्तदभ्यासादाश्रयः परिवर्तते ।" [ प्र०वा० १।२०७ ] इति ।

आश्रयस्याप्यविद्यातृष्णाधिकरणस्य चित्तसन्तानस्य परिवृत्तेः परिशुद्धिलक्षणायाः[2] तदभ्यासादन्यतोऽपि भावात् । भवतु तर्हि तदभ्यासादेव तज्ज्ञानमपि तथाविधमिति चेत्; कस्य तत्रापि तदभ्यासादुत्पत्ते निश्चयः ? न तस्यैव विनेयवर्गस्य; सुगतवद्दोषात् । नापि तद्वर्गान्तरस्य; 'नापि विनेयवर्गेण'इत्यादेस्तत्रापि प्रसङ्गादनवस्थोपनिपाताच्च । कुतश्चेदं मिथ्याज्ञानं यद्भावनापरिपाकात्तत्त्वज्ञानमुत्पद्यते ? पूर्वस्माद्विकल्पसंस्कारादेव, निर्विकल्पस्य तद्विजातीयत्वेन तदनुपादानत्वात् । तत्संस्कारस्यापि तत्पूर्वभाविनः तत एवोत्पत्तेः अनादित्वात् प्रबन्धस्येति चेत्; कुतस्तदनादित्वमवगन्तव्यम् ? प्रत्यक्षस्य तत्राप्रवृत्तेः । अनुमानादिति चेत्; न, लिङ्गाभावात् । सत्संस्कार एवोत्तरोत्तरो लिङ्गमिति चेत्, न; तस्य यथास्वं[3] कारणापेक्षयैव लिङ्गत्वात् न तदनादित्वापेक्षया । तदनादित्वापेक्षयाऽपि

१ यथापि आ०, ब०, प० । २ –णायां स–आ०, ब, प० । ३ स्वकारण–आ०, ब०, प० ।

तत्प्रबन्धस्यास्त्येव लिङ्गत्वम्, एकैकस्यैव तस्य तदभावादिति चेत्; न; एकैकव्यतिरेकेण प्रबन्धस्याभावात्। भावेऽपि कुतस्तस्योत्पत्तिः? प्रबन्धादेव प्राच्यात् तस्यापि तत एव प्राच्यात्, तत्प्रबन्धस्याप्यनादित्वादिति चेत्; न; तत्रापि 'कुतस्तदनादित्वम्' इत्यादेर्दोषादनवस्थाऽनुषङ्गाच्च। तत्र अनादिसंस्कारसम्भवः, तदपरिज्ञानात्। एतदेवाह–

**अनादिवासना न स्यात् [ त्रैलोक्यमविकल्पकम् ] ॥९॥** इति

**अनादिः** श्वासवादिरहिता **वासना** च विकल्पसंस्कारो **न स्यात्** न भवेत् तत्र प्रमाणाभावात्। तथा च कुतः सत्त्वदर्शनात्मा मिथ्याविकल्पो यत इदं निर्विषयं न भवेत्–

**"तस्मादनादिसन्तानतुल्यजातीयबीजिकाम्।**
**उत्खातमूलां कुरुत सत्त्वदृष्टिं मुमुक्षवः॥"** [ प्र० वा० १।२५८ ] इति।

कुतो वा सुगतभाविनः सन्तानस्य भूयोऽभ्याससहायतया निःशेषगुणदोषसाक्षात्करणपरिशुद्धज्ञानप्रादुर्भावकारी कश्चित् अनुमानात्माऽपि तद्विकल्पः? यत इदमपि निरालम्बनं न भवेत्–

**"बहुशो बहुधोपायं कालेन बहुनास्य च।**
**गच्छन्त्यभ्यस्यतस्तस्य गुणदोषाः प्रकाशताम्॥"** [ प्र० वा० १।१३८ ] इति।

एतदेवाह-'त्रैलोक्यमविकल्पकम्' इति। विकल्परहितमेव सकलं जगदित्यर्थः सत्यप्यनुमानविकल्पे कथं तदभ्यासपरिपाकेनात्मदर्शनस्योच्छेदः? कथं च न स्यात्? तद्दर्शनस्य प्रत्यक्षत्वेन प्रमाणत्वात्, प्रमाणस्य च प्रमाणान्तरेण प्रतिक्षेपायोगात्। ननु आत्मा पूर्वापरकालव्यापितया नित्यो भावविशेषः। तस्य च न प्रत्यक्षेण ग्रहणम्, तेन क्षणक्षीणविग्रहतया पूर्वापरकालावलोकनविकलशक्तिकेन तत्कालव्यापिनो नित्यस्य अशक्यप्रतिपत्तिकत्वात्, व्यापकप्रतिपत्तेः व्याप्यप्रतिपत्तिमन्तरेणानुपपत्तेरिति चेत्; कथं तादृशेन विकल्पेनापि तस्य ग्रहणम्? न हि तस्याप्यक्षणिकत्वं स्वमतव्याघातात्। सत्यम्, न तेनापि तस्य तद्ग्रहणम्, तत्प्रतिभासविकलस्यैव स्वतस्तस्य प्रतिवेदनात्, अन्यथा तत्स्वसंवेदनस्यापि तदाकारानुविद्धविषयत्वेन प्रत्यक्षत्वप्रसङ्गात्, केवलं विकल्पान्तराभिप्रायात् तेन तद्ग्रहणमुच्यत इति चेत्; न; विकल्पान्तरस्यातद्विषयत्वे[2] तदभिप्रायादपि तद्वचनानुपपत्तेः। तद्विषयत्वे [1] तत्रापि 'कथं तादृशेन' इत्यादेः दोषस्यानुषङ्गात् अनवस्थानदोषस्य च दुस्तरस्योपस्थानात्। ततो दूरं गत्वाऽपि तेन[3] तद्ग्रहणमङ्गीकर्तव्यम्, अन्यथा तदुच्छेदार्थस्य नैरात्म्यदर्शनाऽभियोगस्य वैयर्थ्यापत्तेः। तथा प्रत्यक्षेणापि। विशेषानवलोकनात् परापरप्रत्यक्षाणां वैयर्थ्यम् आदित एव ततस्तद्ग्रहणसिद्धेरिति चेत्; परापरविकल्पानामपि तत्किन्न भवेत्? तत्र लोकस्य भेदबुद्धेरभावात् तेषामेवैकत्वाध्यवसायविषयाणामात्मदृष्टित्वादिति चेत्; समानमिदं प्रत्यक्षेष्वपि, तेषामपि कथञ्चिदभेदस्य प्रतीतेः, तस्यैवात्मत्वोपगमात्। न चैवमपरापरतत्त्वाणां वैयर्थ्यम्; तथा-

१ –न्तराभिहितेन आ०, ब०, प०। २ –त्वेन तद्–आ०, ब०, प०। ३ विकल्पेन।
४ आत्मनित्यत्वग्रहणम्। ५ तद्ग्रहणमङ्गीकर्तव्यमिति सम्बन्धः। ६ कथञ्चिद्भेद–आ०, ब०, प०।

विघविकल्पहेतूनामपि तदापत्तेः । तेषां कथञ्चित् सार्थकत्वसमर्थनस्य इतरत्रापि[1] समानत्वात् । ततः प्रत्यक्षत्वादात्मदर्शनस्य न तद्विपरीतैरनुमानविकल्पैरुपपन्ना बाध[2]परिकल्पना । तदाह–

**निरुपद्रवभूतस्य बाधाऽयुक्ता विपर्ययैः ।** इति ।

परपरिकल्पितादुपद्रवादर्थक्रियावैकल्यादेः निष्क्रान्तो **निरुपद्रवः** कथञ्चिन्नित्य आत्मा तदुपद्रवस्यैकान्तनित्यत्व एव सम्भवात् [ तस्मिन् ] भूतं तद्गोचरत्वेन भावं प्रत्यक्षमन्यद्वा प्रमाणं **निरुपद्रवभूतं तस्य विपर्ययैः** क्षणिकत्वानित्यत्वादिरूपैः **अयुक्ता** अनुपपन्ना तदुच्छित्तिलक्षणा **बाधा** । तेनैव भूतार्थत्वेन तेषां बाधोपपत्तेरिति भावः । किञ्च, तैस्तद्बाधने किमवशेषवत्[3] यन्निर्वाणव्यपदेशं प्रतिलभेत ? न तावत्तदभावमात्रम्; तत्र प्रमाणाभावस्य निवेदनात् । अत एव न परिशुद्धमपरापरज्ञानमपि; तत्राप्यस्मदादिप्रत्यक्षाऽप्रवृत्तेः, अनुमानस्य चावस्तुविषयत्वात् । योगिप्रत्यक्षस्य च योगिन्येव भावात् 'तेन योगी परापरतया तत्पश्यति अन्यथा वा' इति निश्चयासम्भवात् ।

"**तामवस्थां गतानां तु न विद्मः किं भविष्यति**" [ प्र० वार्तिकाल० १।२३४ ] इति स्वयमेवाभिधानात् । भवतु तर्हि संविदद्वैतमेवावशेषवत् "**यद्यद्वैते न तोषोऽस्ति मुक्त एवासि सर्वथा**" [ प्र० वार्तिकाल० १।३६ ] इत्यभिधानादिति चेत्, अत्राह–

**विच्छेदो वरमुच्छेदाद्विदस्तत्पक्षपाततः ॥१०॥** इति

विविधस्य भेदप्रपञ्चस्य छेदो विलयो विद्यानिबन्धनो यस्मिन्नसौ **विच्छेद** औपनिषद स एव वरमुत्कृष्टं निर्वाणम् । कुत तद्वरम् ? **उच्छेदात्**, छिद्यन्ते परस्परतो व्यतिरिच्यन्त इति छेदाः सदसन्नित्यानित्यहेतुफलभावादिविकल्पास्ते येनोल्लङ्घितास्तत् उच्छेदं परपरिकल्पितं सविकल्पकव्यावृत्तं संविदद्वैतं तत इति । कुतस्तस्य तस्मादुत्कृष्टत्वमिति चेत् ? **विदो** विद्वज्जनस्य **तस्मिन्** विच्छेदे **पक्षपातात्** सकलशोकपरावृत्तपरमानन्दरूपत्वेनाभिरुच्यत्वात् । तदुक्तम्–"**तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति**" [ बृहदा० ४।३।२२ ] "**आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन**" [ तैत्तिरी० २।९ ] इति । न चैवमुच्छेदस्य तादृप्यं यतस्तत्रापि तस्य स भवेत्, निखिलविकल्पव्यतिक्रमव्याघातात् । असति संसारे कथमसौ निर्वाणं तस्य तत्प्रच्युतिरूपत्वात् ? सति वा कथमद्वैतं संसारनिर्वाणभेदे द्वैतस्यैवोपपत्ते ? इत्यपि न चोद्यम्; अन्यत्रापि तुल्यत्वात् । 'तत्र[4] सावृत एव संसारस्तस्य च विचारासहत्वात् विद्याप्रत्यनीकत्वम्' इति समाधानमितरत्रापि न पक्षपातं परित्यजति, तत्रापि तस्याविद्याविलासरूपत्वेन विचारासहत्वाविशेषात् । कुत पुनस्तथाविधस्यात्मन प्रतिवेदनमिति चेत् ? संवेदनस्य कुत ? स्वत एव, "**स्वरूपस्य स्वतो गतिः**" [ प्र०वा० १।६ ] इति वचनादिति चेत्, आत्मनोऽपि तत एव । "**अत्रायं पुरुषः स्वयं ज्योतिर्भवति**" [ बृहदा० ४।३।९ ] इति श्रवणात् । यद्वा पुनरिदमलङ्कारे–"**प्रहीणसमुदयस्य न त एव रागादय इति समत्वादविरोधिनि सकलेनैव सत्त्वसङ्घातेन**" [ प्र० वार्तिकाल० १।१९४ ] इति । तत्र न

[1] प्रत्यक्षकारणेष्वपि । [2] बोद्धापत्ति–आ०, ब०, प० । [3] किमवशिष्टम् । [4] दोषोक्ति– आ०, ब०, प० । [5] विशीर्णो आ०, ब०, प०, । [6] संविदद्वैते । [7] –रागद्वत्वा–आ०, ब०, प० । [8] –समुदायस्य न सदैव आ०, ब०, प० । "प्रहीणसमुदयस्य न रागादय इति समताऽविरोधिता सकलेनैव सत्त्वसन्धानेन ।"–प्र० वार्तिकाल० १।१६४ ।

तावदद्वैतात्मनः सुगतस्य प्रहीणसमुदयस्य समत्वोपपत्ता तदा तद्विपयस्य संवृत्यापि तत्सद्भावस्याभावात्। चित्तसन्तानावस्थितिरूपस्य तस्य तेन समता तदवस्थितिश्च करुणयेति चेत्; तदाह–

यस्तावत्करुणावत्त्वात् तिष्ठत्येव हि चेतसाम्।
सन्तानः। इति।

स्वपदव्याख्यातमिदम्।

अत्र दूषणमाह–

स परोच्छेदान्न समत्वं प्रपद्यते ॥ ११ ॥ इति

तात्पर्यमत्र–स तैद्रूपत्वात् अवतिष्ठमानः परस्य विनेयवर्गस्योच्छेदायावतिष्ठते सन्ताननिरोधस्य निर्वाणस्य वचनात्, तस्य परिशुद्धपरापरज्ञानसंतानकरणाय वा तद्रूपस्यापि निःश्रेयसस्याभिधानात्? तत्राद्ये विकल्पे दूषणमिदम्–सः अवस्थायी सन्तानः समत्वं रागादिवैकल्यरूपं सर्वसत्त्वेषु न प्रपद्यते सति तस्मिन् परोच्छेदविरोधात्। अस्ति च तस्य तदुच्छेदः, ततो न स तत् प्रपद्यते इति। द्वितीयेऽपि विकल्पे न तावदसौ निरन्वय एव सन्तानः सदा हेतुफलभावाभावेन तत्प्रवाहरूपस्य तस्यैवानवस्थानात्। निरूपितं चैतत्पूर्वम्। तत्कथं तस्य शुद्धिरशुद्धिर्वा कल्प्यते असतस्तदनुपपत्तेः वन्ध्यापुत्रवत्। ततो यथेदमात्मनि नित्ये कथ्यते–

"दुःखोत्पादस्य हेतुत्वं बन्धो नित्यस्य तत्कुतः?
अदुःखोत्पादहेतुत्वं मोक्षो नित्यस्य तत्कुतः॥" [प्र० वा० १।२०४] इति।

तथेदमपि कथयितव्यम्–

संसारदुःखसम्बन्धः सन्तानस्यासतः कथम्?
मोक्षोऽपि तदसम्बन्धः सन्तानस्यासतः कथम्? ॥१६२८॥ इति।

ततः कथञ्चिदन्वय्येवासौ। तथा चेत्; आह–

तथा निरास्रवीभावः संसारान्मोक्ष उच्यते।
सन्तानस्यात्मनो वा [इति शब्दमात्रं तु भिद्यते] ॥१२॥ इति।

'यः सः' इत्यनुवर्तते। यः परेण संसारान्मोक्ष उच्यते। कस्य? सन्तानस्य। कथं कीदृशश्च? तथा तेन कथञ्चिदन्वयस्य कल्पनाप्रकारेण निरास्रवीभावः सकलमिथ्याज्ञानरागादि-

१ समवता आ०, ब०, प०। २–स्थितश्च ता०। ३ करुणावत्त्वात्। ४ "इह हि भगवता उपदिष्टब्रह्मचर्याणां तथागतशासनप्रतिपन्नानां धर्मानुधर्मप्रतिपत्तियुक्तानां पुद्गलानां द्विविधं निर्वाणमुपवर्णितं सोपधिशेषं निरुपधिशेषं च। तत्र निरवशेषस्याविद्यारागादिकस्य क्लेशगणस्य प्रहाणात् सोपधिशेषं निर्वाणमिष्यते। तत्रोपधीयतेऽस्मिन्नात्मस्नेह इत्युपधिः। उपधिशब्देन आत्मप्रज्ञप्तिनिमित्ताः पञ्चोपादानस्कन्धा उच्यन्ते। शिष्यत इति शेषः। उपधिरेव शेषः उपधिशेषः। सह उपधिशेषेण वर्तते इति सोपधिशेषम्। किं तन्निर्वाणम्। तच्च स्कन्धमात्रकमेव केवलं सत्कायदृष्ट्यादिक्लेशतस्कररहितमवशिष्यते निहताशेषचौरगणग्राममात्रावस्थानसाधर्म्येण, तत्सोपधिशेषं निर्वाणम्। यत्र तु निर्वाणे स्कन्धमात्रकमपि नास्ति तन्निरुपधिशेषं निर्वाणम्। निर्गत उपधिशेषोऽस्मिन्निति कृत्वा। निहताशेषचौरस्य ग्राममात्रस्यापि विनाशसाधर्म्येण।"– माध्यमिकवृ० पृ० ५१९। ५–दसत एवासौ आ०, ब०, प०।

क्लेशनिष्क्रमलक्षणः स आत्मनो वा आत्मन एव। वाशब्दस्य अवधारणार्थत्वात्। अन्वितज्ञान-प्रवाहस्यैव चात्मत्वेन स्याद्वादिभिरभीष्टत्वात्। ततो नात्मसन्तानयोरस्ति वस्तुतो भेदः, अन्यत्र 'सन्तान' इति 'आत्मा' इति शब्दमात्रभेदात्। तदेवाह–'इति शब्दमात्रं तु भिद्यते' इति वस्तुतोऽपि भेद एव, अन्वयस्य कल्पनोपरचितस्य सौगतैरभ्युपगमात्, स्याद्वादिभिश्च तात्त्विकस्येति चेत्; न; तात्त्विकस्याभावे कल्पनयापि तदनुपपत्तेः। न हि तयापि क्षणिकया तदुपरचनं परापरक्षणेषु तदवृत्तेः। तया तदग्रहणे च तदाधारतया अन्वयोपरचनानुपपत्ते। अस्त्येवान्वयस्तत्क्षणानामपि कल्पनारचित इति चेत्; न; अनवस्थाप्रसङ्गेनान्वयस्य दुरापत्वापत्ते। ततो यदुक्तम्–

"नैकाधिकरणत्वं चेत् प्रसक्तं बन्धमोक्षयोः।
संवृत्यैकाधिकरणभावो नैव निवार्यते" ॥ [ प्र० वार्तिकाल० १।२०३ ] इति।

तत्प्रतिविहितम्; कल्पनया तदेकत्वोपरचनानुपपत्तौ तया बन्धमोक्षयोरेकाधिकरणत्वस्य दुरुपपादत्वात्। ततो दूरमनुसृत्यापि कल्पनाक्षणानां तत्त्वत एवान्वयसम्भवे मुक्तेतरचित्तक्षणानामेव तथा स वक्तव्य इति कथं संवृत्या तयोस्तदधिकरणत्वं तत्त्वत एव भावात्। न मुक्तस्य तत्काले बन्धो विरोधात्, न च तदा तस्य किञ्चित् फलं तदभावस्यैव फलत्वात्। प्रागासीत् तस्य बन्ध इति चेत्; न; तस्यापि विनष्टत्वेन क्वचिदनुपयोगात्। कथं वा स्वयं परिशुद्धः सन्नपरिशुद्धेन प्राच्याकारेणैकत्वं निश्चिनुयात् अप्रेक्षावत्त्वापत्ते। तदुक्तम्–

"यो मुक्तस्तस्य बन्धो न तदा किं वा प्रयोजनम्।
प्राग्बन्धमासीदिति चेत्, तदपि क्वोपयुज्यताम् ॥
अप्रेक्षापूर्वकारी स्यात् प्रागेकत्वस्य निश्चयात्।
अयुक्तं चैतदिति चेदत्रदिष्यत एव हि ॥" [ प्र० वार्तिकाल० १।२०३ ] इति।

तत्र बन्धमोक्षयोरतत्त्वत एकाधिकरणत्वं संवृत्यैव तदुपपत्तेरिति चेत्; न; तत्त्वतस्तदभावे तयापि तदनुपपत्तेर्निवेदितत्वात्। न च पुरुषार्थवशाद्भावानां तथात्वमन्यथात्वं वा; स्वहेतुप्रकृतेरेव तदुपपत्ते, अन्यथा तादर्थ्यविकलो न कश्चिदपि भावो भवेत्। तदा व्याहृतमिदम्–

"सर्वं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु।" [ प्र० वा० १।३५ ] इति।

तद्विकलतयाऽनिष्टेऽपि वस्तुनि सत्येवैवंवचनोपपत्ते। भवतु नाम मुक्तस्य बन्धैकत्वं निश्चिन्वतोऽप्रेक्षावत्त्वं बद्धस्य तु नैवं तस्य मोक्षैकत्वनिश्चये सत्येव तदर्थस्य प्रयासस्य प्रेक्षापूर्वकत्वव्यवस्थि-

१ तदवृत्तेः आ०, ब०, प०। २ तदग्रहणे आ०, ब०, प०,। ३ –परवचना–आ०, ब०, प०। ४ कल्पनायां आ०, ब०, प०,। ५ विशिष्ट–आ०, ब०, प०,। ६ "पूर्वं ममासीदिति चेत्तदपि क्वोपयुज्यते"–प्र० वार्तिकाल०। ७–ति तदेतदि–आ०, ब०, प०। ८ वा स्वस्वहे–आ०, ब०, प०। ९ तथा व्या–आ०, ब०, प०। १० "दूरं पश्यतु"–प्र० वा० १।३५।

तेरन्यथाऽनुपपत्तेः । वक्ष्यते चैतत्–"अहं ममास्रवो बन्ध" इत्यादिना । ततस्तदेकत्वस्य फलवत्त्वात् सन्तानव्यवस्थाऽन्यथाऽनुपपत्त्या निश्चितत्वाच्च तात्त्विकमेव तयोरेकाधिकरणत्वमिति सूक्तम्–'आत्मन एव मोक्ष' इति, 'सन्तानात्मनो शब्दमात्रमेव भिद्यते' इति च ।

तदेवं सौगतमते 'सर्वथा सदुपादेयम्' इत्यादिना प्रागभिहितसत्यचतुष्टयाभावं 'करुणा'इत्यादिभि सविस्तरं व्याख्याय सुगतस्य तत्प्रवक्तृत्व प्रत्याख्यातम् । साम्प्रत साङ्ख्यादिमते वेदस्य तत्प्रचिरयासुराह–

> नित्यस्यापि सतः साक्षाद्दृश्यानुभवात्मनः ।[1]
> सुखादिर्विषयः शब्दाद्यविशेषो धियाऽन्यथा ॥१३॥
> प्रदर्श्यः [ पुनरस्यैव गुणयोगनिवृत्तितः । ] इति ।

'आत्मनः' इत्यनुवर्तते, तस्य नित्यसामान्यवचनेऽपि कूटस्थस्येति,[2] तस्यैव साङ्ख्यैरभ्युपगमात् । सुखादिः आदिशब्दात् दुःखादि विषयो वेद्य[3] इति 'साहसम्'इति वक्ष्यमाणेन सम्बन्ध । कुत पुनरेवं परमत साहसमिति चेत् ? असम्भवदर्थत्वात् । तथा हि–

> सत्त्वमेव न तस्यास्ति क्रमाक्रमविकल्पत ।
> अर्थक्रियाया यत्तत्र तद्व्यापिन्या न सम्भव ॥१६२९॥
> इति विस्तरत पूर्वमस्माभि सुविवेचितम् ।
> प्रमाणाभावतश्चास्य न सत्त्वमुपपत्तिमत् ॥१६३०॥
> प्रत्यक्षतो न तस्यास्ति कूटस्थस्य प्रवेदनम् ।
> तथाऽनुभववैकल्यात् क्षणक्षीणाणुबोधवत् ॥१६३१॥
> लिङ्गतोऽपि न तस्यास्ति प्रतीतिस्तदसम्भवात् ।
> संङ्घातस्य परार्थत्व तल्लिङ्गं प्राङ्निराकृतम् ॥१६३२॥

त्रिगुणादिविपर्ययस्तत्र लिङ्ग तस्य त्रिगुणादिनेव व्यवस्थापनात् । तथा हि-प्रधानस्य व्यक्तेरविभेदस्य[4] त्रिगुणादि तद्विपर्ययापेक्ष तथात्वात् प्रकाशादिवत् । यत्र तद्विपर्यय स पुरुषस्तस्य स्वतन्त्रस्याभावात् प्रकाशादिविपर्ययस्य तम प्रभृत्यधिष्ठानस्यैवोपलब्धे । तत्र त्रैगुण्यादेव सङ्घातसम्भवात्[5] तस्यैव च कर्तृत्वोपपत्ते, तद्विपर्ययात् पुरुषस्यासङ्घातत्वमकर्तृत्वं च, अविवेकविपर्ययाच्च रजस्तम कालुष्यविवेकात् कैवल्यम्, अचेतनविपर्ययाच्च द्रष्टृत्वम्, कुतश्च साक्षित्वं विषयविपर्ययाच्च, स्वपरवेद्यत्ववैधुर्यात् माध्यस्थ्यञ्च सिद्धमवबोद्धव्यम् । तदुक्तम्–

> "तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।
> कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥" [ सांख्यका० १९ ] इति

चेत्, तन्न, त्रिगुणादे तद्विपर्ययाविनाभावासम्भवात् प्रकृतिपुरुषसामान्यवत् । न हि तस्य

१ न्यायवि० श्लो० ४३७ । २ 'एकरूपतया तु य कालव्यापी स कूटस्थ–इत्यमर ।" ता० टि० । ३ वेद्यते इति आ०, ब०, प० । ४ सघातपरमार्थस्य आ०, ब०, प० । ५ व्यक्तिरपि से–आ०, ब०, प० । ६ महदाद्यभेदस्यैव प्रधानत्वात् । ७ –वात् सघातस्यैव आ०, ब०, प० ।

तद्विपर्ययाविनाभावः, अन्यथा ततस्तदुभयविलक्षणपदार्थान्तरप्रसिद्धेः 'व्यक्ताव्यक्तज्ञरूपमेव जगत्' इति स्वमतव्याघातिर्भवेत्। अस्ति च तयोः सामान्यं वस्तुशक्तिमत्त्वाद्युभयनिष्ठम्, अन्यथा तदन्यतरविलोपापत्तेः। तन्न त्रिगुणादिविपर्ययस्य तत्र लिङ्गत्वम्। नाप्यधिष्ठानस्य; अकर्तुरधिष्ठातृत्वानुपपत्तेः, कर्तृविशेषतयैव तस्य लोकप्रसिद्धत्वात्। तत इदमयुक्तम्–"चेतनाधिष्ठितं महदादि प्रवृत्तिमत् [अचेतनत्वात् वास्यादिवत्"] इति; हेतोरिष्टविपर्ययसाधनेन विरुद्धत्वात्, कर्तृविशेषस्यैवाधिष्ठातुरतः प्रत्यायनोपपत्तेः, साङ्ख्यैश्च तस्यानिष्टत्वात्। तन्नाधिष्ठानस्य लिङ्गत्वम्। नापि भोक्तृत्वस्य[3]; निपेत्स्यमानत्वात्। न च कैवल्यार्थस्य प्रवर्तनस्य[4]; तदतद्भावविकल्पानतिक्रमात्। न हि पुरुषगतमेव तदत्र लिङ्गम्; पुरुषासिद्धौ तस्यैवासिद्धेः। अन्यतस्तत्सिद्धावस्य वैफल्यात्। अत एव तत्सिद्धौ परस्पराश्रयापत्तेः–अतस्तत्सिद्ध्या लिङ्गसिद्धिः, अतश्च तत्सिद्धिरिति। बुद्धिगतमेव तत्तत्र लिङ्गमिति चेत्; तत्रापि कस्य तत्कैवल्यं यदर्थं प्रवर्तनम्? पुरुषस्येति चेत्; न; तत्कैवल्यस्य गुणविवेकरूपस्य नित्यत्वेनासाध्यत्वात्। अथासौ तद्विविक्तोऽपि अविविक्त इव भवति विवेकादर्शनात्, ततो विभ्रमनिवर्तनेन स्पष्टतामुपनीयमानं तत्कैवल्यं साध्यमिव भवतीति सङ्गतमेव तस्य तदर्थत्वमिति चेत्; कस्येदं विवेकादर्शनं यतो विभ्रमः? पुरुषस्येति चेत्; तद्यदि तस्य स्वरूपमेव; तर्हि तद्वदेव नित्यमिति कथं तन्निबन्धनस्य विभ्रमस्य निवर्तनम्? सति समर्थे हेतौ तत्प्रसवस्य कुतश्चिन्निवर्तनानुपपत्तेः। निवर्तकमपि समर्थमेवेति चेत्; तर्हि प्रवृत्तिनिवृत्त्योरक्रमप्रसङ्गः संसारकैवल्ययोरपीति महानयं परस्य सङ्कटप्रवेशः, तत्प्रसङ्गस्य विरोधविधुरितविग्रहस्य कुतश्चिदपि निश्चेतुमशक्यत्वात्। अथासमर्थमेव प्रवर्तकम्; तर्हि दैवादेव विभ्रमस्याभावात् कथं तन्निवर्तनार्थं (र्थत्वं) प्रवर्तनस्य? सामर्थ्यमेव तस्य निवर्तकेन प्रतिरुध्यत इति चेत्; न; पुरुषरूपस्यानित्यत्वापत्तेः, समर्थस्यासमर्थत्वेन भावात्, "तदतद्भावादनित्यत्वम्" [ ] इति न्यायात्। अथ तत्तस्य स्वरूपं न भवति बुद्धिस्वरूपत्वात्, केवलं विवेकादर्शनादेव, तदपि तस्यैव भवतीति चेत्; न; तत्रापि 'कस्येदम्' इत्यादेः प्रसङ्गादनवस्थानोपस्थानाच्च। तन्न विवेकादर्शनं पुरुषस्य। भवतु बुद्धिसत्त्वस्यैवेति चेत्; तस्यापि कुतस्तदापन्नम्? स्वयं जडत्वादिति चेत्; कथमिदानीं प्रवर्तनमपि, जडत्वस्य (जडस्य) स्वतस्तदसम्भवात्। सांसर्गिकाच्चैतन्यादिति चेत्; विवेकदर्शनमेव ततः किन्न स्यात्। तत्तत्र क्षमं न भवतीति प्रवर्तन एव क्षमत्वात् प्रवर्तनादूर्ध्वमपि कथं तस्य तत्क्षमत्वं यतः प्रवर्तनमर्थवद्भवेत्?, यमनियमाद्यनुष्ठानरूपात् प्रवर्तनादशुद्धिक्षये ज्ञानस्यातिशायनादिति चेत्; तेन, तज्ज्ञानस्यापवर्तने चितिकल्पनावैफल्यम्। अनपवर्तने कः प्रागवस्थातस्तस्य विशेषो यतः तदा विवेकदर्शनम्? चितिरेव तदा तेन तत्क्षमा क्रियते इति चेत्; न; तदनित्यत्वापत्तेः परदृग्गोचरत्वात्। ततो न सङ्गतमिदम्–"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः"

१ "एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तसंज्ञानि"–सांख्य० माठर० का० ९। २ "न ह्यन्तरेणाधिष्ठातारं भवति वस्तुजातम्। यथा इहलोके रथप्लवनसमर्थैरश्वैर्युक्तो रथः सारथिनाऽधिष्ठितः प्रवर्तते।"–सांख्यका० माठर० १७। ३ लिङ्गत्वमिति सम्बन्धः। ४ कैवल्यार्थं प्रवर्तनम्। ५ पुरुषः। ६ प्रवर्तमानस्य सामर्थ्यमेव कस्यचिन्निवर्तकेन प्रतिपद्यत इति आ०, ब०, प०। ७ कैवल्यम्। ८ चेति कल्प–आ०, ब०, प०। ९ "योगाङ्गानुष्ठानात्"–योगसू०।

[ योगसू० २।२८ ] इति । तत्र सांसर्गिकादपि चैतन्याचस्य तदर्थं प्रवर्तनमुपपन्नम्, सति तस्मिन् सर्वदा विवेकस्यैव दर्शनेनाविवेकविभ्रमस्याप्रसङ्गात्, अन्यथा पश्चादपि तद्दर्शनाभावस्य निवेदितत्वात् । भवतु अचेतनस्यैव तस्य तदर्थं प्रवर्तनं वत्सवृद्धिनिमित्तं क्षीरस्येव । तदुक्तम्–

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥" [ सांख्यका० ५७ ]

इति चेत्; तन्न सारम्; तत्प्रवर्तनेन चेतनाधिष्ठानसाधनस्य पूर्वोक्तस्य विरोधात् । तदर्थं तदधिष्ठितस्यैव प्रवृत्तिमभिधाय पुनरन्यथाऽपि तां ब्रुवाणो विस्मरणशील एवेश्वरकृष्ण इति सुनिश्चितं नश्चेतः । तत्र तदर्थस्य प्रवर्तनस्यापि तत्र लिङ्गत्वमिति न सुभाषितमेतत्–

"सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥" [ सांख्यका० १७ ] इति ।

तन्नानुमानं पुरुषे प्रमाणम् ।

नापि– "महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्नापरं किञ्चित् सा काष्ठा सा परा गतिः ॥" [ कठो० ३।११ ]

इत्यादिरागमः; तेनापि पुरुषस्वभावस्य तदस्तित्वज्ञानस्याकरणात्, तन्नित्यत्वस्याप्यपत्तेः । बुद्धेश्चाचेतनत्वेन तज्ज्ञानस्यानुपपत्तेश्चेति । सम्पर्कस्य च तत्र निषेत्स्यमानत्वात् । अन्यस्य च प्रमाणस्यानभ्युपगमादसन्नेव पुरुषः प्रमाणातिवर्तीति कथं तस्य सुखादिविषयो यतस्तन्मतं साहसमेव न भवेत् ? सतोऽपि तस्य स विषय इति साहसमेवेति न मन्वानेन इदमुक्तम्–'अपि साक्षात्' इति । साक्षात् अव्यतिरिक्तया तथा न वैशेषिकादिवत् व्यतिरिक्तया सतोऽपि विद्यमानस्यापि नित्यस्यात्मनः स विषय इति साहसमेव । तथा हि तदुन्मुखतास्वरूपं सर्वदेति सुखादिरपि सर्वदा भवेत्, असति तथा तस्मिन् तथा तदनुपपत्तेः, अन्यथा सकृदपि तदभाव एव तत्सम्भवात्र ततः सुखादिस्वरूपस्यापि व्यवस्थापनमिति निर्विषयमेवेदम्–"बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते" [ ] इति । न च तस्य क्रियत्वम्; "हेतुमदनित्यम्" [सांख्यका० १०] इति तदनित्यत्ववचनविरोधात् । न साक्षादात्मरूपं तदुन्मुखं[3] यतोऽयं प्रसङ्गः किन्तु तदभिमुखचिच्छायासङ्क्रमद्वारेणैव । तच्छायायाश्चात्मनोऽर्थान्तरत्वेनानित्यत्वादुपपन्नमेव अनित्यत्वं सुखादेरिति चेत्; न; तस्या अचिद्रूपत्वे कलशादिवत् तदुन्मुखत्वासम्भवात्, अन्यथा सुखादेरेव स्वात्मनि उन्मुखत्वसम्भवात् व्यर्थैव तत्सङ्क्रमकल्पना भवेत् । चिद्रूपत्वे च पुरुषत्वेनानित्यत्वानुपपत्तेः "चैतन्यं पुरुषस्य स्वरूपम्" [ योगभा० १।९ ] इति वचनात् । चिच्छायासङ्क्रमादेव तत्रापि तद्रूपत्वं न साक्षात्तदयमदोष इति चेत्; तदसारम्; यस्मात्–

तत्सङ्क्रमादचिद्रूपात्तत्र चिद्रूपता कथम् ।
अन्यथा लोहितत्वं स्यात् स्फटिके पीतसङ्क्रमात् ॥ १६३३ ॥ ८३

---

१ अचेतनस्यैव आ०, ब०, प० । २ न तन्नासं प० । ३-मुखं य-प० ।

तत्सङ्क्रमेऽपि तद्रूपः परतत्सङ्क्रमात् यदि ।
परतत्सङ्क्रमोऽप्येवं विचारादनवस्थितिः ॥ १६३४ ॥
तत्र तद्द्वारतोऽप्यस्ति सुखादावुन्मुखं वपुः ।
आत्मनो येन तस्यासौ विषयः परिकल्प्यताम् ॥ १६३५ ॥
को वा तत्सङ्क्रमं तत्र सुखादौ विदधीत वः ।
आत्मैव चेत् कथं तस्याकर्तुस्तद्विधि[1]सम्भव ॥ १६३६ ॥
कर्तृप्रधानसंसर्गात् कर्तैवात्मेति चेदसत् ।
औपचारिकतः कर्तुर्वस्तुतत्सङ्क्रमस्थितेः ॥ १६३७ ॥
तत्सङ्क्रमोऽप्यवस्तवेव यदि तद्वशतः कथम् ।
पारमर्थ्ये प्रकल्प्येत पुंसि तत्त्वेन [2]संसृतिः ॥ १६३८ ॥
संसारोऽप्युपचाराच्चेन्मुक्तौ किन्न स कथ्यते ।
स[3]दाऽपि तत्संसर्गस्य नित्यव्यापिनि सम्भवात् ॥ १६३९ ॥
तत्संसर्गो न कर्तृत्वाद्युपचाराय चेत्तदा ।
पूर्वमप्यविशेषेण न स्यादेवं भवः कथम् ॥ १६४० ॥
उपचारेण कर्तृत्वादात्मा तत्सङ्क्रमावहः ।
यतस्तद्विषयत्वोक्तिः सुखादौ साहसं न व ॥ १६४१ ॥

इदमेव चेतसि कृत्वेदमुक्तम्–'अदृश्यानुभवात्मनः' इति । दृश्यस्य दर्शनविषयत्वेनाभिमतस्य सुखादेर्योऽनुभव साक्षादुपचारेण वा तस्यात्मा स्वभावो दृश्यानुभवात्मा स न विद्यते यस्येति । साहसान्तरं दर्शयितुमिदमुक्तम् । 'शब्दाद्यविशेषः' इति शब्द आदिर्यस्य रूपादेस्तस्मादचेतनत्वादिना धर्मेणाविद्यमानविशेष सुखादिरिति[4] साहसमिति पदयोजनम् । कथमिति चेत् ? स्वानुभवरूपतया तस्य संवेद्यमानस्याचेतनत्वशब्दत्वादेरनुपपत्तेः । चिच्छक्तिसम्पर्कादेव तस्य तथा संवेदनं न स्वत इति चेत्; न; तच्छक्तेरपि स्वानुभवाभावात् ।

माध्यस्थ्यप[5]देन तत्र स्वपरविषयत्वस्य प्रतिक्षेपात् । तथा च तत्र कस्यचित् व्याख्यानम्– "इह कश्चित् स्वसंवेद्यत्वाद् विषयो यथा बौद्धीयं विज्ञानम्, कश्चित् परवेद्यत्वात् यथा वैशेषिकीय आत्मा अस्मदन्तःकरणं वा, अयं तु नोभयथेति मध्यस्थः ।" [ ] इति; तत्रायमेव स्वानुभवो यत् परनिरपेक्षं प्रतिभासनम् न स्वतः स्वस्य यतो विषयत्वप्रसङ्ग इति, न; तस्य स्वापेक्षत्वे तत्प्रसङ्गस्य दुर्निवारत्वात् । निरपेक्षत्वे च व्यवच्छेद्याभावेन परिग्रहणवैयर्थ्यात् ।

भवतु तदुभयनिरपेक्षमेव तदिति चेत्; न; आत्मन्यसति तस्यैवाभावात् । सति चेत्; कथं निरपेक्षत्वं तद्भावाभावानुविधानस्यैव तदपेक्षालक्षणत्वात्, तदपेक्षप्रतिभासनस्यैव च बौद्धैरपि

१ तद्विदिसंभ- आ०, ब०, प० । २ संसृतिः आ०, ब०, प० । ३ तथापि आ०, ब०, प० । ४ सुखादेरिति आ०, ब, प० । ५ -स्थपदेव आ०, ब०, प० ।

स्वसंवेद्यत्वेनोपगमात्। तत्र तत्सम्पर्कात् सुखादेः स्वानुभवात्मत्वमुपपन्नम्। सत्यपि तच्छक्तेस्तद्रूपत्वे न तत्सम्पर्कादेव सुखादेरपि तद्रूपत्वं तच्छक्तेरपि सुखादिसम्पर्केण जडरूपत्वापत्तेः। नायं दोषः अविवेकख्यातिप्रादुर्भावाद् विषयसारूप्यस्य तत्रेष्टत्वादिति चेत्; तर्हीदं दुर्भगं भवेत्– "बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते"[ ] 'जडश्च' 'चेतयते' इति च व्याघातात्। न व्याघातः विभ्रमेतराकारयोर्युगपत्सम्भवात् सर्परज्जुवदिति चेत्; उपपन्नः सर्पाकारः सत्यप्याकारान्तरे तस्य प्रतिपत्रन्तराधीनत्वात्, नैवमत्र, तच्छक्तेरेव जडरूपतापत्तेः, तस्यां च चितिप्रच्युतेरावश्यकात्। नास्त्येव तत्र तदापत्तिः, केवलं तदापत्तिरिव भवतीति चेत्; तन्न; यस्मात्–

यदि तत्र न तद्रूपमिवार्थः कथमत्र ते ?।
यदि तत्रापि तद्रूपमिवार्थः कथमत्र ते ॥ १६४२ ॥

यदि वस्तुतस्तत्र तदापत्तिर्नास्ति कथम् इवप्रयोगस्तदर्थाभावात्? कथमिदानीं रज्जुशकले सर्प इवेति व्यवहार इति चेत्? न; सर्पविभ्रमदशायां तदभावात्। अविभ्रमदशायां [illegible] तद्भावो दैर्घ्यादेः सर्पसादृश्यस्य भावात्। तथा यदि तत्र तत्त्वतस्तदापत्तिः कथम् इवप्रयोगः? न हि तदेव तदिवेति भवति, तस्यैवाभावप्रसङ्गात्। यदा यद्भवेत् तत्तदा तदित्येवावस्थानात् न तदिवेति। तदभावे न तदिवेत्यपि सम्भवति, तस्य तदपेक्षत्वात्।

स्यान्मतम्–नास्त्येव वस्तुतस्तत्र तदापत्तिरपि तु विभ्रमादेव, सापि न तच्छक्तेर्बुद्धिधर्मत्वात्। बुद्धिरेव हि तत्र अविद्यमानामपि तदापत्तिमुपदर्शयति विभ्रमदोषात्, ततो न किञ्चित् तस्या बुद्ध्यादिसम्पर्कादुत्पद्यते, स्वस्यैव सर्वदा तच्छक्तिरिति; यद्येवं तच्छक्तिसम्पर्काद् बुद्ध्यादावपि न चितिरूपापत्तिरविशेषादिति कथं बुद्धेर्विभ्रमकल्पनम्? कथञ्चिदपि तत्र चिद्रूपासम्भवे कलशादिवत्तदनुपपत्तेः। उपपन्ना चितिसम्पर्काद् बुद्ध्यादेस्तदाकारापत्तिः परिणामित्वात् न चितेस्तत्सम्पर्केऽपि ताद्रूप्यापत्तिः कौटस्थ्येन विपर्ययादिति चेत्; अनुकूलमाचरसि, तथा सति वस्तुत एव बुद्धिसुखादेश्चेतनत्वव्यवस्थितेः तथापि परिणामात्। न हि तथापरिणतमन्यथेति शक्योपकल्पनम्, बुद्धिरवाद्यपेक्षयापि तत्कल्पनाप्रसङ्गेन गुणप्रतिष्ठाविलोपापत्तेः। न चैवं तद्व्यतिरिक्तात्मकल्पनमप्यर्थवत्, तस्य स्वहेतुप्रकृतेरेव तत्परिणामोपपत्तेः। तन्न सुखादेः शब्दाद्यविशेषत्वं चेतनेतररूपतया विशेषस्यैवोपपत्तेः।

यच्चेदं परस्य मतम्–सुखादिरप्यर्थान्तरबुद्ध्युपदर्शित एव पुरुषस्य विषयो न साक्षादिति, तद्दर्शनार्थमिदमुक्तम्–'धियाऽन्यया प्रदर्श्यः' इति। तत्रापि 'साहसम्' इत्यभिसम्बद्धव्यम्। कुत एतदिति चेत्? उक्तनीत्या सुखादेः स्वानुभवसिद्धौ तदनुभाविनः पुरुषस्य तदुपकरणस्य बोधस्य च व्यर्थस्यैव स्वसिद्धान्ताभिनिवेशपरवशतया प्रतिपादनात्। किञ्च,

बुद्धिं न चेतरः पश्येत् सुखादिं नैव तद्गतम्।
दर्पणं [illegible] ह्यपश्यन्तो मुखं पश्यन्ति तद्गतम् ॥ १६४३ ॥

१ "एतदेव स्वसंवेदनं यदन्यागोचरत्वे सति प्रकाशनं नाम।"–प्र० वार्तिकाल० ३।४६६।
२ चैतन्यरूपत्वे। ३ चेतनत्वम्। ४ दुर्भागं आ०, ब०, प०। ५ गुणिप्रति– आ०, ब०, प०।

बुद्ध्यन्तराद्दते तां च पश्यन् पश्येत् तथा विना ।
सुखादिकं तथा चासौ त्वत्सिद्धान्तो विरुद्ध्यते ॥ १६४४ ॥
"[1]आत्मनं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ १६४५ ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।" इति ।
बुद्धिसारथिनैवासौ यदि तामपि धावति ॥ १६४६ ॥
तत्सारथीनामानन्त्यमनवस्थानतो भवेत् ।
ततो न पुंसि भोगोऽयं कथमप्यवकल्प्यते ॥ १६४७ ॥
तदभावान्न कैवल्यं भोगप्रच्युतिलक्षणम् ॥
तदेतद्भोगकैवल्यमागमस्याभिजल्पतः ॥ १६४८ ॥
प्रामाण्यं साहसादेव न्यायान्नेत्याह शास्त्रकृत् ।

**[ प्रदर्श्यः ] पुनरस्यैव गुणयोगनिवृत्तितः ।**
**निर्वाणमाह वेदोऽयं प्रमाणमिति साहसम् ॥१४॥ इति ।**

**पुनरिति** वितर्कार्थम् **अस्यैव** कूटस्थस्य चेतनस्यात्मन एव नाचेतनस्य न क्षणिकचित्तप्रवाहस्य **निर्वाणम्,** उपलक्षणमिदं तेन संसारं च **आह** कथयति **वेदोऽयम्**"न[2] हि (ह) वै सशरीरस्य प्रियाप्रिययोरुपहतिरस्ति अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः ।" [ छान्दो० ८।१२।१ ] इत्यादि । कुतः स[3] ते तस्याह ? **गुणानां** सत्त्वादीनां **योगश्**चात्मना सम्बन्धो भोगोपकल्पनालक्षणो **निवृत्तिश्**च तेषामेव तत्कल्पनादुपरमः ताभ्यां ततः । स चागमः **प्रमाणमिति साहसम्** असम्भवदर्थाभिधायिनस्तस्य साहसादन्यत प्रामाण्यकल्पनानुपपत्तेः ।

अथवा **नित्यस्य** यौगपरिकल्पितस्यात्मनः । कीदृशस्य ? **अपि सतः** विद्यमानस्यापि वस्तुतस्तस्याविद्यमानत्वम् अपिशब्देनाभ्युपगमवाचिना द्योतयति । तथा तदभावश्च सत्त्वव्यापिकाया अर्थक्रियायाः क्रमयौगपद्यानुपपत्त्या तत्रासम्भवाच्च । कथं पुनः तदभावो यावता प्रत्यक्षमेव 'अहम्' इति प्रसिद्धोल्लेखं तत्र प्रमाणमिति चेत्; न, तत्र तद्व्यतिरिक्तस्याऽप्रतिभासनात् । न हि नित्यो व्यापी तद्व्यतिरिक्तश्च कश्चित् परपरिकल्पित आत्मा तत्रावभासते तथैवासम्प्रतिपत्तेः साङ्ख्यपरिकल्पितचिच्छायाधिष्ठानबुद्धिसत्त्ववत् । प्रतिभासनेऽपि कथं तत्सामानाधिकरण्यम् 'अहमात्मा' इति ? व्यतिरेके तदवलोकनात् घटतत्प्रत्यक्षवत् । तत्रापि समवायात्तदुपपत्तिरिति चेत्; न; तेनापि व्यतिरेकस्यानिराकरणात् । तन्निर्णयस्य तेन निराकरणमिति चेत्; आत्मन्यपि स न स्यात् तस्य व्यतिरेकात् । अव्यतिरेकाद् व्यतिरेके तदव्यतिरेकस्यानिष्टस्य प्रसङ्गात् । तस्मात् कथञ्चिदभेद एव सामानाधिकरण्यम् । भेदेऽपि प्रत्यासत्तिविशेषादुपपन्नमेव तत्, तत्कथं तत्र तदभाव इति चेत् ? न; 'द्रव्यत्वादिकं सामान्यविशेष, संयोगादि सम्बन्ध' इत्यादावभेदादेव तस्य प्रसिद्धेः न

१ कठो० ३।३।४।२ प्रग्रहमेव ता० । २ सति त- आ०, ब०, प० । ४ -द्दी भेदा- आ०, ब०, प० ।

तद्विशेषात्[1], तस्यै संयोगादिरूपस्य तत्रानभ्युपगमात्। कल्पितमेव तत्र सामानाधिकरण्यं तत्त्वत उभयरूपाभावात्, तस्य चोभयरूपापेक्षत्वादिति चेत्; न; द्रव्यत्वादावनुवृत्तव्यावृत्तप्रत्ययनिबन्धनतयोभयरूपसद्भावस्य परप्रसिद्धस्यैव 'सदसज्ज्ञानसंवाद'इत्यादि श्लोकव्याख्याने[3] निरूपितत्वात्। संयोगसमवाययोश्च परस्परविलक्षणयोरविलक्षणस्य तत्त्वत एव सम्बन्धरूपस्यै बाधात्। तदभावे न कस्यचित् कचिद्वस्तुतः सम्बन्ध इति तन्निबन्धनैः सकलोऽपि संसारादिव्यवहारो विलोपमापनीपद्येत। कल्पितत्वस्य च तस्योपगमे मतान्तरापत्तिः, ततो विलक्षणेतररूपतया वास्तवमेव तस्य द्वैरूप्यमिति कथं कल्पितत्वं तत्र सामानाधिकरण्यस्य विषयसद्भावात्? एवमपि कथं तस्याभेदे भेदरूपत्वमिति चेत्? न; तस्यैव प्रतीतेरन्यस्य स्वयमप्यनभ्युपगमात्। तद्वदात्माऽहंप्रत्यययोरपि तादूप्य एव सदिति सोपपत्तिकमत्यन्तव्यतिरेके तदनुपपत्तिप्रतिपादनम्। तस्मादहमिति प्रत्यक्षमात्मनि प्रमाणम्।

नाप्यनुमानम्; लिङ्गाभावात्। शब्दादिज्ञानमेव तत्र लिङ्गम्। प्रयोगश्चात्र तज्ज्ञानं कचिदाश्रितं गुणत्वात् रूपादिवत्। समवायिकारणपूर्वकं वा कार्यत्वात् तद्वदेवेति चेत्; न; ततोऽप्याश्रयमात्रादेरेव प्रसिद्धेः। तस्य शरीरादेरपि सम्भवात् कथं तद्विशेषस्यात्मनस्ततोऽनुमानम्? न शरीरादिस्तद्बुद्धेराश्रयः स्वयमज्ञत्वात्। तथा च प्रशस्तकरस्य वचनम्–"नासौ शरीरेन्द्रियवाङ्मनसामज्ञत्वात्" [प्रश० भा० पृ० ३०] इति। ततः पारिशेष्यादात्मैव तदाश्रय इति चेत्; न; आत्मनोऽपि तदविशेषात्। न हि तस्यापि स्वतो ज्ञत्वं ज्ञानसमवायकल्पनावैफल्यापत्तेः। तत्समवायात् ज्ञ एव स इति चेत्; न; परस्पराश्रयात्–ज्ञत्वे तत्समवायः, ततो ज्ञत्वमिति। स्वतो न तस्य ज्ञत्वं यतस्तत्समवायवैयर्थ्यम्, नाप्यज्ञत्वं यतो न तदाश्रयत्वम् अपि त्वनुभयरूपत्वमिति चेत्; न सारमेतत्; यतः–

अन्योऽन्यच्युतिरूपत्वमज्ञत्वज्ञत्वयोर्यदि।
एकाभावे कथन्न स्यादितरत्तत्र तात्त्विकम् ॥ १६४९ ॥
तद्रूपत्वं तयोर्नो चेत् यौगपद्यं प्रसक्तिमत्।
अज्ञस्यापि ततः प्राप्तं कायादेर्ज्ञप्तिकल्पनम् ॥ १६५० ॥
तत्कथं पारिशेष्येण बुद्धेरात्मैव संश्रयः।
कायादिनाऽपराद्धं किं स तथा येन नेष्यते ॥ १६५१ ॥

शरीरस्य तदाश्रयत्वेन प्रतिसन्धानं परस्परविलक्षणपरापरपरिणामभेदेन, तस्यापि तद्व्यतिरिक्ततया भिद्यमानस्यानवस्थानात्, अनवस्थितस्य च प्रतिसन्धायित्वमुपपन्नम्, भेदवतः परापरशरीरसम्बन्धिनो दर्शनस्मरणादेस्तदपरात्मान्तरवच्चा(वत्तद)नुपपत्तेः, ततस्तदुपलभ्यमानमवस्थायिनमेव बुद्धेराश्रयमवकल्पयति, स चाऽऽत्मैव, न शरीरम्। नापि चक्षुरादिकमिन्द्रियम्; तस्यापि शरीरवदेव परापरतया भेदवत्त्वेनावस्थायित्वासम्भवात्। मनसोऽवस्थायित्वेऽपि करणत्वेन बुद्धिं प्रत्याश्रयत्वानुपपत्तेरिति चेत्; किमिदं प्रतिसन्धानं नाम यतस्तद[10] [धिष्ठान]स्यात्मनः कल्पनम्? स एवायमि-

१ –षोक्तस्य आ०, ब०, प०। २ प्रत्यासत्तिविशेषस्य। ३ पृ० ११६। ४–स्य भावे आ०, ब०, प०। ५ –नः संसा–आ०, ब०, प०। ६ शब्दादिज्ञानम्। ७ "न शरीरेन्द्रियमनसामज्ञत्वात्"–प्रश० भा०। ८ विषमा–आ०, ब०, प०। ९ –स्मत्त्वा–ता०। १० तदस्यात्मावक–ता०।

सुखोल्लेखद्वयाधिष्ठानं पूर्वाऽपरैकत्वज्ञानमिति चेत्; कुतस्तस्य तदधिष्ठानत्वम् ? तस्य तत्र समवायादिति चेत्; तदुभयमपि यदि जडमेव न तद्बलेन पूर्वापरपरामर्शो रूपादिनाऽपि तदापत्तेः । अजडत्वे तु ज्ञानद्वयमेव तदिति[1] कथं तस्य ज्ञाने समवायः, गुणस्य निर्गुणत्वेनैवोपगमात् ? तन्न समवायात्तस्य तत्त्वम् । अभेदादिति चेत्; न; तयोरुल्लेखद्वयादभेदे तन्नानात्वं[2] स्यात्, अन्वयस्य च तस्मादभेदे तद्वदेक[ त्व ]स्य चापत्तेः कथमुभयोल्लेखिविज्ञानसम्भवः ? कथञ्चिद्भेदस्य च स्याद्वादन्यायविद्वेषिभिरनभ्युपगमात् । अभ्युपगमे युगपदिव क्रमेणापि परापरोल्लेखविवर्ताधिष्ठानैकज्ञानसम्भवस्याविरोधात् तदात्मैवात्माऽवस्थायीति तस्यैव प्रतिसन्धानोपपत्तेः तदन्यात्मकल्पनं विफलकल्पनतया परामर्शवैकल्यं परस्यावकल्पयति । तन्न प्रतिसन्धानबलादपि शरीरादेरन्य एव बुद्धिलिङ्गादनुमातव्य इति सिद्ध्यति तद्बलस्यैवासम्भवात् । तन्नानुमानमपि तत्र प्रमाणमिति तस्याऽभ्युपगमादेव सत्त्वमिति सूक्तम्–'अपि सतः' इति । कथं सतः ? साक्षात् स्वत एव, अर्थान्तरसत्तासम्बन्धात् सत्त्वे अतिप्रसङ्गादेर्दोषस्य प्रथमप्रस्तावे निवेदितत्वात् । तस्य च सुखादिविषय इति साहसम् । कुत एतत् ? तस्य स्वतोऽचेतनत्वादर्थान्तरस्य च ज्ञानस्य तत्रासम्भवात् । न हि तत्र व्याप्त्या तस्य वृत्तिः; व्याप्यस्य नित्यव्यापित्वेन तस्यापि सर्वत्र सर्वदा सत्त्वापत्तेः । नाप्यव्याप्त्या; तदधिष्ठितानधिष्ठितरूपतया तस्य भेदापत्तेः । अन्यथा अधिष्ठितमेव सर्वथा तद्रूपमिति कथमव्याप्तिः ? अनधिष्ठितमेवेति कथं तस्य तत्र वृत्तिः ? तत्प्रदेशे वृत्तेरिति चेत्; न; तत्त्वतस्तत्र तेषां[3] तत्त्वायाभ्युपगमात् घटादिवत् कार्यत्वेनानित्यत्वापत्तेः । कल्पनया सद्भावे च स एवात्मा स्यात् बोधाऽधिकरणत्वात् । न चैतत्पर्यं भवताम्, कल्पितात्मवादस्य बौद्धसिद्धान्तत्वात् । तन्नार्थान्तरमपि ज्ञानं तस्य यतः सुखादिविषयः स्यात् । कथं वा तेन सताप्यदृश्येन तस्य सुखादिवेदनम् आत्मान्तरज्ञानेनापि तदापत्तेः । दृश्यत्वमपि न तस्य स्वत एव; अनभ्युपगमात्, नान्यतोऽनवस्थापत्तेः । एतदेवोक्तम्–'अदृश्यानुभवात्मनः' इति । अनुभव एवानुभवात्मा बुद्ध्यात्मवत्, सोऽदृश्यः स्वपराभ्यामप्रत्यक्षो यस्य तस्येति । तन्न सत्यपि ज्ञाने स तस्य विषय इति साहसमेव परं तत्कल्पने निबन्धनम् । ततो यदुक्तम्–"सुखादिरात्मविशेषगुणनिमित्त आत्मविशेषगुणत्वात् विशेष्यज्ञानप्रदीपवत्" [ ] इति; तत्प्रतिव्यूढम्; सुखादेरात्मनश्चाप्रतिपत्तौ हेतोराश्रयस्वरूपासिद्धेर्दृष्टान्तस्य च साध्यसाधनवैकल्यात् । एवमनुमानान्तरेऽपि सर्वत्र वक्तव्यम् ।

परमपरस्य साहसमुपदर्शयति–'शब्द'इत्यादिना । शब्द आदिर्यस्य रूपादेस्तस्मादविशेषः सुखादिः अचेतनत्वेन तत्सदृश इत्यर्थः । तदेव कुत ? धिया बुद्ध्या अन्यया स्वतो भिन्नया प्रदर्श्यत इति । तथा हि–अचेतनः सुखादिः भिन्नबुद्धिप्रदर्श्यत्वात् शब्दादिवत् । तद्बुद्धिप्रदर्श्यश्चासौ प्रदर्श्यत्वात्तद्वदेवेति । कुतः पुनरिदं साहसमिति चेत् ? सुखादेरनुभवात्मतयैव प्रतीतेः, तदचेतनत्वकल्पनस्य अनुभवबाधितत्वात्, अनुभवैकार्थसमवायितया तस्य तदात्मत्वेन प्रतीतेः । विभ्रम एवेति चेत्; न; बाधावैधुर्यात् सर्वदा तदात्मतयैव प्रतीतेः । तथापि तद्विभ्रमकल्पनायां न काचिदविभ्रमा

१–ति चेत् का०, थे आ०, ब०, प० । २–त्वं तदन्व–आ०, ब०, प० । ३–तत्सुखादिरूपैकज्ञान–आ०, ब०, प० । ४ तदन्तरस्याभ्युप–आ०, ब०, प० । प्रदेशवत्त्वस्य । ५ तात्त्वेन आ०, ब०, प० । ६–स्वभावाश्रयः आ०, ब०, प० । ७ अचितत्वेन दृश्य इ–आ०, ब०, प० । ८ अनुभवात्मकस्यैव । ९ प्रतीतिः प० ।

प्रतीतिः भवेत् । अनैकान्तिक [ ■ ] भिन्नबुद्धिपदस्थार्थत्वं चेतनेऽपि भावात् । 'अनर्थविषयत्वे सति' इति विशेषणान्नेति चेत्; न; तदात्मन्यपि अस्वसंवेदने तद्विषयत्वस्य निरूपितत्वात् ।

यदपि तत्पदर्शने साधनं प्रदर्शयत्वादिति; तदपि व्यभिचारी, स्वसंवेदनेऽपि तस्याविविरोधात् ।

साहसान्तरमपि 'पुनः'इत्यादिना निवेदयति । पुनरिति पूर्ववत्, अस्यैव नित्यस्यात्मनो **निर्वाणं** निःश्रेयसम्, अस्योपलक्षणत्वेन संसारमपि आह कथयति **वेदः** पूर्वोक्त **एवायं** प्रतीयमानः । कुतस्तदुभयं स तस्य इत्याह--**गुणस्य** प्रियाप्रियविकल्पस्य बुद्ध्यादेः **योगश्च** तत्रैव प्रत्यासत्तेः **निवृत्तिश्च** ताभ्यां तत इति स च वेदः प्रमाणमिति साहसम् असम्भवदर्थवादिनस्तस्य साहसादन्यतः प्रामाण्यकल्पनाऽनुपपत्तेः । तथा हि--

आत्मनो गुणसम्बन्धात्, संसारित्वप्रकल्पने ।
सम्बन्धस्यापि तत्कृतिस्तत्र एवोच्यतां त्वया ॥ १६५२ ॥
सम्बन्धिभ्यां न सम्बन्धस्तस्य चेत्तौ कथं तदा ।
सम्बन्धिनौ तयोस्तस्य भावे सत्येव तच्छ्रुतेः ॥ १६५३ ॥
असम्बद्धोऽपि सम्बन्धः समवायस्तयोर्यदि ।
संयोगोऽपि तथैव स्यात् सम्बन्धो दधिकुण्डयोः ॥ १६५४ ॥
तथा च समवायस्य तत्सम्बन्धस्य कल्पनम् ।
अपेक्षापूर्वकारित्वं यौगयोक्त (लोक)स्य कल्पयेत् ॥ १६५५ ॥
सम्बद्ध एव संयोगः समवायोऽन्यथाऽपि चेत् ।
सम्बन्धत्वं प्रपद्येत वस्तुवैचित्र्यसम्भवात् ॥ १६५६ ॥
इहेदंप्रत्ययोऽप्येवं कश्चित् सम्बन्धपूर्वकः ।
अन्यथाऽपि भवेत् कश्चिदिति वैचित्र्यमुच्यताम् ॥ १६५७ ॥
तथा च समवायस्य तत्सिद्धावव्यवस्थितेः ।
कथं स गुणसम्बन्धः पुरुषस्योच्यतां त्वया ॥ १६५८ ॥
मुक्तात्मनोऽपि किन्नैवं त्वया संसारिणो मता ।
गुणयोगस्य तत्रापि व्यापित्वेन व्यवस्थितेः ॥ १६५९ ॥
गुणो न तत्र तद्योगे सत्यपीत्यपि दुर्मतम् ।
संयोगोऽस्ति स नास्तीति वचोव्याघातदर्शनात् ॥ १६६० ॥
तद्योगोऽपि न चेत्तत्र कथं सामान्यसङ्गमः ।
द्रव्यमात्मेति वा तत्र प्रत्ययोपाख्या च यद्भवेत् ॥ १६६१ ॥
अन्य एव स योगश्चेत् कथमेकत्वकल्पनम् ।

१ सद्योगोऽस्तीति तद्यातित वचो आ०, ब०, प० ।

समवायस्य तत्र "तत्त्वम्"इत्यादि[1] शोभताम् ॥ १६६२ ॥
ततो न गुणसम्बन्धात् संसारः क्वापि सम्भवी ।
"न च वै सशरीरस्य"इत्यादि[2] तस्मादसद्वचः ॥ १६६३ ॥
निर्वाणमपि संसाराभावे दुरुपकल्पनम् ।
संसारच्युतिरूपं यन्निर्वाणं तद्विदो विदुः ॥ १६६४ ॥
कथं वा गुणयोगस्य नित्यस्यात्मनि निवर्तनम् ।
यतन्निवृत्तिं प्राह वेदो निर्वाणमात्मनः ॥ १६६५ ॥
गुणस्यैव [3]निवृत्तेश्चेन्निर्वाणं परिकल्प्यते ।
तस्यैव सति तद्योगे निवृत्तिः सम्भवेत् कथम् ॥ १६६६ ॥
तद्योगेऽपि निवृत्तिश्चेन्निवर्तकबलात्ततः ।
[4]प्रवृत्तिरपि तद्योगाभावे किन्न प्रवर्तकात् ॥ १६६७ ॥
योगाभावे कथं पुंसि प्रवृत्तिस्तस्य चेत् कथम् ।
योगे सति ततस्तस्य निवृत्तिरपि कथ्यताम् ॥ १६६८ ॥
निवर्तकस्य नियमः कुतो वा परिकल्प्यताम् ।
[5]सर्वात्मनां यतस्तस्मान्न तद्योगनिवर्तनम् ॥ १६६९ ॥
समवायान्न नियमस्तद्विभुत्वादितीरितम् ।
तद्विशेषप्रकृप्तिस्तु तदेकत्वोपघातिनी ॥ १६७० ॥
नियामकस्याभावेन नियमस्याव्यवस्थिते ।
नियमेन प्रतीतिश्च तत्र वः सुलभा कथम् ॥ १६७१ ॥
तत्त्वज्ञानादि तन्नास्ति नियतं तन्निवर्तकम् ।
निवृत्तेर्नियमो यस्मान्निर्वाण[6]नियमावहः ॥ १६७२ ॥
ततश्चानियमात् सर्वगुणयोगनिवर्तने ।
प्राप्तं सर्वात्मनिर्वाणमेकनिर्वाणकारणात् ॥ १६७३ ॥
ततश्च "नियतं श्रेयो निःश्रेयसम्"इति स्वयम् ।
त्रिलोचनादेर्व्युत्पत्तिकरणं मूतमुद्रया ॥ १६७४ ॥
तत्र निर्वाणवादोऽयं युज्यते युक्तिकान्तया ।
ततः 'अशरीरं वा'इत्यादि[7]श्रुतिरप्यसदर्थका ॥ १६७५ ॥
प्रामाण्यवादस्तत्राय तन्न युक्तिसुकल्पनः ।
इत्याशयवता प्रोक्तं वेद इत्यादिकं वचः ॥ १६७६ ॥

१ "तत्त्व भावेन"–वैशे० सू० ७।२।२७ । २ छान्दो० ८।१२।१ । ३ निवृत्तिश्चे–आ०, ब०, प० । ४ निवृ–आ०, ब०, प० । ५ सर्वं नाशयतस्तस्मा–आ०, ब०, प० । ६ –र्वाणेनि–आ०, ब०, प० । ७ छान्दो० ८।१२।१ ।

ततो न तथागतागमवत् साङ्ख्याद्यागमस्यापि तत्त्वतः सोपायहेयोपादेयगोचरत्वमुपपन्नम् । प्रवचनस्य तु तदुपपत्तिमदेव प्रामाण्यात्, तस्य च अविसंवादादेव लिङ्गादवगमात् । कथमिदानीं तस्यात्यन्तपरोक्षे धर्मादौ तदवगमः तत्राविसंवादस्याप्रतिपत्तेः ? कालान्तरे तत्रापि प्रतिपत्तिरिति चेत्; न[१]; सति प्रामाण्यावगमे ततस्तद्विषये धर्मादौ प्रवृत्तिः, ततश्चाविसंवादोपलम्भः, ततोऽपि तदवगम इति चक्रकदोषात् । तत्र तत्र तदवगम इति चेत्; न; प्रत्यक्षादेरप्येवं तदवगमाभावप्रसङ्गात् । न हि तत्रापि तदुत्पत्तिसमय एव संवादः संशयाद्यभावापत्तेः, प्रवृत्तिवैयर्थ्याच्च, अर्थक्रियायाः संवादरूपत्वेन तदैव भावेः । कालान्तरभाविनि च संवादे चक्रकदोषस्य तादवस्थ्यात् । कारणशुद्धिपरिज्ञानात्तत्र तदवगमो न संवादादिति चेत्; न; तत्परिज्ञानेऽप्यन्यतस्तत्परिज्ञानात् तदवगमे अनवस्थाप्रसक्तेः । प्रत्यक्षादेः प्रामाण्यावगमाच्च्छुद्धिपरिज्ञाने च परस्पराश्रयात्–तदवगमात् कारणशुद्धिपरिज्ञानम्, ततश्च तदवगम इति । प्रसिद्धप्रामाण्यापरप्रत्यक्षादिसमानसामग्रीप्रभवत्वेन तत्र तन्निर्णय इति चेत्; अनुकूलमाचरसि, प्रवचनेऽपि तेनैव तन्निर्णयात् । विद्यते हि तत्राप्यत्यन्तपरोक्षविषये निश्चितप्रामाण्यप्रत्यक्षादिविषयप्रवचनसमानसामग्रीप्रभवत्वम्, उभयत्रापि सम्प्रदायाविच्छेदेन समानकर्तृत्वप्रतिपत्तेः । समानस्यापि कर्तुः कचिद्विप्रलम्भसम्भवे चक्षुरादावप्यनाश्वासापत्तेः । एतदेवाह–

**विश्वलोकाधिकज्ञाने विप्रलम्भनशङ्किनः ।**
**प्रामाण्यं कथमक्षादौ चञ्चले प्रमिमीमहे ॥ १५ ॥** इति ।

विश्वः सर्वः लोकः प्राणिवर्गः, लोकयति पश्यतीति लोक इति व्युत्पत्तेः, तस्मादधिकं सर्वद्रव्यपर्यायतत्त्वसाक्षात्कारित्वेनोत्कृष्टं केवलाख्यं ज्ञानं यस्य पुरुषविशेषस्य स **विश्वलोकाधिकज्ञानः** पूर्वं निर्णीतो निर्णेष्यमाणश्च तत्र **विप्रलम्भनं** वञ्चनं वीतरागाणामपि सरागवच्चेष्टासम्भवात्, आशङ्कन्त इत्येवं शीला वयं वादिप्रतिवाद्यादयः **प्रामाण्यम्** अविप्रलम्भनम् **अक्षादौ** आदिपदात् लिङ्गादावपि **कथं** न कथञ्चित् **प्रमिमीमहे** निश्चिनुमहे, तत्रापि कदाचिद्विप्रलम्भस्योपलम्भात् अन्यथा इन्द्रियादिभ्रान्त्याभा ( न्त्यभा ) वापत्तेः । दोषवत्येव तत्र तदुपलम्भो न निर्दोष इत्यपि न युक्तम्; पुरुषेऽपि तुल्यत्वात् । दोषवानेव सर्वोऽपि पुरुष इति चेत्; इन्द्रियादिरपि सर्वस्तथा किन्न भवति ? बहुलमविप्रलम्भस्यापि तत्रोपलम्भादिति चेत्; न; पुरुषस्यापि प्रत्यक्षानुमानविषये सर्वत्राप्यविप्रलम्भस्यैव प्रतिपत्तेः । तत्राविप्रलम्भनेऽपि स्वर्गादौ भवे[२]यपि विप्रलम्भनः पुरुषाणां विप्रलम्भेतरनियमासम्भवेन चञ्चलत्वादिरयपि न युक्तम्; अक्षादावपि तन्नियमाभावेन चञ्चलत्वस्याविशेषात् । अत एवोक्तम्–'चञ्चले' इति । भवतु तत्राक्षादेर्विप्रलम्भनं यत्र तज्ज्ञाने बाधकप्रत्ययोपनिपातः, यत्र तु स नास्ति तत्राविप्रलम्भनमेवाङ्गीकर्तव्यम्, अन्यथा प्रवृत्तिनिवृत्त्यादिसकलव्यवहारविलोपप्रसङ्गादिति चेत्; इदं[३] चेष्टितम्; स्वर्गादावपि भगवतस्तद्वचने तदभावादेव[४] अविप्रलम्भप्रतिपत्तेः । न हि तत्रापि

१ न सति वचनस्य प्रा–आ०, ब०, प० । २ –भ्रान्त्यो भावा–ज्ञा० । ३ भवति वि–आ०, ब०, प० । ४ बाधकप्रत्ययाभावादेव ।

तद्वचनस्य प्रत्यक्षादिना बाधनम्, तस्यातद्विषयत्वात्। यदि हि प्रत्यक्षादे स्वर्गादिविषयत्वं भवत्यपि तेन तस्य बाधनम्–'अयमन्यथा स्वर्गादिरन्यथा चानेन प्रतिपादित' इति, न चैवम्, तस्यात्यन्तपरोक्षत्वात्। नापि शास्त्रेण, तस्यापि तदन्वयस्य पूर्वापरभागभाविन परस्परविरोधिन एव प्रतिपत्ते। शास्त्रान्तरमपोह्येय तस्य बाधकम् अन्यथैव तेन स्वर्गादेरभिधानादिति चेत्, न, तदसम्भवस्य (वात् अस्य) सम्भवतोऽप्यगुणवद्वक्तृत्वेनाप्रामाण्यस्य निवेदनात्। 'कीदृशात् पुनर्बाधकाभावात् तद्वचने विश्वास ? तात्कालिकादिति चेत्, न, प्रयागमेऽपि तत्सम्भवात्। सार्वकालिकादिति चेत्, न तर्हि बहुनाऽपि कालेन तद्विश्वास परापरकालभावितद्भावप्रतीक्षायामेव संसारस्योपक्षयात्' इत्यपि न केवलं प्रवचनप्रामाण्यं प्रतिरुणद्धि प्रत्यक्षादावप्यस्याविशेषात्। स यम् अत एवाविचारसहमपि, तत्प्रामाण्यं व्यवहारादभ्युपगम्यते "प्रामाण्यं व्यवहारेण" [ प्र० वा० १।७ ] इति वचनादिति चेत्, किं पुनस्तदभ्युपगमस्य फलम् ? तन्निबन्धनो व्यवहार एवेति चेत्, न तर्हि शास्त्रमर्थवत् तस्योभयस्यापि लोकव्यवहारादेव प्रतिपत्ते। न सर्वस्य ततस्तत्प्रतिपत्ति केषाञ्चिद् व्यामोहात्, अत एव परस्परविरुद्धं तेषां तल्लक्षणप्रणयनम्। तदुक्तम्–

"न सर्वो व्यवहारेण प्रामाण्यमवगच्छति।
प्रमाणलक्षणं तेन परस्परविरोधवत् ॥" [ प्र० वार्तिकाल० १।७ ] इति।

ततो यथावस्थितव्यवहारोपदर्शनेन तद्व्यामोहव्यवच्छेदाय फलवदेव शास्त्रम्, "शास्त्रं मोहनिवर्तनम्" [ प्र० वा० १।७ ] इति वचनादिति चेत्, का पुनस्तदनिवर्तने परिग्लानि ? प्रमाणसाध्यस्य पुरुषार्थस्याप्राप्तिरेव, अनिवर्तितव्यामोहात् प्रमाणात्तदनुपपत्तेरिति चेत्, न, तद्विपरीतस्यापि तस्य विचारासहत्वेन ततस्तात्त्विकस्य पुरुषार्थस्यायोगात्, अन्यथा तदसहत्वविरोधात्। अतात्त्विकस्य विभ्रमोपदर्शितनरपतिकलशराशिवदशक्यैव प्राप्तिरिति न किञ्चिद् व्यामोहनिवर्तनेन यतस्तदर्था शास्त्रप्रवृत्ति। अपि च, अविचारसहस्यापि यदि प्रत्यक्षादेर्व्यवहारात् प्रामाण्यं प्रवचनस्यापि स्यात्। न हि व्यवहारी कश्चिदाप्तवचनं न प्रमाणयत्येव, बहुलं ततोऽपि तद्विषये प्रवृत्त्यादिव्यवहारस्योपलम्भात्। अक्षोदक्षमत्वान्न तत्र तत्क्षममिति विलक्षणभाषितम्, अस्याक्षादावपि तुल्यत्वात्। माभूत्तदपि प्रमाणम्, अद्वैतसंवेदनस्यैव तत्त्वत प्रमाणस्योपगमात् शास्त्रस्यापि तन्निरूपणार्थत्वादिति चेत्, कस्य पुन शास्त्रेण तन्निरूपणम् ? विनेयस्येति चेत्; उच्यते–

विनेयस्तदनन्यश्चेत् व्यर्थं शास्त्रं ततो गते।
अन्यश्चेत् कथमद्वैतं विरोधेनोपपीडनात् ॥१६७७॥
अथ कल्पनयैवासौ न तत्त्वेनेति चेत् कथम्।
कल्पनाऽपि तदद्वैते तदन्या शक्यकल्पना ॥१६७८॥
साऽपि कल्पनयैवान्या न तु वस्तुत इत्यपि।
दुर्मतं दुर्विदग्धानामनवस्थोपबृंहणात् ॥१६७९॥

१ तदसम्भवस्य स–ता०। २ –ण्ययोप–प०।

तत्रान्यत्वविकल्पाभ्यामवाच्यैव कल्पना ।
अवस्तुत्वाद्विकल्पस्य वस्तुनैव (वस्तुन्येव) च सम्भवात् ॥१६८०॥
इति चेत्तदवाच्यत्वविकल्पेऽपि कथं तदा ।
तत्र यत्तत्र शोभेत तदवाच्यत्ववागियम् ॥१६८१॥
कथं वा कल्पितस्यास्ति शास्त्रेण प्रतिबोधनम् ।
किं वन्ध्यासुतबोधार्थं शास्त्रं क्रिमपि वीक्षितम् ? ॥१६८२॥

तदद्वैतनिरूपणं शास्त्रात्। प्रत्यक्षादेस्तु ततो निरूपणे विचारसहमेव तदेष्टव्यम्, अन्यथा तद्वैयर्थ्यात्। तत्र यदि वचनं तत्प्रणेतरि विप्रलम्भनशङ्कनात् न प्रमाणं प्रत्यक्षादिकमपि न भवेत्, तद्धेतावक्षादावपि तच्छङ्काविशेषात्। एतदेव त्रिभिरन्तरश्लोकैः व्याचिख्यासुराह—

**परीक्षाक्षमवाक्यार्थपरिनिष्ठितचेतसाम् ।**
**अदृष्टदोषाशङ्कायाममानं सकलं भवेत् ॥१६॥** इति ।

परीक्षां प्रसिद्धप्रत्यक्षादिरूपां क्षमत इति **परीक्षाक्षमः** स चासौ **वाक्यस्य** प्रवचनस्य**ार्थो** जीवादिस्तत्र **परिनिष्ठितं** परि समन्तान्निष्ठितमचलप्रवृत्तिकं **चेतो** ज्ञानं येषां तेषां भगवताम् **अदृष्टे** प्रत्यक्षाद्यविषये धर्मतत्कारणादौ **अदृष्टस्य** वा तद्विषयस्य **दोषस्याशङ्कायां** पुरुषाणां विचित्राभिसन्धित्वेन प्रत्यक्षादिविषये विप्रलम्भासम्भवेऽप्यतद्विषये तत्सम्भवस्याशङ्कायाम् **अमान**मप्रमाणं **सकलं** प्रत्यक्षमन्यद्वा **भवेत्** तत्कारणेऽपि चक्षुरादावदृष्टपूर्वे तद्विषये तदाशङ्कनस्यानिवृत्तेः। अथ प्रत्यक्षादौ निश्चितप्रामाण्यतदन्तरसादृश्यविशेषात् विशेषप्रतिपत्तेर्न तत्कारणेषु तदाशङ्कनम्, प्रवचनेऽपि समानमेतत्—तत्रापि प्रत्यक्षानुमेयविषयनिश्चितप्रामाण्यतदन्तरसदृशभावप्रतिपत्तेरविशेषात्। एतदेवाह—

**प्रत्यक्षागमयोरिष्टं प्रामाण्यं गुणदोषयोः ।**
**दर्शनादर्शनाभ्यासात् क्वचिद् वृत्तसमत्वतः ॥ १७ ॥** इति ।

**प्रत्यक्ष**मित्यनुमानस्यापि ग्रहणं तत्पूर्वकत्वात् तच्च **आगमश्च** तयोः **क्वचित्** अपूर्वार्थेऽत्यन्तपरोक्षे च **प्रामाण्यमिष्टं** युगपद्वचनं तयोस्तुल्यत्वप्रतिपादनेन प्रवचनस्याप्रामाण्ये प्रत्यक्षादेरपि तदवश्यमिति प्रतिपादनार्थम्। कुतस्तयोः प्रामाण्यम्? **वृत्तेन** प्रमाणतया निश्चितेन तदन्तरेण **समत्वात्**। तदेव कुत इति चेत्? **गुणदोषयो**र्ये **दर्शनादर्शने** तयोर**भ्यासात्**। यथैव हि अपूर्वार्थे प्रत्यक्षादौ तस्य तत्कारणस्य वा गुणदर्शनाद्दोषस्य चादर्शनात् प्रामाण्यम्, एवं प्रवचनस्यापि तदेष्टव्यमित्यर्थः। ननु प्रत्यक्षादौ गुणकृतं प्रामाण्यं तत्कारणे तदभावादिति चेत्; न; तस्याप्यञ्जनसंस्कारादेस्तत्रोपलम्भात्। सतोऽपि तेन दोष एवापोह्यते न प्रामाण्यमापाद्यते, दोषाभावादेव प्रामाण्यस्यौत्सर्गिकस्यैवापत्तेरिति चेत्; उच्यते—यदि न तेन तस्यापवादः किं स्यात्? अप्रामाण्यमिति चेत्; न;

---

१ –शङ्किनो न आ०, ब०, प०। २ वाक्यत्र–आ०, ब०, प०। ३ प्रत्यक्षादिविषयत्व। ४ –त्वमस–आ०, ब०, प०। ५ प्रकत्व–आ०, ब०, प०। ६ गुणवत्त्व–आ०, ब०, प०। ७ –स्तुत्यत्व–आ०, ब०, प०। ८ मीमांसकः प्राह।

प्रामाण्यकारणे समर्थे सति तदनुपपत्तेः । अप्रामाण्यदोषोऽपि समर्थ इति चेत्; युगपत्तर्हि तदुभयं प्राप्नुयात् ।

तथा च भ्रान्तविज्ञानाचदर्थे वृत्त्यवर्तने ।
युगपत् प्राप्नुयातां ते प्रमाणत्वेतरत्वतः ॥१६८३॥
अक्षादिकं प्रमाणत्वे दोषे यदि न शक्तिमत् ।
ज्ञानं कथं तदा तस्मादप्रामाण्यं यदाश्रयम् ? ॥१६८४॥
प्रामाण्ये तस्य सामर्थ्यं नष्टं न ज्ञानजन्मनि ।
यदि स्वतः प्रमाणत्वं तदा तस्योच्यतां कथम् ? ॥१६८५॥
ज्ञानसामर्थ्यतो भावि प्रामाण्यं चेत् तदा भवेत् ।
स्वतो यदन्यतः शक्तिस्तदा तत्परतो न किम् ? ॥१६८६॥
सामर्थ्यात् परतस्तच्चेत् गुणतः परतो न किम् ? ।
यतो गुणेभ्यो दोषाणामपवादः प्रकल्प्यते² ॥१६८७॥

सति च ततस्तदपवादे गुणत एव प्रामाण्यं तदपवादस्यैव गुणत्वात् । न तस्य तत्त्वमभावरूपत्वाच्चेत्; तर्हि नियमवैकल्यस्यापि हि हेतोर्न दोषत्वमिति कथमनुमानाभावस्याप्रामाण्यमपि दोषतः स्यात् ? तद्वैकल्यस्य दोषत्ववद् गुणत्वमपि तदपवादस्येति तत एव प्रामाण्यं न स्वतः ।

ततो गुणादिदृष्ट्यादेरध्यक्षादिवदञ्जसा ।
प्रामाण्यमागमेऽपीति सूक्तमुक्तं स्वयं बुधैः ॥१६८८॥

न हि प्रवचनकारणैर्गुणस्य तदर्थज्ञानस्य दोषस्य रागादेरसिद्ध एव दर्शनादर्शनाध्यासो निर्बाधत्वेन तत्सिद्धेः । तथा हि—यत्स्वविषये निर्बाधं वचनं तद्गुणवन्निर्दोषकारणकं यथा किञ्चिज्ज्वलशैत्यादिविषयमस्मदादिवचनम्, तथा च विवादापन्नं प्रवचनम् । न चेदमसिद्धमेव प्रत्यक्षादिना तद्विषये प्रवचनेन तदगोचरे तस्य बाधनात् । तदेवाह—

**तज्ज्ञानपूर्वकं तर्क्यमनुमानसमीक्षितम् ।** इति ।

तज्ज्ञानं गुणवन्निर्दोषज्ञानं तत्पूर्वकं⁴ प्रवचनमनुमानेन समीक्षितं सम्यगवलोकितम् । तदेव कुतः ? तर्क्यं तर्कज्ञानवेद्यं यत इति । न हि यन्निर्बाधं वचनं तदुक्तज्ञानपूर्वकमिति तर्काभावे सम्भवत्यनुमानमिति भावः ।

यत्पुनरत्र प्रज्ञाकरचोद्यम्—

"बाधकस्य पुरो भावः सर्वविज्ञानसम्भवी ।
परं तु बाधकाभावः तत्राप्याकाङ्क्ष्यते न किम् ? ॥ [ प्र० वार्तिकाल० १।१ ] इति;

---

१ "यदा स्वतः प्रमाणत्वं तदान्यन्नैव गृह्यते" –मी० श्लो० चोदना० श्लो० ५२ ।
२ "तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः । अप्रामाण्यद्वयासत्त्वम्...."– मी० श्लो० चोदना० श्लो० ६५ । ३ "अथ गुणतो दोषापवादमभ्युपगम्याह"—ता० टि० । ४ तज्ज्ञान– आ०, ब०, प० ।

न युक्तम्; परापरसत्त्वकालभाविनो बाधाविरहस्य प्रथमत एव तर्कज्ञानबलेनाध्यवसायात् तद्विषयपरापराशंसानुपसर्पणेनानवस्थादोषानुत्पत्तेः साधनासिद्धिकल्पनस्यानवकाशात् । न तर्कादप्यप्रमाणात् प्रवचनस्य बाधाविरहनिश्चयोऽतिप्रसङ्गात्, प्रामाण्यं च तस्य निर्बाधकत्वात्, तदप्यन्यतस्तर्कात्[1], तत्राप्येवं कल्पनायामनवस्थानात् कथं प्रवचने तद्विरहनिश्चयो यतो यथोक्तसाध्यसिद्धिरिति चेत् ? अत्राह–

**मानं वस्तुबलादेव [ सर्ववस्तुनिबन्धनम् ] ॥ १८ ॥** इति

**मानं** प्रमाणं तर्क इति सामर्थ्यग्रहणेन[2] तर्कस्याक्षेपात् । वस्तुशब्देन च ■ एव तदर्थ उच्यते तस्य **बलं** सामर्थ्यं तत इति । एतदुक्तं भवति–

निर्बाधत्वं हि तर्कस्य वेद्यते चेत् तदन्यतः ।
अनवस्थानदोषः स्यान्नैवं तस्य स्वतो गतेः ॥ १६८९ ॥
इत्थमेतदवश्यं च प्रपत्तव्यं मनीषिणाम् ।
वितर्कमिच्छतां नो चेत् वितर्को नावतिष्ठते ॥ १६९० ॥
विना च न वितर्केण किञ्चिदिष्टं प्रसिद्ध्यति ।
मानमेव व्यवस्थायाः तत्प्रसादादवस्थितेः ॥ १६९१ ॥

ततो युक्तं वस्तुबलादेव मानं तर्क इति । तस्य स्वरूपमाह–'**सर्ववस्तुनिबन्धनम्**' इति । सर्वं निरवशेषं वस्तु साध्यसाधनभावाभिमतं निबद्ध्यते विषयत्वेन यस्मिन् तद्यथोक्तम्, अन्यथा अनुमानानुपपत्तेरिति । निरूपितं चैतत् । अथवा वस्तु प्रवचनं तस्य **बलं** ततः, **मानं** सदेव प्रवचनम्, न पुनर्निर्दोषगुणवज्ज्ञानपूर्वकत्वात्[3], तस्यैव तत्रापौरुषेयत्वेनासम्भवादिति मतं मीमांसकस्य । तत्रेदं दूषणम्–'**सर्ववस्तुनिबन्धनम्**' इति । सर्वं प्रवचनप्रतिपाद्यं विधिनियोगभावनाद्यनेकविकल्पं **वस्तु** तन्निबन्धनं तद्विषयं **मानं** भवेत् प्रवचनम् । कथं हि नाम सर्वस्यापि विध्यादेस्ततः प्रतिपत्तौ तदन्यतमस्यैव तदर्थत्वम् ? तस्यैव निःश्रेयसहेतुत्वादिति चेत्; कुत एतत् ? वेदादेवेति चेत्; न; तेन हि तदपरस्यापि तद्धेतुत्वप्रतिपादनात् । सम्प्रदायादिति चेत्; न; सम्प्रदातुरसर्वदर्शित्वे ततोऽपि तदनुपपत्तेः । सर्वदर्शित्वे तु कथं पुरुषगुणस्याभावः प्रवचने येन तत्कृतमेव प्रामाण्यं न भवेत् ? ततो युक्तं यथोक्तज्ञानपूर्वकत्वं प्रवचनस्य । यदि अपौरुषेयस्यापि पुरुषविशेषगुणबलादेवार्थतत्त्वनिश्चयः प्रवचनस्य पौरुषेयत्वमेव किन्न भवति ? इति मन्वान आह–

**आगमः पौरुषेयः स्यात् प्रमाणमतिलौकिके ।** इति ।

आगच्छति गुरुपर्वक्रमेणागमयत्यनेन संसारतत्कारणादितत्त्वमिति वा **आगमः** प्रवचनं ■ **पौरुषेयः** पुरुषकृतः **स्यात्** भवेत्, तत्र पुरुषगुणसम्बन्धस्य सर्वथा परिहर्तुमशक्यत्वात्, अत एव च **प्रमाणम्** । यदि प्रत्यक्षादिविषये[4] सिद्धसाधनमिति चेत्; न; **अतिलौकिके** लोके जातं[5] लौकिकं[6] प्रत्यक्षादि तदतिक्रान्तम् अतिलौकिकम् अत्यन्तपरोक्षं तत्रेति । कुत एतदिति चेत् ? अत्राह–

१ –स्तर्कादित्व– प० । २ सामर्थ्यग्रहणेन आ०, ब०, प० । ३ –न दो– आ०, ब०, प० ।
४ "तर्हि"–ता० टि० । ५ ज्ञातं आ०, ब०, प० । ६ "जाते इति सूत्रेण आगमार्थे ठञ्"–ता० टि० ।

**सवादासम्भवाभावात् [ समयाविप्रलम्भने ] ॥ १९ ॥** इति ।

**सवाद** अर्थतथाभाव तस्याऽसम्भवः तस्याभावात् सद्भावादिति यावत् । नेदानीं तत्र तद्भावोऽनुपलम्भात्, कालान्तरभाविनश्च तत कथमिदानीं प्रामाण्यनिर्णयो यत प्रवृत्तिरिति चेत् ? प्रत्यक्षादौ कथम् ? तत्रापि पश्चादेव तद्भावात् । अत एव अनिर्णीतप्रामाण्यादेव तत प्रवृत्तिरिष्यते तद्विषयस्य ज्वरादेरप्राप्तावपि पीडाबाहुल्यभावात् । न चैव प्रवचनादपि [1]तादृशादेव तपश्चरणादौ प्रवृत्तिकल्पनमुपपन्नम् । वैद्याकुलश्लोकनादिति[2] चेत्, न, तस्य प्रत्यक्षादावपि तुल्यत्वात् । तथा हि–

अर्कक्षीरादन्नक्षीरमविविच्यैव य पिबेत् ।
तस्य भूयान् परिक्लेश किं तया नावलोक्यते ॥ १६९२ ॥
हारसर्पविभागेन दीर्घे रिक्षिदनिश्चितम् ।
कण्ठे समासजन्मर्त्यं किन्न मृत्युमपि व्रजेत् ? ॥ १६९३ ॥

ततो यथा तत्र पश्चाद्भाविनोऽपि तद्भावस्य कारणपरिशुद्धिज्ञानादध्यवसाये तत प्रागेव तन्निर्णय तथा प्रवचनेऽपि । तदेवाह–'**समयाविप्रलम्भने**' इति । **समय** सम् समीचीन प्रवचनहेतु **अयो** बोधस्तस्य **अविप्रलम्भनम**विप्रतीसार तस्मिन्, '**सवादासम्भवाभावात् आगम प्रमाणमतिलौकिके**' इति ।

स्यान्मतम्[3]–यदि क्वचित् सर्वज्ञ सम्भवति भवत्यपि तदा तज्ज्ञानपूर्वकत्वेन प्रवचन स्याविसवादसम्भव, न चैव प्रमाणाभावात् । न हि तत्र प्रत्यक्षं प्रमाणम्, तस्यासर्वविषयत्वे तेन तज्ज्ञानस्य क्वचिदप्रतिवेदनात्, व्यापकप्रतिपत्ते विषयप्रतिपत्तिमन्तरेण नुपपत्ते । सर्वविषयत्वे तु तत्प्रत्यक्षवतोऽपि सर्वज्ञत्वम् । तथा तमप्यन्यस्य प्रत्यक्षादवगच्छन सर्वज्ञत्वमिति सर्वज्ञमेकमनिच्छन सर्वज्ञबहुत्वमव्याहतप्रवाहमापद्येत । तदुक्तम्–

"सर्वज्ञोऽयमिति ह्येव तत्कालेऽपि बुभुत्सुभि ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥
कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञ स सर्वज्ञ न बुद्धयते ॥'

[ मी० श्लो० चोदना० श्लो० १३४–१३५ ] इति ।

प्रत्यक्षाभावे[4] च नानुमानम्, तस्य प्रत्यक्षत साध्यसाधनसम्बन्धप्रतिपत्तौ सत्यामेवोत्पत्ते । साध्यस्य च सकलवेदिन प्रत्यक्षेणाग्रहणे तल्लिङ्गसम्बन्धस्य[5] शक्यप्रतिपत्तिकत्वादिति, तदपि दुर्मतम् प्रत्यक्षाविषयेऽपि तस्मिन्ननुमानप्रवृत्ते '**परोक्षोऽपि**'इत्यादिना[6] प्रतिपादनात् ।

यदपि परस्य दुर्विलसितम्–प्रत्यक्षादे प्रमाणपञ्चकस्य वस्तुसत्तावबोधकस्य सर्वे

१ अनिर्णीतप्रमाण्यादेव । २ पीडाबाहुल्यक । ३ मीमांसकस्य । ४ –वे नानु–आ०, ब० प० ।
५ गृहीतसम्बन्धस्यैकदेशदर्शनादसन्निकृष्टेऽर्थे बुद्धिरनुमानमिति मीमांसका । —ता० टि० ।
६ न्यायवि० श्लो० ३।३ ।

दिन्यप्रवृत्तेः तदप्रवृत्तिलक्षणादनुपलम्भात् अभाव एव तस्येति; तत्र न तावत्तस्याभावो नीरूप एव; तस्य प्रमाणाविषयत्वात्। न ह्यसौ अतद्रूपाद्व्यावृत्त एव तद्विषयः, तदतद्विभागाभावापत्तेः। व्यावृत्तेश्चेत्; न; व्यावृत्तिशक्तिवैकल्ये तदनुपपत्तेः। तच्छक्तिभावे च नीरूपत्वव्यापत्तेः, शक्तिप्रधानरूपत्वात् भावानाम्। भवतु पर्युदासवृत्त्या किञ्चिज्ज्ञत्वमेव तदभाव इति चेत्; तदपि न प्रतिनियतपुरुषाधिष्ठानम्, तस्य तदभावत्वेनाभीष्टत्वात्। सकलदेशकालवर्तिपुरुषपरिषदधिष्ठानस्य तु तस्य कथं निरवशेषतत्परिज्ञानविकलेन प्रतिवेदनम्? अधिष्ठानप्रतिवेदन एवाधिष्ठेयप्रतिवेदनोपपत्तेः। तत्परिज्ञानवत्त्वे तु कस्यचित् कथन्न तस्यैव निरुपद्रवं सकलवेदित्वमापद्येत यतः "सर्वज्ञोऽयमिति ह्येवम्" [ मी० श्लो० ] इत्यादि मीमांसकस्य परत्र चिन्तितं दूषणं स्वगृहं प्रत्युपगतं न भवेत्। तन्नानुपलम्भादपि अभावापरनामधेयात् सर्वत्र सर्वदा सर्वज्ञाभावसाधनमुपपन्नम्। किञ्च, अयमनुपलम्भो वादिनः स्वस्य वा भवेत्, सर्वस्य वा गत्यन्तरासम्भवात्? तत्रोभयत्रापि दोषमावेदयन्नाह–

सकलज्ञस्य नास्तित्वे स्वसर्वानुपलम्भयोः।
आरेकासिद्धते तस्याप्यर्वाग्दर्शनतोऽगतेः ॥२०॥ इति।

न हि सर्वज्ञाभावसाधने स्वानुपलम्भस्य गमकत्वम्; तस्य परचेतोवृत्तिविशेषे सत्यपि भावेन व्यभिचारिणः संशयहेतुत्वात्। न हि तत्र नियोगतः प्रत्यक्षादीनामन्यतमस्य प्रवृत्तिरेव, प्रथमदर्शन एव तदवधारणात् 'मूर्खोऽयं पण्डितो वा' इत्यादिविमर्शाभावापत्तेः। न चानवधारितोऽपि स नास्त्येव, पुनः कुतश्चित् कार्यविशेषात् तदस्तित्वस्य निर्णयात्। नापि सर्वसम्बन्धिनः; तस्यैवासिद्धेः। तदेवाह–'तस्याप्यर्वाग्दर्शनतोऽगतेः' इति। तस्यापि सर्वसम्बन्धिनोऽनुपलम्भस्यापि, अपि शब्दान्न केवलं सर्वज्ञस्य अगतेः अगतिश्च तस्यार्वाग्दर्शनतः। अर्वाचो हि वस्तुभागस्य दर्शनमस्मदादिप्रत्यक्षं तत्कथं तस्य सर्वविषयत्वं यतः सर्वसम्बन्धिनोऽनुपलम्भस्य ततोऽवगतिः।

यत्पुनरत्रानुमानम्–सर्वेऽपि सर्वज्ञं नोपलभन्ते पुरुषत्वादेः रथ्यापुरुषवदिति; तदपि न सम्यक्; सर्वेषामर्वाग्दर्शनतोऽनवगमेन हेतोराश्रयासिद्धेः। न चास्ति पुरुषत्वादेः सर्वज्ञत्वोपलम्भेन विरोधः, सोऽर्वाग्दर्शिनि सम्भवन्नपि न सर्वज्ञे स्यात्, तेनात्मनोऽन्यस्य च सर्वज्ञतया दर्शनसम्भवात्। स एव नास्तीति चेत्; न; अन्यतः तन्नास्तित्वेऽनुपलम्भस्य वैफल्यापत्तेः। तत एव सर्वसम्बन्धिन इति चेत्; न; परस्पराश्रयात्–सिद्धे तन्नास्तित्वे तदनुपलम्भस्य ततोऽपि तन्नास्तित्वस्य सिद्धेः। अतो नानुमानादपि सिद्धिस्तदनुपलम्भस्येति न तस्मादभावः सर्वज्ञस्य।

नापि वक्तृत्वादेः; द्वितीयप्रस्तावे तन्निषेधस्याप्यभिहितत्वात्। भावस्तु तस्यानुमानतो निरूपितो निरूपयिष्यते च। कथं पुनः सर्वज्ञविज्ञानस्याक्षजत्वे सूक्ष्मान्तरितदूरगोचरत्वमस्मदादि-

१ –वृत्तेश्चेत् आ०, ब०, प०। २ –पणीशाधि–आ०, ब०, प०। ३ संशयाभाव.एवेः। ४ परचेतोवृत्तिविशेषः। ५ –सम्बन्धिनस्तस्यैवासिद्धेः प–आ०, ब०, प०। ६ –लम्भेन वि–आ०, ब०, प०। ७ –परततोऽर्वाग्द–आ०, ब०, प०। ८ –दर्शिन्यसंभवान्नापि सर्वज्ञे आ०, ब०, प०। ९ तस्यादि–आ०, ब०, प०।

प्रत्यक्षवदिति चेत्; कथं गृद्धवराहादिप्रत्यक्षस्य ? तस्यास्मदादिप्रत्यक्षविलक्षणत्वेन तद्धर्मयोजनस्यासम्भवादिति चेत्, न, सर्वज्ञप्रत्यक्ष[1]स्यापि तद्विलक्षणत्वाविशेषात्। कथमेवमपि एकेन्द्रियोपजनितस्यैव तस्याशेषेन्द्रियार्थविषयत्वं गृद्धवराहादौ तस्य [2]स्वविषयानतिक्रमेणैव दूरसूक्ष्माद्यवलोकनातिशयभावात् नेन्द्रियान्तरविषयनिरूपणेनेति चेत्; इन्द्रियजत्वाविशेषे स [2]एव तदतिशयः कस्मात् ? तदीयादिन्द्रिय[3]शक्तिविशेषादिति चेत्, तर्हि तत एव सार्वज्ञं प्रत्यक्षमिन्द्रियान्तरार्थविषयमपि भवेत्। नन्विदमनुपपन्नम् शक्तिविशेषादपि स्वार्थानतिलङ्घने[4]नैवेन्द्रियज्ञानस्यातिशयोपपत्तेरिति चेत्, स्वेन्द्रियानतिलङ्घनेनैवेत्यपि भवेत्। तथा चेत्, न, सत्यस्वप्नादावन्यथाऽपि तदतिशयदर्शनात्। तदतिलङ्घने वा स्वार्थातिलङ्घनमप्यविरुद्धम्, अत एव 'चक्षुःश्रवसो भुजङ्गाः' इति कविप्रवादोऽपि। ततो दुर्भाषितमिदम्—

"यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम्।
दृष्टं सम्प्रति लोकस्य तथा कालान्तरेऽप्यभूत्॥
यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितः॥"

[मी० श्लो० चोदना० श्लो० ११३–१४] इति।

किमर्थं तर्हि तत्रेन्द्रियभेदपरिकल्पनम् एकस्मादेव त[5]स्मात् सकलेन्द्रियार्थप्रतिपत्तेरिति चेत्; न, क[5]दाचिदन्यत (दतत) कदाचिदन्यत कदाचित्त [6]सर्वादपि तत्प्रतिपत्तेः। अन्यथाऽस्मदादौ वामेतरनयनभेदोऽपि न भवेत् प्रयोजनभेदाभावात्। तथापि स्वहेतुबलायातस्तद्भेदो भवत्येवेति समानं भवेदिन्द्रियाभेदेऽपि। केवलमभ्युपगम एवायं न च त[7]स्याक्षजत्वमभिप्रेतं जैनस्य। "बहिरन्तरप्युभयथा च करणमविघाति नार्थकृत्।" [बृहत्स्व० श्लो० १२९] इत्याम्नायात्। कथं तर्हि तत्र प्रत्यक्षव्यपदेशः तस्याक्षमनिगमानादेशोपपत्तेरिति चेत्; न, तस्य व्युत्पत्तिमात्रनिमित्तत्वात् वैशद्यस्यैव तदुपलक्षितस्य प्रवृत्तिनिमित्तत्वात्, सति तस्मिन् तदभावेऽपि गोत्वादेव गोव्यपदेशवत्। वैशद्यमपि तत्प्रतिगमनादेव रूपादिवेदने दृष्टं तत्कथं तदभावेऽपि चेत्; आस्तामेतत्, कथं पुनरिन्द्रियनिरपेक्षं[10] न प्रत्यक्षम् ? त[11]द्भावभावनियमस्य दर्शनादिति चेत्, तत एव आलोकनिरपेक्षमपि न भवेत्। भवत्येव [12]जातिविशेषाणां संस्कृतचक्षुषा च तदभावेऽपि तत्प्रतिपत्तेरिति चेत्, समानमन्यत्र, सुखादिवेदनस्येन्द्रियाभावेऽपि प्रतिवेदनात्। [13]तदपि तदपेक्षमेव प्रत्यक्ष-

१ प्रत्यक्षस्य। २ एतदन्ति–ता०। ३ –यविशे–आ०, ब०, प०। ४ इन्द्रियात्। ५ कदाचित्तत आ०, ब०, प०। ६ सर्वस्मादपि आ०, ब०, प०। ७ सर्वज्ञज्ञानस्य। ८ 'अभ्युपगम्य चाक्षजत्वं सर्वज्ञज्ञानस्यातीन्द्रियार्थसाक्षात्कारित्वं समर्थितं नाथत, तज्ज्ञानस्य घातिकर्मचतुष्टयक्षये उद्भूतत्वात्।'–प्रमेयक० पृ० २५९। ९ 'अक्षाश्रितत्वञ्च व्युत्पत्तिनिमित्तं शब्दस्य न तु प्रवृत्तिनिमित्तम्। अनेन तु अक्षाश्रितेनैकार्थसमवेतमर्थसाक्षात्कारित्वं लक्ष्यते तदेव च शब्दस्य प्रवृत्तिनिमित्तम्।'–न्यायबि० टी० प्र० ११। न्यायकुमु० पृ० २६, टि० ७। १० –क्षं प्र–आ०, ब०, प०। ११ तद्भावाभाव–आ०, ब०, प०। १२ 'नक्तञ्चराणां मार्जारादीनाम्'–ता० टि०। १३ सुखादिवेदनम्।

त्वात् रूपादिप्रत्यक्षवदित्येतत् नचक्षुरादिप्रत्यक्षस्यालोकापेक्षत्वमपि व्यवस्थापयेत्। प्रतीतिबाधनान्नेत्यपि तुल्यमन्यत्रापि[1]।

किञ्च तदिन्द्रियं यतः सुखादिवेदनम्? मन इति चेत्; क तस्य सम्प्रयोगः[2]? सुखादावेवेति चेत्; न; अनुत्पन्ने तस्मिन् तदयोगात्। उत्पन्नेऽपि वैयर्थ्यात्, तदुत्पत्तावेव तदनर्थान्तरतया तत्प्रत्यक्षस्याप्युत्पत्तेः। अथ तत् तद्विषयादर्थान्तरं तत्त्वात् रूपादिप्रत्यक्षवदित्युच्यते; तन्न; अभेदानुभवेन पक्षस्य बाधनाद्धेतोश्च तत एव कालात्ययापदिष्टत्वात्। किञ्च,

यदि तद्वेदनात् पूर्वमस्ति पुंसः सुखादिकम्।
किम संह्लादतापादिलिङ्गं तद्वपुषीक्ष्यते ॥१६९४॥
कार्यस्य नियमाभावान्न चेदनियमान्न किम्।
न चैवं वेदनात् पूर्वं कदाऽपि तदवीक्षणात् ॥१६९५॥
न ह्यवेद्यतो ह्लादं रोमहर्षादिसम्भवः।
नापि तापं परिम्लानवदनत्वादि दृश्यते ॥१६९६॥
अथायं तत्स्वभावो यज्ज्ञातमेव स्वकार्यकृत्।
ज्ञानस्यैव तदा ह्लादतापादिः परिकल्प्यताम् ॥१६९७॥
तस्यैव तस्मिन् तत्कार्यादन्यथा त्वव्यवस्थितेः।
रूपं नीलादितोऽप्यन्यदेवमप्यवकल्पनात् ॥१६९८॥
तन्न भिन्नं सुखादेस्तत्प्रत्यक्षमुपपत्तिमत्।
"जातिरिन्द्रियतो यस्य भवना परिकल्प्यते ॥१६९९॥

ततो युक्तं सुखादिप्रत्य[क्ष]वदक्षनिरपेक्षं सार्वज्ञमपि प्रत्यक्षं बाधकाभावात्।

'यद्येवमात्मनिरपेक्षमपि तद्भवेत्, को वा नियमहेतुः परकरणत्वाविशेषेऽपि तस्येन्द्रियादावेवानपेक्षत्वं नात्मनि' इत्यपि न चोद्यम्; उपादानत्वेन[4] नियमात्। न ह्युपादाननिरपेक्षं किमपि कार्यमुपलब्धपूर्वं यतः प्रत्यक्षमपि तथाऽवकल्प्येत। उपादानहेतुश्च तस्यात्मैव न चक्षुरादिकम्, प्रतिसन्धानाभावप्रसङ्गात्। अस्ति च प्रतिसन्धानम् 'अहमेव रूपदर्शी रसादिकमप्यनुभवामि' इति। न चेदं चक्षुराद्युपादानत्वे सम्भवति; सन्तानान्तरवत् चक्षुरादेर्भेदात्। एकशरीरात्मकत्वात् अभेदोऽप्यस्त्येवेति चेत्; शरीरभेदे न भवेत्। अस्ति च पूर्वशरीरानुभूतस्याप्युत्तरशरीरे प्रत्यभिज्ञानम्–'य एव पूर्वजन्मनि क्षत्रियो जात. स एवाधुना ब्राह्मणोऽस्मि' इति। तन्न शरीरादे तदुपादानत्वमुपपन्नं यतस्तदभावे तन्न भवेत्। सहकारित्वे नायं नियमः सत्यस्वभावो तदभावेऽपि तस्य दर्शनात्। उपादानत्वेऽपि कथं नियमो बीजाद्यभावेऽपि कदल्यादेः कन्दादौ दर्शनादिति चेत्; न; तादृशस्यासम्भवात्। न हि यादृशं कदल्यादिबीजादेरुपादानात् तादृशं कन्दादेरपि, तद्विलक्षणस्यैव तस्य

१–मत्रापि आ०, ब०, प०। २ "सन्निकर्षः"–ता० टि०। ३ "अभेदपक्ष."–ता० टि०।
४ सत्का–ता०। ५ "उत्पत्तिः, जातिः सामान्यजन्मनो."–ता० टि०। ६–त्वे तथैव आ०, ब०, प०।

तत्त्वज्ञैरवलोकनात् । अतत्त्वज्ञप्रतिपत्त्यपेक्षया न तदनियमकल्पनमनुपपन्नम् ; अतिप्रसङ्गात् । सहकारित्वेऽपि किमेव न नियम इन्द्रियज्ञानविलक्षणस्येव सत्यस्वप्नादावपि प्रत्यक्षस्यावेक्षणादिति चेत् ; किमेव तत्र विलक्षणप्रतीतिर्योगिप्रत्यक्षे न भवति ? भवत्येव, अन्यथा सत्यस्वप्नज्ञानेऽपि तदभावापत्तेरिति चेत्, तर्हि "यज्जातीयैः प्रमाणैः" [ मी० श्लो० ] इत्यादि दुरवबोधविजृम्भितं भवेत् । तन्न किञ्चिदेतत् ।

कथं पुनरात्मनस्तदुपादानं च तस्याचेतनत्वे चिद्रूपतया परिणामासम्भवात् ? न परिणामादुपादानत्वम् अपि तु समवायिकारणत्वमिति चेत्, किं पुनस्तत्कारणत्वं नाम ? तत्रात्मन्यारम्भ इति चेत्, कीदृशस्तत्रयात्मा ? नित्यो व्यापीति चेत्, न, तदारब्धस्यापि नित्यसर्वगतत्वप्रसङ्गात्, क्वचित् कदाचिच्च तस्य भावे न तदात्मन्यारम्भः स्यात्, तस्य क्वाचित्कादिरूपाभावात्, अनभ्युपगमात् । अस्त्येव देशतस्तदभ्युपगम इति चेत् ; न, वस्तुतो देशवत्त्वे तस्य[2] कार्यत्वेन घटादिवदनित्यत्वापत्तेः[3] । कल्पनया तद्वत्त्वे तु उपादानत्वमपि कल्पितमेवेति निरुपादानमेव तत्त्वतः प्रत्यक्षादिज्ञानमनुज्ञातं भवेत् । तन्न समवायिकारणत्वेन तस्यैव उपादानत्वमुपपन्नम् । कुतो वा नित्यः पृथिव्यादिरेव तस्य समवायिकारणं न भवेत् यतोऽयमायासः, आत्मकल्पनायाम् अचेतनत्वस्याविशेषात् ? 'न पार्थिवादिपरमाणुसमवेतं ज्ञानम् अस्मदादिप्रत्यक्षत्वात्, यत्तत्समवेतं न तत्तथा यथा तद्रूपादि, तथा च ज्ञानम्, तस्मान्न तत्समवेतम्' इत्यनुमानेन प्रतिबन्धादिति चेत्, आत्मसमवेतमपि न भवेत्, तत्सर्वगतत्वादिवदेवास्मदादिप्रत्यक्षत्वाभावापत्तेः । न हि तत्सर्वगतत्वमस्मदादेः प्रत्यक्षम्, अविवादेन "सर्वगत आत्मा सर्वत्रोपलभ्यमानगुणत्वात्" [　　] इत्यादेरनुमानस्य वैफल्योपनिपातात् । साधनाव्यतिरेकी च दृष्टान्तः मानसप्रत्यक्षविषयतया परमाणुरूपादेरप्यस्मदादिप्रत्यक्षत्वात्, अन्यथा 'यावान् कश्चिद् गुणः स सर्वोऽपि क्वचिदाश्रितः' इति व्याप्त्यपरिज्ञानात् कथमिदमनुमानम्— "बुद्ध्यादयः क्वचिदाश्रिता गुणत्वाद्रूपादिवत्" [　　] इति ? अथास्मदादिबाह्येन्द्रियप्रत्यक्षत्वादिति हेतुः, तन्न, असिद्धत्वात् । न हि तत्र यक्षस्य बुद्धेरस्ति शरीरदर्शनेऽपि तद्विकल्पे संशयात् । तन्नानुमानप्रतिबन्धात् ज्ञानस्य तत्परमाणुसमवाये[4] कश्चयप्रतिबन्धः, यत आत्मैव तत्र समवायहेतुरिति कल्प्येत । भवतु चेतन एवात्मा तत्रोपादानं तस्य तथापरिणामोपपत्तेरिति चेत्, तस्यापि कथञ्च गोलकादिवत् शरीरे सर्वत्रापि दर्शनव्यापारः ? तत्स्वभावस्यान्यथात्वायोगादिति चेत्, सत्यमिदम् ; यदि न किञ्चिदपि तस्यावरणं भवेत् । भवति च तदस्ति तस्यावेदितत्वात्, गोलकादौ तद्व्यापारः तत्र कर्मपटलस्य स्वच्छत्वेनाप्रतिरोधकत्वात् । अभिहितं चैतत्—"कथञ्चित्स्वप्रदेशेषु स्यात् कर्मपटलाच्छता"[5] इति । ततो युक्तमक्षानपेक्षं केवलिनः प्रत्यक्षम्, तत्र वैशद्यस्य तल्लक्षणस्य पुष्कलत्वात् । तस्य चावरणविवेकनिबन्धनत्वेन अक्षव्यापारपराधीनत्वाभावात् । एतदेवाह—

---

१ तस्याभावेन आ०, ब०, प० । २ आत्मन । ३ –पत्ति क–आ०, ब०, प० । ४–यवाय प्रतिबन्धन य–आ०, ब०, प० । ५ न्यायवि० श्लो० ३६१ ।

**विज्ञानमञ्जसा स्पष्टं विप्रकृष्टे विरुद्ध्यते ।**
**न स्वप्नेक्षणिकादेर्वा ज्ञानावृतिविवेकतः ॥२१॥** इति ।

**विज्ञानं** सकलवेदनं **विप्रकृष्टे** देशकालस्वभावव्यवहिते[1] वस्तुनि **अञ्जसा** मनाक् **स्पष्टं** परिस्फुटं **न विरुद्ध्यते** । कुत एतत् ? **ज्ञानावृतेः** ज्ञानावरणस्य **विवेकतः** विश्लेषत इति । तात्पर्यमत्र–सति अवैशद्यसम्भवे [2]तेन विरुद्ध्येत, न चायमस्ति, तन्निमित्तावरणस्य तत्राभावात्, तदभावस्य च निरूपणात् । अत्रैव 'स्वप्न' इत्यादि निदर्शनम् । स्वप्नश्च स्वाप ईक्षणिकाश्च ग्रामशाकिन्यः **स्वप्नेक्षणिकास्त** आद्यो यस्य समाहितचित्तादेस्तस्य **वा** तस्येव । **वा** शब्दस्येवार्थत्वात् । यथैव हि सत्यस्वप्नादौ विज्ञानं विप्रकृष्टविषयमपि स्पष्टं तदावरणविगमे तद्विरोधिनस्तदस्पष्टत्वस्याभावात्, तथा सकलज्ञविज्ञानमपीति भावः । न च सत्यस्वप्नादिज्ञानं तादृशमसिद्धमेव; कार्यतो लोकप्रसिद्धत्वात् ।

साम्प्रतं प्रतिपादितार्थसङ्ग्रहार्थं श्लोकानाचक्षाणः प्रथममात्मनो ज्ञानात्मकत्वे सर्वस्य सर्वदर्शित्वपर्यनुयोगम् आवरणविवेकवैचित्र्येण परिहरन्नाह–

**ततः संसारिणः सर्वे कथञ्चिच्चेतनात्मकाः ।**
**तत्तत्स्वभावतो ज्ञानं सर्वत्र शबलायते ॥२२॥** इति ।

**संसारिणो** भवप्रबन्धानुबन्धिनो जीवा **कथञ्चित्** न सर्वात्मना **चेतनात्मकाः** स्वपरविषयपरिज्ञानस्वभावाः । कुत एतत् ? **ततो**ऽनन्तरोक्ताज्ज्ञानावृतिविवेकात् । **'कथञ्चित्'** इत्यत्रापि योज्यम् । **कथञ्चित्** केनचित् क्षयोपशमविशेषप्रकारेण भवतो न सर्वात्मना, ततः सर्वात्मनैव[3] तदात्मत्वोपपत्तेः । यत एवं **तत्तस्मात् ज्ञानं** प्रकमात् संसारिसम्बन्धि **सर्वत्र** सर्वस्मिन् स्वरूपे अर्थरूपे च **शबलायते** स्पष्टास्पष्टतरत्वादिविविधप्रतिभासरूपतया चित्रीभवति । तदपि कुतः ? **तत्स्वभावतः** तस्य तद्विवेकस्य स्वभावः शबलज्ञानजननहेतुः शक्तिभेदस्तत इति ।

बोधावरणविश्लेषवैचित्र्ये सति जन्मिनाम् ।
भाति ज्ञानवैचित्र्यं स्पष्टास्पष्टादिरूपतः ॥१७००॥
मणौ[4] प्रकाशवैचित्र्यं मलविश्लेषभेदतः ।
विलोकयन्तो[5] नैवात्र विवदन्ते विपश्चितः ॥१७०१॥
ततो युक्तमशेषज्ञस्वभावस्यापि देहिनः ।
कथञ्चिज्ज्ञत्वमप्युक्तमुपपत्तिसमन्वयात् ॥१७०२॥

[6]भवतु नामैवमिदम्, परं तत्र वक्तव्यम्–यत्तदावरणं तदपि चेतनमेव "कर्मजं लोकवैचित्र्यं चेतना मानसं च तत् ।" [ अभिध० को० ४.१ ] इति वचनात् । ततो न तत्र मदिरादि-

१–हितव–आ०, ब०, प० । २ तत्तेन आ०, ब०, प० । ३–त्मन्येव त–आ०, ब०, प० । ४ मणिप्रका–आ०, ब०, प० । ५–यन्तु नै–आ०, ब०, प० । ६ बौद्धः प्राह ।

सादृश्योपकल्पनमुपपन्नमिति कश्चित्[1]; सोऽप्यनिश्चितवस्तुवादी; तथा सति निर्विवादापत्तेः। तथा हि-यदि चेतनं कर्म तर्हि तस्याभ्युदयप्रत्यवायनिबन्धनतया स्वत एवाधिगमात् न कस्यचिदपि तत्र विवादः स्यात्। अस्ति च, अनुष्ठानरूपं तदिति कस्यचित्[2], प्राकृतमित्यन्यस्य[3][4], आत्मगुणविशेष इत्यपरस्य[5], बहुलं तद्दर्शनात्। अधिगतेऽपि तस्मिन्ननन्तरफलादर्शनाशक्त्यारोपतो विवादः सम्भवतीति चेत्; उच्यते—

अतस्मिन् तद्ग्रहत्वं चेदारोपो नाधिगच्छति।
आत्मनस्तस्य बोधत्वमस्वसंवेदिनः कथम् ॥१७०३॥
अधिगच्छति चेत्तस्मादविशदोपजनिः कथम्।
अविशदानुकूलं यत्तथा तस्यात्मवेदनम् ॥१७०४॥
आरोपान्तरतस्तस्याधिगतस्याप्यनिश्चयात्।
विवादोत्पत्तिहेतुत्वं यदि तत्रोपकल्प्यते ॥१७०५॥
तदारोपान्तरेऽप्येवं प्रसङ्गस्यानिवर्तनम्।
अनवस्थाभयावाहि कथं शक्यनिराक्रियम् ॥१७०६॥
तस्मादचेतनं कर्म तत्त्वज्ञैरनुमन्यताम्।
तत्रानुष्ठानरूपत्वं यत्परैः परिकल्पितम् ॥१७०७॥
तदयुक्तमनुष्ठानादत्रैवोपक्षयं गतात्।
परलोके फलोत्पत्तेर्वार्तयाऽप्यव्यवस्थितेः ॥१७०८॥
नापि तत्प्राकृतं तस्य तत्प्रकृत्यैव सङ्गतेः।
तस्याश्चाचेतनत्वेन तत्फलाननुभवात्ययात् ॥१७०९॥
चिच्छायासङ्क्रमात् साऽपि चेतनैवेति चेदसात् (चेदसत्)।
विस्तरेण पुरा तत्र तत्सङ्क्रान्तेर्निषेधनात् ॥१७१०॥
प्रकृतौ कर्मभोगस्तन्नास्ति तस्य कथं पुन.।
पुंसि कल्पनया भावो यस्य भोक्तेति कथ्यताम् ॥१७११॥
तत्त्वतो न हि पुंसोऽस्ति तद्भोगोऽनभ्युपगमात्।
नेदानीमुपचाराच्चेत्यभोक्तैव स सर्वथा ॥१७१२॥
न च भोगमकर्तारं कर्मातीवप्रसञ्जनात्।
तत्र साङ्ख्योदितं कर्म युक्तियुक्तमुदीक्ष्यते ॥१७१३॥

१ कश्चिद्विपश्चिन्मान्यसेप्यनि-आ०, ध०, प०। २ "मीमांसकस्य"-ता० टि०। ३ "प्रकृतेः प्रधानस्य विकारः प्राकृतम्"-ता० टि०। ४ "सांख्यस्य"-ता० टि०। ५ "वैशेषिकस्य"-ता० टि०। द्रष्टव्यम्-न्यायकुमु० टि० पृ० ३। ६ "स्वस्य"-ता० टि०। ७-स्यापयावादि आ०, ध०, प०। ८ "अतिप्रसंगादित्यर्थः"-ता० टि०।

नापि वैशेषिकाभीष्टं तस्याचेतनधर्मणः ।
चेतनात्मगुणत्वस्य निषेधादव्यवस्थितेः ॥१७१४॥
आत्मनश्चेतनत्वञ्च यथास्थानं निवेदितम् ।
निवेदयिष्यते चातस्त्यज्यतां तत्र विभ्रमः ॥१७१५॥

ततः स्याद्वादिपरिकल्पितमेव पौद्गलिकं कर्मोपपन्नं तस्यैव चेतनात्मविभ्रमनिबन्धनतया मदिरादिनिदर्शनबलेन प्रतिपत्तेः । कथं पुनश्चेतन आत्मा तादृशमनर्थमूलं कर्मारभेत तत्परित्यागस्यैव तत्रोपपत्तेः, न च तस्य परप्रेरणापारवश्यम्, अनभ्युपगमात् ; इत्यप्यचोद्यम् ; मिथ्याज्ञानबलेन तस्यापि तदुपपत्तेः । तथाहि– विवादापन्नं कर्म मिथ्याज्ञानोपनिबद्धम्, आत्मनि तद्विभ्रमहेतुत्वात्, तदुपयुक्तविषादिवत् । न चाश्रयासिद्धत्वं साधनस्य; कर्मसद्भावस्य निवेदितत्वात् । तन्निबन्धनतया विभ्रमस्यापि निरूपितत्वान्न स्वरूपासिद्धत्वमपि । यथाऽवस्थितस्वपरज्ञानस्वभावस्यात्मनो मिथ्याज्ञानमेव कथं यतस्तदुपनिबद्धमात्मनि कर्म भवेदिति चेत् ? न; तस्यापि तत्पूर्वोपार्जितकर्मबलादुत्पत्तेः[1], तस्यापि तत्प्राक्कालभावि मिथ्याज्ञानात्, एवमनादित्वात् मिथ्याज्ञानतदुपनिबद्धकर्मप्रबन्धस्येत्युपपन्नं चेतनस्याप्यात्मनः कर्मोपकल्पनम् । कथं पुनरमूर्तस्यात्मनो मूर्तेन कर्ममलेनाभिसम्बन्धो मूर्तस्यैव मण्यादेर्मूर्तमलसम्बन्धस्योपलम्भादिति चेत् ? न; आकाशस्यामूर्तस्यापि मूर्तेन जलधरपटलादिनाऽभिसम्बन्धप्रतिपत्तेः । न च मण्यादावपि मूर्तिरेव मलसम्बन्धनिबन्धनम्; तन्मात्रे तत्प्रसङ्गात् । न चैवम्, उपकल्पितविशुद्धिविशेषे तदभावात् । अपि तु तद्गतः कश्चित् स्निग्धत्वादिरूपः परिणतिविशेष[2] एव, तस्य चात्मन्यपि मिथ्याज्ञानादिस्वभावस्य भावात्, उपपन्न एव कर्ममलाभिसम्बन्धः । न चैकान्तेनामूर्त एव संसारी जीवः तस्यानादिमूर्तकर्मसम्बन्धात् तत्प्रदेशानुप्रवेशरूपात् कथञ्चिन्मूर्तत्वस्यापि भावात् । तदेवाह—

**अभिन्नो भिन्नजातीयैर्जीवः स्याच्चेतनः स्वयम्** । इति ।

जीवः- प्राणभृदात्मा प्रक्रमवशात्तस्यैव जीवपदेनाभिधानात् । **भिन्नजातीयैः** पुद्गलपरिणामरूपतया स्वतो विलक्षणैः कर्ममलैः **अभिन्नोऽ**विष्वग्भूतः **स्यात्** भवेत् । **स्यात्** कथञ्चिद्वा[3] बन्धप्रकारेण । यद्येवं मूर्तो जीवस्तर्हि तन्मलबन्धवदचेतन एव स्यादिति चेत्; न; तस्य **स्वयं** स्वलक्षणतश्चेतनत्वात्, अन्यथा संसारानुपपत्तेः । दुःखानुभवप्रबन्धो हि संसारः, ॥ कथमचेतनस्य स्याद् घटादिवत् ? स्यादेव चिच्छायासङ्क्रमादिति चेत् ; न; तस्य निराकरणात् । अत एव न चेतनासमवायादपि । अपि च,

चेतनासमवायेन[4] संसारी व्योम किन्न वः ।
तत्रापि समवायस्य भावान्नित्यविभुत्वतः ॥१७१६॥
समवायस्य भावेऽपि चेतना तत्र नास्ति चेत् ।
जीवे कुतः ? स्वहेतोश्चेत् समवायो वृथा भवेत् ॥१७१७॥

१–दुपपत्तेः ता० । २–पणत्व –आ० ब०, प० । ३–द्वा प्रबन्ध—आ०, द, प० । ४– ये च सं–आ० ब०, प० ।

विनाऽपि तस्मादत्रेदमिति हेतोर्व्यवस्थिते (तौ) ।
न च तस्याः परं किञ्चित् समवायप्रयोजनम् ॥१७१८॥
तस्मादिहेदम्भावस्य समवायनिमित्तताम् ।
श्रुवता व्योम्नि चैतन्यं जीववत् परिकल्प्यताम् ॥१७१९॥
अदृष्टाभावतस्तत्र संसारो नास्ति चेदसत् ।
चेतनावददृष्टस्य समवायादवस्थिते ॥१७२०॥
सत्यप्येवं स्वतस्तस्याचेतनत्वादसत्तो ।
स्वतश्चैतन्यमायातं जीवे संसारिणि स्फुटम् ॥१७२१॥

स तर्हि कस्मात् सर्वतो न प्रकाशते सर्वविषयतयेति चेत् ? अत्राह—

**मलैरिव मणिर्विद्धः कर्मभिर्न प्रकाशते ॥२३॥** इति ।

यथा समन्ततः प्रकाशात्माऽपि जात्यो **मणिः मलैः** रजःकर्दमादिभिः **विद्धो न प्रकाशते** तथा जीवोऽपि **कर्मभिरा**वरणापरनामधेयै**र्विद्धः** परस्परप्रदेशानुगमप्रबन्धेन बद्धो **न प्रकाशते** । यदा तु तदावरणमलानां तदुपादानकारणप्रत्यनीकात् उपायाभियोगात् निःशेषवृत्त्या जीवतो विश्लेषस्तदा प्रकाशत एवासौ समन्ततः सर्वार्थसाक्षात्करणरूपतया च । तदुक्तम्[2]–

"ज्ञो ज्ञेये कथमज्ञः स्यादसति प्रतिबन्धरि ।
दाह्येऽग्निर्दाहको न स्यादसति प्रतिबन्धरि ॥" [ योगबि० श्लो० ४३१]

तदेवाह—

**सर्वार्थग्रहसामर्थ्यचैतन्यप्रतिबन्धिनाम् ।
कर्मणां विगमे कस्मात् सर्वानर्थान्न पश्यति ॥ २४ ॥** इति ।

जीवः **सर्वानर्थान् कस्मान्न पश्यति** पश्यत्येव । कदा ? **विगमे**- निःशेषविश्लेषे । केषाम् ? **कर्मणाम्** आवरणमलानाम् । कीदृशानाम् ? **सर्वो** निरवशेषो योऽर्थो देशादिविप्रकृष्टस्तस्य **ग्रहः** परिज्ञानं तत्र समर्थमेव **सामर्थ्यं** तच्च तच्चैतन्यं च तत्प्रतिबध्नन्तीत्येवंशीलानामिति । कः पुनरयं तैस्तस्य प्रतिबन्धो नाम ? पटवत् विषयप्रच्छादनमिति चेत्, ततः कथमग्रहणं विषयस्य ? तदापि विप्रकृष्टग्रहणस्य तत्स्वभावस्यापरिम्लानात् तेषाम्[3] दर्शनप्रसङ्गः पटवत् । असामर्थ्यान्नेति चेत्, न, वेदनसमर्थप्रतिज्ञाव्यापत्तेः । आवरणान्तरैः प्रतिबन्धान्नेति चेत् न, तत्राप्येवं प्रसङ्गादनवस्थापत्तेश्च । तन्न तत्प्रच्छादनं प्रतिबन्धः । शक्तिप्रध्वंस इति चेत्, उच्यते–

एकैव ज्ञानशक्तिश्चेत् सा च तैर्ध्वंस्यते यदि ।
जीव एव भवेद् ध्वस्तस्तदा गत्यन्तरच्युतेः ॥१७२२॥

---

१ आकाशस्य । २ उद्धृतोऽयम्—अष्टसह० पृ० ५० । जयध० पृ० ६६ । ध० आ० प० ५५३ ।
३ कर्मणाम् ।

कर्मावरणविश्लेषस्तस्य ध्वस्तासतः[1] कथम् ।
येन सर्वार्थदर्शित्वं ततस्तस्योपवर्ण्यते ॥ १७२३ ॥
अनेका तस्य[2] शक्तिश्चेदेकशः[3] सर्ववेदिनि ।
तस्याः साकल्यविध्वंसे जीवध्वंसः पुनर्भवेत् ॥ १७२४ ॥
असाकल्येन विध्वंसे शक्त्याऽवस्थितया कथम् ।
सर्वार्थदर्शनं तस्य न स्यात् संसारवर्तिनः ॥ १७२५ ॥
प्रत्यर्थनियता शक्तिरनेका तस्य चेत्तया ।
अज्ञातया कथं तस्य सर्वार्थग्रहसम्भवः ॥ १७२६ ॥
ज्ञातत्वमपि तस्या न शक्त्या युक्तमनेकया
अनवस्थाभयावेशस्यातिदूरोपसर्पणात् ॥ १७२७ ॥
एकया तत्परिज्ञाने शक्तिभेदे वृथा भवेत् ।
बाह्यस्याप्येकयैवार्थजातस्य प्रतिवेदनात् ॥ १७२८ ॥
अत्र चोक्तमिदं जीवध्वंसनं सोपपत्तिकम् ।
इति ये चोदयन्त्यत्र तेऽपि न न्यायवेदिनः ॥ १७२९ ॥
तच्छक्तेर्बहुरूपायाः स्वत एव प्रवेदनात् ।
अनवस्थाभयोत्पत्तिप्रसङ्गाभावनिश्चितेः ॥ १७३० ॥
ताभिरेव हि ताः शक्तीर्जीवो वेत्ति तदात्मकः ।
बाह्यानपि पदार्थौघानिति हि प्राङ्निवेदितम् ॥ १७३१ ॥
तासां [6]चाऽसकलध्वंसे जीवध्वंसः कथं भवेत्
अध्वस्तशक्त्यवस्थस्य तस्याध्वंसोपपत्तितः ॥ १७३२ ॥
कथञ्चिज्जीवविध्वंसकल्पनं तु न दूषणम् ।
स्थित्युत्पत्तिविनाशात्मविश्वतत्त्वप्रवादिनाम् ॥ १७३३ ॥

ततो युक्तं जीवस्य महच्छक्तिविध्वंसकरणमेव कर्मणा तत्प्रतिबन्धकत्वमिति । न चैवं नैषां दर्शनप्रसङ्गः विषयस्य; तत्रापि तैरेव तच्छक्तेः प्रतिबन्धनात् । भवत्वेवं तथाऽपि यथा परिगलित-निखिलजलधरपटलपरिवेष्टनस्यापि भानुमतः पुनः कुतश्चित् तदुपश्लेषसम्भवः तथा निरवशेषनिर्धूत-बोधावरणमलस्यापि केवलिनः पुनः कुतश्चित्तदभिसम्बन्धसम्भवात् अनर्थोपनिपातः किन्न भवतीति चेत् ? अत्राह—

**प्रभुः साक्षात्कृताशेषप्रपञ्चभुवनत्रयः ।**
**अनर्थैः परमात्मानमत एव न योजयेत् ॥ २५ ॥** इति ।

---

१ ध्वस्तस्येव असतः अविद्यमानस्य जीवस्य । २ अनेकान्तस्य आ०, ब०, प० । ३–कतः स–आ०, ब०, प० । ४–मर्यादा–आ०, ब०, प० । ५ ध्वंसाद्यमोपपत्तितः आ०, ब०, प० । ६–च सकल–आ०, ब०, प० ।

यतोऽयं परमात्मा सकलावरणमलापगमे सति साक्षात्कृतदोषप्रपञ्चभुवनत्रयो जात अत एव अस्मादेव हेतोः **परमात्मानं च अनर्थैः संसारदुःखैः** तत्कारणैश्च रागादिभिः **न योजयेत्**। निरवशेषतत्त्वविषयविशुद्धज्ञानात्मनस्तत्र तद्वियोजनस्यैवोचितत्वात्। मा भूदात्मनि तद्योजनं परत्र भवत्येव क्रीडासुखार्थत्वादिति चेत्; न, क्रीडाया रागिधर्मत्वेन भगवत्यसम्भवात्, नैसर्गिकनिरतिशयानन्दरूपतया तस्य तत्सुखनिरपेक्षत्वाच्च। तन्न तत्सुखार्थत्वेन तत्र तद्योजनम्। कर्मप्रेरितत्वेनेति चेत्, न स्वकर्म तस्य तत्र प्रेरकम्; तस्यानुग्रहपरस्यैव भावात्। परकर्मेति चेत्, न, तेनापि तस्याप्रेरणात्, प्रभुत्वव्यापत्तेः। कर्मण एव ततोऽपि प्रभुत्वमधिकमिति चेत्; किमिदानीं तस्य तत्प्रेरणया अनर्थयोजनस्य तत एव सम्भवात्? चेतनाधिष्ठितादेव [2]ततस्तत्सम्भवो न केवलादिति चेत्; कथमिदानीं ततस्तत्प्रेरणम्? तदपि[3] तदधिष्ठितादेवेति चेत्, न; परस्पराश्रयात्—

चेतनाधिष्ठितं कर्म प्रेरकं चेतनस्य तत्।
चेतनस्तदधिष्ठाता भवेत् तत्प्रेरणादिति ॥ १७३४ ॥
कर्मान्तरप्रणुन्नस्य तस्याधिष्ठानतो यदि।
कर्मान्तरेऽपि चिन्तेयमनवस्थाकरी भवेत् ॥ १७३५ ॥

तन्न कर्मणा तस्य प्रेरणम्। नाप्यपरेण प्रभुणा, तस्यैव तदधिकस्याभावात्। भावे तेन मुक्तात्मनामप्यनर्थकरणे किन्न प्रेरणम्? "*प्रभुर्यदेवेच्छति तत्करोति*" [ ] इति न्यायात्। एवञ्च,

पुनरावृत्तिसद्भावे मुक्तानामपि तद्बलात्।
मुक्तिकामितया न स्यादनुष्ठानं मनीषिणाम् ॥ १७३६ ॥

न तेषामसौ प्रेरको निमित्ताभावादिति चेत्, स्वस्ति तर्हि तत्प्रभवाय[4]। निमित्तपारवश्ये तदनुपपत्तेः। तत सूक्तम्–प्रभुः इत्यादि।

कुतः पुनः प्रभोर्निरवद्योपप्रपञ्चभुवनत्रयसाक्षात्करणमिति चेत्? अत्राह—

**एवं यत्केवलज्ञानमनुमानविजृम्भितम्।**
**नर्ते तदागमात् सिद्ध्येत् [न च तेन विनाऽऽगमः]** ॥ २६ ॥ इति।

एवम् अनन्तरमुपवर्णितप्रकारं भगवतो **यत्केवलज्ञानमनुमानेन** पूर्वोक्तेन वक्ष्यमाणेन च **विजृम्भितं** निष्प्रत्यनीकं प्रवृत्तं **तदागमात्** आगममूलात् सम्यग्दर्शनाद्यभ्यासात् **ऋते** विना न **सिद्ध्येत्** न निष्पद्येत, तत एव निष्पद्यत इत्यर्थः।

तदनेन माहेश्वरं तज्ज्ञानमनागमाभियोगपूर्वकमिति[5] प्रत्युक्तम्, तथा हि—तदपि तत्पूर्वकं पुरुषातिशयत्वात् शास्त्रज्ञानपुरुषादितदतिशयवत्। तदविशेषेऽपि[6] तत्प्रकर्षादिरेव [7]तत्पूर्वको न तज्ज्ञानमिति

१ प्रागुक्त्याप–आ०, ब०, प०। २ कर्मण। ३–पि इत्येतद्–आ०, ब०, प०। ४ तत्प्रभावाय आ०, ब० प०। ५ नित्यशुद्धज्ञानवत्त्वान्महेश्वरस्य। ६ पुरुषातिशयत्वाविशेषेऽपि। ७ आगमाभ्यासपूर्वक। ८ माहेश्वर ज्ञानम्।

चेत्; कार्यत्वाद्यविशेषेऽपि घटादिकमेव बुद्धिमद्धेतुक न तनुकरणादिकमित्यपि विभागस्तथा भवेदिति कथमीश्वरसिद्धिर्यतः तज्ज्ञानमतत्पूर्वमुच्येत ? तन्न किञ्चिदेतत् । नन्वेवमागमस्य तत्पूर्वकत्वं न भवेत्, ततोऽपि पूर्वं तस्याभावादिति चेत्, अत्राह–'न च तेन विनागमः' इति । तेन केवलज्ञानेन विना आगमः तदर्थानुष्ठानहेतुः न च नैव सिद्धयेत् । तस्यापौरुषेयस्य निषेधात् । न चैवमन्योन्यसंश्रय, हेतुहेतुमद्भावेन परमागमकेवलज्ञानसन्तानस्य बीजाङ्कुरवदनादित्वात् । एतदेव दर्शयन्नाह—

सत्यमर्थबलादेव पुरुषातिशयो मतः ।
प्रभवः पौरुषेयोऽस्य प्रबन्धोऽनादिरिष्यते ॥२७॥ इति ।

सत्यम् अवितथम् । किं तत् ? पुरुषातिशयः पुरुषस्यातीन्द्रियार्थदर्शनादिरूपः प्रवचनहेतुरतिशय. प्रकर्षो मतोऽभ्यनुज्ञात । इतिशब्दोऽत्र द्रष्टव्य.। तदभ्यनुज्ञानं च अर्थस्य आगमप्रामाण्यलक्षणस्य अन्यथाऽनुपपत्तिलक्षणात् बलादेव, न हि तत्पुरुषातिशयमन्तरेणोपपन्नमिति [1]निरूपितम् । एवञ्च अस्य प्रवचनस्य प्रभवः क्वचित् कदाचिच्चोच्छेदवतः पुनरुन्मज्जन पौरुषेयः पुरुषकृत प्रबन्धस्तु सन्तानापरनामा अनादिरिष्यते । तथा तदिष्टौ कस्यचिद् बाधकस्याभावात् । न केवलं तद्बलादेव तदभ्यनुज्ञानम्, अपि तु अनुमानादपि । तच्चेदम्[2]–यो यत्रानुपदेशालिङ्गानन्वयव्यतिरेकाविसंवादि वचनोपक्रम. स तत्साक्षात्कारी यथा सुरभिचन्दनगन्धादौ अस्मदादि, तथाविधवचनोपक्रमश्च कश्चित् ग्रहनक्षत्रादिगतिविकल्पे मन्त्रतन्त्रादिशक्तिविशेषे च तदागमप्रणेता पुरुष इति। तदागमस्यापौरुषेयत्वेन प्रणेतुरभावादाश्रयासिद्धः तदभिधेयविषयस्तथाविधवचनोपक्रम इति चेत्; न 'वेदस्य' इत्यादिना तन्नोत्तरस्य वक्ष्यमाणत्वात् । एवमप्यसिद्धं तद्विशेषणमनुपदेशत्वम्, उपदेशात् कस्यचित् तदुपक्रमसम्भवादिति चेत्, न, उपदेष्टुस्तदर्थदर्शनाद्यतिशयसम्भवे तस्यैव निखिलविषयविज्ञानाधिष्ठानत्वेनास्मदिष्टप्रतिष्ठानात् तस्याप्युपदेशबलादेव उपदेष्टृत्वपरिकल्पनायामनादिः उपदेशप्रबन्ध परिकल्पितो भवति । तत्र च 'अनादिसम्प्रदायश्चेत्' इत्यादिना दोषं वक्ष्याम । तन्नानुपदेशत्वमसिद्धम् । नाप्यलिङ्गत्वम्, न हि लिङ्गबलात् तस्य तद्विकल्पाद्युपदेश, लिङ्गस्यैव तत्र कस्यचिदसम्भवात् । सम्भवेऽपि तस्य प्राकृतपुरुषविषयत्वे सर्वस्यापि ततस्तत्प्रतिपत्तिसम्भवात् दैवज्ञत्वमविशिष्ट भवेत्। विशिष्टप्रतिपत्तृगोचरत्वे तु सिद्ध तत्प्रतिपत्तुरतीन्द्रियार्थसाक्षात्करण तदपरस्य तद्वैशिष्टयस्याशेषादिति नासिद्धमलिङ्गत्वम्[3] । नापि अनन्वयव्यतिरेकित्वम्, न हि अन्वयव्यतिरेकाभ्या ग्रहचारादे सम्भवति प्रतीति', तस्य चूतमञ्जर्यादेर्मधुमासादिवत् देशकालादिनियमाभावात् । नापि तस्याविसंवादित्वम्[4]; सति तद्वाच्यसम्बन्धपरिज्ञाने तत्र संवादस्यैव प्रतीते । कदाचित् विसंवादप्रतीतिस्तु प्रतिपत्तुरेव यथावत्तत्सम्बन्धपरिज्ञानसामर्थ्यवैकल्यलक्षणादपराधात्, न तद्वचनोपक्रमस्य। ततो युक्तं तदन्यथाऽनुपपत्त्या क्वचित् तद्विषयसाक्षात्करणसाधनम् । एवमपि ग्रहगत्यादिविषयमेव ततस्तत्सिद्धयेत् नाशेषविषयमिति चेत्, न, तद्विषयस्यैव तस्याशेषविषयतोपपत्तेः। ग्रहगत्यादयो हि देशकालजातीयविकल्पेन प्राणिना श्रेय प्रत्यवायोपनिपातनिमित्ततया प्रतीयमाना नि शेषानपि देशकालविशेषान् तन्निवासिन' नसस्थावरादीनेव विकल्पान्

१ निरूपमेवञ्च आ०, आ०, ब० । २ "सूक्ष्माद्यर्थोपदेशो हि तत्साक्षात्कर्तृपूर्वकः । परोपदेशलिङ्गाक्षानपेक्षावितथत्वतः ॥" –त० श्लो० पृ० ११ । ३ –स्यापि आ०, ब०, प० । ४ 'असिद्धम्' इति सम्बन्धः ।

प्राणिनस्तदधिकरणान् अदृष्टविशेषानपि तद्धेतुफलविवरणेन प्रत्याययन्ति, अन्यथा तल्लिङ्गु-नतया[1] तत्प्रतिपत्तेरनुपपत्तेः तत्कथमशेषविषयमेव ततस्तन्न साधितं भवेत् ? एतदेवाह—

ग्रहादिगतयः सर्वाः सुखदुःखादिहेतवः ।
येन साक्षात्कृतास्तेन किन्न साक्षात्कृतं जगत् ॥ २८ ॥ इति ।

ग्रहा आदित्यादिरादिर्येषां तारकादीनां तेषां गतयश्चारविशेषाः । उपलक्षणमिदम्-लतागुल्माद्योषधिगता रसवीर्यादयो मन्त्रध्यानादिगता वशीकरणशक्त्यादयोऽपि सर्वा निरवशेषा येन प्रतिपादितवचनोपक्रमवता साक्षात्कृतास्तेन पुरुषेण किन्न साक्षात्कृतम् इत्यर्थः ? सुखदुःखादिहेतव इत्यनेनोपपत्तिः, यतः तद्गतयो रसवीर्यविपाकादयश्च जगतः प्रीतिपरितापलाभालाभजीवितमरणादेर्शोपक्रतयोत्पादकतया चोपजाताः ततः तत्साक्षात्कारिणा तदपि साक्षात्कृतमेव, अन्यथा तत्साक्षात्करणानुपपत्तेरिति मन्यते । ततः स्थितं तद्गत्यादिसाक्षात्कारिज्ञानोपनिबन्धन एव तस्य प्रतिपादितो वचनोपक्रम इति ।

साम्प्रतं परस्य निर्बन्धात् लिङ्गबलोपनिबन्धनत्वे सत्यपि तस्य सूक्ष्मादिपदार्थ-साक्षात्करणमवश्यम्भावीति दर्शयन्नाह—

सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा ।
अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः[2] ॥ २९ ॥ इति ।

सूक्ष्माः परचेतोवृत्तिविशेषमन्त्रौषधिशक्त्यादय अन्तरिता देशकालव्यवहिता जीवित-मरणलाभालाभादयो दूराः मन्दरमकराकरादयस्त एव अर्थाः ते कस्यचित् तद्विषयानुमावतः[3] पुरुषस्य प्रत्यक्षाः विशदज्ञानविषया इति साध्यन्ते अनुमेयत्वात् अनुमानज्ञानगोचरत्वात् । यदि ते प्रत्यक्षाः किमनुमानेन प्रत्यक्षाविषय एव तदुत्पत्तेः, "प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिङ्गगम्यम्" [युक्त्यनुशा० श्लो० २२] इति भवतामप्यभ्युपगमादिति चेत्, यदि न प्रत्यक्षाः, तथाऽपि कथमनुमानम् । कथं च न स्यात् ? व्याप्त्यपरिज्ञानात् । न हि प्रत्यक्षा-दन्यत् साध्यसाधनव्याप्तिप्रतिपत्तौ [4]तस्य प्रमाणम् । अनुमानतस्तदवगतौ, ततः[5] एव, परस्पराश्रयात् । अन्यतश्चानवस्थानात् । अर्थापत्तेश्चानुमानविशेषत्वात् । उपमानस्य च प्रत्यक्षविषय एव सादृश्योपाधिकतया प्रवृत्तेः । आगमात् तत्प्रतिपत्तौ व्यर्थमनुमानं साध्य-स्यैव ततः परिज्ञानात् । ततः प्रत्यक्षमेव तत्र प्रमाणम् । तेन च व्याप्तिमवद्योतयता सूक्ष्मा-दयोऽप्यवद्योतयितव्या एव, अन्यथा तल्लिङ्गव्याप्तेस्ततोऽवद्योतनानुपपत्तेः । "प्रत्यक्षबुद्धिः" इत्यादिकं तु प्रमाणान्तरात् व्याप्तिप्रतिपत्त्यभिप्रायेणाभिहितं ततो न दोषस्तद्वचनस्य ।

यच्चोक्तम्—यदि ते प्रत्यक्षाः किमनुमानेनेति, तदपि मीमांसकस्यैव चोद्यं यः प्रत्यक्षविषयेऽपि अनुमानमनिच्छति नास्माकम् अस्माभिस्तु केवलं तत्प्रसञ्जितेनानुमानं तेषां प्रत्यक्षविषयत्वं प्रत्याय्यते । अत एवेदं प्रसङ्गसाधन[6]मामनन्ति मनीषिणः । भवेदिदं प्रसङ्गसाधनं यदि प्रत्यक्षविषय एवानुमानम् । न चैवम्, इन्द्रियशक्त्यादिवत् सूक्ष्मादेरप्यत-द्विषयस्यैव कुतश्चित् कार्यव्यतिरेकात् अनुमानोपपत्तेरिति चेत्, न, तच्छक्त्यादेरपि अनिश्चितप्रतिबन्धात् अनुमानानुपपत्तेरतिप्रसङ्गात् । प्रतिबन्धनिश्चये प्रत्यक्षतः कथमती-न्द्रियत्वं तच्छक्त्यादेरिति चेत् ? अयमपि भवत एव पर्यनुयोगो यस्य प्रत्यक्षात् तन्निश्चयो

१ तत्सूचकतया । २ तुलना— आप्तमी० श्लो० ५ । ३ —नुमानवत आ०, ब०, प० । ४ परस्य आ०, ब०, प० । ५ तत एवानुमानात् स्वीयव्याप्तिप्रतिपत्तौ । ६ —नमनुमानमिति मनी— आ०, ब०, प० ।

न स्याद्वादिनः, तेनाप्रत्यक्षादेवोहविकल्पतस्तदुपगमात्[१]। भवतु सूक्ष्मादावपि तत एव तन्निश्चय इति चेत्; न; 'तत्प्रामाण्ये[२] षट्प्रमाणनियमविनिपातात्। को वा तद्विकल्पोपगमे भवतो लाभः ? सूक्ष्मादिप्रत्यक्षत्वाभाव एवानुमातुरिति चेत्; न; 'तद्विकल्पस्यैव[३] देशकालानवच्छिन्नव्याप्तिप्रतिवेदिनो वैशद्यकोटिप्राप्तौ सूक्ष्मादिप्रत्यक्षत्वोपपत्तेः। भवति हि तस्य तत्प्राप्तिः, आवरणापाये तन्निमित्तस्यावैशद्यस्य व्यपगमात्। प्रतिपादितं च तस्य[४] तन्निमित्तत्वं क्वचिन्निरवशेषनिवृत्तिश्च। तत्र तदुपगमेऽपि तत्प्रत्यक्षप्रसङ्गभयात् निर्मुक्तिः इन्द्रियशक्त्यादेरपि स्पष्टभावाधिष्ठानतद्विकल्पशेमुषीविषयभावमुपासेदुषः प्रत्यक्षत्वाभ्यनुज्ञानस्याद्गूपणात्। ततः प्रसिद्धप्रत्यक्षापेक्षयैव कस्यचित् सूक्ष्मादयोऽर्था प्रत्यक्षाः पावकादयः इवेत्युपपन्नम्, अन्यथा तल्लिङ्गप्रतिबन्धनिर्णयानुपपत्त्या तदनुमानाभावप्रसङ्गात्। का पुनरेवं भवतस्तत्प्रत्यक्षसाधनप्रयासेन समीहितसिद्धिरिति चेत् ? निरवशेषतत्त्वदर्शिनः पुरुषस्य निर्बाधत्वेनावस्थितिरेव। अत एवोक्तम् 'इति सर्वज्ञसंस्थितिः' इति।

भवत्येव तत्प्रसङ्गसाधनं यदि ग्रहगत्यादिकमनुमानतः प्रतिपद्य कश्चिदुपदिशेत्, न चैवम्, तच्छास्त्रस्य 'वेदाङ्गत्वेनापौरुषेयस्योपदेष्टुरेवाभावात्। एतदेवाह--

वेदस्यापौरुषेयस्य स्वतस्तत्त्वं विवृण्वतः।

आयुर्वेदादि यदङ्गं [यत्नस्तत्र निरर्थकः] ॥३०॥ इति।

[७]वैद्यकमायुर्वेदः आदिशब्दात् ज्योतिःशास्त्रादि यदि चेत् अङ्गमवयवः। कस्य ? वेदस्य। कीदृशस्य अपौरुषेयस्य अपुरुषकृतस्य। पुनरपि तद्विशेषणं स्वतः पुरुषनिरपेक्षतया तत्त्वम् आत्मानं स्वर्गतद्धेतुसम्बन्धाश्च[८] विवृण्वतो व्यञ्जयत इति। अत्रोत्तरमाह-यत्नस्तत्र निरर्थकः इति। तत्र तस्मिन्नायुर्वेदादौ यत्नस्ताल्वादिव्यापारलक्षणः तदर्थव्याख्यानरूपश्च प्रयासो निरर्थको निष्फलः। तथा हि--

न तावत् कण्ठताल्वादिव्यापारस्तत्स्वरूपकृत्।
नित्यस्याकरणात्तस्य नापि तद्व्यक्तिकारणम् ॥१७३७॥
व्यक्तिस्तस्मादभिन्ना चेत् नित्यैवेति न तत्कृतिः।
भिन्ना चेद्वेदतो व्यक्तिस्तस्येति कथमुच्यताम् ॥१७३८॥
तथापि तस्य चेत् व्यक्तिस्तत्राप्येवं प्रसञ्जनात्।
अनवस्थाभयावेशान्निर्मुच्येत कथं भवान् ॥१७३९॥

अथ मतमुपलब्धिरेव व्यक्तिः, "उपलब्धिनिमित्तत्वं नान्यद् व्यञ्जकमुच्यते।" [ ] इति वचनात्। सा च विषयविषयिभावात् सम्बन्धादेव वेदस्येत्युच्यते नाभेदात् नापि तदन्तरकरणादिति; तन्न; उपलब्धेः प्रयत्नकार्यत्वेनानित्यत्वे तद्विषयभावस्यापि तदपेक्षत्वेनानित्यत्वप्रसङ्गात्। अनित्य एव स इति चेत्; वेदः कथं नित्यः ? तस्य तस्माद् व्यतिरेकादिति चेत्; स एव वेदस्येति कथम् ? व्यतिरिक्तादेव कुतश्चित् सम्बन्धादिति चेत्; न; तत्रापि पूर्ववत्प्रसङ्गात् अनवस्थापत्तेश्च। तन्नोपलब्धेर्व्यक्तित्वम्, आविर्भावस्यैव तदनर्था-

१ व्याप्तिनिश्चयस्वीकारात्। २ ऊहस्य प्रामाण्ये। ३ ऊहविकल्पस्यैव। ४ आवरणस्य यद्वैशद्यनिमित्तत्वम्। ५ -दिकमनु- आ०, ब०, प०। ६ "शिक्षा कल्पोऽथ व्याकरणं निरुक्तं ज्योतिषं तथा। छन्दसां विचितिश्चेति षडङ्गो वेद उच्यते॥"- हा० टि०। ७ वैद्यकमायुर्वे- आ०, ब०, प०। ८ -सम्बन्धं च आ०, ब०, प०।

न्तरस्य तदुत्पत्ते, तस्य च वेदवत् स्वत सिद्धेरपपन्नमेतत् 'यत्नस्तत्र निरर्थक.' इति । न चैवम् । अत इदमुच्यते--पौरुषेय आयुर्वेदादि प्रयत्नसाफल्यादिति । व्यभिचारी हेतुर्वाचक-पुरुषापेक्षया भारतादेरपौरुषेयत्वेऽपि तत्साफल्यादिति चेत्, न, तदपेक्षया वस्तुतस्तस्य पौरुषेयत्वात् । कथ तर्हि 'स तेन वाच्यते' इति व्यवहार ? 'क्रियते' इत्येव तदुपपत्तेरिति चेत्, न, प्रागपि तादृशस्य प्रबन्धस्य भावात्, तदेकत्वाध्यारोपेण तद्व्यवहारोपपत्ते । 'त एवामी शालयो भुज्यन्ते ये परद् भुक्ता' इति व्यवहारवत् । व्यासाद्यपेक्षया तु [1]तद्व्यवहार, तत पूर्व तादृशस्याभावात् । भवत्वेवमायुर्वेदादेरपि गुर्वादिभिर्भाषितस्यैव सदृशतया शिष्यादिभिरपि भाषणादनुभाष्यत्वमेव न पौरुषेयत्व मूलस्य कस्यचित् कर्तुर-भावात् । अत एवोक्तम्---

"वक्ता न हि क्रमं कश्चित् स्वातन्त्र्येण प्रपद्यते ।
यथैवास्य परैरुक्तस्तथैवैनं विवक्षति ॥
परोऽप्येव ततश्चास्य सम्बन्धश्चदनादिता ।
तेनेय व्यवहारात् स्यादकौटस्थ्येऽपि नित्यता ॥
यत्नत प्रतिषेध्या न पुरुषाणा स्वतन्त्रता ।"
[मी० श्लो० शब्दनि० श्लो० २८८-९०]

इति चेत्, तदसत्यम्, प्रत्येकमस्वतन्त्रत्वेऽपि पुरुषाणा तत्प्रबन्धस्य तत्र स्वातन्त्र्यात् सत्येव तस्मिन् तद्भावात् । इदमेव हि तस्य तत्र स्वातन्त्र्य नाम यत्तद्भावाभावनियमानु-विधायित्वमायुर्वेदादे, अत कथमपौरुषेयत्वम् ? सत्यमेतत्, अपौरुषेयत्व तु कस्यचिदती-न्द्रियदर्शिनस्तत्कर्तुरभावादिति चेत्, कथमिदानी तत्राप्रामाण्यनिवृत्तिनिर्णय सति पौरुषत्वे दोषपरिशङ्कनस्यानिर्वृत्ते ? "दोषा सन्ति न सन्तीति पौरुषेयेषु शङ्क्यते" [ ] इति स्वयमेवाभिधानात्[3] । कुतो वा तत्र तादृश कर्तुरभाव ? प्रत्यक्षादिति चेत्, न, चिरकालव्यवहितस्य ततो भाववत् अभावस्याप्यप्रतिपत्ते । इदानी ततस्तदभावप्रतिपादन तु न दोषाय, अभीष्टत्वात् ।

कर्तुरस्मरणाल्लिङ्गादिति चेत्, किमिदमस्मरणम् ? अपरिज्ञानमिति चेत्, न, 'सकलज्ञस्य' इत्यादिना[4] दत्तोत्तरत्वात् । अनभ्युपगम इति चेत्, किं पुनरभ्युपगमेन भाव-व्याप्तिर्यतस्तदभावे न भवेत् ? तथा चेत्, सर्वस्य सर्वमिष्टं सिद्धयेत्, अनिष्टस्यानभ्यु-पगमादेवाभावोपपत्ते । न तन्मात्रादेवाभाव अपि तु प्रमाणमूलादिति चेत्, किं तर्हि तत् प्रमाण यदनभ्युपगमस्य मूल भवेत् ? इदमनुमानमिति चेत, न, परस्पराश्रयात्-अनभ्युपग-मादनुमानम्, अनुमानादनभ्युपगम इति । ततोऽप्यनुमानमन्यदेवेति चेत्, न, तस्यापि भावग्राहिणस्तन्मूलत्वानुपपत्ते । अभावग्राहित्वे तु तत एवाभावसिद्धे व्यर्थमिदमनुमान भवेत् । किं वा तदन्यत् प्रमाणम् ? 'आयुर्वेदादिप्रबन्धो मूलकर्तृविकल अनादित्वात् मनुष्यप्रबन्धवत्' इत्यनुमानमिति चेत्, तदनादित्व यदि प्रमाणान्तरात्, तत एव तद-कर्तृकत्वसिद्धे व्यर्थमिदम् । अत एव चेत्, उक्त परस्पराश्रयत्वम् । तन्नातस्तद्वैकल्यसिद्धि[5] ।

आगमादिति चेत्, न, तेन तत्र प्रजापतिकर्तृकत्वस्य "एव वा अरे अस्य महतो

---

१ वाच्यते इति व्यवहाराभाव । २ यत्तद्भावा-आ०, ब०, प० । ३ "दोषा सन्ति न सन्तीति पौरुषेये तु शङ्क्यते । वेदे कर्तुरभावाच्च दोषाशङ्कैव नास्ति न ॥"- तत्त्वस० श्लो० २४९५ । ४ न्यायवि० श्लो० ३।२० । ५ तद्वैकल्यस्य सिद्धि-आ०, ब०, प० ।

भूतस्य निश्वसितमेव तद् (मेतत्) यत् ऋग्वेदो यजुर्वेदः" [ बृहदा० २।४।१० ] इत्यादिना श्रवणात् । 'तत्र तत्र प्रमाणमिति चेत्; व्याहतमेतत्–तस्यैव प्रामाण्यं साधयितुमुपक्रान्तेन तदेव प्रविरुद्धयत इति ।

नोपमानादपि तत्सिद्धिः; तादृशस्य प्रबन्धान्तरस्याभावात् । अस्त्येव मनुष्यप्रबन्ध इति चेत्; न; तस्यापि "मुखतो ब्राह्मणमसृजत्" [ ] इत्यादेरागमात् समूलकर्तृकस्यैवाधिगमात् । एतेनानन्तरप्रयोगे निदर्शनस्य साध्यवैकल्यं प्रतिपत्तव्यम् ।

अर्थापत्तेस्तत्सिद्धिरिति चेत्; कुतस्तदुत्पत्तिः ? प्रामाण्यादिति चेत्; तदपि कस्मात् ? न तावत्तद्वैकल्यात्; परस्पराश्रयात् । नापि संवादात्; प्रत्यागमेऽपि ततस्तद्वैकल्यसिद्धिप्राप्तेः । न हि तत्र संवाद एव नास्ति, तद्विपर्ययेऽपि तस्य बहुलमुपलब्धेः । न सर्वत्रेति चेत्; न; प्रकृतेऽपि तुल्यत्वात् । तदनेन "स्वतः" [ मी० श्लो० ] इत्यपि[2] प्रत्याख्यातम् ।

कथं वा तस्य प्रामाण्यमचेतनत्वात् कलशादिवत् ? सत्यमेतत्, मुख्यतस्तत्त्वज्ञानस्यैव तत्त्वात्, तत्कारणत्वेन तूपचरितमेव शब्दस्य तदुच्यत इति चेत्; न स्वतस्तस्य तत्कारणत्वं व्याख्यावैफल्यात् । न वैफल्यं तया तत्र विप्रतिपत्तेः निराकरणादिति चेत्; सैव कुतः ? 'समयान्तराभियोगादिति चेत्; अनभियुक्ततदन्तरस्य तर्हि[4] तन्निरपेक्षमेव स तत्कारणं सम्भवेत् । न चैवम्, सम्प्रदायबलादेव तत्रापि तस्य तत्त्वदर्शनात् । अत एव "आचार्यवान् पुरुषो वेद" [ छान्दो० ६।१४।२ ] इति श्रुतिः । कथं वा तदभियोगाद्विप्रतिपत्तिः ? सत्यपि तस्मिन् शब्दस्य तत्करणशक्तेरपरिक्षयात् । परिक्षये स एव परिक्षीणः स्यात् अभेदात् । भेदे तु तदपेक्षणात् स्वतस्तस्य तद्धेतुत्वं व्याहन्यते । परिक्षीणाच्च कथं ततस्तत्त्वज्ञानम् असतस्तदनुपपत्तेः ? न तत एव तत्त्वज्ञानमपि तु पुनरन्यतस्तादृशादिति चेत्; नः तस्याप्यन्यतस्तदभियोगादेव परिक्षयात्, पुनरप्यन्यतस्तत्कल्पनायामनवस्थापत्तेः । अतो न शब्दसामर्थ्ये विप्रतिपत्तिरिति न तन्निराकरणात् तस्या साफल्यम्, अपि तु शब्दस्य शक्तिकरणादेव । कथं पुनः स्वतोऽसती तच्छक्तिरन्यतो भवति ? "न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते" [ मी० श्लो० चोदना० श्लो० ४७ ] इति न्यायादिति चेत्; मिथ्याज्ञाने शक्तिः कथम् ? न हि साऽपि शब्दस्य स्वत एव; 'अप्रामाण्यं परतः' इत्यस्य[5] व्याघातात् । अथ तज्ज्ञाने परस्यैव व्यापारो न शब्दस्य, यद्येवं परमेवाप्रमाणं न शब्द इति सर्वस्यापि तस्य प्रामाण्यमेव भवेत् ।

परस्यापि स्वतस्तत्र व्यापारो यदि सम्मतः ।
तदप्रामाण्यमायाति स्वत एव तदा न किम् ॥१७४०॥
तत्परस्यैव तत्रापि व्यापारपरिकल्पने ।
प्राप्यप्रसनानतिक्रान्तिरव्यवस्थितिमावहेत् ॥१७४१॥
परतो न क्वचित्तस्मादप्रामाण्यव्यवस्थिति ।
इति साऽपि स्वतः प्राप्ता निवार्येत कथं त्वया ॥१७४२॥

दूरमनुस्मृत्याऽपि परस्य परोपकल्पितया शक्त्या तत्कारणत्वं ब्रुवाणेन शब्दस्यैव

---

१ तत्र तत्र प० । २ "स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्"–मी० श्लो० चोदना० श्लो० ४७ । ३ समयान्त–आ०, ब०, प० । ४ व्याख्यानिरपेक्षमेव । ५ "यदप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः । वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥" –मी० श्लो० चोदना० श्लो० ५४ ।

तथा तद्वक्तव्यमविशेषादिति कथ तच्छक्तिरन्यतो न भवेत् यत सत्यज्ञानशक्तिरपि 'तथा परतो नावकल्प्येत । स च पर पुरुषस्तदर्थसाक्षात्कार्येव नापर, तत तदनवक्लृप्तस्य वक्ष्यमाणत्वात् । तदेव दर्शयन्नाह—

**शास्त्रज्ञानं तथैव स्यात् सामग्रीगुणदोषत ।** इति ।

एवकारो हेतुपदानन्तर द्रष्टव्यो भिन्नक्रमत्वात् । तदयमर्थ –शास्त्राद्वेदादन्यतो यज्ज्ञान तदर्थविषय तत् स्यात् भवेत् । कथम् ? तथा तेन सत्यमिथ्यात्वात्मना प्रकारेण । कुतस्तथा तत् स्यात ? सामग्री शास्त्रमेव तस्या यौ गुणदोषौ पुरुषविशेषापादितसत्यमिथ्याज्ञानजननशक्तिरूपौ तत एव ताभ्यामेव । दोषग्रहण निदर्शनार्थम्, यथा दोषतो मिथ्यात्वेन भावस्तथा सत्यत्वेन गुणत इति । सतोऽपि गुणस्य दोषापाकरण एव व्यापारो न सत्यज्ञाने, तस्य शास्त्रादेव भावादिति चेत्, किमेव दोषस्यापि गुणापाकरण एव व्यापारात् मिथ्याज्ञानमपि शास्त्रादेव न भवेत् ? दोषत पूर्व गुणस्यैवाभावादिति चेत्, गुणत पूर्व दोषस्याप्यभावात् न ततोऽपि तदपाकरण स्यात् । सम्भवनियमे वा दोषस्य गुणस्यापि स्यादविशेषात् । ततो युक्त तज्ज्ञानस्य पुरुषायत्तगुणोपनिबन्धनत्वेन परत एव प्रामाण्यम् किं पुनर्वेदे तदर्थदर्शिना पुरुषेण ? न हि तेन तस्य करण नित्यत्वात्, नापि तदर्थज्ञानस्य, तस्यापि जैमिन्यादिसम्प्रदायपरम्परात एवोपपत्तेरिति चेत्, न, प्रयत्नसापेक्षत्वेन तत्र नित्यत्वविरोधस्याभिधानात् । तदविरोधेऽपि दूषणमाह–

**अविरोधेऽपि नित्यस्य भवेदन्धपरम्परा ॥ ३१ ॥**

**तदर्थदर्शिनोऽभावान्म्लेच्छादिव्यवहारवत् ।** इति ।

अन्धवत् अन्धो जैमिन्यादिसम्प्रदाय तस्यातीन्द्रियस्वर्गयागसम्बन्धादिवेदार्थसस्पर्शवैमुख्यात् तस्य परम्परा प्रवाहो भवेत् । कदापि ? अविरोधेऽपि विरोधाभावेऽपि । कस्य ? नित्यस्य वेदस्य । कुतो भवत् ? तदर्थदर्शिनो जैमिन्यादीना मध्ये तदर्थ वेदार्थ पश्यतीत्येवशीलस्य कस्यचिदपि अभावात् । अत्र निदर्शनम्–म्लेच्छा 'प्रत्यन्तवासिनो वलाकादय, आदिशब्दादन्येऽपि तादृशा व्याधादय तेषा व्यवहारो मातृविवाहादिस्तत्रैव तद्वदिति । प्रसिद्ध हि परस्यापि मातृविवाहादे श्रेयोहेतुत्वदर्शिन कस्याप्यभावात्, अतद्दर्शिसम्प्रदायस्य च तद्विमुखत्वादन्धप्रवाहत्व तथा प्रकृतस्यापीत्युपपन्नो दृष्टान्तभाव ।

*सत्यपि तदर्थाभिमुखे अनादिसम्प्रदायत्वे वेदागमस्य भवितव्य तदर्थदर्शिना पुरुषेणेति* प्रतिपिपादयिषु पूर्वपक्षयति–

**अनादिसम्प्रदायश्चेत् आयुर्वेदादिरागम ॥ ३२ ॥** इति ।

सुबोधमिदम् । अत्रोत्तरमाह—

**कालेनैतावताऽनाप्त कथन्न प्रलयं गत ।** इति ।

एतावता अनादिरूपेण कालेन कथम प्रलय गत तदागम । कीदृश ? अनाप्त अविद्यमानतदर्थ'साक्षात्कारिपुरुष । प्रलय गतोपपत्त्येव (गत एव उपपत्त्या) रागाद्युपहतचेतस्कतया प्रज्ञावैकल्यादिना च अर्वाग्दर्शिनामनुपदेशान्यथोपदेशादे अप्रतिवेदना यथाप्रतिवेदनादेश्च प्रतिपुरुषमुपक्षीयमाणस्य सर्वत्रापि देशे अनादिना कालेन निर्मूलोन्मूलनस्य सम्भवात् ।

१ तदा आ०, ब०, प० । २ 'प्रत्यन्तो म्लेच्छदेश स्यात्' इत्यमर । ३ –तदर्थाभिमुखेऽसाश– आ०, ब०, प० ।

श्रूयते हि इदानीन्तनानामपि नैपथ्यादिव्यवहाराणां बहुजनपरिगृहीतानामपि निर्मूलप्रलयः किं पुनस्तथा तदागमस्यादिकालीनस्य न भवेत्। न चैवम्, ततो यत्सिद्धं तदाह–

**सिद्धं श्रुतेन्द्रियातीतं त्रिकालविषयं स्फुटम् ॥३३॥** इति।

'शास्त्रज्ञानम्' इत्यनुवृत्तम्। शास्त्रस्यायुर्वेदादेः ग्रन्थतोऽर्थतश्च यज्ज्ञानम् उच्छेदगतस्य पुनः प्रवृत्तिनिमित्तं तत् सिद्धं क्वचित् पुरुषे निश्चितम्, अन्यथा तत्प्रलयगमनाभावानुपपत्तेः। तच्च श्रुतातीतम् उपदेशानपेक्षत्वात् अन्यथा भवेत्[1] इत्यादिदोषात्। इन्द्रियातीतं च तदधीनत्वे तज्ज्ञानत्वानुपपत्तेः। अत एव त्रिकालविषयम् इन्द्रियद्वारस्यैव तस्य कालनियमसम्भवात्। आवरणपरिक्षयाच्च स्फुटमिति स्पष्टमिति। तर्हि तथाविधस्य तज्ज्ञानस्य सुगतादिष्वेव भावात् त एव तद्वेदादेः प्रवर्त्तका[2] इति चेत्, अत्राह–

**तथा न क्षणिकादीनां सर्वथाप्तगुणात्ययात्।** इति।

क्षण इति क्षणभङ्गवाद उच्यते विषयिणि विषयोपचारात्, तद्वत्त्वेन क्षणिकः सुगतः आदिशब्दादीश्वरादयस्तेषां तथा तेनोक्तप्रकारेण न शास्त्रज्ञानम्। कस्मात्? आप्तस्य यो गुणः अज्ञानरागादिदोषाभावलक्षणः "आप्तिं दोषक्षयं विदुः"[4] [ ] इति वचनात्[3], तस्यात्ययात् अभावात्। भवतु नाम क्षणभङ्गादौ प्रमाणपर्यातिवर्तिनि तेषां तदत्ययो न नीलादौ तस्य तदनतिवर्तिन एव तैरुपदेशादिति चेत्, न, तस्यापि क्षणभङ्गाद्यव्यतिरेकेण तदतिवर्तित्वाविशेषात्। अत एवोक्तं 'सर्वथा' इति। ततो न तेषां तत्प्रवर्तकत्वं भगवत एव तदुपपत्तेः। उपसंहरन्नाह–

**तद्विरम्य विरम्यैतद् युक्तं शास्त्रप्रवर्त्तनम् ॥३४॥** इति।

ततस्तस्मादुक्तरूपात् ज्ञानात् एतत् प्रतीयमानं शास्त्रस्यायुर्वेदादेः प्रवर्तनं युक्तमुपपन्नम्। कथम्? विरम्य विरम्य वीप्सया अन्तराऽन्तरा विच्छेदं गत्वेति दर्शयति। प्रसिद्धश्च परस्यापि तथा तद्विच्छेदः, विच्छिन्नस्य पुनः कुतश्चित् तदर्थदर्शनवतः प्रवर्तनं च। 'वामदेवेन दृष्टं साम कठेन प्रोक्तम्'[6] इत्यादिव्यवहारात्, स्वयं प्रतिपन्नस्य प्रथमोक्तस्य च दृष्टत्वप्रोक्तत्वोपपत्तेः। ततेस्मैव[7] (ततोऽस्त्येव) तदर्थदर्शी पुरुषः तदभावे शास्त्रस्यैव प्रलयप्रसङ्गात्।

तदेवं तस्य शास्त्रे प्रत्युपयोगमभिधाय तत्र प्रवृत्तेरर्थवत्त्वं प्रत्यभिधित्सुराह–

**तादृशोऽभावविज्ञाने शास्त्रे वृत्तिरनर्थिका।** इति।

तादृशोऽतीन्द्रियदर्शिनो वीतदोषस्य च पुरुषस्य प्रणेतुः अभावविज्ञाने शास्त्रे आयुर्वेदादौ या वेदघादिना प्रवृत्तिः सा अनर्थिका[8] निष्प्रयोजना भवेदिति शेषः। नैतदस्ति, शास्त्रात्तदर्थप्रतिपत्तेस्तत्प्रयोजनत्वादिति चेत्, न शास्त्रस्याबोधकत्वेन[9] ततस्तत्प्रतिपत्तेरनुपपत्तेः, अन्यथा यतः कुतश्चित् तत्प्रसङ्गेन शास्त्रस्यैव वैयर्थ्यापत्तेः। भवतु बोधकादेव

---

१ 'भवेदन्धपरम्परा' इत्यादिदोषात्। २ –कार्वेरिति आ०, ब०, प०। ३ स्फुटित ता०। ४ "आप्तिं दोषक्षयाद्विदुः"– सांख्यका० माठर० पृ० १२। यदा० उ०... ] आयुर्व०.... । ५ साधुकण्ठेन आ०, ब०, प०। ६ ऐतरेयोपनिषदि (२।५) प्रोक्तं यत् वामदेवो गर्भे वसन्नेव सर्वमहं वेद इत्युवाच। ७ ततेः स्मैव ता०। ८ –नर्थका ता०। ९ –स्ये ग– ता०।

तत प्रतिपत्तिरिति चेत्; न, स्वतो बोधकत्वस्य प्रत्याख्यानात्। परतश्चेत्; कस्तर्हि स पर अन्यनातीन्द्रियज्ञानादिसम्पन्नात् पुरुषोत्तमात्, तत्सम्प्रदायादेव तस्य यथार्थप्रतीतिनिबन्धनत्वोपपत्ते। जैमिन्यादिसम्प्रदायादेव तस्य तन्निबन्धनत्वमिति चेत्; न, तत्रान्धपरम्परादोपस्य भाषितत्वात्। तत शास्त्रस्य तदर्थज्ञान प्रति साफल्यमभ्युपगच्छता तदर्थोपदेशकारी निर्दोषोऽनक्षार्थसाक्षात्कारी च वक्तव्य, अन्यथा ततोऽयथार्थस्य तस्य [1]ज्ञानस्यापत्त्या प्रवृत्तिवैफल्यापत्ते। एवमपि किं शास्त्रेण पुरुषादेव तादृशात् हेयोपादेयतत्त्वपरिज्ञानभावादिति चेत्, न, ततोऽपि शास्त्रमुखेनैव तदुपपत्ते, तद्बुद्धचैव विनेयाना तदसम्भवात्। भवति स वक्तव्यो यदि कुतश्चित्तादृशस्य पुरुषस्य निश्चयो भवेत्, न चायमस्ति, तत्र बाधकवत् साधकस्याप्यसम्भवेन सशयस्यैवोपपत्तेरिति चेत्, अत्राह–

सन्देहेऽपि च सन्देहस्ततस्तत्त्वं निरूप्यते ॥३५॥ इति।

सन्देहेऽपि च तादृश पुरुषस्य सन्देह शास्त्रे[2]ऽपि किमिद तेन पौरुषेयमुत नेति, किमस्य तद्गुणत प्रामाण्यमुत स्वत इति, किमिदमेव धर्मे प्रमाणमुत सोऽपीति च सशय प्राप्नुयात्। न चाय परस्य पथ्य। सति सशये "यद्वा कर्तुरभावेन" [मी० श्लो० चोदना० श्लो० ६३] इत्यादे "स्वत सर्वप्रमाणानाम्" [मी० श्लो० चोदना० श्लो० ४७] इत्यादे, "धर्मे चोदनैव प्रमाणम्" [ ] [3]इत्यवधारणस्य च विलोपसम्पातात्। तत तस्मादुक्तन्यायात् तत्त्व तस्य तादृशस्य भाव निरूप्यते विचार्यते, तदपरीक्षायामुक्तदोषानतिवृत्ते।

तदेव वेदाऽवयवत्वेनायुर्वेदादे नित्यत्वे दोषमभिधाय साम्प्रत शब्दमानस्य नित्यत्वे त दर्शयन्नाह–

स्वतन्त्रत्वे तु शब्दानां प्रयासोऽनर्थको भवेत्। इति।

स्वतन्त्रत्वमन्यानपेक्षत्वमनेन नित्यत्व दर्शयति सत्येव तस्मिन् तदुपपत्ते तस्मिन् सति। केषाम्? शब्दाना लौकिकानामन्येषा च प्रयास ताल्वादिपरिस्पन्दरूप प्रयत्नोऽनर्थको विफलो भवेत्। तु शब्दादवधारण प्रतिपत्तव्यम्। नानर्थकस्तेषा तेन व्यक्तेरिति चेत्, न प्रयासदेश एव तत्प्रसङ्गात्, प्रदीपाद्यालोकदेश एव घटाद्यभिव्यक्तेरप्युपलम्भात्। तथा च न परेण शब्दस्य श्रवणम् अश्रोत्रप्राप्तस्य तदसम्भवात्। अथ प्रयासाद् व्यञ्जका वायव श्रोतु श्रोत्रप्रदेश यावदभिसर्पन्तस्तत्रापि तदभिव्यक्ति कुर्वन्ति प्रयासस्य [4]तु तत्कारित्वोपकल्पन तद्द्वारकमेव न साक्षात्। न चैव सर्वत्र तदभिव्यक्ति, व्यञ्जकाना सर्वत्राभावादिति। तन्न सत्यम्, एवमभिव्यक्ताऽनभिव्यक्तरूपतया तत्र[5] भेदापत्ते। नाय दोष क्वचिदभिव्यक्तेरेव अन्यत्रानभिव्यक्तित्वेन तल्लक्षणस्य रूपान्तरस्या[6]भावादिति चेत्, कथमेवमन्यत्रानभिव्यक्तिरेव क्वचिदभिव्यक्तिरपि न भवेत्, तथा च व्यवस्थितमिद भवेत्–'प्रयासो निरर्थको भवेत्' इति, अनभिव्यक्तिवत् तद्रूपायामभिव्यक्तावपि प्रयासस्यानुपयोगात्। कथ पुनरनभिव्यक्ति अभिव्यक्ति, अभावस्य भावरूपत्वानुपपत्तेरिति चेत्, अभिव्यक्तिरपि अनभिव्यक्तिर्न भवेत् भावस्यापि अभावरूपत्वायोगात्। देशभेदापेक्षया तस्य ताद्रूप्यस्येतरत्रापि तुल्यत्वात्। ततो निरवयवस्य क्वचिदभिव्यक्तौ सर्वत्राभिव्यक्तिरेवेति नष्टो दूरादश्रवणव्यवहारो दिक्पारवर्तिभिरपि व्यापिनि तत्र[7]

१ ज्ञानस्योपपत्त्या आ०, ब०, प०। २ शास्त्र कि–आ०, ब०, प०। ३ चोदनैव प्रमाणञ्चेत्येतद् धर्मेऽवधारितम्–मी० श्लो० चोदना० श्लो० ४। ४ तत्तत्कारित्वोपकल्पनं तद्द्वाधकमेव आ०, ब०, प०। ५ शब्दे। ६–स्य भा–आ०, ब०, प०। ७ शब्दे।

श्रवणस्यैव सम्भवात्। कुतो वा प्रयासस्य व्यञ्जकत्वमेव न कारकत्वम् ? ततः[1] प्रागपि शब्दस्य भावादिति चेत्, श्रोत्रज्ञानविषयत्वमपि भवेत् तस्य तल्लक्षणत्वादिति व्यर्थ एव प्रयासः स्यात्-तेनापि[2] तस्यैवाभिव्यक्त्यपरनामधेयस्य करणात्, तस्य च विनाऽपि तेन सत्त्वात्, ततश्च करणे तदपरिनिष्ठप्रसङ्गात्। तज्ज्ञानयोग्यत्वेनैव प्राक् तस्य भावो न तद्विषयत्वेनेति चेत्, न, तत्रापि तद्वैयर्थ्याविशेषात्। तथा हि–

योग्यः प्रागपि शब्दश्चेत् स्वज्ञानजननं प्रति।
प्रयासापेक्षया तत्र किमन्यत् फलमुच्यताम् ॥१७४३॥
[3]स प्रयासव्यपेक्षश्चेत् स्वज्ञानजननक्षमः।
प्रयासाधीनतच्छक्तिस्ततः पूर्वं कथं भवेत् ॥१७४४॥
शक्तिस्तस्य तदायत्ता न चेत् किं तद्व्यपेक्षया।
व्यक्तता (क्तया) स्वयमेव कार्यं चेत् न स्वशक्तेस्तदुद्भवात् ॥१७४५॥
केवला सा न हेतुश्चेत् जह्याच्छक्तित्वमात्मनः।
कार्यशून्याऽपि शक्तिश्चेत् शक्तिः स्याद् व्योमपद्मिनी ॥१७४६॥
जहातु नाम कैवल्ये तत्साहित्ये तु नेति चेत्।
तदैव तर्हि सा शक्तिर्न ततः प्राक्, तत्र कथम् ॥१७४७॥
श्रोत्रवेदनयोग्यस्य शब्दस्य प्रागपि स्थितेः।
तद्व्यक्तावेव सर्वोऽस्य प्रयास इति कथ्यताम् ॥१७४८॥

कुतो वा तस्य प्रयासात् प्रागपि भावः ? ततोऽभिव्यक्तेरिति चेत्, सैव ततः कस्मान्न निष्पत्तिरेव। प्रागपि ततस्तस्य भावादिति चेत्; न; परस्पराश्रयात्। प्रत्यभिज्ञानात् तर्हि सदा तद्भावः।

"शब्दोऽपि प्रत्यभिज्ञानात् प्रागस्तीत्यनुमीयते।" [ मी० श्लो० शब्दनि० श्लो० ३३ ] इति।

इति चेत्, किं पुनरिदं प्रत्यभिज्ञानं नाम ? स एवायमिति पूर्वापरयोरेकत्वपरिज्ञानमिति चेत्; न; सर्वथैकत्वे पूर्वापरभावस्यानुपपत्तेः, तत्र हि पूर्वभाव एव वा भवेत्, उत्तरभाव एव वा ? तत्र पूर्वविकल्पे पूर्वतयैव तस्याभिव्यक्तिरिति न साम्प्रतिकतया प्रतिपत्तिर्भवेत्। पूर्वस्यापि ततः पूर्वभावे न पूर्वतयापि प्रतिपत्तिः, ततोऽपि पूर्वतयैव तत्सम्भवात्, एवं तत्रापि वक्तव्यमिति न क्वचिदवस्थिता प्रयासतस्तदभिव्यक्तिर्भवेत्। उत्तरविकल्पे तु प्राग्भावस्या[4]भावात् न प्रयासात् [5]तस्याभिव्यक्तिः। कथञ्चिदेकत्वे तु पूर्वस्मादुत्तरस्य श्रोत्रबोधानुपातिनो[6] भेदोऽप्यस्तीति [7]तत्कादाचित्कत्वे कारणमभिधातव्यम्, अन्यथा तदयोगात्। तच्च न प्रयासाद् अपरमुपलभ्यत इति कथं तत्कार्यतैव तत्र न भवेत् ? सत्यपि तस्य प्राग्भावे प्रयासोपनीतैर्ध्वनिभिः कथमप्रतीतैरभिव्यक्तिः ? प्रतीतैरेव प्रदीपालोकादिभिः घटादीनां तदुपलब्धेः। न प्रतीतिरभिव्यक्तताङ्गं शक्तेरेव तत्त्वात्, मन्त्रादिना तन्निषेधे तदालोकादीनामपि अनभिव्यञ्जकत्वात्। न च तस्यामपि[8] पर्यनुयोगः–'कीदृशी[9] सा' इति ? कारकशक्तावपि प्रसङ्गात्, तत्रापि अतीन्द्रियत्वेनाप्रतीतेरविशेषात्। न चैतावताऽसौ निष्प्रमाणिकैव कार्यदर्शनेन कारकशक्तिवत् व्यक्तिदर्शनतो व्यञ्जकशक्तेरप्यवस्थापनात्।

१ प्रयासात् प्रागपि। २ प्रयासेनापि। ३ शब्दः। [redacted] –स्याप्यभा–आ०, ब०, प०।
६ तदभिव्यक्तेः क–आ०, ब०, प०। ७ शब्दस्य। ८ शब्दनिष्पत्तेः। ९ दानार्थापि। १० मर्तीति ता०।

तस्मादिन्द्रिय[1]गोचरातिपातिन्यैव शक्त्या तादृशीमेव शक्ति श्रोत्रेन्द्रियस्यादधाना ध्वनय शब्दाभिव्यक्तेर्हेतव इत्युपपन्नमुत्पश्याम । तदुक्तम्–

"न च पर्यनुयोगोऽत्र [2]केनाकारेण सस्कृत (ति) ।
उत्पत्तावपि तुल्यत्वात् शक्तिस्तत्राप्यतीन्द्रिया ॥
[3]नित्य कार्यानुमेया च शक्ति किमनुयुज्यते ।
तद्भावाभावमात्र हि प्रमाण तत्र गम्यते ॥
[4]अतोऽतीन्द्रिय एवैते शक्त्या शक्तिमतीन्द्रियाम् ।
इन्द्रियस्यादधाना स्यु शब्दाभिव्यक्तिहेतव ॥

[ मी० श्लो० शब्दनि० श्लो० ४३–४५ ]

इति चेत्, उच्यते–तस्याल्पत्वमहत्त्वादिभिविशेषैरुपश्लिष्टस्य, अनुपश्लिष्टस्य वा [5]तेऽभिव्यञ्जका कल्प्यन्ताम ? न तावदनुपश्लिष्टस्य, अप्रतीते । न हि तादृश क्वचिद् व्यक्तोऽव्यक्तो वा शब्द प्रतीतिपथमुपसर्पति यत्राल्पत्वादीनामन्यतमस्यापि विशेषस्यानुपश्लेष सर्वदा तदुपश्लेषिण एव तस्य प्रतीते । भवन्तु तदुपश्लेषिण एव तस्य ते व्यञ्जका इति चेत, [6]अत्रापि–

शब्दस्यैव स्वभावश्चेदल्पत्वादिस्तदा कथम् ।
[7]तद्भेदे सत्यवर्णेषु तदेकत्वप्रकल्पनम् ॥१७४९॥
प्रत्यभिज्ञानशक्तेश्चेत् घटेष्वपि न तत्कथम् ।
घटो घटोऽयमित्येव व्यक्त तत्रापि तद्दृशे ॥१७५०॥
व्यक्तिरेव कुलालादेस्तेषामपि तथेष्यत ।
कारकव्यवहारोऽय क्वापि न स्थितिमाप्नुयात् ॥१७५१॥
वैलक्षण्याद्विशेषाणा भेदस्यैवोपपत्तित ।
[8]जात्येकत्वनिमित्त चेत् तत्र प्रत्यवमर्शनम् ॥१७५२॥
अवर्णेष्वपि सैवेय प्रक्रिया परिकल्प्यताम ।
तत्राप्यल्पादिरूपेण व्यक्तिभेदव्यवस्थिते ॥१७५३॥

अथासौ[9] शब्दधर्मो न भवति ध्वनिधर्मत्वात् । शब्द एव तद्धर्मा तथाप्रतीतरिति चेत् न, अतद्धर्मिणि शब्दत्वेऽपि तथाप्रतिपत्तिभावेन व्यभिचारात्, व्यक्तिगतस्यैव अल्पत्वादेस्तेनानुविधानात । तत्र तत्प्रतिपत्तिविभ्रमादिति चेत्, न, शब्देऽपि तदविशेषात, ध्वनिगतस्यैव तेनापि तस्यानुविधानात । तत शब्द [10]एवाल्पत्वादि तद्रूपतया विज्ञानादिति न साधुसाधन शब्दत्वनानैकान्तात् । मुखेन च, दृश्यत हि मुखेऽपि व्यञ्जकाल्पत्वादिना तद्रूपविज्ञानमतत्स्वभावेऽपि । तदुक्तम्–

"अथ ताद्रूप्यविज्ञान हेतुरित्यभिधीयते ।
तथाऽपि व्यभिचारित्व शब्दत्वेऽपि हि तन्मति ॥
व्यक्त्यल्पत्वमहत्त्वे च तद्यथाऽनुविधीयते ।
तथैवानुविधाताऽस्य ध्वन्यल्पत्वमहत्त्वयो ॥

१ –यागो–ता० । २ कार्यं कारणसस्कृते ता० । ३ नित्या आ०, ब०, प० । ४ अतो आ०, ब०, प० । ५ ध्वनय । ६ अत्राह–ता० । ७ अल्पत्वादिभेदे सति अकारादिवर्णेषु एकत्वकल्पन कथम् । ८ घटत्वादिजाति । ९ अल्पत्वादि । १० एवोपाधि आ० ।

[1]व्यंङ्ग्यानां चेतदस्तीति[2] मुखे नैकान्तिकं ततः ।
दर्पणेऽल्पमहत्त्वे च [3]दृश्येते न तु तन्मुखे[4] ॥"
[ मी० श्लो० शब्दनि० श्लो० २१३-१६ ] इति ।

तदयमत्यन्तपरामर्शपराङ्मुखस्यैवोल्लासः, ध्वनिधर्मत्वेऽल्पत्वादेस्तद्वदेवाप्रतीतिप्रसङ्गात् । अप्रतीताश्च "न च पर्यनुयोगः" [ मी०श्लो० शब्दनि० श्लो० ४३ ] इत्यादिना ध्वनयः प्रतिपादिताः । न चाप्रतीतौ विभ्रमः, विभ्रमस्य प्रतीतिरूपत्वात् । प्रतिपाद्यत एव तेषामपि कैश्चित् प्रतीतिः–"ध्वनीनां श्रोत्रगम्यत्वं तस्मात् कैचित् प्रचक्षते ।" [ मी० श्लो० शब्दनि० श्लो० २२३ ] इति वचनादिति चेत्, अतद्गम्यत्ववादिना तर्हि कथं तत्प्रतीतिः यतः शब्दे तद्विभ्रमः ? न हि दर्पणाल्पत्वादेरप्रतीतौ वदने तद्विभ्रम इति तद्विकलस्यैवावर्णादेस्तदा [5]तद्गम्यत्वं प्राप्नुयात् । न चैवं सर्वदा तदुपश्लिष्टविभ्रमस्यैव तस्योपलम्भात् ।

अपि च, ध्वनीनां श्रोत्रगम्यत्वेऽपि यदि वाचकशक्तिः, व्यर्थं तद्व्यङ्ग्यस्य शब्दान्तरस्य परिकल्पनं तत्प्रयोजनस्य ध्वनिभ्य एव निष्पत्तेः । अवाचकत्वे तद्धर्मस्य वृद्धिह्रासादेरपि वाचकत्वं न भवेत् । तथा च–

वृद्ध्यादिव्यतिरेकेण शब्दस्याप्रतिवेदनात् ।
[6]अवाचकं जगत्प्राप्त ततः किं केन कथ्यताम् ॥१७५४॥
न हि वृद्ध्यादिशून्यस्य प्रत्यभिज्ञाऽपि वेदिका ।
वाचकत्वं यतस्तस्य कल्पयेम निराकुलम् ॥१७५५॥
वृद्धिह्रासावितादात्म्य विभ्रतश्च तथा गतौ ।
अवाचकस्य वृद्ध्यादेरशक्यपरिकल्पनम् ॥१७५६॥
अन्यथा सर्वकार्येऽपि सर्वभेदविवर्जितम् ।
सन्मात्रं प्रत्यभिज्ञेयमुपयोगीति कल्पनात् ॥१७५७॥
स्वर्गादावपि तस्यैव कारणत्वव्यवस्थितेः ।
यजनादिक्रियाभेदे प्रवृत्तिर्व्यर्थिका भवेत् ॥१७५८॥
भेदात्मनस्ततो यद्वत् शतोऽर्थकरणं तथा ।
ह्रस्वाद्यात्मैव शब्दोऽपि वाचकत्वाय [7]कल्पते ॥१७५९॥
अन्यथा तस्य संस्कारं पाणिनिप्रमुखाः कथम् ।
वाचकं शब्दमुद्दिश्य प्रवृत्तं कुर्वते बुधाः ॥१७६०॥

सत्यम्, ह्रस्वाद्यात्मन एव शब्दस्य वाचकत्वम्, तत्तु तदात्मत्वं ध्वनिधर्मस्यैव ह्रस्वादेरनुपातात् न तत्त्वतः, इति चेत्, कथमतात्त्विकेन तद्रूपेण वाचकस्य वर्णस्य स्वरूपेणापि तथाविधेनैव तत्प्रसङ्गात् । एवं च–

अतात्त्विकस्य वर्णस्य नित्यत्वादिप्रसाधनम् ।
वन्ध्यास्तनन्धयस्येव सौरूप्यगुणवर्णनम् ॥१७६१॥
संवृत्या वाचकं शब्दं कल्पयन्नपि याज्ञिकः ।
कल्पयेत् कारकं तद्वदिति बौद्धमतं भवेत् ॥१७६२॥

१ व्यंगाना-भा० । २ कालो नै–भा० । ३ दृश्यते भा० । ४ तन्मुखम् भा० । "व्यङ्ग्यानां चैतदस्तीति लोकेऽप्यैकान्तिकं न तत् । दर्पणाल्पमहत्त्वे हि दृश्यतेऽनुपतन्मुखम् ॥ —मी० श्लो० । ५ श्रोत्रगम्यत्वम् । ६ ध्याच्वाचकं जगद्व्याप्तं भा० । ७ कल्प्यते भा० ।

तस्मात्तात्त्विक एवाय ह्रस्वादि शब्दगोचर ।
मन्दविस्पन्दित तस्य ध्वनिधर्मत्वकल्पनम् ॥१७६३॥

ततो निराकृतमेतत्–

"एव ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थिता ।
वर्णा अनुपतन्त स्युरर्थभेदाववोधिन ॥
आनुपूर्वी च वर्णाना ह्रस्वदीर्घप्लुतादच ये ।
कालस्य प्रविभागास्ते जायन्ते ध्वन्युपाधय ॥"

[ मी० श्लो० शब्दनि० श्लो० ३०१–२] इति ।

यत्पुनस्ताद्रूप्यधिज्ञानस्य हेतो शब्दत्वेन व्यभिचारित्वमुपदर्शितम्, तदल्पमतिविल्सितम्, व्यक्तयविस्वभावेन तत्रापि तत्त्वत एव वृद्धयादेर्भावात् । व्यक्तिव्यतिरेकिणश्च शब्दत्वादेर्नित्यसर्वगतस्य च प्रत्याख्यानाद् दर्पणेत्यादिकमपि तादृशमेव । न हि दर्पणस्य अल्पत्वादिना मुखे तत्प्रतिपत्ति, तत्प्रतिपत्तिसक्रम एव तस्योपलम्भात् । तस्य च दर्पणाधिष्ठानत्वेन मुखात्तदन्तरत्वात् । मुखमेव भ्रमात् तदधिष्ठानमुपलभ्यत इति चेत्, न, तदानीमेवातदधिष्ठानस्यापि तस्योपलम्भात् । न चैतन्न्याय्यम्–

अन्योऽन्याभावरूपत्वात् विभ्रमेतररूपयो ।
युगपत् सम्भवाभावादेकत्र ग्राह्यवस्तुनि ॥१७६४॥
सदप्यविभ्रमज्ञान विभ्रम चेन्न बाधते ।
विभ्रमध्वस्तये पु सा प्रयासोऽनर्थको भवेत् ॥१७६५॥

तत्र मुखस्य तदधिष्ठानत्वम् दर्पणपरिणामविशेषस्यैव तत्प्रतिसक्रमापरनामधेयस्य तत्त्वात । तत्र मुखेनापि तस्य व्यभिचारित्वम् औपाधिकस्याल्पत्वादेस्तत्राप्यप्रतिवेदनात् । तत शब्द एव दीर्घादि निर्बाधतत्प्रत्ययविषयत्वात् घटादिवत् । अतस्तस्य ताल्वादिव्यापारादुत्पत्तिरेवोपपन्ना नाभिव्यक्ति ।

कथ वा '[1]तदव्यापारस्याभिव्यञ्जकत्वे ततो नियमेन शब्दस्याभिव्यक्ति प्रदीपादावेवमदर्शनात् ? युक्त प्रदीपादौ सत्यपि घटादेस्तन्नियमाभाव तस्यानित्यत्वात् अविभुत्वाच्च, न शब्दस्य विपर्ययादिति चेत्, न, तस्याल्पत्वमहत्त्वादिना भेदवत्त्वेन तद्वत अनित्यत्वाद्यविशेषात । प्रत्यभिज्ञानात '[2]तन्नित्यत्वादिप्रतिपत्ते घटादावपि तुल्यत्वात् । वक्ष्यति चैतत्– "यदि चैवंविधो नित्य" '[3]इत्यादिना । तत शब्दवत् घटादेरपि चक्रचीवरादेरभिव्यक्तिरेवेति गत प्रसिद्धोऽपि तत्र'[4] हेतुफलव्यवहार । व्यञ्जकान्तरस्य प्रदीपादेस्तत्र' भावादुत्पत्तिरेव '[5]ततस्तस्येति चेत्, तर्हि शब्दस्यापि प्रस्तुतप्रयासात '[6]सैवास्तु श्रोत्रप्रणिधानतद्योग्यदेशादेर्व्यञ्जकान्तरस्य तत्रापि भावात । तत्प्रणिधानादौ तथाविधस्य व्यञ्जकत्वस्याभावात्तदन्तरत्व तत्र नास्तीति चेत, तर्हि प्रदीपादावपि तथाविधस्य तस्याभावात् तद्धेतोरभिव्यक्तिरेव प्राप्नुयादिति नित्य एव सोऽपि भवेत् । तत्र अभिव्यक्तिकरणात् प्रयासस्य शब्दे साफल्यम्, अभिव्यक्तेरुपलब्धिरूपाया श्रोत्रादेरेव भावात् । आवरणविश्लेषकरणात् तत्र तस्य साफल्यमिति चेत्, न, '[7]चक्रचीवरादिव्यापारेऽपि तत एव तत्कल्पनापत्ते ।

१ ताल्वादिव्यापारस्य । २ शब्दनित्यत्वादि । ३ न्यायवि० श्लो० ३।४० । ४ घटादौ । ५ चक्रचीवरादे । ६ उत्पत्तिरेवास्तु । ७ न कदाचिद्व्यर्था—आ० ।

किञ्च, यद्यावरणं व्यवधानात्, तन्न चाल्त, नित्यत्वात्। नापि देशत, विभुत्वात्। नाप्युपलम्भस्य प्रतिबन्धात्, तज्जन्मनि शब्दस्यासामर्थ्ये दैवादेव तदभावात्। न ततस्तत्प्रतिबन्धेनापि, सामर्थ्ये सति तस्मिन् नित्यत्वेनाशक्यप्रध्वंसे तत्कार्यस्यावश्यकात्। आवरणमपि तत्प्रतिबन्धे योग्यमेवेति चेत्, उपलब्धेस्तर्हि युगपद्भावाभावोपनिपातात्-तदैवोपलब्धोऽनुपलब्धश्च शब्द इति प्रतीतिपथातिवर्तिनी भवन्मतिप्रवृत्तिरापद्येत। तन्न शब्दस्यावरणं नाम। सतोऽपि तस्य प्रयासाद् विश्लेषे शब्दस्योपलब्धिर्यदि व्यापकेन रूपेण, व्याप्यमपि जगत् तया प्रतिपत्तव्यम्, तत्प्रतिपत्तिमन्तरेण व्यापकप्रतिपत्तेरनुपपत्तेः। तथा च श्रोत्रव्यापारस्यैवाशब्देऽपि[1] जगति प्रवृत्तिमभ्युपगच्छन् कथमिदमभिदध्यात् "न रूपे श्रोत्रवृत्तिता" [ मी० श्लो० चोदना० श्लो० ११४ ] इति। व्याप्यमप्रतिपद्यापि व्यापकप्रतिपत्तौ तु सकल जगदप्रतियतोऽपि कस्यचित् तद्विषयज्ञानवत् प्रतिपत्तिसम्भवात् "सर्वज्ञोऽयमिति ह्येवम्" [ मी० श्लो० चोदना० श्लो० १३४ ] इत्यादि परस्य पर्यालोचितवचनता परित्यजेत्। अथ न तद्रूपेण तस्योपलब्धिरकारादिरूपत एव तद्भावादिति, तन्न, निरंशस्योपलभ्येतरस्वभावतया भेदानुपपत्तेः। तदुपपत्तौ वा सांशतया वृद्धिह्रासादेरपि सम्भवात् असम्भवदर्थमेतदापद्येत-

"वर्णोऽनवयवत्वात्तु वृद्धिह्रासौ न गच्छति।
व्योमादिवदतोऽसिद्धा वृद्धिरस्य स्वरूपत.॥"

[ मी० श्लो० शब्दनि० श्लो० २१३ ] इति।

ततो नावरणविश्लेषादपि किञ्चित्, यतस्तत्करणेन प्रयासस्य साफल्यमवकल्प्येत। भवतु तर्हि संस्कारकरणात् तस्य तदवकल्पनमिति चेत्, उच्यते-

न तावदावृतिध्वंसः संस्कारस्तस्य दूषणात्।
नाभिन्नातिशयावान कौटस्थ्ये तदसम्भवात् ॥१७६६॥
भिन्नस्त्वतिशयस्तस्य शब्दस्येति कथं भवेत् ?
तेनाप्यतिशयावानमनवस्थानमुद्वहेत् ॥१७६७॥
सन्नप्यतिशयस्तस्य यदि व्यापी तदा भवेत्।
यावद्व्योमप्रवृत्तस्य शब्दस्य श्रवणं जने ॥१७६८॥
न चैवमस्ति कस्यापि प्रतीतिः शब्दवस्तुनि।
प्रत्यासन्नाल्पदेशस्य सर्वैस्तस्योपलम्भनात् ॥१७६९॥
अव्यापी यदि तेनापि विशिरव्यापिनो भवेत्।
न हि ते तादृशो वर्णः कश्चिदस्ति मनीषितः[2] ॥१७७०॥

यथायमव्याप्येवातिशय प्रदेशवृत्तित्वात् न वर्णं भवेत्, तद्वृत्तिविषयस्य तत्प्रदेशस्याभावात्। उपाधिवशादस्त्येव तद्भाव इति चेत्, न, उपाधिनाऽपि व्यापिना तदसम्भवात्। अव्याप्येव सोऽपि प्रदेशवृत्तित्वादिति चेत्, न, तथापि 'न वर्णं भवेत्' इत्यादेरावृत्त्या चक्रकात् अनवस्थापत्तेश्च। न तत्प्रदेशवृत्तित्वात् अव्यापित्वमतिशयस्य, अपि तु स्वत एवेति चेत्, तथाऽपि कथमसौ वर्णं भवेत् ? सम्बन्धादिति चेत्, न तेनापि व्यापिना तस्याव्यापित्वानुपपत्तेः। अव्याप्येव सोऽपीति चेत्, कुतस्तस्याव्यापित्वम् ? प्रदेश-

१ शब्दशून्येऽपि। २ -कस्येतर-ब्या०। ३ स्वीकृत इति यावत्।

वृत्तित्वादिति चेत्, न; दत्तोत्तरत्वात्। स्वत एवेति चेत्; न; तत्रापि 'कथम्' इत्यादेर्दोषात्। तस्यापि पुन. सम्बन्धाद् वर्णे वृत्तिकल्पनाया चक्रकदोषस्यानवस्थाप्रसङ्गस्य चाविचलनात्। कथमेवं व्यापिन्यप्याकाशे तूलादिसम्बन्धस्याव्यापित्वमिति चेत्? न; तस्य तत्प्रदेशवृत्तित्वेन तदुपपत्ते.। प्रदेशवत् खल्वाकाशमस्मन्मते प्रसिद्धम्–"आकाशस्यानन्ताः" प्रदेशाः [त० सू० ५।९] इति सूत्रात्। तस्यापि निष्प्रदेशत्वपरिकल्पनाया प्रवृत्तप्रसङ्गानतिवृत्ते। तन्नातिशयस्याव्यापिनः सम्भव.। सम्भवेऽपि न तेन वर्णस्य व्यापितयोपलब्धि.। अव्यापिना तु उपलब्धेनापि न किञ्चित् तावन्मात्रस्य अवाचकत्वात्। नायं दोष., तावन्मात्रस्यापि वर्णतया परिपूर्णत्वात्। न हि तस्यावयवा. सन्ति यतस्तस्य प्रत्याकाशप्रदेशं भागशो वृत्तिरुपलब्धिर्वा भवेत् तन्निषेधात्। न [1]चैतावता तस्याव्यापित्वम्, एकत्रेवापरतत्प्रदेशेष्वपि[2] सदैव तस्य सर्वत्र सर्वात्मनाऽपि प्रवृत्ते। तदुक्तम्–

"यो यो गृहीत सर्वस्मिन् देशे शब्दो हि विद्यते।
न चास्यावयवाः सन्ति येन वर्तेत भागशः॥
शब्दो वर्तेत इत्येवं तत्र सर्वात्मकश्च सः।
व्यञ्जकध्वन्यधीनत्वात् तद्देशे स च गृह्यते॥"

[मी० श्लो० शब्दनि० श्लो० १७१-७२] इति।

ततस्तावतोऽपि वर्णतया परिपूर्णत्वात् तथैवोपलब्धत्वाच्चोपपन्नमेव वाचकत्वमिति चेत्, उच्यते–

ध्वनिदेशस्थवर्णस्य देशान्तरगताततः[3]।
विच्छेदे व्यापिता तस्य विरोधान्नोपपद्यते॥१७७१॥
अविच्छेदे तु तेनापि तद्देशे तस्य वर्तनात्।
देशान्तराभिसम्बन्धो न शक्यपरिकल्पन॥१७७२॥
तेनात्मना न चेत्तस्य तत्र वृत्ति कथ तदा।
सर्वात्मनैकदेशेऽपि तस्य वृत्ति· प्रकल्प्यताम्॥१७७३॥
वाचकत्व यतस्तस्य परिपूर्णस्य दर्शनात्।
कल्पयेम ततस्तस्य भागेनैव प्रवर्तनम्॥१७७४॥

न च भागस्योपलब्धस्यापि वाचकत्वम्। वाचकत्वे वा व्यर्थं तत्र व्याप्तिकल्पनम्, वाचकमात्रस्यैव वर्णत्वोपपत्ते। तावदेव हि वर्णस्य स्वरूपमुपपन्न यावता तत्प्रतियोजनं नापर तेन तदभावात्। तथाऽपि तत्कल्पनाया घटादावपि तत्प्रसङ्गात् न कश्चिदव्यापी नाम भावो भवेत् प्रत्यभिज्ञानस्याविशेषात्। तत्र संस्कारकरणादपि साफल्य प्रयासस्य[4]।

नाप्यभिधेयप्रतिपादनात्, ततस्तद्भावे शब्दकल्पनावैफल्यापत्ते। तत्सहायाच्छब्दादेव तद्भाव इति चेत्, न, कूटस्थस्य सहायापेक्षायाः प्रतिक्षेपात्। एतदेवाह–

**व्यक्त्यावरणविच्छेदसंस्कारादिविरोधतः॥३६॥** इति।

*व्यक्तिश्चावरणविच्छेदश्च संस्कारश्च आदिशब्दादभिधेयप्रतिपादनादिश्च* तस्य **विरोधतः** प्रतिपादितप्रकारेण नित्यव्यापिनि प्रयासनिबन्धनस्यासम्भवात्। **'प्रयासोऽनर्थको भवेत्'** इति पदसङ्गति प्रतिपत्तव्या।

---

१ चैत्र तावता आ०। २ –पि तस्य ता०। ३ –गतास्ततः आ०। वर्णात्। ४ ताल्वादिप्रयत्नस्य।

मा भूदेव वर्णसंस्कारो विचारप्रदीपव्यापारदुरुपपादत्वात्, श्रोत्रसंस्कारस्तु न दुष्यति श्रोत्रस्य भागवत्त्वेन प्रदेशतः संस्कारसम्भवादिति चेत्; न, तत्संस्कारादपि वर्णस्य व्यापिन एवोपलब्धिर्भवेत् नाव्यापिनस्तस्याभावात्।

असतोऽप्युपलब्धिश्चेत् भ्रान्तिरेव प्रसज्यते।
श्रोत्रवृद्धिः समस्ताऽपि व्योमपद्मादिवृद्धिवत् ॥१७७५॥
संस्कृतादपि न श्रोत्रादर्थैकस्योपलम्भनम्।
वर्णस्य तद्वदन्येषां तद्देशत्वात् प्रसज्यते ॥१७७६॥
न हि चक्षुर्घटं द्रष्टुं तद्गतार्पितसंस्क्रियम्।
तद्देशस्तम्भकुम्भादि न पश्यति पुरः स्थितम् ॥१७७७॥
यथा चाशेषवर्णानां सर्वदा युगपद्गतेः।
तदेकैकप्रतीतिस्ते प्रसिद्धाऽपि न सिद्ध्यति ॥१७७८॥
एकैकस्यैव संवित्तौ श्रोत्रं यदि च शक्तिमत्।
कथं सङ्ग्रामरङ्गादौ जनकोलाहलश्रवः ॥१७७९॥

एकहेलया बहुविधानेकशब्दसन्दोहश्रवणं हि कोलाहलश्रवणं प्रसिद्धम्। न चैतत् एकैकवर्णश्रवण एव संस्कृतस्यापि श्रोत्रस्य सामर्थ्ये शक्यसम्भावनमिति दूरापसारितस्तद्व्यवहारः स्यात्। तथापि क्रमवदेव तच्छ्रवणम्, यौगपद्याभिमानस्तु तदाशुभावनिबन्धनाद्विभ्रमादेवेति चेत्, तदसारम्, अतिप्रसङ्गात्। तमेव दर्शयन्नाह–

वंशादिस्वरधारायां संकुलाप्रतिपत्तितः।
क्रमेणाशुग्रहेऽयुक्तः सकृद्ग्रहणविभ्रमः ॥३७॥ इति।

कोलाहलश्रवणदशायां यः सकृद्ग्रहणे विभ्रमः शब्देषु अयम् अयुक्तोऽनुपपन्नः। कस्मिन् निमित्ते सति भवन्नसा[व]युक्तः? क्रमेणाशुग्रहे परिपाट्या शब्दानां शीघ्रमुपलम्भे सति। वंशेत्यादिरत्र हेतुः। वंश आदिर्यस्य वीणारावणहस्तादेस्तस्य स्वरः षड्जादिस्तस्य धारा कालकृता दीर्घता। सा च षड्जस्य चतुःश्रुतिः, एवं प्रत्येकं पञ्चममध्यमयोर्द्विश्रुतिः, निषादगान्धारयो ऋषभधैवतयोस्तु त्रिश्रुतिः। तदुक्तम्–

"चतुश्चतुश्चतुश्चैव षड्जपञ्चममध्यमाः।
द्विर्द्विर्निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ ॥" [ ] इति।

तस्याः संकुलं संकुलत्वं भावपरत्वान्निर्देशस्य तस्य अप्रतिपत्तितः। 'क्रमेणाशुग्रहे' इत्यत्रापि योज्यम्। एतदुक्तं भवति–

आशुग्रहेण शब्देषु यौगपद्यभ्रमो भवन्।
वंशादिस्वरधारायामपि स्यात्तदभेदतः ॥१७८०॥
तथा चादिश्रुतावेव द्वितीयादेः प्रवेशनात्।
चतुःश्रुत्यादिभेदेन स्वरभेदग्रहः भ्रमम् ॥१७८१॥
तदभावे च गीतस्य स्वरभेदावलम्बिनः।
प्रसिद्धस्यापि ते बुद्ध्या जीवनं पश्य नश्यति ॥१७८२॥

ततो न प्रतीत्याशुभावात् शब्देषु यौगपद्यविभ्रमः, सत्यपि तस्मिन् वंशादिस्वरधारायां तदभावात्। न चेदमत्र वक्तव्यम्–आशुभावस्तत्प्रतीतौ तादृशो नास्ति यतस्तद्विभ्रम इति, तदनिवायिनः तद्भावस्य[1] प्रतीतेः।

१–स्याम–मा०।

अथवा, वंशगद्धशोऽक्षरसमाम्नाय समस्तस्यापि वाङ्मयस्य तत्प्रभवत्वात्, तस्यादिस्वर. अवर्णस्तत्प्रथमत्वेन लोके तस्य पाठात्, तस्य धारा मानाद्यवच्छिन्नकालानुवृत्ति तस्या सकुलप्रतिपत्तित इति व्याख्येयम् । अत्रापीदमैदम्पर्यम्–आशुप्रतिपत्त्या शब्देपु यौगपद्यभ्रमकल्पनायाम् अवर्णस्याप्यतिसूक्ष्मसमयावच्छिन्नाद्यश्रुतावेव उत्तरोत्तरसमयसमनुयायिनीनामपि श्रुतीनामाशुभावेन अनुप्रविष्टतया प्रतीत्युपस्थानात् सकुलप्रतिपत्त्या भवितव्यम् । एवम् इवर्णादावपि वक्तव्यम्, आदिस्वरग्रहणस्योपलक्षणत्वात् । एव चैकमानादिभेदेन अचामर्धमात्रतया हलामपि प्रतिपत्तेरभावात् प्रसिद्धोऽपि व्यक्तवाग्व्यवहार प्रध्वस्तो भवेत्, तस्य अच्-हल्विभागप्रतीतिपुरस्सरतया तदभावेऽनुपपत्ते ।

आशुग्रहेण शब्देपु यौगपद्यभ्रम ब्रुवन् ।
व्यक्तवाग्व्यवहाराय देहि भद्र जलाञ्जलिम् ॥१७८३॥
तदभावे च वेदस्य तद्विशेपस्य लुप्तित ।
तत्प्रामाण्य क्व धर्मे भवता परिचिन्त्यताम् ॥१७८४॥

तत्र प्रतिपत्त्याशुभावनिबन्धनत्वेन कोलाहलश्रुतेर्विभ्रमत्वमुपपन्न बाधारहितत्वेन तात्त्विकत्वस्यैवोपपत्तेरिति । भवतु नाम बहुजनताल्वादिव्यापारप्रेरितोपसर्पदनेकभेदाभिध्वानजनितनानारूपसस्काराधिकरणदेशभेदाधिष्ठानतया श्रोत्रस्य कलकलश्रुतिवेलाया युगपदनेकशब्दोपलब्धिनिबन्धनत्व न पुनरेकाभिध्वानोपजनितसस्कारक्रोडीकृतैकप्रदेशस्य, तस्यैकशब्दोपलब्धावेव निमित्तभावोपपत्तेरिति चेत्, अत्राह–

ताल्वादिसन्निधानेन शब्दोऽयं यदि जायते ।
को दोषो येन नित्यत्वं कुतश्चिदवकल्प्यते ॥३८॥ इति ।

ताल्वादेरादिशब्दाज्जिह्वामूलादेर्यत् सन्निधान कार्योत्पत्तौ आनन्तर्यं तेन शब्दोऽय प्रतीयमानो यदि जायते निष्पद्यते को दोषो येन दोषेण नित्यस्य कौटस्थ्य कुतश्चित् प्रत्यभिज्ञानादन्यतो वा शब्दस्यावकल्प्यते सम्भाव्यते इति । तात्पर्यमत्र ताल्वादिसन्निधानात् यदि शब्दस्य व्यक्ति , समानदेशस्य सर्वस्यापि श्रोत्रविपयस्य स्यात् तन्निबन्धनस्य श्रोत्रसस्कारस्यापि तथैवोपपत्ते , इन्द्रियान्तरे तथैव प्रतिपत्ते । न चैवम्, अतो व्यञ्जकधर्मानुपलब्धे जनकत्वमेव तस्योपपन्नमिति, तज्जनकत्वे कार्यत्वेन शब्दस्यानित्यत्वात् क्व सम्बन्धोपदर्शन यतो वाचकत्वेन व्यवहारोपयोग इति चेत् ? नित्यत्वेऽपि कथ 'पूर्वो ह्रस्व परो दीर्घ ' इति भेदप्रतिपत्ति ? व्यञ्जकध्वानस्य[1] तद्धर्मणस्तत्रोपधानात् न तत्स्वभावादिति चेत्, तस्यापि तत्त्वतो ह्रस्वादिभेदधर्मत्वे कथ स एवाय देवदत्तस्य ध्वनिरित्येकत्वप्रतिपत्ति, यत स्वरेण पुत्रप्रतिपत्तिरानुमानिकी ? तत्रापि ध्वन्यन्तरोपधानाधीनप्रादुर्भावैव तद्भेदप्रतिपत्तिरिति चेत् न, ध्वन्यन्तरेऽपि प्रकृतप्रसङ्गानतिवृत्तेरनवस्थापत्तेश्च । यदप्युक्तम्–

"ध्वनीना भिन्नदेशत्व श्रुतिस्तत्रानुरुध्यते ।
अपूरितान्तरालत्वात् विच्छेदश्चावसीयते ॥
तेषा चाल्पकदेशत्वात् शब्दस्याविभुता मति ।
गतिमद्वेगवत्त्वाभ्या ते चायान्ति यतो यत ॥
श्रोता ततस्तत शब्दमायान्तमिव मन्यते ।"
[ मी० श्लो० शब्दनि० श्लो० १७४ ७६ ] इति ।

---

१ –निर्ध्वानस्य आ० ।

तदप्यत एव पर्युदस्तम्, ध्वनीनामपि कालभेदिनामिव देशभेदिनामपि प्रत्यभिज्ञाप्रत्ययबलादेकत्वनिश्चये व्यापित्वस्यैवोपपत्तेः, तत्त्वतो भिन्नदेशत्वादेरसम्भवात् तदुपधानबलेन शब्दे तत्परिज्ञानस्याशक्यकल्पनत्वात्। तत्राप्यपरतदुपधानवशात् देशभेदादिपरिकल्पनाया चानवस्थानदोषस्य दुस्तरस्यैवोपस्थानात्। तात्त्विक एव ध्वनौ ह्रस्वादिधर्मो बाधकाभावादिति चेत्, न, शब्देऽपि तुल्यत्वात्। प्रत्यभिज्ञाने तद्बाधस्य ध्वनिवदेव निवारणात्। ननु यदि ध्वनिधर्मस्य ह्रस्वादेरननुभूतस्यैव स्वप्ने स्वशिरोविशरणादेरिव शब्दे विभ्रम, तर्हि सकलस्यापि बहिर्भावस्य स्वप्ने विभ्रमदर्शनात् जाग्रद्दशायामपि तत्कल्पनोपनिपातेन बहिरर्थवाद प्रध्वस्तो भवेत्। अनुभवास्वादितपूर्वस्यैव तस्य तत्र विभ्रमे क्व तस्यानुभवः ? व्यक्तिान्वयायिनि ध्वनावेवेति चेत्, तस्यापि तर्हि श्रोत्रविषयत्वं वक्तव्यम्, अन्यथा तद्धर्मस्य ह्रस्वादेरपि तदनुपपत्ते । तथा च स एव तत्त्वतस्ताल्वादिस्थानविभागसन्निपातोपनिपातोपनीतह्रस्वदीर्घादिस्वभावभेदाधिष्ठानतया बुद्धिविषयतामध्यासीनो वर्णतया वर्णमितव्यो नापरस्तदप्रतीतेः। तथापि तत्परिकल्पनायां ततोऽप्यपरस्ततोऽप्यपर इति न क्वचिदवस्थिता तत्प्रक्लृप्तिर्भवेत्। [1]न चेदृश्यपि नित्यत्वाप (त्यत्वप) रिकल्पनम्, भेदवत्त्वेनाप्यध्यवसायात्। तदुक्तं मण्डनेन–

> "श्रवणग्राह्यतायां तु मरुतः कोष्ठजन्मनः।
> ताल्वादिप्रविभक्तस्य शब्दत्वं स च भेदवान्॥"
>
> [                    ] इति।

सत्यमयमप्यस्ति परस्य पर्यनुयोग । तन्न व्यञ्जकधर्मोपधानात् वर्णेषु दीर्घादिभेदप्रतिपत्ति [2]बाधविरहात्। न हि प्रत्यभिज्ञयाऽपि तस्या बाधोऽस्ति तयाऽपि तदनुविद्धस्यैव तेषामनुभवात्। तदन्यथा तत्कल्पनायामनुभवापलापदोषापत्ते। न चानित्यत्वे तेषां[3] सम्बन्धदर्शनाद्यनुपपत्ति, अन्यतस्तदुपपत्तेरवकल्पनात्। ततो युक्त ताल्वादिसन्निधानेन शब्दस्योत्पत्तेरनित्यत्वमेव दोषस्य कस्यचिदप्यभावात्, न नित्यत्वम्, तत्र सति सर्वदैवोपलब्धिप्रसङ्गात्। भवतोऽपि तदुपादानस्य प्राग्भाविन कुतो नोपलब्धिरिति चेत् ? अत्राह–

**उपादानस्य सूक्ष्मत्वाद् युक्तं चानुपलम्भनम्।** इति।

यत् खलु शब्दस्योपादानं परिणामिकारणं भाषावर्गणात्मकपुद्गलस्कन्धरूप तस्य युक्तमुपपन्नम्; अनुपलम्भनं न केवल शब्दस्य जायमानस्यैवेति चशब्द । कुतस्तदुपपन्नम् ? सूक्ष्मत्वात् श्रवणयोग्यपरिणामाभावात्। न चैवं नित्यत्वेऽपि समाधानम्, तत्र सर्वदा तस्य तद्योग्यस्यैव भावात्। प्रत्यभिज्ञानात् तत्र नित्यत्वमेवोपपन्न न भेद, तत्प्रतिपत्तेस्तेनैव प्रतिक्षेपादिति चेत्, अत्राह–

**सादृश्यान्नैकरूपत्वात् स एवायमिति स्थितिः ॥२९॥** इति।

भवत्येव तेन तत्प्रतिक्षेपो यदि तत्त्वतस्तस्य तदेकत्वावलम्बनत्वम्, न चैवम्, तत्र 'स्वतन्त्रत्वे तु' इत्यादिना[4] बाधोपदर्शनात्। अत सत्यपि तत्र स एवायमिति प्रत्यभिज्ञारूपा स्थिति. पूर्वापरयोर्वर्णयोर्मल्लकयोरेव(रिव[5]) सदृशपरिणामोपाश्रयतया प्रवर्तमाना न तत्प्रतीतिप्रतिक्षेपायालम्। यदि चायं निर्बन्धः तथाभूतयाऽपि प्रत्यभिज्ञया तत्प्रतिक्षेपात् नित्य एव शब्द इति। तत्राह–

१ न चेते दृश्य–आ०। २ बाधकविर–आ०। ३ सन्दानाम्। ४ पृ० ३०४। ५ सदृशाद्वयोरिव।

**यदि चैवंविधो नित्यो नित्यास्ते विद्युदादयः ।** इति ।

एवंविधस्ताल्वादिव्यापारोपरचितस्वरूपनिष्पत्तिरपि शब्दो यदि चेत् नित्य 'च' इत्यवधारणे, तदा नित्या अविचलितरूपास्ते तव मीमांसकस्य विद्युदादयः आदिपदात् प्रदीपादयोऽपि भवेयु, तत्रापि तादृशप्रत्यभिज्ञासम्भवादिति भाव । यदि च कालभेदेऽपि शब्दस्य तद्वलादेकत्व देशभेदेऽपि स्यात् तदविशेषात् । अभिमतमेवैतत्–देशभेदतस्तद्भेदानुमानस्य प्रत्यक्षात्मना तदभेदप्रत्यभिज्ञानेनैव बाधोपपत्तेर्न तेन तस्य । तथोक्तम्–

"देशभेदेन भिन्नत्वमित्येतच्चानुमानिकम् ।
प्रत्यक्षं तु स एवेति प्रत्ययस्तेन बाधक ॥
पर्यायेण यथा चैको भिन्नान् देशान् व्रजन्नपि ।
देवदत्तो न भिद्येत तथा शब्दो न भिद्यते ॥
ज्ञातैकत्वो यथैवासौ दृश्यमान पुन. पुन ।
कालभेदेन नानेकस्तथा शब्दोऽपि देशत ॥"

[ मी० श्लो० शब्दनि० श्लो० १९७-२०० ]

इति चेत्, न, विद्युदादावप्येवप्रसङ्गात् । शक्य हि वक्तुम्–

यथा देशादिभेदेऽपि देवदत्तो न भिद्यते ।
ज्ञातैकत्वस्तथैवासौ विद्युदादिर्न भिद्यते ॥१७८५॥
तत्राप्येकत्वसंवित्तेस्तद्वत्प्रत्यवमर्शनात् ।
तद्भेदानुमितेश्चापि तेनैव प्रतिबाधनात् ॥१७८६॥ इति ।

ततो विद्युदादौ तद्भेदानुमानमेव 'स एवायम्' इत्यस्य बाधक निश्चिताविनाभावालिङ्गादुत्पत्ते, नेदम्, तस्य सादृश्यदर्शननिबन्धनत्वेन विभ्रमत्वात्, तथा शब्देऽपीति प्रतिपत्तव्यम् । अस्ति हि तत्रापि तदनुमानम्, तथाहि–यदेकेन युगपद्भिन्नदेशतयोपलभ्यते तद्भिन्नमेव यथा विद्युदादि. तथोपलभ्यते च शब्द इति । न चात्र क्रमेण भिन्नदेशतयोपलभ्यमानेन देवदत्तादिना व्यभिचार युगपद्विशेषणात । ततो नेदमुपपन्नम्–"पर्यायेण यथा चैक" इत्यादि । नापि 'बहुभिर्नानादेशतया प्रतीयमानेन सूर्यादिना, 'एकेन' इति विशेषणात् । तत इदमप्यसङ्गतम्–

"प्राग्भागो य सुराष्ट्राणा मालवाना स दक्षिण ।
प्राग्भाग पुनरेतेषा तेषामुत्तरत स्थित ॥
तेन 'सूर्योदितेर्देशौ भिन्नावुभयवासिनाम् ।
दृष्टौ सवितुरेकत्वेऽप्यतोऽनैकान्तिको भवेत् ॥"

[मी० श्लो० शब्दनि० श्लो० १६३-६५ ] इति ।

सवितुरेकेनैव भिन्नदेशत्वेन प्रतीतेरभावात् । एवमपि व्यभिचार एव जलपरिपूर्णेष शरावेषु युगपदेकस्यापि सवितुरेकेनैव भिन्नदेशतयोपलम्भनात् । अत एवोक्तम्–

"जलपात्रेषु चैकेन नानैक. सवितेक्ष्यते ।
युगपन्न च भेदोऽस्य प्रमाण तुल्यवेदनात् ॥"

[ मी० श्लो० शब्दनि० श्लो० १७८ ]

१ पुरुषे । २ सूर्योदयादिस्थर्थं । ३ पुरुषेण ।

इति चेत्, न, अत एव विद्युदादावपि अतो भेदप्रतिपत्तेरभावप्रसङ्गात्।

अपि च, न जलपात्रेषु सवितुरवेक्षणं तत्र तस्याभावात्, यश्च तत्रावेक्ष्यते तत्प्रतिनिधिः स भिन्न एव प्रतिपात्रमिति कथं तेन व्यभिचारः? सपक्षेणैव तदनुपपत्तेः। भवेदाकूतं भवतः पात्रावस्थिते पयसि परिस्फुरता भानुमतस्तेजसा चाक्षुषं तेजः प्रति तत्पयः प्रवर्त्यमानं व्योमगतमेव मरीचिमालिनं प्रतिपात्रमनेकधा भिद्यमानमवद्योतयति। न चैवमपि वस्तुतो भेद इति व्यभिचार एवेति, तदिदं दुराकूतम्, एवमनुभवाभावात्। न हि जलपात्राणि पश्यतो व्योमगतविवस्वदवलोकनस्यानुभवः, तत्प्रतिबिम्बावलोकनस्यैव तद्भावात्। तथाऽपि तदपह्नवेन इतरपरिकल्पनायां न क्वचिन्नियता तत्परिक्लृप्तिर्भवेत्। कथं चैवं 'जलपात्रेषु' इत्याद्यविरुद्धम्, स्वदेशगतस्यैव सवितुरवेक्षणे तत्पात्रेषु तदवेक्षणवचनस्यानुपपत्तेः? ततो यदुक्तम्–

"अत्र ब्रूमो वयं तावज्जले सौर्येण तेजसा।
स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्तितम्॥
स्वदेशभिन्नं गृह्णाति सवितारमनेकधा।
भिन्नमूर्तिं यथापात्रं तदाऽस्यानेकता कुतः।"
[मी० श्लो० शब्दनि० श्लो० १८०-८२] इति।

तत्प्रतिविहितम्, अनुभवप्रत्यनीकत्वात् स्ववचनविरोधाच्च। यदप्यन्यदुक्तम्–

"अप्सूर्यदर्शिना नित्यं द्वेधा चक्षुः प्रवर्तते।
एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वं[1] सम्प्रदर्शितम्॥
अधिष्ठातृजुत्वात्[2] साक्षात् सूर्यं प्रपद्यते।
पारम्पर्यार्पितं सन्तमवाग्वृत्या तु बुद्ध्यते॥
एवं वृत्तिद्वैकत्वादवागिव च मन्यते।
अधस्तादेव तेनार्कः सान्तरालः प्रतीयते॥"
[मी० श्लो० शब्दनि० श्लो० १८६-८९] इति।

तत्रापि योऽसौ चक्षुषोऽवाग्वृत्या सूर्यस्यावागवबोधः स चेदभ्रान्तः कथमेतद् 'अवागिव च मन्यते' इति? विभ्रमविरलात्तत्र तथा मननासम्भवात्। अथ भिन्नमेव तद्बोधात् तथा तन्मननम्, अत एव 'अवाग्वृत्या तु बुद्ध्यते' इत्यतः पृथगेव 'अवागिव च मन्यते' इत्युक्तम्। न ह्यभेदे पृथग्वचनमुपपन्नं पौनरुक्त्यदोषात्। ततोऽन्यदेव[3] तथा तन्मननं न प्रत्यक्षमिति चेत्, न, तथाऽसम्प्रत्ययात्। न हि प्रत्यक्षमन्यत्–यथाऽवस्थितमरीचिमालिगोचरम्, तदनन्तरं च तदवाग्भावविभावनं मननमवलोकयाम, चक्षुर्व्यापारानन्तरम् अवाचीनस्यैव तिग्मरुचिरूपस्य निरूपणात्। तथाऽपि तत्कल्पनायां सुखं जीवन्तु सौगताः, बहिरन्तश्च निरंशक्षणिकपरमाणुदर्शनस्य तदनन्तरभाविनः स्थूलैकविकल्पस्य च तत्परिकल्पितस्यापि एवमव्याकुलमवस्थितेः, अतोऽय[4] भ्रान्त एव, न तर्हि 'पारम्पर्यार्पितम्' इत्याद्युपपन्नम्, विभ्रमविषयस्य सत्त्वानुपपत्तेः। न सूर्ये तस्य विभ्रमो देशभेद एव तद्भावादिति चेत्, न, तत्रापि बाधाभावात्। सूर्यसम्बन्धिनि बाध एवेति चेत्, न, सूर्येऽपि तत्सम्बन्धिनि तदविशेषात्। न तन्मात्रे बाध इति चेत्, न, तस्याप्रतिभासनात्। न हि तन्मा-

१ तत्रोर्ध्वांशम्प्रदर्शितम्–मी० श्लो०। २ अधिष्ठातृजलत्वात्ताना सूर्यं आ०। अधिष्ठानादृजुत्वाच्च नात्मा सूर्यं–मी० श्लो०। ३ ततोऽन्यसदेव आ०। ४ ययाय आ०।

त्रस्य बोधे प्रत्यवभासनम्, अननुभवात्। [1]अप्रत्यवभासित्वे च बाधतदभावयो कश्चिन्नावकाश। ततो देशभेदवत् सूर्येऽपि विभ्रमस्यैवोपपत्ते 'पारम्पर्य' इत्यादेरशक्यापाकरणैवानुपपत्ति। कथ वा विभ्रमात्मना भानुमद्देशभेदोपलम्भेन शब्दविषयव्यावर्णिततदुपलम्भव्यभिचार ? प्रत्यभिज्ञानेऽपि प्रसङ्गात्। शक्य हि वक्तुम्–न[2] घटादिषु प्रत्यभिज्ञानादेकत्वप्रतिपत्ति, लूनपुनरुत्पन्नरोमनखादिप्रत्यभिज्ञानेन व्यभिचारादिति। तदेवाह–

**प्रत्यभिज्ञाऽप्रमाणं स्यात् युगपद्भिन्नदेशयो ॥४०॥** इति।

**प्रत्यभिज्ञा** 'स एवाय गकारो योऽन्यत्र श्रूयते' इति प्रत्यवमर्श। सोऽयं **युगपत्** अक्रमेण **भिन्नदेशयोर्वर्णयो** प्रवर्तमाना तदेकत्वसिद्धौ **अप्रमाण स्यात्** भवेत् व्यभिचारभावादिति भाव। ततो भेदवदभेदस्यापि वर्णेष्वव्यवस्थितेः तदभाव एव प्राप्तो भेदाभेदविकलस्य वस्तुन एवाप्रतिपत्ते। न च विभ्रमतोऽपि जलपात्रेषु भिन्नदेशतयोपलब्धिर्गभस्तिमालिन निर्विभ्रमतया तत्प्रतिसङ्क्रम एव तत्प्रतिपत्ते। तथाऽपि तत्र तत्कल्पनायामव्यवस्थैव, ततोऽप्यन्यत्र पुनस्ततोऽप्यन्यत्र प्रक्लृप्तेरनिवारणात्।

भवतु तत्प्रतिनिधेरेव तत्रोपलब्धिस्तथाऽपि व्यभिचार तस्याप्यभिन्नस्यैव भिन्नदेशतया प्रतीते, अभेदस्य समानबुद्धिगम्यत्वेन व्यवस्थापनात्। अत एवोक्तम्–

"अनेकदेशवृत्तौ वा सत्यपि प्रतिबिम्बने।
समानबुद्धिगम्यत्वान्नानात्व नैव बुद्धचते ॥"

[मी॰ श्लो॰ शब्दनि॰ श्लो॰ १९०]

इति चेत् तन्न, जलतत्पात्राणामप्येवमभेदापत्ते समानबुद्धिगम्यत्वस्य भावात्। इदमेवाह–'**प्रत्यभिज्ञा**' इत्यादि। **प्रत्यभिज्ञा** समानबुद्धि सा **युगपद्भिन्नदेशयोर्जलयोस्त**त्पात्रयोश्च प्रवर्तमाना तदेकत्वसाधन **प्रमाण स्यात्**। नाय दोष, तत्र न्यूनाधिकभावेन तद्बुद्धिगम्यत्वाभावादिति चेत् न प्रतिबिम्बेऽपि तुल्यत्वात्–तस्याप्यल्पमहतोरधिकरणयोरल्पमहत्त्वेनैव प्रत्यवलोकनात्। प्रतिबिम्बरूपतया अस्त्येव तत्रापि तद्बुद्धिगम्यत्वमिति चेत्, न जलादावपि जलत्वादिना तदविशेषात्। भवतु ततस्तत्रापि अभेदप्रतिपत्तिरिति चेत् अत्राह–

**सर्वार्थानामनादित्वे स विशेषो निराश्रय।**
**योऽन्यथासम्भवी शब्दघटाद्याख्योऽवभासते ॥४१॥** इति।

शब्दश्च घटादिश्च तयोराख्या कथन यस्यासौ **शब्दघटाद्याख्य** शब्दे घटादौ च कथ्यमान [3]इत्यर्थ। कोऽसौ ? **विशेष** [4]तयोरेव वैलक्षण्यम्। कथम्भूत ? **अन्यथासम्भवी** शब्दादन्येन प्रकारेण घटादौ सम्भवी, स चानित्यत्वमव्यापित्वमनेकव्यक्तिवृत्तया सामान्याधिष्ठानत्वमित्यादि, घटादेरप्यन्येन प्रकारेण शब्दे सम्भवी, सोऽपि नित्यत्व व्यापित्वमेकव्यक्तिकत्वेन सामान्यवैकल्यमित्यादि, **योऽवभासते** मीमासकस्य चेतसि परिस्फुरति। **निराश्रय** प्रमाणात्मन आश्रयान्निष्क्रान्तो भवेत्। कदा ? **सर्वेषा** शब्दवत् घटादीनामपि **अर्थानाम् अनादित्वे** प्रत्यभिज्ञाबलात् नित्यत्वे स्थापिते सति। उपलक्षणमिद तेन व्यापित्वेऽपीति। तथा हि–

1 अप्रत्यवभासते च आ॰। 2 नगरादिषु आ॰। 3–मानमित्य–आ॰। 4 तयोर्वैल–आ॰।

नित्यादिरूपा सर्वेऽर्था प्रत्यभिज्ञानतो यदा ।
घटादौ प्रागुपन्यस्तो विशेष स्यान्निराश्रय ॥१७८७॥
सामान्यविषयात्तत्र प्रत्यभिज्ञा ततो न चेत् ।
तत्र नित्यादिरूपत्व शब्देऽप्यस्त्वेव ते नय ॥१७८८॥
तथा च घटवत्तत्र भेदज्ञानाद्विभेदिनी ।
[1]नित्यत्वादिविशेषोक्तिस्तव स्यादप्रमाणिका ॥१७८९॥

'सर्वे' इत्यादिकम् । अत्रैव [2]व्याख्येयम्–सर्वव्यवहारहेतुत्वात् सर्वार्था., शब्दा , तेषा घटादिवदेव अनादित्वम्–पुरुषपूर्वकत्वम् 'अन' इति पुरुषपर्यायत्वात्, तदादित्वञ्च तद्वदेव [3]तद्भावाभावनियमात् तस्मिन् सतीति । शेष पूर्ववत् । भेदज्ञानाच्च तत्र भेदाभावे नाभेदोऽपि तज्ज्ञानात्, न सत्त्वादिकमपि तत्प्रत्ययादिति न शब्दो नाम भवेत् । तदाह–'सर्वे' इत्यादि । स विशेषो निराश्रयो निष्प्रमाण । कोऽसौ ? य. शब्दघटाद्यास्य. शब्द इति घटादिरिति व्याख्यायमान अवभासते लोके प्रतीयते । घटादिग्रहण शब्दवत् तत्राप्यभावस्यैवोपपत्ते । कीदृशोऽसौ ? अन्यथा अभावादन्येन भावात्मना प्रकारेण सम्भवी । कदा स निराश्रय ? सर्वार्थानां भेदादिप्रत्ययाना सर्वो भेदादिरर्थो ग्राह्यो येषामिति व्युत्पत्ते, तेषामादित्वं ग्राह्यज्ञानादिकरणत्वम्, अनादित्वमतद्भाव तस्मिन् सतीति । सिद्ध च तेषा तदनादित्व सतामपि तद्व्यवस्थापकत्वाभावात् । ततो निष्प्रमाणत्वेन सर्वेषु नीरूपत्वमेवोपस्थितम् । तदनिच्छता चाभेदवत् शब्दे भेदोऽपि तज्ज्ञानात् प्रतिपत्तव्य । तत्रेद स्यात्–[4]सतोऽपि (सत्यपि) भेदज्ञाने न तस्य भेद, तस्योपाधिनिबन्धनत्वात्, तदपि [5]गव्यक्तिरूपस्य शब्दस्य तद्व्यक्त्यन्तराविच्छेदेनाभिन्नतयैव प्रतीते । तत एवोक्तम्–

"तत्र द्रुतादिभेदेऽपि न भिन्ना सम्प्रतीयते ।
गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥
तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते ।
विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः ॥"
[मी० श्लो० स्फो० श्लो० २२-२३]

तत्रोत्तरम्–

शब्दश्चेद् व्यञ्जकाद् भिन्न शङ्ख पीतादिव स्फुटम् ।
प्रतीयेत कथ तत्र [6]पीतवन्नादविभ्रम ॥१७९०॥
विभिन्नश्चेन्न गम्येत न गम्येतैव सर्वथा ।
गम्यागम्यात्मना तस्य यद्वैरस्यान्न युज्यते ॥१७९१॥
तेनैकत्वेन वर्णस्येत्यादि तस्मादयुक्तिमत् ।
अप्रतीतिपथप्राप्ते तस्मिन्निरयुक्त्यसम्भवात् ॥१७९२॥
तत्प्रतीतिस्ततो वाच्या द्रुतादिभ्रमवर्जिता ।
तथा चासगत प्राप्त कौमारिलमिद वच ॥१७९३॥
"यथैव तव गत्यादि गम्यमानं द्रुतादिभिः ।
विशेषैरपि नानेकमेवं वर्णोऽपि नो भवेत् ॥

१ आदिपदेन व्यापित्वादिपरिग्रह । २ व्याख्येयम् ता० । ३ कार्यकारणभावनियमादित्यर्थः । ४ सतोऽपि आ०, ब०, प०, ता० । ५ गोव्यक्ति–आ० । ६ पीतवर्णाद्विभ्रम-आ० ।

त्वयापि व्यञ्जकव्यक्तिभेदाद्भेदोऽप्युपेयते ।
ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति ॥" इति ।

[मी० श्लो० स्फो० २४-२५]

तत्र भेदबुद्धे नादनिबन्धनत्वम् तत्त्वत तद्भेदादेव तदुपपत्ते । तात्त्विकत्वञ्च तस्य बाधाभावात् । नहि प्रत्यभिज्ञानात् तस्य बाध, तेन सामान्यविषयतया विद्युदादिवत् तदनुपद्रवात् । अर्थापत्त्या तस्य बाधनम् तया निर्भेदस्यैव प्रतिपत्ते । 'सा चेयम्-नित्य शब्दो दर्शनस्य तदुच्चारणस्य परार्थत्वात् । परप्रतीतये हि तस्योच्चारणम् । न चासावुच्चारितोऽप्यपरिज्ञातवाच्यसम्बन्ध तत्प्रतिपत्तिमावहति, अश्रुतपूर्वादपि शब्दमात्रात्तदापत्ते । न चानित्यत्वे तत्परिज्ञानम्, अश्रुतस्य तदयोगात्, श्रुतस्यापि तत्कालेऽनन्वयात् । ततो यदि तत्परिज्ञानम् अवश्यम्भाविनी कालान्तरावस्थिति । कथमेवमपि नित्यत्व द्विनादिक्षणावस्थितावपि तत्परिज्ञानोपपत्तेरिति चेत् ? न, तस्यैव व्यवहारकालेऽपि पुन पुनरन्वयात् । अन्य एव तत्कालभावी शब्द इति चेत् कथमन्यस्य सम्बन्धपरिज्ञानमन्यस्य प्रत्यायकत्वमतिप्रसङ्गात् ? तदुक्तम्-

'न ह्यदृष्टार्थसम्बन्ध शब्दो भवति वाचक ।
तथा चेत्स्यादपूर्वोऽपि सर्वं सर्वं प्रकाशयेत् ॥
सम्बन्धदर्शनं चास्य नानित्यस्योपपद्यते ।
सम्बन्धज्ञानसिद्धिश्चेद् ध्रुव कालान्तरे स्थिति ॥
अन्यस्मिन् ज्ञातसम्बन्धे न चान्यो वाचको भवेत् ।
गोशब्दे ज्ञातसम्बन्धे नाश्वशब्दो हि वाचक ॥"

[मी० श्लो० शब्दनि० २४१-४३] इति ।

ततस्तदुच्चारणस्य पारार्थ्यान्यथानुपपत्त्या नित्य एव शब्द इति चेत्, उत्तरमाह-

स वर्णपदवाक्याना कालदेशादिभेदिनाम् ।
सदृशानां प्रबन्धोऽयं सर्वेषा न विरुद्ध्यते ॥४२॥ इति ।

स लोकप्रसिद्ध प्रबन्धो व्यवहारस्य प्रवाह न विरुद्ध्यते । केषाम् ? 'वर्णपदवाक्यानाम् । कीदृशानाम ? देशकालादिभेदिनाम् । आदिशब्दात द्रुतविलम्बितादिभेदिनामपि । यद्येव भेदाविशेषात गोशब्दे परिज्ञातसम्बन्धे अश्वशब्दोऽपि वाचको भवेदिति अत्रोत्तरम्- सदृशानाम् इति । क्वचित् सम्बन्धपरिज्ञाने हि भेदिनोऽपि तत्सदृशस्यैव वाचकत्वोपपत्त कुतोऽतिप्रसङ्ग इति भाव । 'लौकिकानामेव सदृशाना न विरुद्ध्यते न वैदिकानाम्' इत्यत्र समाधानम्- सर्वेषाम् इति । न हि वैदिका नाम लौकिकेभ्यो विशिष्यन्ते । 'य एव लौकिका त एव वैदिका' [शाबरभा० १।३।३०] इति प्रसिद्धे । तत सादृश्यबलादपि दर्शनस्य पारार्थ्योपपत्ते न तत शब्दनित्यत्वप्रतिपत्ति, अन्यथानुपपत्तेरभावात् । तत्रार्थापत्त्यापि तस्य बाधनम् । 'सर्वेषाम्' इत्यनेन इदमप्यावेदयति । सादृश्य

१ "नित्यस्तु स्यात् दर्शनस्य परार्थत्वात्"-जैमिनिसू० १।१।१८ । न्यायकुमुद० टि० पृ० ७०१ ।
२ सवर्ण-श्रा० ।

निबन्धनादपि स एवायमित्यभेदसमारोपवत् प्रत्यभिज्ञानादर्थापत्तेर्वा वैदिकाना यदि नित्यत्वपरिकल्पन प्रत्यागमानामपि भवेत् तदविशेषात्, इत्यपौरुषेयतया तेषामपि धर्मादौ प्रामाण्यात् "धर्मे चोदनैव प्रमाणम्"[1] [मी० श्लो० चो० श्लो० ४] 'इत्यवधारणमनवधारण-प्रयुक्तमिति न तेषा ततो नित्यत्वप्रतिपत्ति तदागमवतामनित्यत्वाभ्युपगमेन बाधनात्। न तर्हि वैदिकेष्वपि स्यात् "लक्षणयुक्ते बाधासम्भवे तल्लक्षणमेव दूषितं स्यात्" [प्रमाणवार्तिकाल० ३।७१] इति न्यायात् तत्रापि तेषा तदभ्युपगमभावाच्च ।[2]तन्न प्रत्यभिज्ञानादे. शब्दे नित्यत्वप्रतिपत्तिः। आत्मादौ तु ततस्तत्परिज्ञानमनुपद्रवत्वादिति न किञ्चिदसमञ्जसमासज्यते। कथं पुनरसति नित्यत्वे शब्दस्य प्रामाण्यमिति चेत्? क एवमाह–तस्य प्रामाण्यमिति, सम्यग्ज्ञानस्यैव तत्त्वात्, शब्दस्य तु तत्त्व तत्कारणत्वेनोपचारात्। न च तद्धेतुत्वमपि नित्यत्वात्, अपि तु तदर्थवेदिपुरुषपूर्वकत्वात्। एतदेव दर्शयन्नाह–

**वाचः प्रमाणपूर्वायाः प्रामाण्यम् ।** इति ।

प्रमाणमिह वागर्थवेदिनः पुरुषस्य ज्ञान तत्पूर्वाया वाचो वचनस्य प्रामाण्यं न नित्यत्वापरनामधेयादपौरुषेयत्वात्। अत्रैवोपपत्तिमाह–

**वस्तुसिद्धये ।**
**स्वतः सामर्थ्यविश्लेषात् सङ्केतं हि प्रतीक्षते ॥४३॥** इति ।

वस्तु वागर्थ एव तस्य सिद्धि ज्ञप्ति तदर्थं हि यस्मात् सङ्केतं समयं प्रतीक्षते वाक्, अत तत्पूर्वाया एव तस्या प्रामाण्यम्। तत्प्रतीक्षत्वमपि कुतस्तस्या इति चेत्? स्वतोऽन्यनिरपेक्षत्वेन सामर्थ्यस्य वस्तुसाधनशक्ते विश्लेषसद्भावात्। ननु समयप्रतिपत्तिरपि शब्दस्य शब्दादेव, तस्यापि समयप्रतीक्षत्वे तत्रापि तत्प्रतिपत्तिरन्यत शब्दात्, तत्राप्यन्यतस्तत इति परापरशब्दप्रतीक्षायामेव कालोपक्षयान्न प्रकृते तत्प्रतिपत्तिर्भवेत्। तस्य तदनपेक्षत्वे तु सिद्ध स्वतोऽपि सामर्थ्यम्, अन्यथा ततस्तत्प्रतिपत्तेरसम्भवात्। तथा च शब्दान्तरस्यापि तदविरोधाद् व्यर्थं तत्प्रतीक्षणमिति चेत्, न, शब्दादेव तत्प्रतिपत्तिरिति नियमाभावात्। भवति हि बालकादेर्वृद्धव्यवहारदर्शनादपि पदतदर्थादिसम्बन्धप्रतिपत्ति। कस्यचित् जन्मान्तरसंस्कारोन्मीलनादपि अश्रुतपूर्वस्याख्यानकृतोऽपि दर्शनात्। कस्यचित् स्वबुद्धिबलादपि यथा पाणिनेः–'आदैचो वृद्धि' इति, अदेङो गुण' इति, "वृद्धिरादैच्" [पा० सू० १।१।१] इति "अदेङ् गुण" [पा० सू० १।१।२] इति च तेनैवाभिधानात्। यथा वा तत्रैव पूज्यपादस्य भगवत 'ऐविति 'एबिति च "आदैजैप्" [जैनेन्द्र० १।१।१५] इति "अदेङेप्" [जैनेन्द्र० १।१।१६] इति च तस्यैव वचनात्। तदेवमनेकधा समयप्रतिपत्तिसम्भवेनोपपन्न तत्प्रतीक्षयैवार्थप्रत्यायकत्व वचनस्य। तदनेकत्वमेव दर्शयन्नाह–

**स पुनर्बहुधा लोकव्यवहारस्य दर्शनात् ।** इति ।

स सङ्केत । पुनरिति वितर्के। बहुधा कथितेन प्रतिपत्तिप्रकारबहुत्वेन बहुप्रकार इत्यर्थ । कुत एतत्? तथैव लोकव्यवहारस्य तत्प्रतिरूपस्य दर्शनादुपलम्भादिति ।

साम्प्रत वाच्यवाचकयोर्विकल्पेनापि सङ्केतस्य भेद दर्शयन्नाह–

---

१ चोदनालक्षणोऽर्थो धर्मः'–जैमिनि० १।१।२। चोदनैव प्रमाण चेत्येतद् धर्मेऽवधारितम्–' मी० श्लो०। २ एबित्यैबिति च आ०।

**शब्दार्थयोर्विकल्पेन, [सन्निवेशोऽनुवर्तते ॥४४॥]** इति ।

शब्दो वाचकः तस्य विकल्पो नामाख्यातनिपातोपसर्गादिरूपो भेदः, अर्थो वाच्यस्तस्यापि जातिद्रव्यगुणक्रियादिरूपो भेद एव[1] विकल्पस्तेन सङ्केतो बहुधा शब्दादेः, तद्विषयस्य विकल्पे तस्यापि विकल्पोपपत्तिरिति भावः। यदि वा तयोर्विकल्पो भेदाभेदयोर्गुणमुख्यभावाभ्यां परामर्शनेन बहुधेति। तत्र गुणभावेन भेदविकल्पे अस्यान्नस्य प्राणा इति वाचकमिति। अभेदविकल्पे च इदमन्नं प्राणा इति च सङ्केतः। गुणभूतं चान्नस्य प्राणत्वम् प्राणस्थितिहेतुत्वेन प्राणत्वस्य तत्रोपचारात्। अतः प्राणशब्दस्य तद्वाचकत्वमपि गुणत एव। मुख्यतस्तदुभयविकल्पस्तु एषां निःश्वासादीनां प्राणा इति वाचकम्, एते वा निःश्वासादयः प्राणा इति च सङ्केतः।

कथं पुनः सङ्केतस्य करणं यस्यायं प्रपञ्चः? कथं न स्यात्? अनुपलब्धस्य शब्दस्य तदयोगात्। उपलब्धस्याप्युच्चरितप्रध्वंसित्वेन सङ्केतकालेऽनन्वयादिति चेत्; मा भूत् प्रत्यक्षतः तत्काले तस्य प्रतिपत्तिः, प्रत्यक्षस्यैव विषयसन्निधिसव्यपेक्षत्वेन तदभावेऽनुपपत्तेः। तदुत्तरकालभाविना तु विकल्पेन भवत्येव प्रतिपत्तिस्तस्य सन्निहितवत् विप्रकृष्टेऽपि प्रवृत्तेः। तत्प्रामाण्यस्य च द्वितीये व्यवस्थापितत्वात्। एतदेवाह—'शब्द' इत्यादि। **शब्दार्थयोः** यस्सङ्केतोऽयमस्य वाचको वाच्यश्चायमस्येति समयः स **विकल्पेन** ऊहापरनामधेयेन प्रमाणेन। यद्येवं सर्वस्यापि शब्दस्य प्रमाणविषये एव सङ्केतात् सत्येवार्थे प्रवृत्तिः, नास्ति समयान्तरभेदिनि प्रधानादौ तत्र सङ्केतस्यैव तन्निबन्धनप्रमाणाभावेनासत्त्वात्। तदुक्तम्—

"परमार्थैकतानत्वे शब्दानामनिबन्धना ।
*न स्यात् प्रवृत्तिरर्थेषु समयान्तरभेदिषु ॥" [ प्र० वा० ३।२०६]*

इति चेत्; न, विकल्पेनापि प्रमाणेनैव सङ्केत इति नियमाभावात्, मिथ्याविकल्पेनापि प्रायशस्तत्क्रियादर्शनात्। तद्विकल्पस्य च परपरिकल्पनायां समयान्तरभेदिष्वर्थेषु भावात्। ततो 'विकल्पेन' इति सामान्येन ब्रुवतः शास्त्रकारस्यायमभिप्रायः- भावाभावतदुभयविषयत्वात् विकल्पस्य तदुपकल्पितसङ्केतसामर्थ्यादर्थविषयत्वमायहृता शब्दानामपि तदविषयत्वमेवोपपन्नम्, न परमार्थैकतानत्वमिति। न च कस्यचित् तस्य परमार्थविषयत्वमिति सर्वस्यापि तत्कल्पनमुपपन्नम्, बुद्धिष्वपि प्रसङ्गात्। शक्यं हि वक्तुं

*परमार्थैकतानत्वे बुद्धीनामनिबन्धना ।
न स्यात् प्रवृत्तिरर्थेषु समयान्तरभेदिषु ॥१७९४॥* इति ।

ततो यथा बुद्धित्वाभेदेऽपि सामग्रीगुणदोषाभ्यां भावाभावादिविषयत्वं बुद्धीनां तद्वच्छब्दानामपीति समञ्जसम्। ततो न सङ्केतस्याकरणम्, तत्कालेऽपि विकल्पविषयतया शब्दस्यापरान्तस्यापि परिस्फुरणात्। एतदेवाह—**सन्निवेशोऽनुवर्तते** इति। सन्निवेशः सन्दर्भः, स च वर्णानामेव प्रक्रमादनुवर्तते विकल्पम् तद्विषयत्वेनानुसरति। यदि पुनः शब्दस्य वस्तुनि स्वत एव योग्यत्वं को दोषो येन सङ्केतः तत्रापेक्ष्यत इति चेत्? उच्यते—तत्सर्वविषयम्, नियतविषयं वा? पूर्वविकल्पे ततो युगपत् सर्वार्थप्रतीतिप्रसङ्गः। तथा च न ततो नियतविषयं प्रवृत्त्यादिरिति व्यवहारविलोपः। ततः आह—

**न सर्वयोग्यता साध्वी सङ्केतान्नियमो यदि।** इति ।

---

१ एवं आ० ।

**सर्वार्थे** शब्दस्य या **योग्यता** सा न साध्वी इति निवेदिताद् दोषात्। नाय दोष, तस्या सङ्केतात् विषयनियमोपपत्ते। एतदेवाह–

**'सङ्केतान्नियमो यदि'।** इति।

अत्रापि तदेव दूषणम्–तदन्तरस्यानभिधानात्। तथा हि–यदि सत्यामपि योग्यताया सङ्केतस्यापेक्षा स एव तर्हि–शब्दस्य तदर्थप्रत्यायने शक्तिरिति न स्वतो योग्यता साध्वी। द्वितीयेऽपि विकल्पे दोषमाह–

**सम्बन्धनियमेऽन्यत्र समयेऽपि न वर्तताम् ॥४५॥** इति।

**सम्बन्धस्य** योग्यतारूपस्य **नियमो** नियतविषयत्वम् तस्मिन् **अन्यत्र** अर्थान्तरे **समयेऽपि** शब्दो **न वर्तताम्** न प्रवर्तेत। वर्तते च उर्वश्यादिशब्दस्य देवगणिकादौ प्रसिद्धस्य दर्व्यादावपि सङ्केतवशात् प्रवृत्तिप्रतिपत्ते। तन्न शब्दार्थयोरपौरुषेय सम्बन्ध सम्भवति। तदेवाह–

**ततः शब्दार्थयोर्नास्ति सम्बन्धोऽपौरुषेयकः।** इति।

सुबोधमेतत्। कस्तर्हि तयो सम्बन्ध ? इत्याह–

**स हि शब्दार्थसम्बन्धो यतोऽर्थः सम्प्रतीयते ॥४६॥** इति॥

**यतो** यमाश्रित्य शब्दादर्थप्रतिपत्ति स एव तयो सम्बन्धो भवितुमर्हति। स च सङ्केत एव, तद्बलादेव शब्दार्थप्रतिपत्तेरुपलम्भात् न स्वतो योग्यत्वम्। यद्येव शास्त्रकारेण कथमन्यत्र प्रतिपादितम् ?

"योग्यः शब्दो विकल्पो वा सर्वः सर्वत्र चेत्स्वत.।
मिथ्यात्वं परतस्तस्य चक्षुरादिधियामिव॥"

[ सिद्धिवि० परि० ५ ] इति।

इति चेत्, न, यतो न हि तत्रापि स्वतो योग्यत्वेन तस्य तात्पर्यम्, अपि तु तदभ्युपगमेन शब्दस्यार्थविषयत्वमिति निवेदन एव तत्रापि तात्पर्यम्, अन्यथा कथमनेदमभिदध्यात्–*'स्वतः सामर्थ्यविश्लेषात्'* इति[1] ? कथ चेदम् *'वाचः प्रमाणपूर्वाया. प्रामाण्यम्'* इति ? स्वत शब्दस्य योग्यत्वे प्रामाण्यस्य स्वत एवोपपत्ते, सतोऽपि पुरुषस्य गुणस्य तन्मिथ्यात्वापाकरण एव व्यापारात्। तन्न शास्त्रकारस्य तत्र तात्पर्यम्, सङ्केत एव तच्छक्तित्वेन तात्पर्यात्।

स्यादाकूतम्–व्यवहाराय सङ्केत, न चानित्यत्वे शब्दस्य ततो व्यवहार, कृतसङ्केतस्य तस्य तत्समयेऽनन्वयात्, अन्यस्य तदा सम्भवतोऽप्यकृतसङ्केतत्वेनार्थवत्त्वापरिज्ञानादिति, तन्न, सङ्केतस्य विकल्पावभासिशब्दोपदर्शनद्वारेण देशकालानवच्छिन्नसकलतत्सदृशशब्दविषयतयैव ईदृशमीदृशस्य गमकमितिवत् वाचकमिति च प्रतिपादनेन लिङ्गान्तरस्येव शब्दान्तरस्याप्यर्थवत्त्वपरिज्ञानात् कुतो न व्यवहाराय सङ्केत स्यात् ? ततो निषिद्धमेतत्–

"शब्दं तावदनुच्चार्य सम्बन्धकरणं कुतः।
न चोच्चरितनष्टस्य सम्बन्धेन प्रयोजनम्॥

---

१ द्रष्टव्यम्—पृ० ३१९।

तेनासम्वन्ध[1] (म्बद्ध्य)नष्टत्वात् पूर्वस्तावदनर्थकः ।
उत्तरोऽकृतसम्बन्धो विज्ञायेतार्थवान् कथम् ॥"
[मी॰ श्लो॰ शब्दनि॰ श्लो॰ २५५-२५६]

निवेदितेन न्यायेन सङ्केतकरणस्योत्तरशब्दार्थवत्परिज्ञानस्य च भावात् । लिङ्गेऽपि विद्युदादावस्य प्रसङ्गाच्च । शक्य हि तत्रापि वक्तुम्–

लिङ्ग तावदनादर्श्यं सम्बन्धकथन कथम् ।
न च दर्शितनष्टस्य सम्बन्धेन प्रयोजनम् ॥१७९५॥
तेनासम्बन्ध्य(म्बद्ध्य)नष्टत्वात् पूर्वं तावदनर्थकम् ।
पर चानुक्तसम्बन्ध विज्ञायेतार्थवत् कथम् ॥१७९६॥ इति ।

यदप्यन्यदुक्तम्–

"अर्थवान् कतमः शब्दः श्रोतुर्वक्त्रा च कथ्यताम् ।
यदा पूर्वं श्रुतं शब्दं नासौ शक्नोति भाषितुम् ॥
न तावदर्थवन्तं स ब्रवीति सदृशं वदेत् ।
नार्थवत्सदृशः शब्दः श्रोतुस्तत्रोपपद्यते ॥
अर्थवद्ग्रहणाभावात् न चासावर्थवान् स्वयम् ।"
[मी॰ श्लो॰ शब्दनि॰ २६०–६२] इति ।

तदपि तादृशमेव । तथा हि–

अर्थवत् कतमल्लिङ्ग ज्ञातुर्वक्त्रा प्रदर्श्यताम् ।
पूर्वं ज्ञात यदा नासौ लिङ्ग दर्शयितु क्षम ॥१७९७॥
नार्थवद् दृश्यते तेन सदृश दृश्यते यदि ।
नार्थवत् सदृश लिङ्ग ज्ञातुस्तत्रोपपद्यते ॥१७९८॥
अर्थवद्ग्रहणाभावात् न स्वय चेदमर्थवत् । इति ।

ततो यथा लघुविनाशिन्यपि विद्युदादौ विकल्पावभासिनि सम्बन्धप्रतिपत्तौ परापरकालभाविनि तत्सदृशे सर्वत्रापि तत्प्रतिपत्ते, पूर्वोपलब्धस्य अनुपदर्शनेऽपि परस्योपदर्श्यमानस्य अर्थवत्त्वप्रतिपत्ति, अन्यथा ततो वातादिसाध्यप्रत्यायनानुपपत्ते । अस्ति चेदम्–

"वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥"
[पा॰ महा॰ २।३।१३]

इति प्रसिद्धे । तथा शब्दस्यापीति न तत्राप्यय दोषो भावितव्य । ततो युक्त परापरस्यापि शब्दस्य वाचकत्वम् । इदमेव कारिकाखण्डेन दर्शयति–

तादृशो वाचकः शब्दः सङ्केतो यत्र वर्तते । इति ।

यत्र यस्मिन् शब्देऽर्थे वा सङ्केतोऽयमस्य वाचको वाच्य इति समय प्रवर्तते तादृशस्तत्समान शब्दो वाचकः तादृशस्यार्थस्य तादृश इति षष्ठ्यन्तस्याप्यावृत्त्या सम्बन्धात् । सादृश्याच्च वाचकत्व वर्णस्य वर्णान्तरेण पदस्य पदान्तरेण एव वाक्यादावपि । ततो न

१ असम्बद्ध्येति सम्बन्धमगत्वा इत्यर्थः ।

शालाशब्दे सम्बन्धपरिज्ञानात् मालादिशब्दस्यापि तदर्थवाचकत्वम्, वर्णमात्रेण सादृश्येऽपि पदरूपतया तदभावात् । यदप्युक्तम्–

"सादृश्यात् प्रतिपत्तौ च भ्रान्तिज्ञान प्रसज्यते ।
धूमे दृष्टेऽग्निसम्बन्धे वाष्पादिव कृशानुधी ॥"

[ मी० श्लो० शब्दनि० श्लो० २६९ ] इति ।

तत्रोपपन्न वाष्पादग्निज्ञान भ्रान्तमिति धूमस्यैव तत्र प्रतिबन्धपरिज्ञानम्, तत्सादृश्यस्य शब्दस्य तु तदन्तरसदृशस्यैव तदर्थे तत्परिज्ञानात् । कुतस्तत तज्ज्ञानस्य विभ्रमत्वम् ? अपि च, एव धूमान्तरादपि दहनज्ञान भ्रान्त भवेत्, तस्यापि सादृश्यादेव गमकत्वात् । सामान्यस्य तदर्थान्तरस्य प्रत्याख्यानात् । अप्रत्याख्यानेऽपि वाष्पादनलज्ञान भवतोऽपि कुतो भ्रान्तम्, धूमसामान्यस्य तत्राभावादिति चेत् ? न, पाण्डुत्वादेर्भावात् । तद्विशेषस्याभावादिति चेत्, ममापि तर्हि सादृश्यविशेषाभावात् भवतु ततस्तज्ज्ञान भ्रान्तम्, न तद्वत शब्दात् तदर्थज्ञानमिति सम समाधि । तत सूक्तम्–'तादृशो वाचक' इत्यादि ।

भवतु तादृशस्य वाचकत्व शब्दस्य मयापि तथा तदभ्युपगमादिति सौगत, तन्न तन्मते शब्दस्यैवासम्भवात् । स हि पदादिरूपो न विना वर्णव्यवस्थितिमवस्थातुमर्हति । वर्णक्रमसन्दोहस्य पदत्वात्, पदक्रमसङ्घस्य च वाक्यत्वात् । स च वर्ण क्षणक्षीणैकध्वनिस्वभाव, क्षणपर्यायप्रवृत्तानेकध्वनिरूपो वा प्रकारान्तरानिरूपणात् ? न तावदाद्यो विकल्प, अनभ्युपगमात्, क्रमप्रवृत्तासङ्ख्येयध्वनिभागपरिनिष्ठितात्मा ह्येकैकोऽपि वर्णस्तस्याभिप्रेत । तत्रासङ्ख्येयक्षणनिमेषपरिसमाप्तिरिति वार्तिके[1] श्रवणात् । नापि द्वितीयो विकल्प, ध्वनिक्षणाना निरन्वयविनाशे हेतुफलभावानुपपत्त्या तन्निबन्धनस्य पौर्वापर्यस्यासम्भवात् । निरूपिता च तत्र तदनुपपत्ति । सम्भवत्यपि तस्मिन् कथ बहुष्वेकव्यपदेशोऽयमकारो गकारो वेति ? *तेष्वेकत्वस्य कल्पनात् तद्रूपत्वाच्च वर्णादेरिति चेत्, ननु कल्पनमपि* शब्दादेव 'विकल्पाः शब्दयोनय" [ ] इति वचनात् । स शब्दो यदि स एवाकारादि तर्हि 'विकल्पात्तस्य, ततो विकल्पस्य निष्पत्ति' इति परस्पराश्रयात् नोभयस्यापि सम्भव स्यात् । अथान्य एव स शब्दो यतो विकल्प इति, तन्न, तस्यापि तत एव कल्पने तथैव दोषात् । पुनरप्यन्यत तत्कल्पितादेव शब्दात् तद्विकल्पपरिकल्पनायामितरेतराश्रयप्रवाहप्राप्ते । विकल्पान्तरकल्पितात् ततस्तत्कल्पनमित्यपि न युक्तम्, तदन्तरस्यापि स्वकल्पितादेव शब्दादपरापरस्मादुत्पत्तिपरिकल्पनाया पूर्ववद्दोषात्, तस्यापि तदन्तरकल्पितात् ततस्तत्परिकल्पनायामनवस्थाप्राप्ते । नाय दोषो हेतुफलभावेनानादित्वात् शब्दाकारावभासिनो विकल्पप्रवाहस्येति चेत्, न, एवमपि तदसम्भवात् । तथा हि–

अवस्तुसन् यदा वर्ण तदा तत्कल्पनाकरी ।
बुद्धिस्तन्मात्ररूपत्वात्कथ वस्तुसती भवेत् ॥१७९९॥
यत शब्दस्य सा हेतुस्तस्या शब्दोऽपि वा फलम् ।
न ह्यसत्कस्यचिद्धेतु कार्यं वा व्योमपुष्पवत् ॥१८००॥

---

१ 'सर्वोन्त्योऽपि हि वर्णोऽस्मा निमेषतुलितस्थिति । स च क्रमादनेकाणुसम्बन्धेन नितिष्ठति ॥" –प्र० वा० २।४९५ । "स चाक्षिनिमेषकालस्थायी अकारादि अनेकेषामाकाशगतम सञ्ज्ञितानां पदमाला द्व्यवर्तिनामणूना सम्बन्धेनाक्रमणेन निमेषकालसञ्ज्ञितेन क्रमाद् भूय क्षणव्यवधानात् नितिष्ठनि परिसमाप्यते ।"–मनोरथन० ।

रूप यदपि सत्तम्या स्ववेदनमभीप्सितम् ।
न तस्य निर्विकल्पत्वात् शब्दकारणकार्यता ॥१८०१॥

तत्र शब्दस्यावस्तुसत्त्वे विकल्पसम्भव यतस्तत्कल्पनमिरयमुक्तमिदम्–"विकल्पयोनय शब्दा" [ ] इति । तन्न सौगतमते शब्दस्य सम्भव, वर्णस्यैवानवस्थितौ तदात्मन पदादेरप्यव्यवस्थिते । एतदेवाह–

**क्रमेणोच्चार्यमाणेषु ध्वनिभागेषु केषुचित् ॥४७॥**
**न वर्णपदवाक्याख्या अविकारेऽप्यसम्भवात् ।** इति ।

न हि सूक्ष्मसमयावसायिनियोपजायमानेषु केषुचिन्नादरूपेष्ववयवेषु वर्णादिव्यपदेशा सम्भवन्ति, तेषामेव निरन्वयविनश्वरतया विकार[1]विकल्पना हेतुफलभावानधिश्रयतया व्योमारविन्दमकरन्दप्रयानामप्रत्याभूमित्वेन तत्र तत्त्वत कल्पनया च वर्णादिव्यवस्थापनानुपपत्ते ।

एतेनैतदपि प्रत्युक्त यदुक्त केनचित्[2]–"क्षणिक शब्द अस्मदादिप्रत्यक्षत्वे सति विभु[3]द्रव्यविशेषगुणत्वात् सुखादिवत् ।" [ ] इति, तथा हि शब्दस्याप्रतिपत्ताबाश्रयासिद्धि लिङ्गस्य । प्रतिपत्तौ तत्र तस्य कारणत्व वक्तव्यम् "अर्थवत् प्रमाणम्" [ न्यायभा० १।१।१ ] इत्यत्र कारण [ त्व ] स्यैव विषयत्वव्याख्यानात् । तस्य च न सहजन्मनस्तत्कारणत्व तस्य तत्प्रतिपत्त्या युगपन्निष्पन्नयाऽनपेक्षणात । न प्रागधिगतजन्मनोऽपि तदुत्पत्तिसमयमप्राप्य निवृत्तस्य [4]अनधिगतजन्मनोऽपि तस्य तद्धेतुत्वप्रसङ्गात् । न हि किञ्चिदत्र निबन्धन यदुत्पद्याभूतमेव कारण नानुत्पद्याभूतमिति नीरूपत्वस्योभयत्राप्यविशेषात् । ततस्तत्समयप्राप्तस्यैव तस्य[5] तत्कारणत्वम् । तथा च न क्षणिकत्व प्रागिव पश्चादपि तस्य समयान्तरप्राप्तेरवश्यम्भावात्, अन्यथा प्रागपि तदभावोपनिपातात् ।

एतेन क्षणषट्कस्थायित्व क्षणिकत्वमिति प्रत्युक्तम् । यत –

क्षणात् क्षणान्तर गच्छन्नित्यो यद्युक्तमागत ।
क्षणषट्कमस्थायी सुतरा नित्यता व्रजेत् ॥१८०२॥

कथमेव चलत्व कस्यचिच्छब्दस्य यदि तस्यापि समयान्तरप्राप्तिरावश्यकात्त(वश्यिका त) दभावे[6] एव तदुपपत्तेरिति चेत्, न, तत्प्राप्तावनुपलभ्यत्वेनापि [7]तदुपपत्ते । न चोपलभ्येतरयोरेकत्वानुपपत्ति , युगपदिव क्रमेणापि तदविरोधात् । अस्ति च युगपत्तयोरेकत्वम्, उपलभ्यस्यैव शब्दस्य[8] क्षणक्षयात्मनाऽनुपलभ्यत्वात् । तेनाप्युपलभ्यत्वे प्रवृत्तस्यानुमानस्य वैफल्यात् । विप्रतिपत्तिनिवर्तनार्थत्वान्नेति चेत् कुतस्तस्य तदर्थत्वम् ? निश्चयरूपत्वादिति चेत्, न प्रत्यक्षस्यापि तद्रूपस्यैव भवता प्रसिद्धे । तथापि तद्विषये विप्रतिपत्तावनुमानविषयेऽपि स्यादिति पुनस्तन्निवर्तनार्थं प्रमाणमन्यदन्वेषणीयम्, तत्राप्येवमनवस्थितेर्न कदाचिदपि तन्निवृत्तिर्भवेत् । ततोऽनुपलभ्यतद्रूपविज्ञानार्थत्वमेव तस्योपपन्नमिति सिद्धमुपलभ्येतरस्वभावयोरेकत्व युगपत् । एव क्रमेणापि श्रावणस्य तत्स्वभावपरिहारेण शब्दपरिणामिनो भावस्य पुनरवस्थितिसम्भवात् । तत्र प्रकृतादनुमानादेकान्तत शब्दे

१ –रविकल्पानाम् आ० । २ वैशेषिकेण । ३ विभुद्रव्यमाकाशम् । ४ अनुत्पन्नस्यापि । ५ शब्दस्य प्रतिपत्तिकारणत्वम् । ६ समयान्तरप्राप्त्यभावे एव चलत्वोपपत्ते । ७ चलत्वोपपत्ते । ८ शब्दस्य लक्षण– आ० ।

क्षणिकत्वसाधनमुपपन्नम्। कथञ्चित् तत्साधनेन विरुद्धत्वादनैकान्तिकत्वाच्च। व्यभिचारि हीदमनुमानं भावनादिना, तस्यात्मगुणविशेषस्याक्षणिकत्वेऽप्यस्मदादिप्रत्यक्षत्वे सति विभुद्रव्यविशेषगुणत्वात्। न चायमपि क्षणिक एव कालान्तरे तदभावेन तत्फलस्यानुदयप्रसङ्गात्। न चैवम्। भावनाधर्माधर्माणां भवान्तरेऽपि फलदायित्वेन परस्यापि प्रसिद्धेः। नापि तत्र हेतुविशेषणम् 'अस्मदादिप्रत्यक्षत्वम्' असिद्धम्, मानसेन प्रत्यक्षेणास्मदादिभिरपि तस्य प्रत्यक्षीकरणात्। कथमन्यथा 'यावान् कश्चिद् गुणः स सर्वोऽपि गुण्याश्रितः' इति साकल्येन व्याप्तिप्रतीतिः ? यतः "द्रव्याश्रिता बुद्ध्यादयो गुणत्वात् रूपादिवत्" [ ] इत्यनुमानमुदयवदवबुद्ध्येत यत आत्मसिद्धिः। यदि पुनरेवं विशेषणम्–'अस्मदादिबाह्येन्द्रियप्रत्यक्षत्वे सति' इति, न चैवं व्यभिचारो भावनादौ तदभावादिति, न तर्हि सुखादिवदिति निदर्शनमुपपन्नं साधनवैकल्यात्, तदपि तद्विशेषणकस्य विभुद्रव्यविशेषगुणत्वस्य तत्राभावात्। कुतो वा श्रोत्रस्य बाह्येन्द्रियत्वं यतस्तद्विषयस्य शब्दस्य बाह्येन्द्रियप्रत्यक्षत्वमवकल्प्येत ? अनन्तःशरीरवृत्तेरिति चेत्, न, कर्णशष्कुल्यवगुण्ठितत्वेन तदन्तर्वर्तिन एवाकाशस्य श्रोत्रत्वोपगमात्। आत्मना तस्याऽसंयोगादिति चेत्, न तर्हि नयनादेर्बाह्येन्द्रियत्वं तत्र तत्संयोगभावात्, अन्यथा आत्मनोऽसर्वगतत्वप्रसङ्गो मूर्तैरपि नयनादिभिरनभिसम्बन्धात्, तत्सम्बन्धलक्षणत्वाच्च व्यापित्वस्य[२]। भवतु तर्हि मनोऽधिष्ठितत्वादेव नयनादेरिव श्रोत्रस्यापि बाह्येन्द्रियत्वमिति चेत्, तदनधिष्ठाने को दोषो यतस्तत्परिकल्पनम् ? युगपद्ज्ञानोत्पत्तिरेव, रूपादीनां युगपदपि सन्निधानसम्भवादिति चेत्, न, तदुत्पत्तिक्रमनियमस्यादृष्टवशादपि शक्यकल्पनत्वात्, सत्यपि मनसि तस्यावश्यापेक्षणीयत्वात् अन्यथा सर्वकार्येषु तस्य[३] साधारणहेतुत्वानुपपत्तेः। न चैवं मनस इव नयनादेरपि वैयर्थ्यम्, तस्य गोलकादिरूपस्य दृष्टत्वेनाशक्यप्रतिषेधत्वात्। शक्तिरूपस्य शक्य एव प्रतिषेधः, तत्प्रसवाभिमतस्य रूपादिज्ञानभेदस्यादृष्टभेदादेवोपपत्तेरिति चेत्, यद्येवं प्रतिपद्यसे न किञ्चिदनिष्टं[४]तद्भेदस्यैव क्षयोपशमविशेषापरनामधेयस्य साक्षान्नयनादित्वेनास्माभिरभिधानात्, गोलकादेस्तदधिष्ठानतया गवाक्षस्थानीयस्यैवोपचारादेव रूपादिज्ञानहेतुत्वपरिकल्पनात्। ततः श्रोत्रस्य बाह्येन्द्रियत्वानुपपत्तेः अस्मदादिप्रत्यक्षत्वमेवावशिष्यत इति तदवस्थो व्यभिचारः, तद्विशेषणस्य हेतोर्भावनादौ साध्यविपर्ययेऽपि भावात्।

असिद्धश्चायं हेतुः विभुद्रव्यविशेषगुणत्वादिति, आकाशे तस्य तत्कार्यतया समवायाद्धि तद्गुणत्वम्, न चासौ तस्यास्ति अनुपरमप्रसङ्गात्। निरूपितं चैतत्–"कारणस्याक्षये"[५] इत्यादौ। एतेन सुखादेरप्यात्मकार्यत्वेन तद्विशेषगुणत्वं प्रतिषिद्धं बोद्धव्यम्। ततो नातः क्षणिकत्वप्रतिपत्तिः शब्दस्य असिद्धत्वात्, निदर्शनस्य साधनवैकल्याच्च। तत्र योगमतेऽपि सम्भवः शब्दस्य। स्वमते तु तत्सम्भवं दर्शयन्नाह–

शब्दभागाः स्वहेतुभ्यः समानोन्नयहेतवः ॥४८॥ इति।

श्रोत्रग्रहणयोग्याः परिणामाः शब्दाः त एव प्रतिदिशमनेकरूपतया विभज्यमानत्वात् भागास्ते समानस्य सदृशस्य प्रतिश्रोत्रमात्मप्रापणस्य उन्नयस्य हेतवः इति। कुतः

१ "सुखादयः क्वचिदाश्रिता गुणत्वाद्रूपादिवत्" –प्रश० व्यो० पृ० ४०६। २ सर्वमूर्तमद्द्रव्यसंयोगित्वं व्यापित्वम्। ३ अदृष्टस्य। ४ अदृष्टविशेषस्यैव। ५ न्यायवि० श्लो० ३।१०६। पृ० ३१०।

पुनस्ते स्वयं भवन्तस्तदुन्नयस्य हेतव इति चेत् ? स्वहेतुभ्य एव। स्वहेतवश्च तेषामुपादानतया पुद्गलविशेषाः, सहकारितया च ताल्वादिस्थानप्रयत्नभेदास्तेभ्य एव। कथमेवमपि युगपत् समानानेकवर्णोत्पत्तिरिति चेत् ? यौगपद्येन बहुभिरुपलम्भादेव। न चायमेकत्वे वर्णस्य सम्भवति, एकश्रोत्रप्रविष्टस्य तदैव तदन्तरप्रवेशासम्भवात्। एकस्यापि व्यापिनः सम्भवत्येव युगपदनेकतत्प्रवेश इति चेत्, न, तथापि समग्रस्य तदसम्भवात्, असमग्रोपलब्धस्य च वाचकत्वानुपपत्तेः। एतदेवाह–

सकलाग्रहणात् [तेषां युक्ता हि श्रोत्रगोचराः]। इति।

सकलस्य समग्रशब्दपरिणामस्य यद् अग्रहणम् एकत्वाभ्युपगमे प्राप्तं तस्मात् समानोन्नयहेतव एव ते इति। यद्येवं कथमेव एव शब्दोऽस्माभिरश्रावीति तदुपलब्धिमतां संवाद इति चेत् ? न, सादृश्यादपि तदुपपत्तेः। दृश्यते हि ततोऽपि तथासंवादः–यथैक एवाहारः पङ्क्तिगतानामिति। ततो युगपत् सकलाकारतया भिन्नदेशव्यवस्थितानेकप्रतिपत्तृगोचरत्वादनेक एव शब्दः।

श्रोत्रस्याप्राप्यकारित्वेनैकस्यापि शब्दस्य तथा तद्विषयत्वोपपत्तेः नातस्तन्नानात्वप्रतिपत्तिरिति चेत्, न, तत्प्राप्यकारित्वस्यानुमानतः प्रतिपत्तेः। प्राप्यकारि श्रोत्रं प्रत्यासन्नग्रहणात् साधर्म्येण घ्राणवत्, वैधर्म्येण नयनवत्। न चैवं दिग्विभागस्य दूरादिभावस्य चाप्रतिपत्तिरेव, श्रोत्रं प्रति शब्दस्याभिपतनविशेषादेव प्राच्योऽयमुदीच्योऽयं प्रत्यासन्नोऽयमन्यथा वेति तत्र प्रतिपत्तेः सम्भवात्, प्राप्यकारिण्यपि घ्राणेन्द्रिये तत एव तद्भावात्। कथमन्यथा पिपीलिकादीनां गन्धाभिपतनदिगभिमुखतया प्रत्यासन्ने दूरे वा गन्धद्रव्ये प्रवृत्तिः ? एवं तर्हि दूरत्वस्यासत एव तत्र प्रतिभासनात् श्रोत्रज्ञानं कथमभ्रान्तमिति चेत् ? न, शब्दरूपस्य सत एव तत्र प्रत्यवभासनात्। भ्रान्तेतरात्मकत्वमेकत्र विरुद्धमिति चेत्; न, दृष्टत्वात्। कथमन्यथा साकारज्ञानवादिनस्तत्राप्ययं न दोषः–ज्ञानान्तर्गतत्वेनादूरस्यैव नीलादेर्दूरतया प्रत्यवभासनात्। न हि तद्विषयं ज्ञानमपि दूरमेव शरीरस्य निर्ज्ञानत्वापत्तेः। ज्ञानान्तरेण तस्य सज्ञानत्वमिति चेत्, न, तस्य निर्विषयस्याभावात्, सविषयस्य पूर्ववद्दूरत्वापत्तेः, पुनरपि ज्ञानान्तरेण तस्य सज्ञानत्वकल्पनायामव्यवस्थितिप्रसङ्गात्। तन्न शरीराद् बहिर्ज्ञानकल्पनमुपपन्नं निःशरीरस्य ज्ञानस्याप्रतिवेदनात्। ततो दुष्परिहरमेवाप्राप्यकारि श्रोत्रादिकं ब्रुवतोऽपि तज्ज्ञाने विभ्रमेतरात्मकत्वमिति न तेन वयं पर्यनुयोक्तव्याः। ततो युक्तं श्रोत्रस्य घ्राणादिवत् प्राप्यकारित्वम्, अन्यथा नयनादिवत् प्रत्यासन्नग्राहित्वाभावप्रसङ्गात्। अस्ति च तत्रेदम्–कीटकध्वानादेः कर्णविवरान्तर्वर्तिनोऽपि तेन प्रतिवेदनात्। न चैतदप्राप्यकारिणि चक्षुषि दृष्टं तदन्तर्गतस्याञ्जनादेस्तेनाप्रतिपत्तेः। तथा च कस्यचित् सुभाषितमपि "न स्वमलमक्षि पश्यति शशिनि कलङ्कं निरूपयिष्यति" [ ] इति।

चक्षुरपि प्राप्यकार्येव बाह्येन्द्रियत्वात् त्वगादिवदिति चेत्, अत्र चक्षुर्यदि गोलकमेव न तर्हि तत्र प्राप्यकारित्वसाधनमुपपन्नम्, तत्पक्षस्य अनुष्णाग्निपक्षवत् प्रत्यक्षेण बाधनात्, विषयविप्रकृष्टस्यैव हि गोलकस्य प्रत्यक्षेण प्रवेदनं न तत्प्राप्तस्य। रश्मिद्वारेण तत्प्राप्तस्यास्त्येव तस्यानुमानतः प्रतिपत्तिः। तच्चेदमनुमानम्–रश्मिकलापालङ्कृतं चक्षुः तैजसत्वात्

१ "चक्षुःश्रोत्रे प्राप्यार्थं परिच्छिन्दाते बाह्येन्द्रियत्वात् त्वगिन्द्रियवत्" –न्यायवा० ता० पृ० ७३। न्यायकुमु० द्वि० पृ० ७५ टि० २।

प्रदीपवत्। [1]तैजस च तत् रूपादीना मध्ये रूपस्यैव प्रकाशकत्वात् तद्वदेव। ततो गोलकादभिसर्पतस्तत्कलापस्य विषयप्राप्तेः प्राप्यकार्येव चक्षुरिति चेत्, अत्र यदि गोलकस्य स्वतो रूपप्रकाशकत्व रश्मिकलापकल्पनस्य वैयर्थ्यम्। तत्कलापद्वारकमेव तस्य तदिति चेत्, कथ तदसिद्धौ तस्य तद्द्वारक तत्प्रकाशकत्वम्? तत्सिद्धिश्च यद्यन्यत, तदेवोच्यता किं तैजसत्वेन? तैजसत्वादेवेति चेत्, तर्हि तस्मात् तत्कलापसिद्धौ तद्द्वारक तस्य रूपप्रकाशकत्व ततोऽपि तैजसत्व सिद्धचतीति कथन्न परस्पराश्रय स्यात्? तन्न तत्कलापसिद्धिरिति न तद्द्वारकमपि चक्षुष प्राप्यकारित्वम्। कथ वा प्राप्यकारित्वे तस्य व्यवहितविषयत्व प्राप्त्यभावात्। दृश्यते च शुद्धस्फटिकघटीभित्तिव्यवहितस्यापि वस्तुनस्तेन प्रकाशनम्। तस्यास्त्येव तेन प्राप्ति तद्भित्तेर्निर्भेदादित्यपि न सङ्गतम्, तदन्तर्गतस्य जलादेर्बहिरवस्रसनप्रसङ्गात् तच्छिद्रानुपलब्धेश्च। न तस्य तेन प्रकाशन तत्प्रतिविम्बस्यैव बहिरुपक्रान्तस्य प्रकाशनादित्यपि मन्दमतेरेव स्पन्दितम्, अन्तर्गतस्य बहिःप्रतिविम्बापकमानवलोकनात्। तस्मादप्राप्यकार्येव चक्षु। तथा चोपपन्न श्रोत्रस्य प्राप्यकारित्वे तस्य वैधर्म्योदाहरणत्व साध्याव्यावृत्तिदोषाभावात्। तत श्रोत्र प्राप्यकार्येव उक्तान्न्यायात्। एतदेवाह–

**तेषां युक्ता हि श्रोत्रगोचराः।** इति।

तेषा शब्दभागाना मध्ये युक्ता श्रोत्रेण सम्बद्धा हिरवधारणे श्रोत्रस्य गोचरा विषया *अन्यथा प्रत्यासन्नग्राहित्वाभावप्रसङ्गादिति मन्यते।* किं पुनरिद श्रोत्रेन्द्रियस्य प्राप्यकारित्वोपकल्पनम्? आकाशमिति कश्चित्, तन्न, तस्य विभुत्वेन दूरभूतानामपि शब्दाना प्राप्त्यविशेषेण ग्रहणप्रसङ्गात्, तस्यैकत्वेन सर्वेषामेकश्रोत्रत्वापत्त्या सर्वविषयस्यैकेन एकविषयस्य सर्वैरपि ग्रहणापत्तेश्च। न च तस्य[3] प्रदेशवत्त्व यतोऽदृष्टविशेषोपनिबद्धसस्काराधिकरणस्य तत्प्रदेशस्य श्रोत्रत्वात्, तेन च दूरभूतानामप्राप्तेर्न प्रथमो दोष, नापि द्वितीयस्तस्य *प्रतिप्राणिभेदेन श्रोत्रनानात्वस्यैवोपपत्तेरिति व्यवस्थाद्वय परिकल्प्येत, निष्प्रदेशस्यैव* तस्याभ्युपगमात्। कल्पितस्य च तत्प्रदेशस्याकिञ्चित्करत्वात्। तदुक्त कुमारिलेन–

"आकाशश्रोत्रपक्षे तु विभुत्वात्प्राप्तितुल्यता।
दूरभावेऽपि शब्दानामिति ज्ञान प्रसज्यते॥
श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृता भवेत्।
तेनैकश्रुतिवेलाया शृणुयुः सर्व एव ते॥
तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः।
नभोदेशो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये॥"

[ मी० श्लो० शब्दनि० ५६–५९ ] इति।

तत क्षयोपशमविशेषाधिकरणजीवप्रदेशावष्टब्ध कश्चिच्छरीरावयव एव श्रोत्रमिति स्याद्वादिन, तत्सस्पर्शेनैव शब्दस्य प्रत्यवभासनात्। शब्दावभासन हीन्द्रिय श्रोत्रम्। तच्च तदवयव एव युक्त, तत्सम्बन्धादेव तस्योपलम्भात् तदभावे च विपर्ययात्। तथा च 'पुद्गलपर्याय शब्द शरीरावयवसम्बन्धेनोपलभ्यमानत्वात् शीतातपादिवत्' इत्यनुमानविजृम्भणात् नाकाशगुणत्व तस्य तद्वदेवेति प्रतिपादित भवति। एतदेव दर्शयन्नाह–

---

१ "तैजसत्वं तु तस्य रूपादिषु मध्ये नियमेन रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवत्"–प्रश० कन्द० पृ० ४०। न्यायकुमु० पृ० ७६ टि० २। २ वैशेषिक। ३ आकाशस्य।

**परिणामविशेषा हि भावानां भावशक्तयः ॥४९॥**
**ध्वनयस्तत्समर्थानाम् [अभावादतिरेकिणाम्] ॥** इति ।

ध्वनयो वर्णादिरूपा शब्दा, सामान्यवचनादपि ध्वनिशब्दात् क्रमवशेन तेषामेव प्रतिपत्ते । ते न नित्या नाप्यन्यहेतुकास्तत्र दोषाभिधानात्, अपि तु **परिणामविशेषा.** परिणामा श्रवणज्ञानयोग्या विवर्तास्त एवान्येभ्यश्छायातपादिपुद्गलविवर्तेभ्यो विशिष्यमाणत्वाद्विशेषास्ते च तद्विशेषा । केषाम् ? **तत्समर्थाना** तत्र परिणामविशेषेषु ये समर्थास्तद्रूपावाप्तियोग्यास्तेषाम् अतत्समर्थाना तदनुपपत्ते । [1]अहङ्कारस्यैव तर्हि ते तद्विशेषा भवन्तु शब्दतन्मात्रस्याहङ्कारिकत्वेन पारम्पर्ये [2]प्रतिज्ञानादिति चेत्, न, [3]तस्य चिद्रूपस्यामूर्तत्वेन मूर्ततद्विशेषासम्भवात् । अचिद्रूप एवाहङ्कारोऽप्यनित्यत्वात् कलशादिवदिति चेत्, न, स्वतस्तत्र चिद्रूपत्वस्य प्रतिपत्ते । चित्सम्पर्कोपनिबन्धना तत्र तत्प्रतिपत्तिर्न स्वतश्चैतन्यादिति चेत्, न, तत्सम्पर्केऽपि स्वय तत्परिणामविकले तदयोगात् । अन्यथा परिणामविशेषेष्वपि तत्प्रसङ्ग तेषामपि व्यापिना चैतन्येन सम्पर्काविशेषात् । अहङ्कारे विशिष्टस्तत्सपर्क इति चेत्, स [4]कोऽपरोऽन्यत्र ताद्रूप्यादिति ? ततश्चिद्रूप एवाहङ्कारो निर्बाधात् तत्प्रत्ययात् । न चानुमानेन तस्य बाध , विषयानुभवे चिद्रूपेऽप्यनित्यत्वस्य भावेन व्यभिचारात् । सोऽप्यचिद्रूप एवेति चेत्, कथ तत्र चिद्व्यवहारो यत इदमुच्येत–"**बुद्धयध्यवसितमर्थं पुरुषश्चेतयते**" [ ] इति । . चिच्छायासङ्क्रमादिति चेत्, तेन तर्हि व्यभिचार चिद्रूपत्वेऽपि तस्यानित्यत्वात् । तत्रापि तत्सङ्क्रमान्तरात्ताद्रूप्यकल्पनायामनवस्थाप्रसङ्गात् । तन्नाहङ्कारविवर्तत्व शब्दानामित्यपर्यालोचितवचनमेतत्–

"**अभिमानोऽहङ्कारस्तस्मात् द्विविध प्रवर्तते सर्ग. ।**
**ऐन्द्रिय एकादशकस्तन्मात्रपञ्चकश्चापि ॥**"

[ सांख्यका० २४ ] इति

ततस्तत्सामर्थ्यं पुद्गलविशेषाणामेव तत्र तद्व्यवस्थापनात् । कुत पुनस्तेषा तद्विशेषत्वमेव नैकान्तनित्यत्वादिकमिति चेत् ? उत्तरम्–'**भाव**' इत्यादि । भावः स्वपरज्ञानादे कार्यस्योत्पाद तत्र शक्तिर्येषा ते भावशक्तय ध्वनयो हि यस्मात्ततस्ते तद्विशेषा एव नैकान्तनित्यादय तत्र तच्छक्तित्वायोगस्य निरूपणात् ।

परिणामविशेषोऽपि[5] 'गौरश्व' इत्यादौ क शब्दो यत्रार्थप्रत्यायकत्वेन पदव्यपदेश कल्प्येत ? पश्चाद्भावी विसर्जनीय इति चेत्, न, तस्य केवलस्याप्रत्यायकत्वात्, पूर्ववर्णानामपार्थकत्वापत्ते । तर्हि तै सम्भूय तस्य प्रत्यायकत्वमिति चेत्, न, नियतक्रमवर्तिना तेषा यौगपद्याभावेन सम्भूयकारित्वानुपपत्ते । तदनन्तरोपलब्धिविशिष्टस्य तस्य प्रत्यायकत्वमित्यपि न प्रातीतिकम्, केवलतदुपलब्धेस्तदनन्तरोपलब्धेश्च तत्काले वर्णाभावेन परस्परतो भेदानुपपत्ते । नहि निरन्वयप्रध्वस्तानामनुत्पन्नाना च तदा तेषामभाव परस्परतो भिद्यते यतस्तदनन्तरोपलब्धिरर्थप्रतीतेरङ्गभावमनुभवति न केवलोपलब्धिरिति प्रतीम । "**तस्माद्वर्णव्यतिरेकी वर्णेभ्योऽसम्भवदर्थप्रत्यय स्वनिमित्तमुपकल्पयति तदेव पद स्फोटाख्यं न**

---

१ सांख्य प्राह । २ "भूतादे तमोबाहुल्यात् गौणीभूतसत्त्वरजस भूतादिनाम्न पूर्वाचार्यैर्निरूपिता दहङ्कारात् तन्मात्र शब्दादिपञ्चको गणो जायते।"–सांख्यका० २५ । माठरवृ० । ३ अहङ्कारस्य । ४ कोपिपरो–आ० । ५–शेषेऽपि आ० ।

वर्णास्तत्समुदायो वा" [स्फोटसि० पृ० २८] इति मण्डन, सोऽपि न स्फोटमण्डने पण्डितः; वर्णानामेव क्रमविशेषाधिष्ठानानां पदत्वेन प्रत्यायकत्वोपपत्तेः पदान्तरकल्पनावैफल्यात्। तेषामितरेतरकालपरिहारवतां कथमेकस्यां प्रत्यायनक्रियायामुपयोगः सहकारित्वानुपपत्तेरिति चेत्; इतरेतरदेशपरिहारवतां कर्मकर्त्रादिकारकाणामपि कथं क्वचिदेकत्र कार्ये व्यापारः? एककालगतत्वादिति चेत्, वर्णानामप्येकबुद्धिगतत्वादिति किन्न स्यात्? नहि प्रतिवर्णं तद्बुद्धिभेदः कारकेष्वपि तद्वत्तदर्थभेदेन युगपदप्यनेकतत्प्रतिपत्तेरभावापत्तेः। न च तदभ्युपगमो न्याय्यः प्रतीतिविरोधात्। ततो युगपद्भाविनां कारकाणामिव क्रमभुवां वर्णानामप्येकस्यां बुद्धौ विषयभावेनोपनिपातादुपपन्न एव तेषामेकत्र विषयप्रत्यायने व्यापारः। ततो यदुक्तम्–"इदं तावदयं वर्णवादी प्रष्टव्यः गौरश्व इति वा केवलोच्चारणे वा को विसर्जनीयस्य भेदो यत्कृतोऽयं धीभेदः, प्रत्ययभावाभावौ च? नन्वेवं विशेषः क्वचिदसहायः क्वचिद्वर्णविशेषसहाय इति। क्व पुनरत्र सहायता यदा विसर्जनीयसमये वर्णान्तरोपलब्धिरस्ति। कार्ये खलु व्यापारवतः सहायता, न चासतस्तदा[1] व्यापृतिरस्ति।" [स्फोटसि० पृ० ३३] इति; तत्प्रतिविहितम्; विसर्जनीयसमये गकारादीनामभावेऽपि स्वसमये भावेन तत्सहायतोपपत्तेः, अन्यथा दण्डादीनामनधिगतचक्रदेशानां तत्सहायत्वाभावप्रसङ्गात्, तदानीमसतामिव तत्रासतामपि व्यापारानुपपत्तेः।

दण्डाद्यभिन्नदेशा अप्येकं चेत् कर्म कुर्वते।
भिन्नकालाः कथं तद्वद्वर्णा अपि न कुर्वते ॥१८०३॥
सर्वत्रैवं प्रसङ्गश्चेत्कालभेदाविशेषतः।
भवेदेवं यदा न स्यात् प्रत्यासत्तिर्नियामिका ॥१८०४॥
अन्यथा देशभेदेऽपि कार्यकारित्वमिच्छतः।
वादिनोऽप्येष दोषः किं मूर्द्धानं नाधिरोहति ॥१८०५॥

प्रत्यासत्तिश्च प्रतिपादितैव। क्रमविशेषाधिष्ठानत्वे सत्येकबोधोपारोहितत्वमिति। न चेदमप्यत्र चोद्यम्–अक्रमो हि बोधः कथं तदुपारोहिणां वर्णानां क्रम इति? 'कथं न[2] हि तदुपारोहित्वं नाम तेषां तदनुप्रवेशः अपि तु तद्विषयत्वम्, तच्च अतत्कालानामप्यतद्देशानामिव सम्भवतीति क्रमानुपद्रवात्। निवेदितं चैतत् "यदा यत्र" इत्यादिना[3] तत इदं प्रत्याख्यातम्–"[4]न चैकं प्रत्याख्यानं (प्रख्यानं) नानावर्णावयवात्मनि पदे भिन्नम् अवध्यवधिमद्भावमवेक्षितुं क्षमते।" [स्फोटसि० पृ० ६८] इति, देशकृतस्येव प्रासादस्तम्भेषु कालकृतस्यापि वर्णेषु पौर्वापर्यस्यावध्यवधिमद्भावस्यावेक्षणे [5]प्रतिप्रत्यानस्यैकस्यापि प्रत्यभिज्ञानविकल्पस्य सामर्थ्योपपादनात्। यदि वर्णा एव पदं तदा तेषामनेकत्वक्लृप्तया यौगपद्येऽपि वर्णत्वस्याप्रच्युतेः किन्न पदत्वमिति चेत्? न; क्रमवतामेव तेषां पदत्वेन सम्प्रदायात्, तत्प्रधानत्वाच्चार्थप्रत्यायनस्य। क्रमान्तरपरिग्रहे [6]तर्हि पदत्वम् अक्रमत्वाभावादिति चेत्; न; तस्मिन्नर्थे तत्क्रमस्यैव पदभावाङ्गत्वात्। अर्थान्तरत्वे तु क्रमान्तरस्यापि तदङ्गत्वान्न निषेद्धव्य[7] एव, राकेति कारेति पौर्णमासी–वन्ध्यभागरयोः, नादीति दीनेति नादवत्–कृच्छ्र-

1 तदानीं व्या– आ०। 2 कथमिति पदमधिकं भाति। 3 न्यायवि० श्लो० ११८२। 4 'न चैकस्मिन् नानावर्णावयवात्मनि...–स्फोटसि० पृ० ६८। 5 प्रतिपत्त्याख्यान– आ०, ब०, प०। 6 तर्हि न पदत्वं क्र– आ०, ब०, प०। 7 निषिध्यत आ०, ब०, प०। 'पदत्वं न निषेध्यते' इति सम्बन्धः।

वर्त्तिन्यो, धारेति राधेति च प्रवाह–नक्षत्रविशेषयो [1]तदतत्क्रमाधिष्ठानतया तद्वर्णानामेव [2]तद्भावभेदप्रतिपत्ते प्रतीयमानत्वात् । एकवक्तृकत्व तु तेषा तद्भावनिमित्तमिति नाय नियम, भिन्नवक्तृकत्वेऽपि तत्क्रमभावे पदभावेन प्रत्यायकत्वप्रतिपत्ते । प्रतीयते हि भिन्नवक्तृकपूर्वापर[3]भागादपि पद्यादेस्तच्छ्राविणा तदर्थप्रतिपत्ति । वर्णाना पदत्वे कथम् शब्दादर्थं[4] प्रतिपद्यामहे'[5] इति ? कथन्न न स्यात् ? तेषा बहुत्वेन [6]तद्वाचिन शब्दशब्दाद् बहुवचनस्यैवोपपत्तेरिति चेत्, न, तत्साधारणस्य वाचकत्वसामान्यस्य तदभिधेयत्वात्, तस्य चैकत्वेनैकवचनस्यैवावकाशात् । यद्येव कथम् 'गकारौकारविसर्जनीया शब्द' इति[7] तद्व्यक्तिवाचिभिस्तस्य सामानाधिकरण्य तद्व्यक्तीना तेनानभिधानादिति चेत् ? न, उपसर्जनभावेन तासामपि तेन प्रत्यायनात्, अन्यथा तत्सामान्यस्य तेन तदनुपपत्ते, तद्व्यक्तिसङ्ख्यानुपादान तु मुख्यतस्तत्सामान्यस्यैव तेनावद्योतनात् । ततो 'युक्तम् 'शब्दादर्थं प्रतिपद्यामहे' इति, न 'अनुपाश्रितव्यावृत्तयो व्यक्तयो जात्यात्मना'[9], निषेधात् ।

अपि च, अय पदादिस्फोटात्मा शब्दो नित्यो निरवयवश्च त्वदभिप्रेत,[10] स यदि स्वत एवेन्द्रियसम्प्रयोगात् प्रतीतिप्रेयसीसम्पर्कमुपसर्पति पौरुषेय प्रयासो विफल स्यात् । न विफलस्तस्य तदभिव्यक्तिनिबन्धनत्वात् । स खलु प्रयास परापरसमयभावी प्रयत्नापरनामा तादृशमेवानेकध्वनिभेदमाविर्भावयति, ततश्च तस्याभिव्यक्ति । सापि नावयवशो निरवयवत्वात् । नापि प्रथमत एव नादात् तस्य सर्वात्मनाऽभिव्यक्ते नादान्तरकल्पनावैफल्यम्, अभिव्यक्तिविशेषोपपत्ते । अपरिस्फुटा हि तस्य प्रथमानादादभिव्यक्ति, तदुपजनितभावनासहायात्तु द्वितीयस्मात्ततो विलक्षणा, तावदेव यावदन्त्यो ध्वनि, ततस्तु प्राक्तननिरवशेषध्वनिविशेषोपजनितप्रत्ययोपनिबद्धभावनानिवहसचिवसद्वितीयाद अत्यन्तपरिस्फुटतमा तदभिव्यक्तिराविर्भाव बिभर्त्ति । न चैतावता तस्य प्रत्यभिव्यक्ति भेद, आवृत्त्या भेदेऽप्यनुवाकादेरिवोपलब्धिभेदेऽपि तस्यैकतयैव प्रत्यवभासनात् । उक्त चैतत्–

"यथानुवाक[11] श्लोको वा सोढत्वमुपगच्छति ।
आवृत्त्या न तु स ग्रन्थ प्रत्यावृत्ति निरूप्यते ॥
प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥
नादै राहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तिपरिपाकाया बुद्धौ शब्दोऽवभासते ॥'

[ वाक्यप० १।८३–८५ ]

इति चेत् उच्यते–

"स व्यक्त प्रथमानादादर्थप्र ययकृद्यदि ।
व्यर्थं परापरो नादस्तद्व्यक्त्यै परिकल्पित ॥१८०६॥

१ पूर्वापरविपर्यस्तवर्णरूपेण प्रतीयमानतया । २ तद्भाव–आ०, ब०, प० । ३ –भाविप –आ०, ब०, प० । ४–दनर्थं आ०, ब०, प० । ५ 'प्रयोग' इति सम्बन्ध । ६ पर्यवाचिन । ७ "अथ गौरित्यत्र क शब्द ? गकारौकारविसर्जनीया इति भगवानुपवर्ष"–शाबरभा० १।१।५ । ८ यदुक्त आ०, ब०, प० । ९ 'इति युक्तम्' इति सम्बन्ध । 'न चानुपाश्रितव्यावृत्तयो व्यक्तयो जात्यात्मना निर्दिश्यन्त इति साम्प्रतम्' –स्फोटसि० पृ० ७४ । १० 'निरयत्वमविरुध्य तु सत्त्वादेवास्य जातिवत् ।" –स्फोटसि० का० १४ । ११ अनुवाको वैदिक, श्लोकस्तु लौकिक, सोढत्व जितत्व परातामिति यावत् । १२ सम्यक्त्व आ०, ब०, प० ।

अर्थावगतये तस्मात्तद्व्यक्तिरभिवाञ्छिता ।
सा चादिव्यक्तित सिद्धा व्यक्त्या किं परया तत ॥१८०७॥
सोऽर्थप्रत्ययकृच्चो चेत् कुत एतदशक्तित ।
पश्चादपि न तत्कृत्स्यादिति तत्कल्पन वृथा ॥१८०८॥
सङ्केतविरहाच्चेन्न सोऽर्थसंवित्तिकृन्मत ।
प्रतीतिभावे सङ्केत स एव न कुतो भवेत् ॥१८०९॥
अव्यक्तत्वात्प्रतीतेश्चेन्नासौ सङ्केत्यतेऽनया ।
तयैवासौ कथ तर्हि सिद्ध इत्यपि कथ्यताम् ॥१८१०॥
सिद्धत्वाय समर्थोऽसौ सङ्केतायैव नेत्ययम् ।
स्वरुच्या कल्पितो भेदो विद्वद्भूचो नाभिरोच्यते ॥१८११॥
आदावेव ततो व्यक्तौ सङ्केतस्यापि सम्भवात् ।
अर्थप्रतीतौ व्यक्ति सा विफलैवोत्तरोत्तरा ॥१८१२॥

अपि च, अयमन्त्याया बुद्धाववधार्यमाणो न तावदखिलविपर्यासविकल एवावधार्यते, परमर्षीणामेव तथा तदवधारणम्य तदन्येषा तैस्तत्सम्प्रदायस्य चोपगमात् । अत एवोक्तम्–

**"अपरदर्शितविषयास्तु परमर्षय साक्षात्कृतधर्माणोऽव्याहतान्त प्रकाशा विधूतविपर्यास वाक्तत्त्व प्रतिपेदिरे प्रतिपादयामासु प्रतिज्ञायते"** [ स्फोटसि० पृ० १५४ ] इति । भवतु तत्रापि सविपर्यासस्यैव तस्यावधारण सवेदनवत् । यथैव हि सवेदनस्याविभागस्याप्यावोधिमार्गावतारात् ग्राह्याद्याकारविभागविपर्यासोपरक्तस्यैव प्रकाशनमन्यथा तदनवलोकनात् तथा तादृशस्य शब्दात्मनोऽपि विभ्रमोपदर्शितगकारादिवर्णक्रमविपर्यासोपश्लेपिणा[1] गौरित्याकारेण प्रतिपत्ति आपरमर्षिपदप्राप्ते, अन्यथा तस्याप्यप्रतिवेदनात् । अत एवोक्तम्–

**"ज्ञानस्येव च वाचोऽप्य लोके ध्रुवमुपप्लव ।"**

[ स्फोटसि० पृ० ११०]

इत्यपि नातीव चतुरस्रमुत्पश्याम । एव ह्येदमसङ्गत स्यात्–**"पश्चिमस्तु पुरस्तनध्वनिनिबन्धनाव्यक्तपरिच्छेदप्रभावितसकलभावनाबीजसहकारी परिस्फुटतरविनिविष्टस्फोटा[2]लम्बमेव प्रत्ययमभिव्यक्ततरपरिच्छेदमुद्भावयति ।"** [ स्फोटसि० पृ० १३० ] इति, विपर्यासोपश्लिष्टतत्प्रत्ययस्याभिव्यक्ततरपरिच्छेदत्वानुपपत्ते । न हि पीतादिविप्लवोपालिङ्गितशङ्खादिप्रत्ययस्य तत्परिच्छेदत्व प्रतियन्ति प्रेक्षावन्त, तदन्यतत्प्रत्ययस्यैव तैस्तत्प्रतिपत्ते । तदयमभिव्यक्ततरप्रत्ययत्व तस्याभिधाय पुनर्विप्लवोपश्लिष्टप्रत्ययगोचरतयाऽन्ययात्वमप्याचक्षाण स्वोक्तमपि न प्रत्याकलयति इति कथन्नाम मण्डन पण्डितगोष्ठ्या पाण्डित्यर्द्धि दृढमुद्वोढु परिवृढतामुपढौकेत ? कथ चासौ शब्दो भेदरूपविपर्यासोपरक्तप्रतिभास एवार्थप्रतिपत्तये प्रेक्षावद्भिराद्रियेत ? न हि सर्पोपप्लवप्रत्ययविषयभावमनुभवन्त्येव रज्जुर्बन्धनकार्याय कैरप्युपादीयमानोपलभ्यते, विनिवृत्ततदुपप्लवप्रतिभासाया एव तस्यास्तदर्थमुपादानोपलम्भनात् । वर्णवत्स्यादिति चेत्, स्यान्न[3] यथा वर्णवादिना वर्णस्याक्रमस्याप्यनेकक्षणक्रमालिङ्गितप्रतिभासगोचरस्यैव तदर्थप्रतिपत्तये प्रत्यवेक्षणम्, एव शब्द-

१–श्लेषेण गौ आ०, ब०, प०, । २–द प्र– आ०, प०, प० । ३–टावलम्बनमिव आ०, प०, प० । स्फोटमिवमिव–स्फोटसि० ।

स्यापि स्यादिति, सत्यम्; इदमक्रमवर्णवादिनं प्रत्युत्तरं न स्याद्वादिनं प्रति, तेन वर्णस्य तत्त्वतः कथञ्चित्क्रमवत एवाभ्यनुज्ञानात्। तर्हि ज्ञानवत् स्यात्, ज्ञानस्याविभागस्यापि ग्राह्याद्याकारविभागोपप्लवकवलितस्यैव स्वार्थप्रतिपत्तये प्रतिग्रहात्; इत्यपि नोपपत्तिमत्, तस्यापि 'ग्राह्यानुरागपराङ्मुखस्यैव नियतविषयनिर्णयनिबन्धनतया' प्रथमप्रस्तावे व्यवस्थापनात्। तन्न क्रमोपप्लवकलुषिताया एव वाचोऽर्थप्रत्यायनमुपपन्नम्। अतो दुर्भाषितमिदम्-

"भेदानुकाराज्ज्ञानस्य वाचश्चोपप्लवो ध्रुवः।
क्रमोपसृष्टरूपा वाक् ज्ञानं ज्ञेयव्यपाश्रयम्॥"
[ वाक्यप० १।८७ ]

"ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते[1]।
नालब्धक्रमया वाचा[2] कश्चिदर्थोऽभिधीयते[3]॥" [ ] इति।

अपि च,

विप्लवाद्यदि शब्दस्य विवेकः प्रतिवेद्यते।
विप्लवप्रतिभासस्य कथं तत्नावकल्पनम्॥१८१३॥
न हि पीतविवेकेन शङ्खः प्रत्यवभासि यः।
तत्र पीतभ्रमः क्वापि दृष्टः इष्टोऽपि वा बुधैः॥१८१४॥
नास्त्येव तद्विवेकस्य प्रतीतिर्यदि विप्लवात्।
कथं तस्मादभिन्नस्य शब्दस्यापि प्रवेदनम्॥१८१५॥
शब्दस्य तद्विवेकाच्चेत् कथञ्चित् भेदभावतः।
निर्विभागवचस्तत्त्वप्रतिज्ञा ते विलुप्यते॥१८१६॥
किञ्चाविभागसंवित्तौ विभागस्यापि वेदने।
तात्त्विकत्वं विभागस्य किन्न स्यादविभागवत्[4]॥१८१७॥
अविभागेन बाधाच्चेत् विभागेनेतरस्य च।
प्रतीतेन प्रतिक्षेपाद्द्वयोरुभयं तात्त्विकं भवेत्॥१८१८॥

उभयातात्त्विकत्वे तु कुतो वाक्यप्रतिपत्तिः अतात्त्विकात्तदयोगादिति चेत्? किमतः वर्त्तव्यम्? अविभागस्य शब्दरूपस्य तात्त्विकत्वमिति चेत्, विभागस्यैव कुतो न तत्त्विकरूपताम्? अविभागाभावे ततो वाच्यप्रतिपत्तेरभावादिति चेत्, तस्यापि तर्हि न तत्कर्त्तव्यं विभागाभावे ततोऽपि तत्प्रतिपत्तेरभावात्, 'नालब्धक्रमया' इत्यादिना स्वयमेव तथाभिधानात्। मा वा भूदुभयस्यातात्त्विकत्वात् ततस्तत्प्रतिपत्तिः, तज्ज्ञानात्तु भवत्येव, कथमन्यथा उपप्लुतादपि वर्णभेदक्रमज्ञानादक्रमस्य शब्दतत्त्वस्य प्रतिपत्तिर्यत इदं सुभाषितं भवेत्?

"असतश्चान्तराले यः शब्दो नास्तीति मन्यते।
प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः॥"
[ वाक्यप० १।८६ ] इति।

न चैव शाब्दी तत्प्रतिपत्तिर्न भवति शब्दादनुत्पत्तेरिति वक्तव्यम्, ज्ञानादपि शब्दोपसपृक्तादेव तत्प्रतीतेर्भावेन तत्र शाब्दव्यपदेशस्याविरोधात्। तत्र "प्रत्यक्षे[5] विभागाव-

---

१ ग्राह्यादिज्ञानं व्यवहारेऽवतिष्ठतेऽनुराग-आ०, ब०, प०। २-या वाचा कश्चिदर्थोऽभिधीयते इति प्र-आ०, ब०, प०। ३ उद्धृतात्रिमौ-स्फोटसि० पृ० १६२। ४-वतः आ०, ब०, प०। ५ प्रत्यक्षो वि-ता०।

भासिन शब्दतत्त्वस्य प्रतिपत्ति । नाप्यविभागावभासिन शब्दतत्त्वस्य प्रतिपत्ति , तस्यैवाप्रतिवेदनात् । ततस्तदप्रतिपत्तौ च कुतस्तत्र 'साक्षित्वमनुमानस्य यत "स खलु" [ ] इत्यादि सूक्तमवकल्प्येत । ततो न परपरिकल्पिता निरवयवनित्यस्फोटात्मान पदवाक्यादय शब्दा , तेषा प्रत्यक्षानुमानाभ्यामिवागमादप्यनध्यवसायात् । तदागमस्य "साक्षात्कृतधर्माण ऋषयो बभूवु." [ निरुक्त० १।२० ] इत्यादे प्रमाणान्तरप्रतिक्षिप्तार्थतया प्रामाण्याभावात् । ततो वर्णा एव क्रमविशेषसम्बन्धोपाधय शब्दा तद्व्यतिरिक्ताना तेषामभावात् । एतदेवाह–

अभावादतिरेकिणाम् । इति ।

अतिरेकिण पुद्गलस्कन्धपरिणामविशेषेभ्योऽर्थान्तरभूता नित्या वर्णपदादयस्तेषाम् उक्तन्यायेन अभावात् तद्विशेषा एव ध्वनय इति ।

साम्प्रत प्रकरणार्थमुपसहृत्य दर्शयन्नादित शब्दानामपौरुषेयत्वे दोषमावेदयति–

वाचामपौरुषेयीणामाविर्भावो न युज्यते ॥५०॥ इति ।

वाचा वर्णात्मना पदादिस्फोटात्मना चापौरुषेयीणा नित्यानाम् , अनित्यानामपौरुषेयत्वायोगात् , आविर्भावो व्यक्तिर्न युज्यते न घटते । स्वतोऽनाविर्भावात् , सहकारिप्रतीक्षायाश्च तत्र प्रतिक्षेपात्' । अतो ध्वनयो न तदात्मान इति शेष । कथम् ? नियत यथा भवति तथा । नियतत्व चात्र विप्लवविवेकेन स्वरूप एवावस्थानम् । विप्लवस्य वर्णेषु ह्रस्वदीर्घादे पदेषु च वर्णक्रमस्य पुरुषप्रयत्नोपनीतनादभेदनिबन्धनत्वेन पुरुषनिरपेक्षत्वे शब्दस्यासम्भवात् । न च तथा कश्चिदपि वायमुपलभ्यते (?) ह्रस्वाद्युदात्तादिभेदोपरक्तस्यैव वर्णस्य वर्णक्रमोपसपृक्तस्यैव पदस्य तत्क्रमाद्युपश्लिष्टस्यैव च वाक्यादे प्रतीतिपथप्रस्थायिन प्रत्यवलोकनात् । ततो नापौरुषेयस्य निरवयवात्मन शब्दस्य वाचकत्वम् अप्रतीते ।

पौरुषेयस्यापि वाचकत्वमभिमतवदनभिमतस्यापि किन्न स्यादिति चेत् ? अत्राह–

सम्यग्ज्ञानाङ्कुशः सत्यः पुरुषार्थाभिधायकः ।
इति [अत्रापौरुषेयत्वं जातु सिद्धमनर्थकम् ॥५१॥] इति ।

न हि सर्वोऽपि पौरुषेय शब्द पुरुषार्थस्य 'श्रेयस्तत्कारणस्याभिधायकोऽपि तु सत्यो विप्रतिसारविकल । न च सर्वोऽप्यसौ तद्विकल एव अपि तु सम्यक् ज्ञानाङ्कुश सम्यग्ज्ञान तत्प्रणेतु पुरुषस्य तदर्थविषय निरुपप्लव ज्ञान तदेवाङ्कुशो नियामको यस्य स एव, स चायमेव स्याद्वादामोघलाञ्छनो वचनप्रबन्धो नापर , तत्प्रणेतुणा तज्ज्ञानाभावस्य निवेदनात् । न चैवमपौरुषेयत्वमेव शब्दस्याविप्रतिसारतया नियामकमिति शक्यमुपपादयितुम्, अपौरुषेयस्यापि दहनादेर्नीलोत्पलादौ विपर्ययोपदर्शितत्वेन विप्रतिसारप्रतिपत्ते । एतदेवाह–

अत्रापौरुषेयत्वं जातुसिद्धमनर्थकम् । इति ।

अत्र दहनादौ यदपौरुषेयत्व तद् जातु कदाचिन्नीलोत्पलादिसन्निधानवेलाया सिद्ध निर्णीतम् । कीदृशम् ? अनर्थकमविद्यमानार्थं तदुपदर्शितपीताद्याकारस्य वस्तुतो नीलोप-

१ सापेक्षित्व–भा०, ब०, प० । २–द् नित्यत्वम्चात्र भा०, ब०, प०, । ३–ऽभिव्यक्तिभेद–भा०, ब०, प०, । ४–दपि नयन्नुपल–भा०, ब०, प०, । ५–नि श्रेयसस्तत्का–भा०, ब०, प० ।

लादानभावात् । ततो निषिद्धमेतत्–

'वेदे कर्त्तुरभावात्तद्दोषाशङ्कैव नास्ति न ।'' [ ] इति । असत्यपि कर्तरि दहनादिवत्तत्र तच्छङ्काया अनिवृत्ते, सदोष एव हि दहनादिरपौरुषेयोऽपि, अन्यथा ततो मिथ्याप्रतीतेरनुपपत्ते । किं पुन तत् सत्य यदभिधायित्वेन शब्द सत्य उच्यते इत्यत्राह–

**सर्वार्थानामनेकात्मपरिणामौ व्यवस्थितौ ।**
**मार्गस्तद्विषयश्चेति मतं सत्यं चतुर्विधम् ॥५२॥** इति ।

अनेकश्चासावात्मा च अनेकात्मा युगपद्भावी नानारूपो वस्तुस्वभाव, स च **परिणामश्च** प्राच्याकारपरित्यागाजहद्वृत्तोत्तराकारोपादानलक्षणो विवर्त्तस्तावनेकात्मपरिणामौ द्वौ सत्यौ, तौ च सर्वेषामेव जीवादीनामर्थादीना **व्यवस्थितौ** तद्विकलानामवस्तुत्वापादनात् । तत्रानेकात्मन प्रागुपादानम्, परिणाम प्रति तस्य साधनत्वात् । प्रतिपादित हि विप्रतिपन्न प्रति तस्य तत्साधनत्वमवश्याभ्युपगमत्वञ्च अन्यथा निष्कलस्याऽप्रतिपत्ते सर्वाभावप्रसङ्ग इति । तथा **मार्गो** नि श्रेयसप्राप्त्युपाय, स च सम्यग्दर्शनादिविकल्पत्रयात्मक एव एकशस्तस्य तदनुपायत्वात् । न हि सम्यग्दर्शनस्यैव तदुपायत्व सम्यग्ज्ञानाभावे तत्त्वार्थविषयस्य तदभिनिवेशलक्षणस्य तस्यैवासम्भवात् । नापि तद्विशिष्टस्य तत्त्वार्थाधिगमलक्षण[1]सम्यग्ज्ञानस्यैव तत्कारणत्वमुपपन्नम् उत्पन्नतत्त्वज्ञानस्यापि शरीरेन्द्रियादिसम्बन्धापरिच्युते, अन्यथा न कस्यचिदप्युपदेष्टृत्व प्रत्युत्पन्नतत्त्वज्ञानस्य शरीरपातेन तदनुपपत्ते । अपरिपतितशरीरस्यापि तत्त्वपरिज्ञानाभावात् । एव च निर्विषयैवेय श्रुति स्यात्–''आचार्यवान् पुरुषो वेद'' [छान्दो० ६।१४।२ ] इति । आत्मविषयश्च सम्यग्दर्शनाद्यभ्यासो विफल स्यात्, अनुपसम्पन्नतदभ्यासादपि ''तत्त्वमसि' [छान्दो० ६।८।७] इत्यादि वाक्यसामर्थ्योपनीतादात्मज्ञानादात्मनोऽपि नि श्रेयसोपपत्ते ।

कश्चिदाह[2]–' निश्चितेऽपि वस्तुनि विपर्ययानुवृत्तिरुपलभ्यते यथा चन्द्रादौ द्वित्वादि, तद्वदागमप्रामाण्याभिज्ञेऽप्यात्मनि नित्यशुद्धादिरूपेण विपर्ययोपश्लेषसम्भवात् तन्निवृत्तिपरस्तद्दर्शनाद्यभ्यास 'आत्माऽस्य द्रष्टव्य'' [ बृहदा० २।४।५] इति, इत्यादिना वेद्यमानो न वैफल्यबोधाय कल्पते ।'' [ ] इति, तत्प्रतिषिद्धम्, न तत्त्वज्ञानमेवादरोपाधिक नि श्रेयसनिमित्तम्, अपि तु चारित्रसव्यपेक्षमिति । आत्मादितत्त्वाभ्यासस्यैव चारित्रतयाऽस्माभिरभ्यनुज्ञानात । तत समुदित एव सम्यग्दर्शनादिर्नि श्रेयसस्याङ्गम्, अन्यतमापायेऽपि[3] तदनुपपत्ते । अत एव सूत्रे 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग'' [ त० सू० १।१ ] इति समुदायरूपेण सम्यग्दर्शनादेरेकीभूतस्य नि श्रेयसनिमित्तत्वनिवेदनार्थमुत्तरपदमेकवचनान्तमेवोपदर्शितम् ।

तस्य मार्गस्य विषयो गोचरस्तद्विषय । स च सप्तधा–''जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् । [ त० सू० १।४ ] इति सूत्रात् । तस्य च तद्विषयत्व श्रद्धेयत्वादिना न प्राप्य[4]त्वेन, [5]ततो मोक्षस्यैव तत्त्वात् । चशब्द समुच्चये । ताविमौ द्वौ सत्यौ प्राच्यावुभौ इति एव मतमभ्युपगत सत्य चतुर्विध चतुप्रकार सर्वस्यापि सत्यस्यात्रैवान्तर्भावात् । तत एतत्सत्यचतुष्टयप्रतिपादनात् प्रवचन सत्यमवगन्तव्यम्, जीवादीना च मार्गविषयत्वप्रतिपादनमपरिज्ञाततद्रूपस्य प्रेक्षावतो मोक्षार्थाया प्रवृत्तेरनुपपत्ते । अत एव आह–

---

१–णस्यैव स–ता० । २–ह मुनि–आ०, ब०, प० । ३–ये तद्–आ०, ब०, प० । ४ प्राप्यत्वेन्या । ५ तत एव तत्त्व–आ०, ब०, प० ।

अहं ममास्रवो बन्धः संवरो निर्जरा क्षयः ।
कर्मणामिति सत्कृत्य प्रेक्षाकारी समीहते ॥५३॥ इति ।

समीहते संसारविनिवृत्तिं प्रति यतते । कः ? प्रेक्षाकारी विचा[१]रकरणशीलः । कथं समीहते ? सत्कृत्य सादरं निश्चित्य । निश्चयप्रकारं च 'अहम्' इत्यादिना दर्शयति । प्रत्येकमहं इति शब्दस्य सम्बन्धो मम शब्दस्य चास्रवादिभिः । अहमिति, ममास्रव इति, मम बन्ध इति, मम संवर इति, मम कर्मणां निर्जरेति, मम तेषां क्षय इति च । तत्रात्मानमहमिति निर्दिशति अहम्प्रत्ययवेद्यत्वात् । तस्यासत्कारे कस्य संसारो मोक्षो वा ? को वा तदुपाये प्रवर्त्तेत ? क्षणक्षीणचित्तप्रवाहस्य[२] प्रतिक्षेपात् । तथा तस्यास्रवोऽपि कायवाङ्मनकर्मलक्षणः सत्कर्त्तव्य एव, तदभावे बन्धनिवर्त्तनाय समीहानुपपत्तेः । सत्कृते हि बन्धकारणे तस्मिन् तस्य तत्प्रत्यनीकानुष्ठानेन निवर्त्तने निवर्तितो भवति बन्धो नान्यथा, कारणानिवर्त्तने कार्यनिवृत्तेरनुपपत्तेः ।

[३]तन्निवर्त्तनाय प्रकृतिरेव समीहते नात्मा बन्धतत्कारणयोरपि तत्रैव भावादिति चेत्, न, "कैवल्यार्थं प्रवृत्तेश्च" [ साख्यका० १७ ] इत्यनेनात्मन्येव तत्प्रतिपादनात्, अन्यथा तत आत्मव्यवस्थापनानुपपत्तेः । न हि अन्यव्यापारादन्यव्यवस्थापनमतिप्रसङ्गात् । नापि तत्रौपचारिकी समीहा, ततः परमार्थत आत्मसिद्धेरसम्भवात् । अन्यतस्तथा तत्सम्भवे तत्प्रतिपादनवैयर्थ्यात् । प्रकृतिगतमेव बन्धं निवर्त्तयितुं प्रवृत्तिरपि [४]तस्येति चेत् तदनिवर्त्तने [५]किं तस्य स्यात् ? अन्यथा मुक्तवत्प्रवृत्तेरयोगात् । दुःखप्राप्तिरिति चेत्, सिद्धस्तर्हि बन्धादे[६]स्तत्रैव[७] सत्कारो भावान्तरसत्कृतात्ततस्तस्य [८]तत्प्राप्तेरयोगात् । सापि विभ्रमादेव न तत्त्वत इति चेत्, न, आत्मनि [९]तदभावात् । सोऽपि विभ्रमादेवेति चेत्, न, तस्याप्यात्मन्यभावात् । सोऽपि विभ्रमादेवेति चेत्, न; अनवस्थाप्रसङ्गात् । तात्त्विक एव तत्र विभ्रम इति चेत्, न; तस्य नित्यत्वे निर्मोक्षभावप्रसङ्गात् । अनित्यत्वे तु सिद्धस्तत्रैव बन्धादेः सत्कारः तदभावे विभ्रमानुपपत्तेः । तथा कर्मनिर्जरापरिक्षययोरपि तदेकदेशसकलविश्लेषलक्षणयोः,[१०] अन्यथा तदुपाये संवरे तस्याप्रवृत्तेः । नहि प्रेक्षावतः कस्यचित् परपरिशुद्धये स्वशरीरप्रक्षालनमुपलब्धम् । यस्य पुनरास्रवादेः [११]सत्कर्तव्यत्वे कुतश्चिद् विनिवर्तनं तत्तस्य तदयोगात् आत्मवत् । अस्ति च विनिवर्तनं तस्य अन्यथा तन्निबन्धनस्य संसारस्याप्यनिवृत्त्या निःश्रेयसाभावापत्तेः । अतो रज्जुसर्पादिवत् असन्नेवास्रवादिरिति चेत्; असतः कुतस्तस्य प्रत्यवभासनम् ? आत्मन इति चेत्, न, तस्य तत्त्ववेदित्वेन तदनुपपत्तेः, रज्जुतत्त्ववेदिनस्तत्र सर्पप्रतिभासस्यानवलोकनात् । प्रसिद्धं च तस्य तत्त्ववेदित्वम्–"सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २।१।१ ] इत्यादेः श्रवणात् । तन्नात्मनस्तस्यावभासनम् । जीवत इति चेत्; न; तस्यापि तत्त्वज्ञानरूपत्वे तदनुपपत्तेः । मिथ्याज्ञानरूपत्वे तस्य तद्रूपः तत्प्रभवप्रबन्धश्च यदि सन्नेव सन्नेवास्रवादिः तस्यैवास्रवादित्वात् । असन्नेवेति चेत्, कथमसौ जीवस्य असतस्तद्रूपत्वानुपपत्तेः । इत्थमेतत्, केवलमविवेकज्ञानादतद्रूपमपि तद्रूपमिव प्रतिभातीति चेत्, न; अविवेकज्ञानस्यापि तत्त्वतस्तद्रूपत्वे स एव प्रसङ्गः तात्त्विक एवास्रवादिरिति, तज्ज्ञानतत्प्रभवस्यैवास्रवादित्वात् । तस्याप्यतात्त्विकत्वे तद्रूपत्वाद्यनुपपत्तेः । तस्याप्य

१ विचारेण करण–ता० । २–हमिति–ता० । ३ सांख्य प्राह । ४ तस्यैवेति आ०, ब०, प० । ५ किम स्यात् आ०, ब०, प० । ६ पुरुष एव । ७ पुरुषस्य । ८ सद्भावा–आ०, ब०, प० । विभ्रमाभावात् । ९ विभ्रमोऽपि । १० 'तत्रैव सत्कारः' इति सम्बन्धः । ११ तत्क– आ०, ब०, प० ।

विवेकज्ञानान्तरात्तद्रूपवत्प्रतिभासनपरिकल्पनायामनवस्थापत्ते । अपि च–

मिथ्याज्ञानाद् विवेकश्चेत् स्वभावो जीववस्तुन ।
कथ स्ववेदिनस्तस्य तत्राज्ञान प्रवर्तताम् ॥१८१९॥
अस्वसवेदने तस्य परसवेदनात्ययात् ।
कथ भोगोऽवकल्प्येत ससारी यदसौ भवेत् ॥१८२०॥
तस्मान्निरशरूपस्य तस्य स्वग्रहणात्मन ।
तद्विवेकाग्रहाभावान्मिथ्याज्ञानमयुक्तिमत् ॥१८२१॥

ततो यदुक्तम्–

"सर्पहारादिभावानामबुद्धा रशना यथा ।
कारण जगतस्तद्वदबुद्ध तत्त्वमेव हि ॥
भान्ति रज्ज्वामसन्तोऽपि सर्पहारादयो यथा ।
चिद्धातोस्तद्वदाकारा स्वरूपस्याग्रहादमी ॥"[ ] इति ।

तत्प्रतिविहितम्; स्वरूपस्याग्रहात् सिद्धत्वात् । स्यान्मतम्–नैकान्ततस्तस्य स्वाग्रह कथञ्चिदेव तद्भावात्, ततो मिथ्याज्ञानविवेकस्याग्रहणेऽपि भेदादिरूपस्य ग्रहणाद्भोगोपपत्तेरुपपन्नमेव ससारित्वमिति; तर्हि सिद्ध तद्विवेकापरिज्ञानस्य सत्कृतस्यापि कुतश्चिन्निवर्तनम्, अन्यथा जीवस्य नि श्रेयसाभावापत्ते, तद्वदास्रवादेरपि स्यादविशेषात् । ततो युक्तम्–आरमन्यास्रवादिसत्कारपुरस्सरमेव नि श्रेयसार्थिनस्तदपाये[1] प्रवर्तनम्, अन्यथा तदनुपपत्त ।

अत्र चोद्यम्–'कर्मक्षयान्मोक्ष' इति मत तदनुपपन्नम्, कर्मणा विपक्षासम्भवेन क्षयस्याभावात् । असवयक्रियश्च तत्परिक्षय, तृष्णाया तद्धेतो पुनरपि तेषामुत्पत्ते । 'अथ कर्मवत्तृष्णाया अपि कुतश्चित् परिक्षय, तर्हि स एवास्तु व्यर्थ कर्मक्षये परिश्रम, तृष्णापरिक्षये[2] हि सतामपि कर्मणामकिञ्चित्करत्वेन ससारानुत्पत्ते । कथ पुन कर्मणामविपक्षत्व यावता कायपरिक्लेशरूप तप एव तेषा विपक्ष इति चेत, न, ततोऽप्येकरूपात् विचित्रशक्तीना कर्मणा परिक्षयायोगात् । अवगत हि विचित्रशक्तित्व कर्मणा फलवैचित्र्यदर्शनात् अन्यथा तदयोगात् । ततो भवन्नपि तपसा कर्ममलस्य प्रतिरोध तज्जातीयस्यैव स्यान्न विजातीयस्य ।

स्यादयमाशय –तपस एव शक्त्या कर्मशक्तय सङ्कीर्णा क्रियन्ते परिक्षीयन्ते वा, ततो नि शेषस्यापि कर्ममलस्यावक्लेशात् तपोलेशतोऽपि चैकरोमोत्पाटनादिलक्षणात् परिक्षयो भवतीति, भवत्यय शोभनो यदि तत्तप क्लेशादर्थान्तरम् । तथा चेदर्थपर्यस्तर्हि 'तप्तबलशिलारोहणादिपरिक्लेश तदन्यतस्तपस एव कमक्षयोपपत्ते । क्लेशादव्यतिरिक्तमेव तप इति चेत्, न तर्हि तत कर्मशक्तीना सङ्करादि तस्य कर्मफलत्वेन ततस्तदसम्भवादिति । तत्राह–

तत्त्वज्ञानप्रभावेण तपःसंवरणं नृणाम् ॥ इति ।

तत्त्व जीवादि तस्य ज्ञान याथात्म्यनिर्णयस्तस्य प्रभावो भावनया प्रकर्षगमन तेन यत सवरण बाह्याभ्यन्तरशुभाशुभरूपव्यापाराणा निवारणम् औदासीन्यापरनामधेय तदेव तप, तस्याल्पसत्त्वपुरुषापेक्षया तापत्वेन प्रतिभासनात्[3], तच्च नृणा मनुष्याणा न तिर्यग्जीवादीना भव्यानामपि तेषा तदसम्भवात् । तदेव च तपो विपक्ष कर्मणा तन्निदानप्रत्यनीकत्वात् । यो यन्निदानप्रत्यनीक त तस्य विपक्षो यथा व्याधिविशेषनिदानवातादिप्रत्यनीक

१ तदुपा-आ०, ब०, प० । आस्रवादिनाशे । २ कथ क- आ०, ब०, प० । ३-पे स-ता० ।
४ "तपोवन इति पा०"-ता० टि० । ५ -नाञ्च आ०, ब०, प० ।

क्रियाविशेष तद्व्याधिविशेषस्य, कर्मनिदानरागाद्यास्रवप्रत्यनीक च तप, तस्मात्तदपि तद्विपक्ष इति । कुत पुन कर्माणि कुतो वा तेषा तदास्रवनिदानत्व यदेवमुच्यते इति चेत् ? आस्तामेतत्, अनन्तरमेव निरूपणात् । तथापि कथ तादृगास्रवप्रत्यनीकत्व तपस इति चेत् ? तत्प्रकर्षविशेषे तदास्रवस्यापकर्षविशेषात् । न चाय तस्य तत्प्रत्यनीकत्वाभावे सम्भवति, क्रियाविशेषस्य प्रत्यनीकस्यैव सत प्रकर्षविशेषाद् वातादेरपकर्षविशेषप्रतिपत्ते ।

भवत्वेवमागन्तूना तन्निदाननिवारणेनोत्पादप्रतिषेध, कर्मणामुत्पन्नाना तु कथ परिहाणि ? तपसो ह्युत्पादप्रतिषेध एवोक्तेन वर्त्मना सामर्थ्य न चोत्पन्नाना प्रतिषेधे, अविरोधादिति चेत्, का पुनस्तेषा परिहाणि या तप सामर्थ्यान्न भवतीति ? उच्यते- स्वरूपप्रच्युतिरिति चेत्, न, तस्यास्तेषामनभ्युपगमात् । आत्मसम्बन्धाना तेषा ततो विश्लेष इति चेत्, सिद्ध तर्हि तत्रापि तपस एव सामर्थ्यम् । सति तत्प्रभावे तदुपश्लेष-वाहिनो रागादिस्नेहस्य प्रध्वसात् तेषा ततो विश्लेषोपपत्ते । विश्लिष्टानाञ्च फलदान-शक्तिविकलतया कर्मभावप्रच्यवनात् । ततो युक्तमुपात्तकर्मापेक्षयापि तपस एव विपक्षत्वम् । तदेवाह-

तपसश्च प्रभावेण निर्जीर्णं कर्म जायते ॥५४॥ इति ।

तपसो निरूपितरूपस्य य प्रभाव सामर्थ्यं तेनैव, चशब्दस्यावधारणत्वात् निर्जीर्णं निरवशेषगलित कर्म ज्ञानावरणादि जायते भवति । ततो यदुक्त धर्मकीर्तिना-

"असम्भवाद्विपक्षस्य न हानि. कर्मदेहयो. ।
अशक्यत्वाच्च[1] तृष्णायास्तद्धेतो पुनरुद्भवात् ॥
द्वयक्षयार्थं यत्ने च व्यर्थं कर्मक्षये श्रम ।
फलवैचित्र्यदृष्टेश्च शक्तिभेदोऽनुमीयते ॥
कर्मणा तापसक्लेशान्नैकरूपात्तत क्षय ।
फल कथञ्चितज्जन्यमल्प स्यान्न विजातिमत् ॥
अथापि तपस शक्त्या शक्तिसङ्करसक्षये ।
क्लेशात् कुतश्चिद्धीमेतास्तेषमक्लेशक्लेशत ॥
यदीष्टमपर क्लेशात्तत्तप क्लेश एव चेत् ।
तत्कर्मफलमित्यस्मान्न शक्ते सङ्करादिकम् ॥"

[ प्र० वा० १।२७५-८० ] इति ।

तत्प्रतिविहितम् यथोक्ते तपसि कर्मविपक्षे तदसम्भवस्याभावात् । तत्प्रभावादेव तृष्णाया अपि स्थित्यभावे तद्वलेन पुन कर्मोत्पत्तेरसम्भवात्, तृष्णापहारादपरस्य च कर्मक्षयपरिश्रमस्यानभ्युपगमात् । न च कायपरितापरूप तप कारण कर्मनिर्हरणस्य, अपि तु [2]उक्ततप परिबृहणस्यैव ।

"बाह्य तप परमदुश्चरमाचरस्त्वमाध्यात्मिकस्य तपस परिबृहणार्थम् ।" [ बृहत्स्व० श्लो० ८३ ] इति वचनात् । ततस्तत्र तन्निर्हरणकारणबुद्ध्या 'फलवैचित्र्यदृष्टे ' इत्यादि-वचन जैनमतानभिज्ञत्वमेव [3]तस्यावेदयति ।

१-स्यात्प्रवर्तं-आ०, ब०, प० । २-च जीवाना तृष्णायां पु- आ०,प०,प० । "-च तृष्णायां स्थितायां पुन-" प्र० वा० । ३ संवर रूपतप परिबृंहणस्यैव कारणमित्यर्थ । उक्त तप -आ० टि० । ४ धर्मकीर्ते ।

यदपीद प्रज्ञाकरस्य–'न च क्लेश एव तपस्तस्य कर्म्मफलत्वात्। न च कर्मफलमेव तप शीतातपसेविना पश्वादीनामपि तापसत्वप्रसङ्गात्" । [ प्र० वार्तिकाल० १।२७७ ] इति, तदपि तादृशमेव, क्लेशस्य मुख्यवृत्त्या तपोभावानभ्युपगमात्। तथा तत्त्वज्ञान-प्रभावोपनीतसवरणस्यैव तदभ्युपगमात्। तत्र च न सौगतस्य विवाद । नापि तस्य कर्मनिर्जराकारणत्वे । तत एवोक्तम्–

"तत्रैव तद्विरुद्धार्थतत्त्वाकारावरोधिनी ।
हन्ति सानुचरा(रा)तृष्णां सम्यग्दृष्टि सुभाविता ॥
निहेतोर्नोद्भव कर्मदेहयो स्थितयोरपि ।
एकाभावाद्विना वीजे ना (ज ना)ङ्कुरस्येव सम्भव ॥"
[ प्र० वा० १।२७३–७४ ] इति ।

कथ पुनर्जीवादिज्ञानस्य तत्त्वज्ञानत्वे तत्प्रभावात् सवरणम, सति तत्र जीवस्नेहादे-रास्रवस्यैवोपपत्ते । तथाहि–यस्तावज्जीव विद्यमानतयाऽवलोकयति तस्य तत्रावश्यम्भावी स्नेह, तस्य तत्सत्तावलोकनमात्रनिबन्धनतयैव बाल्पश्वादावप्युपलब्धे । जीवे च स्निह्यन् तत्सुखसाधनेष्वभिलाषी सतोऽपि तद्दोषास्तिरोधाय गुणानेवारोप्य पश्यति । तद्गुणदर्शी च तानि ममेदबुद्धया परापराणि सुखोपभोगायादत्त एवेति न ससारोपरति कदाचिदपि । तन्न जीवतत्त्वज्ञानात् सवरणम् । नाप्यजीवतत्त्वज्ञानात तत्रापि सत्यात्मदर्शिनस्तदुपकारिषु स्रक्चन्दनादिषु तदपकारिषु चाहिविषादिषु परिग्रहद्वेषयोस्तत्प्रतिबद्धाना चानुपग्रहोपघा-(घा)तादीनामशेषदोषाणामवश्यम्भावेन प्रादुर्भावात् । तदुक्तम्–

"य पश्यत्यात्मान तत्रास्याहमिति शाश्वतस्नेह ।
स्नेहात् सुखेषु तृष्यति तृष्णा दोषास्तिरस्कुरुते ॥
गुणदर्शी परितृष्यन् ममेति तत्साधनान्युपादत्ते ।
तेनात्माभिनिवेशो यावत्तावत्स ससारी ॥
आत्मनि सति परसज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।
अनयो सम्प्रतिबद्धा सर्वे दोषा प्रजायन्ते ॥"
[ प्र० वा० १।२१९ २२ ] इति ।

ततो[1]ऽयुक्त तत्त्वज्ञानेत्यादीति चेत्, अत्राह–

**रागद्वेषौ विहायैव गुणदोषवतोस्तयो ।**
**मोक्षज्ञानात् प्रवर्त्तन्ते मुनय समबुद्धय ॥५५॥** इति ॥

समा सदृशी वासीचन्दनयोर्बुद्धिर्येषा ते समबुद्धय मुनय प्रवर्त्तन्ते नि श्रेयसो-पायानुष्ठाने प्रवृत्ता भवन्ति । किं कृत्वा ? तयो स्वपरविभागबुद्धिविषययो रागद्वेषौ प्रीत्यमर्षौ विहायैव परित्यज्यैव न कदाचिदप्यविहायेत्येवकार । कथम्भूतयो ? गुणदोषवतो गुणश्चोपकारो दोषश्चापकारस्तौ विद्येते ययोस्तयोरिति । अथ मतम्–गुणदोषावेव निबन्धन रागद्वेषयोस्तद्भाव[2]भावप्रतिपत्ते, अतो न यत्र तौ भवतु नाम तत्र तयो परि-त्याग, यत्र तु स्त तत्र प्रवर्तनमेव कारणभावादुपपन्न न परिवर्जनमिति तन्न युक्तम्, यस्मान्न ह्युपकारापकारावेव तयोर्निमित्तम्, अपि तु [3]तन्मनसिकारोऽपि । अत एव निराका-

१ ततो यदुक्त आ०, ब०, प० । २ –द्भावाभा– आ०, ब०, प० । ३ तदिच्छा ।

ङ्क्षस्योपकारिण्यपकारिण्यपि क्षमावतस्तन्मनस्कार[1]विकलस्य [2]तदाभाव (तदभाव) प्रसिद्धे[3]। स च तन्मनस्कारस्तादात्विकमेवोपभोग पुरुषार्थतया निश्चिन्वत चित्ततल्पमुपसर्प स्तदुपभोगोपयोगिष्वनुराग तद्व्याघातकारिषु विद्वेष च पोषयति न त्वात्यन्तिक पुरुषार्थविशेष पश्यत, तस्य तत्कारणेष्वेव [4]मनस्कारस्य सम्भवात् न तात्कालिकसुखनिबन्धनेषु। तथा च कस्यचिद्विदुष सुभाषितम्–

"तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनु[5]षज्यते ।
हितमेवानुरुद्धयन्ते प्रपरीक्ष्य परीक्षकाः ॥"
[ ][6]इति ।

तस्मादन्यत्र गुणादिभावेऽपि रागादिक परित्यज्य निरतिशयज्ञानादिस्वभावस्य पुरु[7]षार्थस्य परिज्ञानात् तदुपाय एव मुनय प्रवर्त्तन्ते । तत एवोक्तम्–'मोक्षज्ञानात्' इति । [8]तदुपायेऽप्युपकारित्वादेवानुराग, तदविशेषात् परत्रापि [9]कस्मान्न भवतीति चेत् ? न; तत उपकारस्यैवाभावात् । दृश्यत एवेन्द्रियादेरन्यतोऽपि विषयोपभोगादिरुपकार इति चेत्, न, तस्याऽतत्त्ववेदिभिरुपकारबुद्धया परिगृहीतस्यापि विवेकावलोकविनिवेशितप्रज्ञावैशारद्यैर्जातिजरामरणप्रबन्धलक्षणपरितापकारणस्य तृष्णाभिवर्द्धनस्य निबन्धनतया अपकारपक्ष एवोपक्षेपात् । तत इद प्रत्युक्तम्–

"यद्यप्येकत्र दोषेण तत्क्षणं चलिता मतिः ।
तथापि न विरागोऽत्र कामीव वनितान्तरे ॥"
[ प्र० वा० १।२४१ ] इति ।

विवेकवत पुरुषस्य सयोगसम्बन्धेषु भावेष्वात्यन्तिकस्यैव दोषस्य दर्शनेन सर्वदापि तत्र [10]विरक्तिभावस्योपपत्ते । यद्येवम् आत्मन्यपि वैराग्येण भवितव्यम्, इन्द्रियादेरिव तस्याप्युक्तेन वर्त्मना ससारपरितापकारणत्वस्याविशेषात् । इन्द्रियादिभिर्विना न तस्य तत्कारणत्वमतो न तत्र वैराग्यमिति चेत्, इन्द्रियादिष्वपि न भवेत्, तेन[11] विना तेषामपि तत्कारणत्वाभावात् । अत एवोक्तम्–

"न तैर्विना दु खहेतुरात्मा चेत्तेऽपि तादृशाः ।
निर्दोषं द्वयमप्येवं वैराग्यं तत्र तत्कृतः ॥"
[ प्र० वा० १।२२७ ]

इति चेत्, सत्यम्, आत्मनोऽपि मिथ्याज्ञानादिदोषपर्यायपरिणतस्य तत्परितापकारणतया परिभाव्यमानस्य वैराग्यविषयत्वेनाभ्युपगमात् । कथमेव तस्यैव नि श्रेयसे स्थापनायामास्था[12]"परत्रेवात्मन्यपि विरक्तिविषये तदनुपपत्ते. ? तदास्थाया वा स एव राग. । सुखेषु स्थापनास्थैव राग आयहल्लक्षणः ।" [ प्र० वार्तिकाल० १।२३८ ] इति वचनात् । ततो नात्मनि वैराग्यस्य सम्भव इति चेत्, न, दोषपर्यायापेक्षया तत्सम्भवात्, तत्पर्याये च न

---

१ –नसिकार–श्रा०, ब०, प० । मनस्कारश्चेतस आभोगः अभिमुखीभाव इति यावत् । द्रष्टव्यम्–प्रक० टि० पृ० १५६ । २ तद्भावप्रसिद्धे: आ०, ब०, प० । ३ –सिद्धिः ता० । ४ तन्मनसिका–श्रा०, ब०, प० । ५ –नुयुज्यते आ०, ब०, प० । ६ उद्धृतोऽयम्–न्यायकुमु० पृ० ८४१ । स्या० र० पृ० ११९९ । ७ तदुपाये सुप–श्रा०, ब०, प० । ८ कुतस्तत्र म–श्रा०, ब०, प० । ९ विरक्तभाव–ता० । १० श्रात्मना । ११ "प्रयत्नः । आस्थानी यत्नयोरास्था" इत्यमर.–ता० टि० ।

कस्यचिदपि [1]विदुष [2]तदास्था, द्रव्य एव तद्भावात्। तत्र च न वैराग्यम्, अतो द्रव्यरूपतयैवात्मा दोषपर्यायोपमर्दनेन शुद्धज्ञानादिरूपतया स्थापयितुमास्थीयमानो न दोषाभिनिवेशिन वैराग्योदय प्रतिरुणद्धि। कथ पुनरात्मन्यपि रूपान्तरापादान दोषोपमर्दने तदव्यतिरेकेण तस्याप्युपमर्दनात्, उपमृदितस्य च [3]दोषवदसम्भवादिति चेत्, न; [4]एकान्ताव्यतिरेक एव दोषात्। कथञ्चिद् व्यतिरेके च सवेदनस्य विकल्पेतराद्याकारभेदवत् क्रमेण मिथ्याज्ञानादिभेदस्याप्युपपत्तेरुपपन्नमेव तत्र दोषरूपोपमर्दनेऽपि तदन्तरापादनम्। विकल्पेतराद्यात्मनश्च सवेदनस्यानभ्युपगमे न किञ्चित् स्यात् सर्वस्य ससारतत्कारणादिव्यवहारस्य तन्नान्तरीयकत्वादिति [5]बहुशो निरूपितत्वात्। ततो निराकृतमेतत्–

"न हि तस्यान्यथाभावो नाप्यन्यस्य तथा स्थिति ।
[6]सर्वात्मनैकदेशेन सर्वथा दुर्घटत्वत ॥
एकस्य नैकदेशोऽस्ति नैकदेशोऽस्त्यभिन्नता ।
यस्यैकदेश सोऽन्य स्यात्तथा सत्यनवस्थिति ॥
स्यादनन्य कथञ्चिच्चेत्तथाप्यस्त्यनवस्थितिः ।
परापरविकल्पाना तत्रापरिसमाप्तित ॥"

[ प्र० वार्तिकाल० १।२३८ ] इति ।

विकल्पेतर-विभ्रमेतरादिभिराकारैरेकस्यैव सवेदनस्य तथा चान्यथा च भावमभ्युपगम्य पुनरेव ब्रुवत स्वमतापरिज्ञानदोषोपनिपातात्। तत्सवेदनवदात्मन्यप्याकारभेदसभवेन विरागाविरागयोरप्रतिषेधादिदमपि प्रतिषिद्धम्–

"नात्मात्मनि विरक्त किं यथास्ति स विरज्यते ।
न तथा न यथा सोऽस्ति तथापि न विरज्यते ॥"

[ प्र० वार्तिकाल० १।२३८ ] इति ।

तत [7]आत्मादौ विपरीताभिनिवेशवत एवात्मस्नेहसुखतर्पणादिर्न विवेकिन तस्य तत्त्वनिर्णये विपरीताभिनिवेशनिवृत्तौ कारणाभावात्तदनुत्पत्ते । एतदेवाह–

सज्ज्ञानपरिणामात्मतत्त्वसम्प्रतिपत्तित ।
पीतदोषास्रवाकारो विपरीतग्रहक्षय: ॥५६॥ इति ।

आत्मनि योऽसौ विपरीतग्रह भौतिक एव, अचेतन एव, चेतनोऽप्यविकल्प एव, नित्य एव, अनित्य एवेत्यादिर्मिथ्याभिनिवेशस्तस्य क्षयो विनाशो विवेकिन इति शेष । तस्य विशेषण पीतेत्यादि। दोषाणामात्मस्नेहसुखतर्पणादीनाम् आ समन्तात्[8] स्रवणम् आस्रव स एवाकार स पीतोऽन्तर्भावित स्वरूपत्वेनावस्थापितो येन स तथोक्त । कारणस्य हि परिक्षय कार्यमपि क्षयरूपतयावस्थापयति, अन्यथा तस्य तत्कार्यत्वानुपपत्ते । कुम्भकारादिक्षयेण व्यभिचार, तेन तत्कार्यस्य कुम्भादेरपरिक्षयकरणादिति चेत्, न; उपादानक्षयाभिप्रायेणैवमभिधानात्। विपरीतग्रहोपादाना हि जीवस्नेहसुखतर्पणादय तत्परिक्षयात्र भवन्तीति। "[9]सज्ज्ञान" इत्यादिरत्रैव हेतु । सतो विद्यमानस्य

१ विद्वेष आ०, ब०, प० । २ सदाश्रय द्रव्य–आ०, ब०, प० । ३ दोषवेदवदस–आ०, ब०, प० । ४ एकान्ताव्यतिरेके च प० । ५ –दिति च ब–आ०, ब०, प० । ६ सर्वात्मन्येक–आ०, ब०, प० । ७–पाथवा– आ०, ब०, प० । ८–तात्स्रवणं यस्य आ०, ब०, प० । ९ संज्ञाने– आ०, ब०, प० ।

जीवादे ज्ञानं सद्ज्ञानं तेन य परिणाम प्रतिसमय तद्रूपतयैवावस्थान स एवात्मनो जीवस्य तत्त्वं[1] स्वरूप तस्य सम्प्रतिपत्ति. युक्तितो निर्णय तत इति। न हि तत्तत्त्व[2]-निर्णये विपरीतग्रह सभवति विरोधात्। तत सति तस्मिन् क्षय एव तस्य भवति रज्जु-निर्णये सर्पग्रहवत्। ततो यथा[3]वस्थितनिरवशेषजीवादिपदार्थज्ञानपरिणामरूपमात्मान निश्चिन्वतो मिथ्याभिनिवेशादिदोषकलिलस्य व्यपगमादात्यन्तिकी शुद्धि बुद्धिमधिरोहति। तत इद प्रत्युक्तम्–

"विशिष्टसुखसगात् स्यात्तद्विरुद्धे विरागिता।
नैरात्म्ये तु यथालाभमात्मस्नेहात्प्रवर्त्तते॥"

[प्र० वा० १।२३४-३५] इति।

यथोक्तस्यात्मन एव विशिष्टसुखत्वेन तन्निश्चयवतस्तद्विरोधिनि सुखे वैराग्य-नियमेन प्रवृत्त्ययोगात्। कुतस्तर्हि तथाविधस्यात्मनो मिथ्याभिनिवेशादयो दोषा यतो घोरदु खकूप[4]कुहरपरि[5]वर्त्तनम्? न तावत्तत एव, अनिर्मुक्तिप्रसङ्गात्, तेषामविशेषा-पत्तेश्च। विशिष्टा हि ते पाटवादिगुणतारतम्याधिष्ठानतया प्रतीतेः। नहि कारणाविशेषे तद्विशेषो निर्हेतुकत्वापत्ते।

एतेन 'नित्यादात्मादेस्ते' इति प्रत्युक्तम्; ततोऽपि हि न केवलात्तत्सम्भव। नाप्य-दृष्टसहायात्, अदृष्टस्यापि तत्कार्यत्वेनाविशिष्टस्यैव सम्भवात्[6], तद्विशेषाद् दोषविशेषा-नुपपत्ते। तद्विशेषस्याप्यन्यतस्तत्कार्यादेव कुतश्चित् कल्पनायाम् अनवस्थाप्रसङ्गात्।

भवन्तु तर्हि वातादिभ्य एव ते, "[7]वातप्रकृतेर्मोह पित्तप्रकृतेर्द्वेष कफप्रकृते राग, तथा ये मोहादिमूला प्रलपमात्सर्यानुनयादय सर्वेऽप्युत्तरदोषास्तेऽपीति चेत्, न, व्यभि-चारात, मोहादेर्वातादिवत प्रकृत्यन्तरेऽपि[8] दर्शनात्। न हि तद्व्यभिचारिणस्तत्कार्यत्व-मतिप्रसङ्गात् प्रकृत्यन्तरेऽपि प्रकृतिसाङ्कर्येण वातादेर्भावादेव मोहादि, अतो न व्यभिचार इति चेत्; तर्हि "[9]प्रतीतवदपरमप्रतीतमपि वातादिकार्यं तत्र किन्न स्यात्? प्रकृत्यन्तरेण वातादे शक्तिप्रतिबन्धादिति चेत्, प्रतीतमपि ततो न भवेत्, अप्रतीतवत् प्रतीतेऽपि प्रतिबद्धशक्तिकस्य कारणत्वायोगात्। तन्न वातादिकार्यत्व मोहादे। वातादिप्रकर्षाद्य-नुविधानाभावाच्च, यद्धि यस्य कार्यं तत्तदुत्कर्षाद्यनुविधायि दृष्ट यथा तन्त्वादे पटादिकम्। न चैवमत्र, वातादेरुत्कर्षेऽपि मोहादावपकर्षस्य[11] अपकर्षेऽप्युत्कर्षस्य प्रतीते। अथ शक्तिस्तत्र-कारण तस्याश्च वाताद्युत्कर्षावप्यपकर्षादिसम्भवात्, तत्प्रसवे मोहादौ तत्प्रतिपत्तिर्न-विरुध्यत इति चेत्, न, शक्ते पृथग्भावे तत एव कार्योत्पत्त्या[12] वातादेरहेतुत्वप्रसङ्गात्। अपृथग्भावे च तदुत्कर्षादावप्यपकर्षादेरनवस्थव्यवस्थापनत्वात्। ततो "[13]वातादेरुत्कर्षादौ तदात्मनि शक्तावपि तद्भावात्, तत्प्रसवेऽपि स एव भवेत्। न चैवम्, अतो वाताद्युत्कर्ष-

१ तत्त्वं तस्य आ०, ब०, प०। २ –त्त्व निर्णये आ०, ब०, प०। ३–वस्थितिनि –आ०, ब०, प०। ४ "कुहर विवर बिलम्।"–ता० टि०। ५–वर्तन आ०, ब०, प०। ६ –वायदविशिष्टादोष–आ०, ब०, प०। ७ तुलना–"नाम्यासजा रागादय किन्तु वातादिजा तथाहि–वातप्रकृतेर्मोह पित्तप्रकृतेर्द्वेष कफप्रकृते राग इति' तदप्यसत्; व्यभिचारात् वातादिधर्मा प्रकृतिसङ्करात्।"–प्र० वार्तिकाल० ११५८। तत्त्वस० पृ० ५४८। ८–पि तद्दर्शे–आ०, ब०, प०। ९–तीना कार्यस्य आ०, ब०, प०। १० प्रतीतपरम-समपि आ०, ब०, प०। ११–कर्षस्याप्युत्कर्ष–आ०, ब०, प०। १२–त्पादेरेव वातादे–आ०, ब०, प०। १३ वातादा उत्कर्षादौ आ०, ब०, ता०।

भावेऽपि मोहादौ तद्विपर्ययात् वातादिप्रभवत्व न मोहादौ शक्यकल्पनम् । ततोऽन्यदेव तस्य कारण वक्तव्यम्, अहेतुकत्वे कालदेशस्वभावभेदानुपपत्ते । तच्चाभ्यास 'एव । मोहाद्यभ्या सादेव हि मोहादि, तत्पाटवाद्यनुविधायिनस्तस्य प्रतिपत्ते, अतद्धेतुकत्वे तदनुपपत्ते । अत सजातीयाभ्यासनिबन्धना एव मोहादय इति सौगत, सोऽपि न युक्तवादी, दीर्घनिद्रादिना अभ्यासव्यवधाने पुनस्तदुत्पादाभावप्रसङ्गात् । व्यवहितस्यापि हेतुत्वान्न तत्प्रसङ्ग इति चेत्, कथमिदानी सुगतेऽपि जन्मदोषसमुद्भवलक्षणा पुनरावृत्तिर्न भवेत् । तद्धेतो आत्मदर्शनस्य तदानीमभाविनोऽपि चिरापक्रान्तस्य तद्धेतुत्वसम्भवात् । तथा च न सुभाषितमिदम्-

"आत्मदर्शनबीजस्य हानादपुनरागम । [प्र० वा० १।१४३] इति । तन्न अभ्यासस्यापि 'मोहादिकारणत्वम् । कर्मणा तु पौद्गलिकाना तदुपपन्न 'प्रमाणभावात् । तथा हि- यथावस्थिततत्त्व'परपरिच्छित्तात्मनो जीवस्य स्वविषये मोहादि शरीरेन्द्रियव्यतिरेकिजीवोपश्लिष्टपुद्गलपरिणामपूर्वक, तत्त्वात्, धत्तूराद्युपयोगिनस्तन्मोहादिवत् । कर्म'पुद्गलोपश्लेषोऽपि जीवस्यापरमोहादिपूर्वक, तत्त्वात्, धत्तूरादिरसोपश्लेषवदिति सिद्ध आस्रवो बन्धश्च, तदुपश्लेषस्य बन्धत्वात् तद्धेताश्च मोहादेरास्रवत्वात् । एतदेवाह-

रागादयः सजातीयपरिणामाभिवृद्धयः ।
सूचयन्ति हि कर्माणि स्वहेतुप्रकृतीनि च ॥५७॥ इति ।

सजातीय सदृश परिणाम परापरविवर्त स एवाभिनवा पूर्वापेक्षया 'प्रत्यग्रत्वात् अभ्यधिका' कालोपचयवत्त्वाद्वृद्धिर्येषा ते तथोक्ता । ते चैवम्भूता रागादयो राग स्नेहात्मा मोहविशेष तदादयो द्वेषादय । किं कुर्वन्ति ? सूचयन्ति हि स्फुटम् । कानि ? कर्माणि निरूपितरूपाणि । कीदृशानि ? स्वहेतुप्रकृतीनि स्वस्य रागादेर्हेतु कारण प्रकृति स्वभावो येषा तानीनि । चशब्दो हेतु'परत्वमस्याद्योतयति । यतो रागादीना हेतुप्रकृतीनि कर्माणि तत सूचयन्ति, कार्यात् कारणप्रतिपत्तेरव्यभिचारात् । अथवा स्वे रागादयो हेतुप्रकृतयो येषामिति व्याख्येयम् । कथ पुनरत्र व्याख्याने तेषा तत्सूचकत्वम् कारणानामवश्यम्भाविकार्यत्वाभावादिति चेत् ? सत्यम् तत्र सापेक्षत्वे तन्नियमाभाव, अपेक्ष्यासन्निधाने कार्यानुत्पत्ते । न चैवम् रागादीना स्वत एव तद्धेतुत्वस्य प्रकृतिग्रहणेन ज्ञापनात् । एव हि ते प्रकृत्या तद्धेतवो भवन्ति यदि तत्र नापरमपेक्षेरन्, आपेक्षिकस्य हेतुभावस्य प्राकृतत्वानुपपत्ते । प्रकृते च तद्धेतुत्वे नियम एव कार्यस्य तृष्णायामिव कर्मण । तथा चालङ्कारवाक्यम्-

'अथ तृष्णास्ति नैवास्ति कर्मणोऽस्य परिक्षय ।
सतृष्णस्यास्य हि भवेत् पुन कर्म परापरम् ॥"

[प्र० वार्तिकाल० १।१९०] इति ।

कथमेव कारणस्याप्यव्यभिचारिणो लिङ्गत्वसम्भवात् कार्यादिभेदेन 'लिङ्गत्रैविध्यवचनम ? इति चेत्, सत्यम्, अस्त्यय सौगतस्य तद्वादिनो दोष, कारणलिङ्गस्य स्वभा-

१ एव स मो-आ०, ब०, प० । २ मोहाधिकरणत्व आ०, ब०, प० । ३ प्रमाणाभावात् आ०, ब०,प० । ४-स्वपरस्य स्वचि-आ०, ब०, प० । स्वपरस्य वि - प० । ५ पुद्गलश्लेषो-आ०, ब०, प० । ६ प्रत्यग्रता-आ०, ब०, प० । ७ -का का का-आ०, ब०, प० । ८ पदत्वमप्यत्र -आ०, ब०, प० । ९ प्र० वा० ३।१ ।

वान्तर्भावप्रत्यायनात्। तदेव क्लेशकर्मकतिपयव्यक्तिविशेषगतस्य कार्यकारणभावस्यानुमानत परापरभेदात् प्रतिपत्तावनादिरेव स व्यवतिष्ठते, तदनुमानबलभाविना तर्कज्ञानेन तथैव तत्र प्रतिपत्ते । तत्प्रामाण्यस्य च निरूपितत्वात् ।

साम्प्रत तत्त्वज्ञानेत्यादिनोक्तमपि कर्मनिर्जरण विनेयानुजिघृक्षया स्पष्टमभिधित्सुराह–

**सात्मीभावाद्विपक्षस्य सतो दोषस्य संक्षये ।**
**कर्माश्लेषः [ प्रवृत्तानां निवृत्ति फलदायिनाम् ]** ॥५८॥ इति ।

भवति हि सतो विद्यमानस्य दोषस्य रागादे संक्षयः सामस्त्येन विनाश,[1] तद्विपक्षस्य रागादिप्रत्यनीकस्य निरूपितस्य तपस सात्मीभावात्, अनात्मरूपस्यात्मरूपतया भावनात्। सति च तत्क्षये कर्मभिरागन्तुभिरश्लेषोऽसम्बन्ध आत्मन, तेषा दोषनिदानत्वेन दोषाभावेऽनुत्पत्ते, अनुत्पत्तेश्च सम्बन्धस्यासम्भवात्। प्रवृत्ताना तर्हि कर्मणा कथ निवृत्ति ? इत्यत्राह–

**प्रवृत्तानां निवृत्ति फलदायिनाम्** । इति ।

प्रवृत्तानां पूर्वोपात्ताना कर्मणा निवृत्तिरात्मनो विश्लेष । कीदृशानाम् ? फलदायिनाम्। विशेषणमप्येतद्धेतुत्वेन द्रष्टव्य फल[2]दायित्वादिति। दृश्यते च फलदायित्वेनोपात्तस्यापि मदिरादेर्विनिवृत्ति तथा कर्मणामपि। फलञ्च तेषा स एव रागादिर्दोष, तथाऽन्तरमेव निरूपणात्। तदेवमात्मन कर्मसम्बन्धाभावे तत्सम्बन्धतिरोहितस्यानन्तज्ञानादिस्वभावस्याविर्भावात भवत्येव परमा निर्वृति । कथ पुनरात्मन कर्मसम्बन्धाभावे कर्तृत्वभोक्तृत्वे तयोस्तदुपनिबन्धनत्वात् ? [3]तदभावे चात्मैव न भवेत्, तस्य तल्लक्षणत्वात्, अतो न तत्सम्बन्धाभावेन तस्य नि श्रेयसकल्पनमात्मवादिनामुपपन्नमिति चेत्[4], तन्न, यथावस्थितस्वपरविषयपरिशुद्धज्ञानस्यैव तल्लक्षणत्वात्। तत्र च "प्रभास्वरमिदं चित्तम्" [ प्र० वा० १।२१०] इति ब्रुवत सौगतस्यापि विवादाभावात्[5]। चित्तस्यैव कथञ्चिदन्वयिन आत्मत्वेन व्यवस्थापनात्। तत क्रियाभोगयोरभावेऽपि न परिहाणिरिति दुर्व्याहृतमेतत्–

"आत्मीयमेव यो नेच्छेद्भोक्ता इव न विद्यते ।
आत्मापि न तदा तस्य क्रियाभोगौ हि लक्षणम् ॥"
[ प्र० वा० १।२५७ ] इति ।

कुत पुनर्विपक्षस्य सात्मीभाव इत्याह–

**प्रतिपक्षस्थिरीभाव प्रायः संस्कारपाटवात्** । इति ।

प्रतिपक्षो रागादीना तत्त्वज्ञानभावनारूप तप तस्य स्थिरीभावः आत्ममयत्व संस्कारस्य तद्भावनोपनीतवासनाविशेषस्य पाटवात्। स च ततः प्रायो बाहुल्येन कदाचिदसत्यपि तस्मिन् क्षयोपशमविशेषादेव भावात्। के पुनस्ते दोषा येषा तद्भावना विपक्षभावेनोपक्षिप्यते ? इति चेत्, अत्राह–

**निर्ह्रासातिशयौ येषां तत्प्रकर्षापकर्षयो** ॥५९॥ इति ।

तस्य तत्त्वज्ञानाभ्यासस्य प्रकर्षापकर्षावुपचयापचयौ तयो सतोर्येषा रागादीना निर्ह्रासातिशयौ हानिवृद्धी तेषा स विपक्ष इति प्रतीयते, अन्यथा तत्प्रकर्षादौ तन्निर्ह्रासादेरनु-

१ –त स च त– आ०, ब०, प० । २ –दायित्वमिति आ०, ब०, प० । ३ तदभावे आ०, ब०, प० । ४ चेन्न प० । ५ –वादस्यैव आ०, ब०, प० ।

पपत्तेः । [1]तथा च यत् यत्पाटवे सत्यपहीयते ततस्यात्यन्तपाटवान्निर्मूल[2]मपहीयते यथा दहनपाटवाच्छीतस्पर्शः, तत्त्वज्ञानपाटवादपहीयन्ते च रागादय इति [3]सिद्धः संवरस्तत्त्वज्ञानात्मा । ततश्च दोषाप्रहानादनागतकर्मानुत्पत्तौ उत्पन्नानाञ्च [4]तदपहातव्यक्लेशमानफलप्रदानेनापक्रमाद्भवति परिशुद्धि:, [5]या सिद्धिरात्मन. काष्ठागतात्तत्त्वज्ञानपाटवात् दोषाणा समूलतलप्रहाणादात्मनोऽपि स्यात् अव्यतिरेकात, अन्यथा दोषाणामपि न भवेदिति चेत्; न; आत्मन एव तद्रूपस्य प्रहाणात् । प्रहीणस्य कथमवस्थिति., यत कैवल्यमिति चेत् ? तथापि प्रतीतेरेव । निरूपितं च स्थित्यादित्रयात्मकत्व सर्वस्यापि भावस्य । ततो नेदं जैनं प्रति दूषणम्–

"यस्यात्मा वल्लभस्तस्य स नाशं कथमिच्छति ।"

[प्र० वा० १।२३६] इति ।

सन्नेव ह्यात्मा कस्यचिद्वल्लभः । न च कौटस्थ्ये तस्य सत्त्वम्, तत्र क्षणभङ्गैकान्तवदर्थक्रियाशक्तिवैकल्यस्य निरूपणात् । परिणामिनि च विनाशस्यावश्यम्भावात् तमिच्छत एव तद्वल्लभत्वोपपत्ते. । न तत्र कथमिति प्रश्नोपपत्तिः, अनुपपत्तिविषय एव [6]तदुपपत्ते. । अथ सौगतेनापि तत्त्वज्ञानं भावनाधिष्ठित नि.श्रेयसनिबन्धनमभिहित कस्मान्नेष्यते ? इति चेत्; किं पुनस्तस्य तत्त्वज्ञानम् ? [7]सत्त्वादिलिङ्गोपजनितमनुमानमिति चेत्; कुत तत्सिद्धम् ? असिद्धस्य ज्ञानत्वानुपपत्ते । स्वसंवेदनादिति चेत्; न; तस्य प्रत्यक्ष[8]विशेषत्वेन स्वलक्षणविषयत्वात्, अनुमानस्य च सामान्याकारत्वात्, अन्यथा शब्दसम्बन्धयोग्यत्वानुपपत्ते. । स्वतः स्वलक्षणात्मैवानुमान सामान्याकार[9]स्तु तत्र विकल्पान्तरोपनीत इति चेत्; न, तदन्तरस्याप्यविदितस्याज्ञानत्वात्, स्वसंवेदनाच्च सामान्याकारत्वेन विदितत्वायोगात् । तत्रापि तदाकारस्य विकल्पान्तरोपनीतत्वकल्पनाया प्रकृतप्रसङ्गानतिवृत्तेः अनवस्थापत्तेश्च । सत्यपि तत्र स्वसंवेदने कथमनारोपात्तत्प्रतिपत्तिः न [10]चारोपस्यैवानुत्पत्तिः "[11]परोक्षा नो बुद्धिः" [ ] इति ब्रुवता[12] तत्रास्वसंवेदनसमारोपस्य[13] प्रादुर्भावात् । स्वसंवेदनेनैव तदुत्पत्ते प्रतिबन्धादिति चेत्; न; [14]अनन्वयेऽपि चित्त[15]प्रबन्धे तेनैवै[16]कत्वारोपजन्मन. प्रतिबन्धात्, अनारोपप्रतीतिभावेनानुमानवैफल्योपनिपातात् । अनुमानान्तरात्तत्राप्यनारोपप्रतीतिकत्वकल्पनायाम् अनवस्थानम् अनुमानपरम्परायाः [17]अपरिसमाप्ते. । ततो नानुमानस्य सम्भवो निरारोपायास्तत्प्रतीतेरभावात् ।

सम्भवतोऽपि कस्तस्य भावयिता ? विना तेन भावनाऽनुपपत्तेः । न चित्तक्षण एव, यस्यचित्तस्य परापरकालावस्थायित्वेन [18]परमताप्रसिद्धे. । क्षणविनाशिनश्च भूयोवृत्त्या [19]तद्भावकत्वानुपपत्तेः । सन्तान इत्यपि न युक्तम्, अन्वयिनस्तस्यापि वस्तुवृत्तेनाभावात् अवस्तुवृत्त्या सम्भवतश्च भावनादौ वन्ध्यास्तनन्धयवदनुपयोगात् । तन्न तस्य भावना । तत्सम्भवेऽपि न किञ्चित् फलमित्यावेदयति–

---

१ यथा च प० । २ –मुपजायते आ०, ब०, प० । ३ सिद्धिः आ०, ब०, प० । ४ तदा हातव्य आ०, ब०, प० । ५ या सि –ता० । ६ प्रश्नोपपत्तेः । ७ सत्त्वादि आ०, ब०, प० । ८ विषयत्वेन आ०, ब०, प० । ९ –रस्तत्र वि –प० । –रस्तु वि –आ०, ब० । १०–रोपादस्यैवा –प० । ११ "तस्मादप्रत्यक्षा बुद्धिः"–मी० भा० १।१।५। १२ "मीमांसकानाम्"–ता० टि० । १३ –स्य विदितस्य म –आ०, ब०, प० । १४ अन्वयेपि आ०,ब०,प० । १५ प्रबन्धेनैवैक –आ०,ब०,प० । १६ एकत्वारोपोत्पत्तेः –ता० टि० । १७ यदि स –आ०,ब०,प० । १८ "सौगतमतेऽप्रसिद्धेः"–ता० टि० । १९ तद्भावकत्या–आ०,ब०,प० ।

**यद्यप्यनात्मविज्ञानभावनासम्भवस्ततः ।**
**न निरोधो निरोधे वा न प्रयोजनमीक्ष्यते ॥६०॥** इति ।

'आत्मेति[1] कथञ्चिदन्वय, तदभावे भावना नैरात्म्यस्याभि[2]मतस्यावश्यम्भावात्, स न विद्यते येषां तानि च तानि विज्ञानानि च तेषां सम्बन्धिनी भावना क्षणभङ्ग-नैरस्या[3]द्यनुमानाभ्यामवृत्ति तस्या यद्यपि सम्भव. अपिशब्दस्तदभ्युपगमं सूचयन् वस्तुतस्तदभावं निवेदयति । ततस्तत्सम्भवात्, न निरोधो न विनाशो [4]मिथ्यारोपस्य । तन्निरोधाय हि तत्सम्भव परस्याभिमत "मिथ्याध्यारोपहानार्थं यत्न" [प्र० वा० १।१९४] इति वचनात् । न चानुमानात्तन्निरोध तस्यावस्तुविषयत्वात् । वस्तुविषयस्य[5] हि ज्ञानस्य तदन्यत्प्रतिनिरोधकत्वं यथा रज्जुज्ञानस्य सर्पवेदनं प्रति, नावस्तुवेदनस्य यथा तस्यैव सर्पज्ञानस्य [6]सम्भ्रमान्तरं प्रति । सामान्यावलम्बनत्वेनावस्तुवेदनस्यापि तस्य वस्तुनि प्रतिबन्धात्, भावनापरिकलितस्य तदध्यारोपप्रत्यनीकवस्तुस्वलक्षणदर्शनप्रत्युप-स्थापनद्वारेणोपपद्यत एव तन्निरोधकत्वमिति चेत्, न, प्रतिबन्धस्यैव प्रमाणाभावेन प्रतिक्षिप्तत्वात् । तन्न ततो भाव्यमानादपि वस्तुस्वलक्षणस्य दर्शनम्, अपि तु तद्विषयस्यैव मिथ्याकारस्य । अथापि कथञ्चित् ततस्तद्दर्शनं तथा वैराग्यदर्शनमपि दुःखभावनाया किन्न भवेत् ? यत इदं दुरुक्तं न भवेत्–

"दुःखभावनयाप्येष दुःखमेव विभावयेत् ।"
[ प्र० वा० १।२४० ] इति ।

तन्न मिथ्याज्ञानाभ्यासबलोऽपि मिथ्यात्वस्य निवृत्ति मद्यपानान्मदस्येव, तदुक्तम्–

अतत्त्वं भावयन् भिक्षुः कथं तत्त्वेन युज्यते ।
पिबन्मद्यं मदाभावं कथन्नु प्रतिपद्यते ॥"
[ ] इति ।

अथवा ततो न निरोधो निरोध्यस्याभावात् । कथं पुनस्तस्याभाव ? सुखदुःख-हर्षविषादादिपरापरचित्तक्षणेषु[7] एकत्वज्ञानस्यैव निरोध्यत्वादिति चेत्, सत्यम्, यदि तस्यारोपितविषयत्वम्, न चैवम्[8], भेदज्ञानवत्तस्यापि निर्बाधत्वेन तत्त्वविषयत्वात् । न च तत्त्वज्ञानमेव निरोध्यम्, भेदज्ञानस्यापि तत्त्वापत्ते । न किञ्चित्तत्त्वज्ञानं विचारासहत्वात् सामान्यं तु व्यवहारेण, ततो भेदज्ञानमपि निरोध्यमेवेति चेत्, उच्यते–तद् ज्ञानं यदि वस्तुतो नास्ति न भावनासम्भवतस्तस्य निरोध, स्वत एव भावात् । अस्ति चेत्, कथन्न तत्त्वज्ञानं तत् ? तेन स्वरूपस्य [9]सत एव प्रतिवेदनात् । न च तस्य सन्तानस्य निरोध, चरमवर्तिनः सजातीयानवक्लृप्तौ विजातीयेऽप्यनुपयोगात् नित्यवदवस्तुत्वापत्तौ तदुपादानप्रवाहस्यापि तत्त्वापत्ते । तत्र चोक्तम्–'स्वत एव [10]तस्याभावात् किं तन्निरोध-प्रयासेन इति । तन्न तस्य निरोध । निरोधे वा यत्किञ्चिन्मुमुक्षुप्रयासस्य फलं परिशुद्ध-परापरचित्तलक्षणं प्रयोजनं पराभिमतं तत् न सम्भवति । सवृत्या सम्भवति तत एव तस्य

१ "आत्मशब्दस्य कथमन्वयवाचकत्वम् ? इति चेदुच्यते, अतति सातत्येन गच्छतीत्यात्माऽन्वय "–ता० टि० । २ –मत श्वस्य –ता० । ३ –स्यादनु–प० । ४ "अध्याहार्यमिदम्"–ता० टि० । ५ –यस्याभिज्ञान –धा०, ब०, प० । ६ "विभ्रमानन्तरम्"–ता० टि० । ७ –षु तावज्ज्ञानस्यास्यैव धा०, ब०, प० । ८ –नं तायेन धा०, ब०, प० । ९ स्वत धा०, ब०,प० । १० तस्य भावात् धा०, ब०, प० ।

मोक्षत्वेन, तत्फलत्व च वस्तुत [1]पुनस्तस्यापि निरोध एव मोक्ष इति चेत्, न तर्हि तस्य प्रणीत वम्, [2]तद्धि मोक्षान्तरप्रतिक्षेपेण तस्यैवेष्टत्वम्। सम्प्रति [3]तदन्तरस्यापि प्रतिपादनेन तस्य [4]तल्लक्षणाभावात्। यदि वा, **निरोधे वा मोक्षे** तत्र प्रयोजन प्रमाण 'प्रयुज्यते प्रकर्षेण युक्त क्रियतेऽनेनेति प्रयोजनम्' इति व्युत्पत्ते तन्नेष्यते[5] न सम्भवति। सम्भवे तत्रैव तत्र भवेत् नापि तस्यायुक्ति[6]विकल्पत्व [7]तदविकलत्वादेव [8]सावृतत्वोपपत्ते। ततो दुर्भाषितमिदम्–

"परितुष्ट[ ]क्षणो यस्य सम्भवत्यपरापर।
तस्य मोक्ष प्रणीतोऽसौ भ्रान्त्ययुक्तिविनाकृत॥"
[ प्र० वार्तिकाल० १।२०३ ] इति।

भवतु तर्हि नीरूपस्यैव निरोधस्य प्रणीतत्वेन मोक्षत्वमिति चेत्, अत्रोत्तर **निरोधे वा** इत्यादि। एतदुक्त भवति–निरोधमभ्युपगच्छता तत्परिच्छित्तये प्रमाण वक्तव्यम् अन्यथा तीर्थान्तरमोक्षवत्तस्य प्रणीतत्वान्यवस्थिते। तच्च न तावन्मुक्तस्यैव, नि सरणाभावानुपङ्गात्। नि सरण हि मुक्तस्य पुन ससाराभाव। न च प्रमाणे सति तदभाव तस्यैव निरोधिन ससारित्वात्। तन्न मुक्तस्य प्रमाणम्। ससारिण इति चेत्, तदपि न प्रत्यक्षम्, तस्य तद्बलभाविन एव तद्विषयत्वम् निरोधस्य च नीरूपत्वेन बल-वैकल्यात्। अतदाकारस्य च न [9]तद्विषयत्वम्, आकारवादव्यापत्ते। तदाकारत्वे च न प्रत्यक्ष-त्वमभावत्वात्। पुन प्रत्यक्षान्तरेण तत्प्रतीतिकल्पनायामनवस्थापत्ते। तन्न प्रत्यक्ष तत्। नाप्यनुमानम् प्रत्यक्षाभावे तस्याप्यनवकल्पनात्। नापि प्रमाणान्तरम् अनभ्युपगमात्। तन्न निर्वाणस्य निरोधाकार प्रमाणाभावात्। अत एव न तत्र रागाद्युपशमरूप शान्ताकार, प्रमाणपथातिवर्तिनि[11] तस्मिंस्तदाकारस्याशक्यकल्पनत्वात प्रणीतत्वाद्याकारवत्। ततो यदुक्तम्–[12]"निरोध शान्तता प्रणीतता [13]नि सारभावश्चेति चतुराकार निरोधसत्यम्" [ ] इति तत् प्रतिव्यूढम्। तन्न सन्तानिरोधो निर्वाणम्। सति वा तस्मिन् न प्रयोजन फल मुमुक्षूणामीक्ष्यते। न च निष्फले तस्मिन् प्रेक्षावतामभिरुचि-रुपपन्ना तद्वत्ताविरोधात्। अन्यथा ब्रह्मविदा जीवविनाशलक्षणे[14] मोक्षे तद्वदभिरुच्युपपत्ते। यत्तत्र प्रहसन प्रज्ञाकरस्य 'न च तादृशा मोक्षेण किञ्चित् प्रयोजनमित्यहो महत्प्रेक्षापूर्व-कारित्व योगिनाम्' [प्र० वार्तिकाल० १।२३४] इति तत्र युक्त भवेत्। तन्न सौगतकल्पितो मोक्ष, तदभावात् न तन्मार्गत्वम् अनात्मविज्ञानाभियोगस्य नैरात्म्यज्ञानस्य मिथ्यात्वाच्च न तदभ्यासस्य मार्गत्वमित्यादर्शयति–

---

१ पुर ता०। २ तद्धिमोक्षा–आ०, ब०, प०। ३ तदन्तवत्तस्यापि निरोधे आ०, ब०, प०। ४ प्रणीतत्वलक्षणाभावात्। प्रणीतत्वम् "अत परोऽपि सम्भवति मोक्षताऽतिक्षेपेण प्रणीतत इत्याकार।" –प्र० वार्तिकाल० १।७९१। ५ –तेऽसम्भवे आ०, ब०, प०। ६ –विकल्पत्व आ०, ब०, प०। ७ तद्विकलत्वा–आ०, ब०, प०। अयुक्तविकलत्वादेव। ८ साम्प्रतत्वो–आ०, ब०, प०। ९ "नाकारस्य विषय इति सौगतैरभिधानात्" –ता० टि०। १०–तद्विषयत्वसमाकार–आ०, ब०, प०। ११–पथातिवर्तीति त–आ०, ब०, प०। १२ "निरोधत, शान्तत प्रणीतत, नि सरणतश्चेति चत्वार आकारा"– प्र० वार्तिकाल० १।१९१। निरोध शान्तत प्रणाम नि सारतश्चेति आ०, ब०, प०। १३ नि ससार–ता०। १४–क्षणेऽपि मोक्षे आ०, ब०, प०।

हेयोपादेयतत्त्वार्थविपरीतव्यवस्थितेः ।
मिथ्याज्ञानमनात्मज्ञं मैत्र्यादिप्रतिरोधतः ॥६१॥ इति ।

सौगतेन हि यदनात्मज्ञम् आत्मवदनविमुख ज्ञान 'विज्ञानमभ्यनुज्ञात तन्मिथ्यैव । कुत एव तत् (एतत) तत्त्वेन तद्भावेनार्थ्यते इति तत्त्वार्थो, हेयोपादेयो च' तौ तत्त्वार्थौ च तयो या तद्विज्ञानबलात विपरीता हेयस्योपादेयतया उपादेयस्य हेयतया व्यवस्थिति तत इति । न चेय नास्त्येव सर्वथा फलविकलतया कथञ्चित्तद्वत्तया च यथाक्रम त्याज्योपादेययोश्चित्तसन्तानिर्मूलोच्छेदावस्थानयोस्तज्ज्ञानेन विपरीतस्थितेरवकल्पनात् । अथवा त'द् ज्ञान मिथ्येत्यसम्भवोति व्याख्येयम् । अत्र निमित्तमाह-'मैत्र्यादिप्रतिरोधत' इति । मैत्री तत्त्वमात्रे समताभावनम आदिर्यस्य गुणोत्कृष्टादिविषयस्य प्रमोदादे तस्य य प्रतिरोध तज्ज्ञानसम्भवे प्रतिनिवृत्ति तत इति । तथाहि-न तावत्तज्ज्ञान विनेयाना स्वत एव, सुगतकल्पनावैफल्यप्रसङ्गात् । सुगतादेव तत्तेपामादित परार्थानुमानरूपमिति चेत्, न, ततोऽपि तज्ज्ञानवत तदसम्भवात् । स हि कृपया तत्तेपामुपदिशति । न च तज्ज्ञानवत कृपा विषयाभावात, सर्वस्यापि तेन विनेयवर्गस्य तत्त्वतो नीरूपतयैव ज्ञानात । तदध्यारोपस्यापि तदभावतत्त्वज्ञानवत्यसम्भवात् । ततो यदि सुगतस्य करुणावत्त्वमप्रतिरोध'' न तस्य तदभावज्ञानम् । ; तथा विनेयलोकस्यापि, इति युक्त तस्यासम्भवित्वम्, असम्भवतश्चानभ्यासभूमित्वेनानिर्वाणमार्गत्वमपीति ।

साम्प्रत स्वमते प्रमोदादेर्विषयभावादिना विधानमुपपन्नमिति दर्शयन्नाह-

तत्त्वार्थदर्शनज्ञानचारित्रेषु महीयसाम् ।
आत्मीयेषु प्रमोदादिरत एव विधीयते ॥६२॥ इति ।

तत्त्वेनार्यन्त इति तत्त्वार्था जीवादय तेपा यानि दर्शनज्ञानचारित्राणि श्रद्धानाधिगमतत्स्थिरीभावलक्षणानि तेषु प्रमोदादि हर्षादि, आदिपदात् मैत्रीपरिग्रह स विधीयते 'मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि च सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु' [ त० सू० ७।११ ] इति प्रवचनेन । कुत स तेषु विधीयते इति चेत् अत एव अतोऽस्मात्तत्त्वार्थदर्शनादीनाभावात् परमते न तद्विषयस्याभावात, तस्य च चारित्रविकल्पत्वेन' नि श्रेयसकारणत्वात् । एवकारान्निमित्तान्तरव्युदास । केपा स विधीयते ? महीयसा प्रत्यासन्ननि श्रेयससम्पदाम् । तेपामेव सासारिकभोगनिस्पृहव्यापारतया महीयस्त्वोपपत्ते । कीदृशेषु तेपा स विधीयत इति चेत् ? आत्मीयेषु । उपलक्षणमिदम, तेन परकीयेषु चेति प्रतिपत्तव्यम । न चैवमव्यवस्थितस्यापि सुगतस्य क्वचिन्मैत्र्यादिक सम्भवति इत्याह-

यस्मात्तत् [ करुणावत्त्वात्तिष्ठत्येव हि चेतसाम् ।
सन्तान स परोच्छेदान्न समत्वं प्रपद्यते ] ॥६३॥ इत्यादि ।

नन्विदमुक्तमेव पूर्वं किमर्थं पुनरुच्यते इति चेत् ? वार्तिकवा परिचयस्थैर्यार्थम् । एवमुत्तरत्रापि । न चैव सर्वत्रप्रसङ्ग अनयैव दिशाऽन्यत्रापि तत्स्थैर्यार्थस्याऽस्य' वक्तव्यताया

---

१ विज्ञानमस्य मु ज्ञान-आ०, ब०, प० । २ च तत्त्वार्थौ आ०, ब०, प० । ३ तज्ज्ञानममिथ्ये -आ०, ब०, प० । ४ -रोधाद्ध आ०, ब०, प० । ५ -न च नि- आ०, ब०, प० । ६ -स्याप्यकर्त -आ०, ब०, प० ।

सूचनात्। तावदिति वाक्यालङ्कारे। यश्चेतसा सन्तानः सुगतनामा तिष्ठत्येव न निर्वाति। कुतः? करुणावत्त्वात् स समत्वं मैत्रीरूपम् उपलक्षणमिदम्, तेन प्रमोदादिकमपि न प्रपद्यते न कर्तृत्वेन प्राप्नोति विषयाभावात्। अस्त्येव सन्तानान्तरं विषयः तत्र सत्त्वमात्रे मैत्र्या व्रतचारिणि प्रमोदस्य क्लेशवति करुणाया निर्गुणादावुपेक्षायाश्च तेन [1]प्रपत्तेरिति चेत्, न, तत्र सर्वत्रापि[2] तेन नैरात्म्यज्ञानप्रधानेनोच्छेदस्यैव करणात्[3]। न च तद्गोचरं मैत्र्यादिकं व्योमकुसुमादिवत्। न यदा मैत्र्यादिकं तदा तत्रोच्छेदः पश्चादेव तस्य भावादिति चेत्, न, वस्तुमति पश्चादपि तद्भावस्य निषेधात्। अवस्तुमतश्च पूर्वमपि कस्तस्योच्छेदाद्विशेषः यतो [4]मैत्र्यादेर्विषयः स्यात्? अध्यारोपतः सत्त्वमिति चेत्, न, अवस्तुमति तस्यैवाभावात्। तस्यापि[5] ततो भावेऽनवस्थापत्तेः। सुगतस्यैव तदध्यारोप इति चेत्, तेन तर्हि तत्र सत्त्वमध्यारोप्य पुनस्तदुच्छेदकरणात्तदेव नाध्यारोपयितव्यम्, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" [ प्र० वार्तिकाल० १।१४७ ] इति न्यायात्। तन्न अवस्तुसतः पूर्वमपि तद्विषयत्वम्। वस्तुसत्त्वे तु कथं तत्रैव मैत्र्यादिरुच्छेदश्च विरोधात्? न विरोधः, रागादिषु क्षोपशमरूपत्वेनोच्छेदस्यैव परेषामिष्टत्वादिति चेत्, न, अभीष्टत्वेऽपि स्वसन्तानवद्वस्तुसत्युच्छेदस्याशक्यत्वात्। तन्न तदुच्छेदात्मा मोक्षः सम्भवति। कस्तर्हि वक्तव्य[6] इत्याह–

तस्मात् [ निरास्रवीभावः संसारान्मोक्ष उच्यते।
सन्तानस्यात्मनो वेति शब्दमात्रं तु भिद्यते ] ॥६४॥ इत्यादि।

तस्मात् उक्तस्य मोक्षस्यासम्भवात् निरास्रवीभावो मिथ्याज्ञानरागादेरास्रवात् निष्क्रान्तस्य[7] निष्क्रान्तस्य भावो भवनं संसारान्मोक्ष उच्यते मोक्षवेदिभिः। भवतु सन्तानस्य इति परः। तत्रोत्तरम्–आत्मनो वा इति, आत्मन एवेत्यर्थः। वाशब्दस्यावधारणार्थत्वात् आत्मन एव [8]कथञ्चित् सवेदनान्वयरूपस्य सन्तानत्वोपपत्तेः, निरन्वयज्ञानप्रवाहस्याशक्यकल्पनत्वेन निरूपितत्वात्। कस्तर्हि सन्तानात्मनोर्भेद इति चेत्? न कश्चिदर्थतः। केवलं सन्तान इति आत्मेति च 'शब्दमात्रं तु भिद्यते' इति। कथं पुनर्निरास्रवस्याप्यात्मनः परापरशरीरसञ्चाराभावः, तत्सञ्चारकारिण एव तस्य [10]प्रागुपलब्धत्वात्। पश्चादतत्कारित्वे तु परापरज्ञानपर्यायकारित्वमपि न भवेदिति स एवोच्छेदभावः पुनरप्यागत इति चेत्, न, तत्र कारणाभावात्। न हि आत्मैव [11]तत्सञ्चारे कारणम्, अपि तु अविद्यातृष्णादिरपि। तत्त्वज्ञानपरिपाकवतश्च तदभावेन सामग्रीवैकल्यान्न युक्तं तत्सञ्चारकारणत्वम्। आत्मनः परापरपरिशुद्धज्ञानपर्यायापेक्षया तु निरपेक्षत्वेन कारणत्वस्यैवोपपत्तेः न तदुच्छेदवादप्रत्यावृत्तिरपि।

न चैवं तस्यानवस्थितपरापरपरिमाण[12]स्याप्यवकल्पनम्, तत्रापि कर्मसचिवस्यैव तस्य कारणत्वात्, अधिगतनिःश्रेयसस्य च कर्माभावात्। ततः परित्यक्तकायपरिच्छिन्नतया अवस्थितमेव तस्य परिमाणम्। तदपि कर्माधिपत्येनोपनिबद्धं तदभावे कथमिति चेत्?

१ प्रतिपत्ते–आ०, ब०, प०। २ –पि न नैरा–आ०, ब०, प०। ३ –णाया न चतद्गो–आ०, ब०, प०। ४ मैत्र्यादिवि– आ०, ब०, प०। ५ –पि भावे– आ०, ब०, प०। ६ कर्तव्य इ–आ०, ब०, प०। ७ –स्य भवन आ०, ब०। –स्य निष्क्रान्तस्य भवन प०। पूर्वमनिष्क्रान्तस्य पश्चान्निष्क्रान्तस्य। ८ कथं चेत् आ०, ब०, प०। ९ –पत्तेरन्वय– आ० ब०, प०। १० प्रागवद्धत्वात् आ०, ब०, प०। ११ तत्सञ्चारिका –आ०, ब०, प०। १२ –णस्यात्यक –आ०, ब०, प०।

असत्यपि कुम्भकारे तदुपनिबद्धं घटपरिमाणमिवेति ब्रूमः, कर्मणोऽपि कुम्भकारवत् तत्र सहकारित्वस्यैव भावात्। कथमेवं कर्मकृतमसकलज्ञत्वमपि तदभावे निवर्तते इति चेत्? न, सकलज्ञानस्य संसारिण्यपि व्याप्तिज्ञानबलेन व्यवस्थापनात्। केवलं तस्य विशेषाभिमुखनिरोधानमेव कर्मभिः, तच्च तन्निवृत्तौ निवर्तत एव तद्व्यापारत्वात्[1]। ततो युक्तं मुक्तस्यावस्थितमेव परिमाणम्। न चैवं संसारिदशायाम्, तदा तत्प्रदेशोपसंहारविसर्पणपरिणामसहकारि[2]कारणस्य कर्मास्रवस्यानवस्थितत्वेन सूक्ष्मसूक्ष्मतरादिविकल्पगोचरस्यानवस्थितस्यैव तत्परिमाणस्य[3] सम्भवात्। ततो यदत्र ब्रह्ममीमांसाया सूत्रम्–"अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" [ब्र० सू० २।२।३६] इति, यच्च भाष्यं भागवतम्–"अन्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः तद्वत्पूर्वयोरपि आद्यमध्यमयोः जीवपरिमाणयोर्नित्यत्वप्रसङ्गात् अविशेषप्रसङ्गात् एकपरिमाणशरीरतैव स्यात्, न उपचितापचितशरीरान्तरप्राप्तिः" [ब्र० सू० शा० भा० २।२।३६], इति, तत्प्रतिविहितम्, असङ्ख्यातप्रदेशस्य जीवस्य कर्मवशात् प्रदेशानामुपसंहार-विसर्पणातिशयक्रमसम्भवे सति अपचयोपचयातिशयक्रमाधिष्ठानपरापरशरीरप्राप्तेरविरोधात्। यदप्यत्र दूषणं भाष्यकारस्य–"तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्येत वा न वेति वक्तव्यम्। प्रतिघाते तावत् न अनन्तावयवाः परिच्छिन्ने देशे सम्मीयेरन्, अप्रतिघातेऽपि एकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेः जीवस्याणुमात्रत्वप्रसङ्गः।" [ब्र० सू० शा० भा० २।२।३४] इति, तदपि तस्य जैनमतानभिज्ञत्वमावेदयति, न हि तत्र तेषामप्रतिघात एव, समुद्घातदशायामत्यन्तविसर्पणेन परस्परप्रतिघातवतामेव भावात्। तेषां चासङ्ख्यातलोकाकाशप्रदेशसमवायित्वेन परिच्छिन्नप्रदेशसमवायित्वाभावात्। नापि सप्रतिघाता एव उपसंहारपर्यन्तप्राप्तावेकप्रदेशसमवायित्वेनैव परमाणुरूपतया मध्ये चानेकविकल्पतया तेषामवस्थानात्। ततो युक्त[4] मुक्तस्यावस्थितपरिमाणत्वम्, अन्यथाभावे हेत्वभावात्। कथमेवं घटादिवदनित्यत्वं न भवेदिति चेत्? न, कथञ्चित् तस्येष्टत्वात्, एकान्तनित्यत्वे[5] विनश्वरैकान्तवन्निर्वाणस्यैवाभावप्रसङ्गात्। एतदेवाह–

> नित्यस्येच्छा-प्रधानादियोगोऽनित्यः किमात्मनः।
> मिथ्याज्ञानादनिर्मोक्षस्तथाऽनेकान्तविद्विषाम् ॥६५॥ इति।

य खलु यौगपरिकल्पितस्यात्मन इच्छाद्वेषादिना, साङ्ख्योपगतस्य शरीरेन्द्रियादि[6]विवर्तिना प्रधानेन, ब्रह्मवादिसम्मतस्य स्वपरविभागादिभेदावद्योतविधायिन्याऽविद्यया योगः समवायादिरूप सम्बन्धः, कीदृशस्य? नित्यस्य कूटस्थस्य, परिणामिनोऽनभ्युपगमात्, स किमनित्यः? नैव। तथा हि–

> तत्सम्बन्धस्ततोऽन्यश्चेत् तस्येति कथमुच्यताम्।
> मुक्तात्मवत् परस्माच्चेत् सम्बन्धादनवस्थितिः ॥१८२॥
> अनन्यश्चेत् स नित्यः स्यात् नित्यादव्यतिरेकतः।
> तथा च नित्या एव स्युरिच्छाद्वेषादयोऽपि ते ॥१८३॥

1 "न हि व्यापारवतो विरुद्धो व्यापारस्य सम्भवः।" –आ० टि०। 2 –कारणकर्मा –आ०, ब०, प०। 3 –णामस्य प०। 4 युक्तमवस्थित–आ०, ब०, प०। 5 –त्वेन वि–आ०, ब०, प०। 6 –दिविवर्तना प०। –दिविवर्तना –आ०, ब०।

सूचनात्। तावदिति वाक्यालङ्कारे। यच्चेतसा सन्तान सुगतानामा तिष्ठत्येव न निर्वाति। कुत ? करुणावत्त्वात् स समत्व मैत्रीरूपम् उपलक्षणमिदम् तेन प्रमोदादिकमपि न प्रपद्यते न कर्तृत्वेन प्राप्नोति विषयाभावात्। अस्त्येव सन्तानान्तर विषय तत्र सत्त्वमात्रे मैत्र्या व्रतचारिणि प्रमोदस्य क्लेशवति करुणाया निर्घृणादावुपेक्षायाश्च तेन [1]प्रपत्तेरिति चेत्, न, तत्र सर्वत्रापि[2] तेन नैरात्म्यज्ञानप्रधानेनोच्छेदस्यैव करणात्[3]। न च तद्गोचर मैत्र्यादिक व्योमकुसुमादिवत्। न यदा मैत्र्यादिक तदा तत्रोच्छेद पश्चादेव तस्य भावादिति चेत् न, वस्तुसति पश्चादपि तद्भावस्य निषेधात्। अवस्तुसतश्च पूर्वमपि कस्तस्योच्छेदाद्विशेष यतो [4]मैत्र्यादेर्विषय स्यात् ? अध्यारोपत सत्त्वमिति चेत्, न, अवस्तुसति तस्यैवाभावात्। तस्यापि[5] ततो भावेऽनवस्थापत्ते। सुगतस्यैव तदध्यारोप इति चेत्, तेन तर्हि तत्र सत्त्वमध्यारोप्य पुनस्तदुच्छेदकरणात्तदेव नाध्यारोपयितव्यम्, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" [ प्र० वार्तिकाल० १।१४७ ] इति न्यायात्। तत्र अवस्तुसत पूर्वमपि तद्विषयत्वम्। वस्तुसत्त्वे तु कथ तत्रैव मैत्र्यादिरुच्छेदस्य विरोधात् ? न विरोध, रागादिषु क्षोपशमरूपत्वेनोच्छेदस्यैव परेषामिष्टत्वादिति चेत्, न, अभीष्टत्वेऽपि स्वसन्तानवद्वस्तुसत्युच्छेदस्याशक्यत्वात्। तन्न तदुच्छेदात्मा मोक्ष सम्भवति। कस्तर्हि वक्तव्य[6] इत्याह–

तस्मात् [ निरास्रवीभावः संसारान्मोक्ष उच्यते।
सन्तानस्यात्मनो वेति शब्दमात्रं तु भिद्यते ] ॥६४॥ इत्यादि।

तस्मात् उक्तस्य मोक्षस्यासम्भवात् निरास्रवीभावो मिथ्याज्ञानरागादेरास्रवाद्निष्क्रान्तस्य[7] निष्क्रान्तस्य भावो भवन संसारान्मोक्ष उच्यते मोक्षवेदिभि। भवतु सन्तानस्य इति पर। तत्रोत्तरम्–आत्मनो वा इति, आत्मन एवेत्यर्थं। वाशब्दस्यावधारणार्थत्वात् आत्मन एव [8]कथञ्चित् संवेदनान्वयरूपस्य सन्तानस्योपपत्ते[9], निरन्वयज्ञानप्रवाहस्याशक्यकल्पनत्वेन निरूपितत्वात्। कस्तर्हि सन्तानात्मनोर्भेद इति चेत ? न कश्चिदर्थत। केवल सन्तान इति आत्मेति च 'शब्दमात्र तु भिद्यते' इति। कथ पुनर्निरास्रवस्याप्यात्मन परापरशरीरसञ्चाराभाव, तत्सञ्चारकारिण एव तस्य [10]प्राग्लब्धत्वात्। पश्चादतत्कारित्वे तु परापरज्ञानपर्यायकारित्वमपि न भवेदिति स एवोच्छेदभाव पुनरप्यागत इति चेत्, न, तत्र कारणाभावात्। न हि आत्मैव [11]तत्सञ्चारे कारणम्, अपि तु अविद्यातृष्णादिरपि। तत्त्वज्ञानपरिपाकवतश्च तदभावेन सामग्रीवैकल्यान्न युक्त तत्सञ्चारकारणत्वम्। आत्मन परापरपरिशुद्धज्ञानपर्यायापेक्षया तु निरपेक्षत्वेन कारणत्वस्यैवोपपत्ते न तदुच्छेदवादप्रत्यावृत्तिरपि।

न चैव तस्यानवस्थितपरापरपरिमाण[12]स्याप्यवकल्पनम्, तत्रापि कर्मसचिवस्यैव तस्य कारणत्वात्, अधिगतनिःश्रेयसस्य च कर्माभावात्। तत परित्यक्तकायपरिच्छिन्नतया अवस्थितमेव तस्य परिमाणम्। तदपि कर्माधिपत्येनोपनिबद्ध तदभावे कथमिति चेत् ?

---

१ प्रतिपत्ते–आ०, ब०, प०। २ –पि न नैरा–आ०, ब०, प०। ३ –णात् न चाद्गो–आ०, ब०, प०। ४ मैत्र्यादिवि– आ०, ब०, प०। ५ –पि भावे– आ०, ब०, प०। ६ कर्तव्य इ–आ०, ब०, प०। ७ –स्य भवन आ०, ब०। –स्य निष्क्रान्तस्य भवन प०। पूर्वमनिष्क्रान्तस्य पश्चान्निष्क्रान्तस्य। ८ कथं चेत् आ०, ब०, प०। ९ –पत्तेरन्वय– आ० ब०, प०। १० प्राग्लब्धत्वात् आ०, ब०, प०। ११ तत्सञ्चारिका –आ०, ब०, प०। १२ –णस्याप्यक –आ०, ब०, प०।

असत्यपि कुम्भकारे तदुपनिबद्धं घटपरिमाणमिवेति ब्रूमः, कर्मणोऽपि कुम्भकारवत् तत्र सहकारित्वस्यैव भावात्। कथमेवं कर्मकृतममकल्पज्ञत्वमपि तदभावे निवर्तते इति चेत्, ? न, सकलज्ञानस्य संसारिण्यपि व्याप्तिज्ञानबलेन व्यवस्थापनात्। केवलं तस्य विशेषाभिमुखनिरोधानमेव कर्मेभि, तच्च तन्निवृत्तौ निवर्तत एव तद्व्यापारत्वात्[1]। ततो युक्तं मुक्तस्यावस्थितमेव परिमाणम्। न चैवं समारिदशायाम्, तदा तत्प्रदेशोपसंहारविसर्पणपरिणामसहकारिकारणस्य कर्मास्रवस्यानवस्थितत्वेन सूक्ष्मसूक्ष्मतरादिविकल्पगोचरस्यानवस्थितस्यैव तत्परिमाणस्य[2] सम्भवात्। ततो यदत्र ब्रह्ममीमांसायां सूत्रम्–"अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" [ ब्र० सू० २।२।३६ ] इति, यच्च भाष्यं भागवतम्–"अन्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः तद्वत्पूर्वयोरपि आद्यमध्यमयोः जीवपरिमाणयोर्नित्यत्वप्रसङ्गात् अविशेषप्रसङ्गात् एकपरिमाणशरीरत्वं स्यात्, न उपचितापचितशरीरान्तरप्राप्तिः" [ ब्र० सू० शा० भा० २।२।३६ ], इति, तत्प्रतिविहितम्, असङ्ख्यातप्रदेशस्य जीवस्य कर्मवशात् प्रदेशानामुपसंहार-विसर्पणातिशयक्रमसम्भवे सति अपचयोपचयातिशयक्रमाधिष्ठानपरापरशरीरप्राप्तेरविरोधात्। यदप्यत्र दूषणं भाष्यकारस्य–"तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्येत वा न वेति वक्तव्यम्। प्रतिघाते तावत् न अनन्तावयवाः परिच्छिन्ने देशे सम्मीयेरन् अप्रतिघातेऽपि एकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथिमानुपपत्तेः जीवस्याणुमात्रत्वप्रसङ्गः।" [ब्र० सू० शा० भा० २।२।३४] इति, तदपि तस्य जैनमतानभिज्ञत्वमावेदयति, न हि तत्र तेषामप्रतिघात एव, समुद्घातदशायामत्यन्तविसर्पणेन परस्परप्रतिघातवतामेव भावात्। तेषां नासङ्ख्यातलोकाकाशप्रदेशसमवायित्वेन परिच्छिन्नप्रदेशसमवायित्वाभावात्। नापि सप्रतिघाता एव उपसंहारपर्यन्तप्राप्तावेकप्रदेशसमवायित्वेनैव परमाणुरूपतया मध्ये चानेकविकल्पतया तेषामवस्थानात्। ततो युक्त[3] मुक्तस्यावस्थितपरिमाणत्वम्, अन्यथाभावे हेत्वभावात्। कथमेवं घटादिवदनित्यत्वं न भवेदिति चेत् ? न, कथञ्चित् तस्येष्टत्वात्, एकान्तनित्यत्वे विनश्वरैकान्तवन्निर्भासस्यैवाभावप्रसङ्गात्। एतदेवाह–

नित्यस्येच्छा-प्रधानादियोगोऽनित्यः किमात्मनः।
मिथ्याज्ञानादनिर्मोक्षस्तथाऽनेकान्तविद्विषाम् ॥६५॥ इति।

य खलु योगपरिकल्पितस्यात्मन इच्छाद्वेषादिना, साङ्ख्योपगतस्य शरीरेन्द्रियादि[5]-विवर्तिना प्रधानेन, ब्रह्मवादिसम्मतस्य स्वपरविभागादिभेदावद्योतविधायिन्याऽविद्यया योगः समवायादिरूपः सम्बन्धः, कीदृशस्य ? नित्यस्य कूटस्थस्य, परिणामिनोऽनभ्युपगमात्, स किमनित्यः ? नैव। तथा हि–

तत्सम्बन्धस्ततोऽन्यश्चेत् तस्येति कथमुच्यताम्।
मुक्तात्मवत् परस्माच्चेत् सम्बन्धादनवस्थिति ॥१८२२॥
अनन्यश्चेत् स नित्यः स्यात् नित्यादव्यतिरेकतः।
तथा च नित्या एव स्युरिच्छाद्वेषादयोऽपि ते ॥१८ ३॥

१ "न हि व्यापारवतो विवृत्तौ व्यापारस्य सम्भवः।" –ता० टि०। २ –व्यापारकर्मा –प्रा०, ब०, प०। ३ –माणस्य प०। ४ युक्तमवस्थित–प्रा०, ब०, प०। ५ –त्वेन वि–प्रा०, ब०, प०। ६ –रिनिवर्तना प०। –रिविवर्तना –प्रा०, ब०।

सम्बन्धे सति यत्तेषा तद्वता न निवर्तनम् ।
निवर्तने वा सम्बन्धो विना तं स कथ भवेत् ॥१८२४॥

ततो नित्या एव ते। **तथा च अनेकान्तविद्विषामेकान्तवादिना** सम्बन्धिन आत्मनो जीवस्या**निर्मोक्षो** निश्रेयसाभाव ससार एव स्यात्। कुत ? **मिथ्याज्ञानात्** तत्त्वे अतत्त्वज्ञानात्, तन्निबन्धनत्वात् ससारस्य, तस्य चेच्छादिवन्नित्यत्वात्। तदनित्यत्वमिच्छता चात्मनोऽपि तत्सम्बन्धात्मन कथञ्चिदनित्यत्वमेषितव्यम, अन्यथाऽनुपपत्ते। तत परिणामात्मन एवात्मनो मोक्ष, हेतुफलभावस्य तत्रैव सम्भवात् नैकान्तनित्यादिस्वभावस्य, विपर्ययात्। तथा च व्यवस्थित सर्वभावेषु क्रमाक्रमानेकान्तयोर्मार्गितद्विषययोश्च चतुष्टयस्य प्रतिपादनात् प्रवचन प्रमाणमिति। तच्च स्वविषये सप्तभङ्ग्या प्रवर्तत इति तद्विनिश्चय कुर्वन्नाह–

**द्रव्यपर्यायसामान्यविशेषप्रविभागत ।**
**स्याद्विधिप्रतिषेधाभ्यां सप्तभङ्गी प्रवर्तते ॥६६॥** इति ।

*द्रव्यमन्वयिरूप* **पर्याया** व्यावृत्तिधर्माण **सामान्य** [1]सदृश परिणामो **विशेषो** विसदृशस्तया **प्रविभागस्तेन यो स्यात्** कथञ्चिद्विवक्षितधर्मस्य **विधिप्रतिषेधौ** भावाभावौ ताभ्या **सप्तभङ्गी** सप्ताना भङ्गाना समाहार तद्वचसि **प्रवर्तत** इति। विधिप्रतिषेधयोर्द्वित्वात् तदुपाश्रयौ भङ्गावपि द्वावेव स्याता तत्कथ ते सप्तेति चेत्, न, तयोरेव प्रति[2]पत्तु प्रत्येकोभयादिविकल्पेन सप्तधा प्रतिपित्साया तथा [3]तत्प्रतिपादिनो वचनस्यापि सप्तविषयत्वोपपत्ते। तथा हि जीवे धर्मिणि त इमे तद्विध्यादिविषया सप्त भङ्गा–स्यादस्त्येव जीव, स्यान्नास्त्येव, स्यादस्ति च नास्ति चैव स्यादवक्तव्य एव, स्यादस्ति अवक्तव्य एव, स्यान्नास्ति अवक्तव्य एव, स्यादस्ति नास्ति चावक्तव्य एव इति। तत्र प्रथमद्वितीयौ तद्भावाभावयो प्रत्येक प्रतिपित्सायाम्, तृतीयस्तदुभयजिज्ञासायाम्। तदेवाह–

**तदतद्वस्तुभेदेन वाचो वृत्तेस्तथोभयम् ।** इति ।

तद्वास्तित्वम् अतच्च नास्तित्व ताभ्या यो वस्तुनो जीवस्य भेद कथञ्चिन्नानात्व तेन **वाच** प्रत्येक तत्प्रतिपादिन्या श्रुतेर्वृत्तेराद्यौ भङ्गौ तथा तेनोभय[4]वेदनप्रकारेण वाचो वृत्तेरुभय तृतीयो भङ्ग इति यावत्। चतुर्थस्तु युगपत्तत्प्रतिपित्साया वचनप्रवृत्तेरसम्भवात्, तदेवाह–

**तदतद्वागवृत्तेश्च [सह तद्वागवृत्तिना]॥६७॥** इति ।

तदतदोर्या **वाच** वचनस्य **अवृत्ति** यौगपद्येन अन्यथानुपपत्ते तस्या, **च**ेति समुच्चये। पञ्चमादिभङ्गत्रय तु प्रथमादे प्रत्येक जिज्ञासया चतुर्थेन सम्मिलनात्। तदेव निवेदयति–'सह तद्वागवृत्तिना' इति। वृत्तेरिति वर्तते। तदिति च निपातस्तेषा[5]मित्यर्थे। तदयमर्थ–वाग(ग्)वचनम् अवृत्तिरविद्यमान[6]वृत्तिर्यत्रावक्तव्यविषये, अनेन सह तेषा स्यादस्त्यादीना वृत्तेरिति। तथाहि प्रथमस्य चतुर्थेन सह वृत्तौ [7]पञ्चमो भङ्गो, द्वितीयस्य षष्ठ, तृतीयस्य सप्तम। न चैव भङ्गान्तरपरिकल्पन सम्भवति यत "सप्तभङ्गीप्रसादेन शतभङ्ग्यपि जायते" [ ] इत्युपालभ्येत। तथाहि–

१ सदृशपरि–आ०, ब०, प०। २–पत्त्रा प्रत्ये–आ०, ब०, प०। ३ तत्प्रतिपादि–आ०, ब०, प०। ४–वेदिनं प्र–आ०, ब०, प०। ५–पामनस्ते–आ०, ब०, प०। ६–मानावृत्ति–आ०, ब०, प०। ७ पञ्चमम–आ०, ब०, प०।

प्रथमस्य द्वितीयेन मिलने तृतीयत्वम्, तृतीयेन पौनरुक्त्यमेवस्य अस्तिपदस्याधिक्यात्। चतुर्थेन पञ्चमत्वम्, पञ्चमसप्तमाभ्यां पौनरुक्त्यं पूर्ववत्। षष्ठेन सप्तमत्वम्। एवं द्वितीयादावपि वक्तव्यम्। तन्न भङ्गान्तरपरिकल्पनं तन्निबन्धनस्य प्रतिपित्साप्रकारस्य सप्तधैव स्थितत्वात्। एवं प्रमेयत्ववस्तुत्वामूर्त्तत्वादिसप्रत्यनीकापरधर्मापेक्षयाप्यात्मनि पुद्गलादावपि तदस्तित्वनास्तित्वादिधर्मविकल्पोपनिबन्धना सप्तभङ्गीसमालिङ्गिता वचनप्रवृत्तिः प्रतिपत्तव्या।

तत्र किमर्थोऽयं स्यादेवकारप्रयोगः विनापि तेन भङ्गविकल्पानामुपपत्तेः इति चेत्? उच्यते–यदि 'अस्ति जीवः' इत्यस्तिपदमनेवकारप्रयोगम्, अनुक्तसम[1] भवेत् अप्रवृत्तिनिमित्तत्वात्। नहि जीवास्तित्वं तदभाव[2]व्यवच्छेदेनाप्रतिपाद[3]यतस्तस्य जीवे तत्प्रयोजनकामिनं प्रति प्रवृत्त्यङ्गत्वम्, जीवस्यैव तदानीमप्रतिपन्नत्वात्। तदेव हि प्रतिपन्नं नाम यदभावव्यवच्छेदेन[4]। न चानेवकारात् पदात्तथा तत्प्रतिपत्तिः। सति चैवकार[5]-प्रयोगे जीवस्यास्तित्व एवावधारणादैकान्तिकी तदभावव्यवच्छित्तिरिति। 'स्वरूपादिनेव पररूपादिनापि तत्र भाव एव' इति ब्रह्मवादप्रत्युज्जीवने स्यादिति निपातस्यापि प्रयोगः। तेन कथञ्चित् स्वरूपादिनैव तदस्तित्व[6]मवद्योतयता पररूपादिना तद्व्यवच्छेदात् ब्रह्मवाद[7]-प्रत्याख्यानोपपत्तेः। तथा नास्तीत्यपि पदमनेवकारमनुक्तकल्पमेव, भावव्यवच्छेदेन ततोऽप्य-भावस्याप्रतिपत्तेः। एवं भङ्गान्तरेऽपि प्रत्यनीकव्यवच्छेदाभावादनुक्तकल्पत्वमनेवकारत्वे। ततो नास्त्येवेत्यवधारणे जीवस्य नास्तित्व[8] एव नियमात् पररूपादिनेव स्वरूपादिनाप्य-भावापत्तौ शून्यवादस्याविर्भावे तन्निवर्त्तनं स्यात्पदात्। स्यादेव हि तस्याभावे नियमो न सर्वथेति। तथास्त्येव नास्त्येवेत्यनोभयथाप्य[9]स्तित्वनास्तित्वयोरवधारणबलात् प्राप्तौ सततस्तन्निवर्त्तनमनुवर्त्तव्यम्। अवक्तव्य एवेत्यत्रापि सर्वथा तस्यावक्तव्यतायाः[10] नियमप्राप्तिः स्यात्पदेन प्रतिक्षेप्तव्या। तथा च प्रतिषिद्धमेतत्–"नार्थान् शब्दाः स्पृशन्त्यमी" [ ] इति। तेषामेकान्ततोऽर्थासंस्पर्शित्वे अस्यापि वचनस्य वैयर्थ्येन तद्वादिनो निग्रहापत्तेः। तदसंस्पर्शित्वप्रतिपादनार्थत्वे च प्रतिज्ञाभङ्गदोषप्रसङ्गात्। एकान्ता-वाच्यत्वं च भावानां श्रायसलोपमापादयति। श्रायसं हि प्रेक्षावतां तदुपायानुष्ठानात्। न च स्वरसतस्तेषां तदुपायप्रतिपत्तिः आप्तागमपरिकल्पनावैकल्यप्रसङ्गात्। आगमाच्च तदवाच्यत्वे तस्याप्रतिपत्तेः। "ततो लुप्यत एव मुमुक्षूणां मोक्षावाप्तिरूपायाभियोगासम्भवात्[11]। तदुक्तम्–"अवाच्यता श्रायसलोपहेतु" [ युक्त्यनु॰ श्लो॰ ४४ ] इति। तत्र "तरति शोक-मात्मवित्" [ छा॰ ७।१।३ ] "ब्रह्मविदाप्नोति परम्" [ तै॰ २।१।१] इत्यादेरागमादेव निःश्रेयसनिबन्धनमात्मवेदनमधिगन्तुकामेन नैकान्तेनात्मावाच्यत्वमध्यवसातव्यम्। अतः प्रत्याख्यातमेतत्–

---

१ –क्रमसम्भवे –आ॰, ब॰, प॰, । २ –मानेन व्य –आ॰, ब॰, प॰। ३ –दन यत –आ॰, ब॰, प॰। ४ "प्रतिपन्नमिति प्रागुक्तस्य पदस्यात्रापि सम्बन्धः।" –ता॰ टि॰। ५ –कारप्रयो –आ॰, ब॰, प॰। ६ –मवद्यो –आ॰, ब॰, ।–मप्यद्यो –ब॰। ७ "शाक्यशार्दूलो महाविराग्यैवमभ्युपगमो ब्रह्मवादिनाऽप्यनः पररूपादिनास्तित्वमभ्युपगतम्। अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो, विवर्ता यस्यैते वियदनिल-तेजोऽबवनयः। यतस्त्वाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम्।" –ता॰ टि॰। ८ –स्त्यमेव नि –आ॰, ब॰, प॰। ९ –प्यस्तित्वयोर –आ॰, ब॰, प॰। १० –तायां निय– आ॰, ब॰, प॰। ११ ततोऽप्यत एव आ॰, ब॰, प॰।

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" [ तै० २।४-५ ] इति । ततो युगपत्सदसत्त्वाभ्यां [1]तस्य वक्तुमशक्यत्वात् अवाच्यत्वम्, न क्रमेण नापि धर्मान्तरैः, युगपदपि पदद्वयेनैव । एकपदेन तु शतृशानचोः सच्छब्देनेव सकृदपि ताभ्यां तस्य वचनसम्भवादिति स्याद्वादस्यायमुल्लासः । तथा 'अस्ति अवक्तव्य एव' इत्यत्र अस्त्येवेति वचनात् स्वरूपादिवत् पररूपादिनाऽपि अस्तित्वस्य, अवक्तव्य एवेत्यभिधानाच्च तयोः क्रमेणेव अक्रमेणापि अवक्तव्यत्वस्य प्रसक्तौ स्यात्पदेन प्रत्यवस्थापनम् । तेन स्वरूपादिनैवास्तित्वम्, यौगपद्येनैवावाच्यत्वं चावद्योतयता विपर्ययेणास्तित्वावाच्यत्वयोः प्रत्याख्यानात् । एवमुत्तरत्रापि वक्तव्यम् । ततो युक्तो भङ्गविकल्पेषु स्यात्कारस्य प्रयोगः फलवत्त्वात् । नन्वेवं घटमानयेत्यादेर्लौकिक[2]स्य शास्त्रीयस्य च "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः"[11] [ त० सू० १।१ ] इत्यादेर्वचनमार्ग[3]स्य स्यादेवकारप्रयोगवैकल्यात्तत्पक्षभावी दोषः प्राप्नोतीति चेत्, सत्यम्, यदि तदापि तदर्थस्य [4]प्रतिपत्तिर्न भवेत् । न चैवम्, प्रकरणादिना तदापि [5]तद्भावात् । तदेवाह–

**प्रयोगविरहे जातु पदस्यार्थः प्रतीयते । इति ।**

जातु कदाचित् प्रकरणादिसन्निधिसमये **पदस्य** स्यादित्यादेः **प्रयोगस्य विरहो**ऽनुच्चारणं तस्मिन् सति **अर्थः** स्यात्कारादेरभि[6]धेयः अतिप्रसङ्गानुक्तकल्पत्वनिवृत्तिलक्षणः **प्रतीयते** प्रकरणादिसहायादेव शब्दादवगम्यते । तत्र तत्र तद्विरहभाविदोषः तद्विरहेऽप्यर्थ[7]त एव तस्य निवर्तनात् तदर्थस्य तद्विरहे प्रतीतेः । कथमिदानीं तस्य तदर्थत्वम् ? अन्यतः प्रतीयमानत्वादिति चेत्, किमेतावता तदर्थत्वाभावः ? क्वचित्सैन्धवशब्दादवगतस्यापि लवणस्य लवणशब्दार्थत्वानिवृत्तेः । ततो यथा प्रकरणादिवशादवधृतस्यापि लवणस्य लवणशब्दार्थत्वं तच्छब्दस्य तत्र प्रयोगार्हत्वेन शब्दतदर्थतत्त्ववेदिभिरभ्यनुज्ञानात्, तथातिप्रसङ्गादिनिवर्तनस्यापि स्यात्काराद्यर्थत्वं तदविशेषात् । एतदेवाह–

**स हि शब्दार्थतत्त्वज्ञैस्तस्येति व्यपदिश्यते ॥६८॥ इति ।**

स तन्निवृत्तिरूपोऽर्थो **हि** यस्मात् **तस्य** स्यादित्यादेः पदस्य **इति व्यपदिश्यते शब्दार्थतत्त्वज्ञैः** शब्दार्थयोस्तत्त्वं वाच्यवाचकभावं जानद्भिर्न बालाबलादिभिः तेषां गतानुगतिप्रवृत्तानां तद्[8]व्यपदेशशक्त्यभावात् । तस्मात् स तस्येति प्रतिपत्तव्यम् अन्यथापि 'तद्व्यपदेशनिबन्धनत्वाच्छब्दार्थसम्बन्धप्रतिपत्तेरिति मन्यते । कुतः पुनरयं नियमः सर्वत्र कुतश्चित् प्रतिपत्तव्य एव स्यात्कारादेरर्थ इति चेत् ? उक्तमत्र–'अन्यथातिप्रसङ्गादिनिवर्तनस्यासम्भवात्' इति । तथाहि–सम्यग्दर्शनादिवाक्ये [9]यद्यनवधारणं तदा सम्यग्दर्शनादिरेव नापरो मोक्षमार्ग इत्यन्ययोगव्यवच्छेदस्य, स च [10]मोक्षस्य मार्ग एव नामार्ग इत्ययोगव्युदासस्य, तस्य मार्गो भवत्येवेत्यत्यन्तायोगव्यपोहस्य चाप्रतिवेदनादनुक्तकल्पं वाक्यं भवेत्, स्वार्थस्यास्वार्थव्यवच्छेदेनानभिधानात् । ततो विद्यत एव नियमादेवकारार्थस्य प्रतिपत्तिः, व्यवच्छेदस्यैव तदर्थत्वात् । तथा स यदि मार्ग एव मोक्षस्य सर्वदा क्व स्यात् परिणति-

---

१ तस्यावक्तुम- आ०, ब०, प० । २ -कवाक्यस्य आ०, ब०, प० । ३ -मार्गस्य स्यादेव - आ०, ब०, प० । ४ -पत्तिर्न चैव आ०, ब०, प० । ५ -तद्भावस्तदे -आ०, ब०, प० । ६ धेयातिप्रसङ्गादुक्त- आ०, ब० । ७ -प्यर्थ एव आ०, ब० प० । ८ 'तद्व्यपदेशता' -ता० टि० । ९ -सङ्गादेर्निव -आ, ब०, प० । १० यद्यव- आ०, ब० । यदव- प० । ११ मोक्षमार्ग प० ।

विशेषादेरपेक्षणीयस्य सर्वदाप्यभावादिति [1]चेत्, सिद्धा तर्हि स्यात्पदस्यापि नियमतो विषयप्रतिपत्तिः, अपेक्षणीयस्य तद्विशेषादेरेव तद्विषयत्वात्। तदत्रापि सम्यग्दर्शनादिर्मोक्षस्य स्यान्मार्ग एव, स्यादमार्ग एव, स्यादुभय एव, स्यादवक्तव्य एव, स्यान्मार्गोऽवक्तव्य एव, स्यादमार्गोऽवक्तव्य एव, स्यादुभयोऽवक्तव्य एव, इति सप्तभङ्गी प्रतिपत्तव्या। [3]तथा अन्ययोगात्यन्तायोगव्यवच्छेदेऽपि[4]। इति सप्तभङ्गी दुरवगाहो वचनमार्गः सम्भवति सर्वत्र स्यादेवकारयोरर्थतः सन्निधिप्रतीतेः। यदि पुनः प्रकरणादेरप्यवधारणादिप्रतीतिः तर्हि स एवास्तु तस्य सर्वत्रापि सुलभत्वात्, किं स्यात्कारादेः प्रतीतार्थस्य प्रयोगेणेति चेत्, नाय-यमुपालम्भः, लोके प्रतीतार्थानामपि प्रयोगप्रतीतेः। इदमेवाह–

अहमस्मीति वाक्यादौ सिद्धावन्यतरस्थिते।
उभयोक्तिवदत्रोक्तावुपालम्भो विरुद्ध्यते ॥६९॥ इति।

अहमस्मि त्वं भवसि इत्यादौ [5]वाक्ये येयम्[6] अन्यतरस्य 'अहम्' इत्यस्य 'अस्मि' इत्यस्य वा प्रयोज्यतया स्थितिः तत एव सिद्धौ अर्थप्रतीतौ येयम्[7] उभयोक्तिः तद्वत् अत्र अस्याः 'स्यात्कारादिविषयायाम्[8] उक्तौ पौनरुक्त्येनोपालम्भो विरुद्ध्यत इति। प्रकारान्तरेणापि स विरुद्ध्यत इति दर्शयति।

यदि केचित् प्रवक्तारो वृत्तिवाक्यार्थयोरपि।
सूत्रेष्वेव तयोरुक्तौ त्रैलोक्यं किन्न वर्तते ॥ इति।

यदि नाम केचित् प्रज्ञातिशयशालिनः पुरुषाः सूत्रेष्वेव वृत्त्यर्थस्य वाक्यार्थस्य च वार्तिकार्थस्य प्रतिपादयितारः किं तावतैव सर्वो जनः तयोः वृत्तिवाक्ययोः उक्तौ न वर्त्तते वर्त्तत एव, वृत्त्यादिकरणस्य तथापि प्रतीतेः। सूत्रादेव तदर्थमधिगन्तुमशक्नुवतान् प्रति तत्करणं फलवदेव,

"सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ वार्तिकेऽपि च।
उदाहरणं [9]मन्दस्य प्रत्युदाहरणं पुनः ॥" [ ]

इति वचनादिति चेत्, तर्हि स्यात्कारादिप्रयोगोऽपि सफल एव तद्विषयेऽपि मन्दमतीनां भावात्। एतदेवाह–

केवलं प्रतिपत्तारः स्याद्वादे जडवृत्तयः। इति।

प्रतिपत्तारः सौगतादयः स्याद्वादे तदर्थेऽनेकान्तरूपे जडवृत्तयो जडव्यापारा न मनागप्यजडवृत्तय इति केवलार्थः। ततस्तान्प्रति सफल एव निपातप्रयोग इति मन्यते। परत्रापि जडवृत्तय इति दर्शयति–

जातितद्वदपोहादिवादं च न हि जानते ॥७०॥ इति।

जातिः सामान्यं तद्वान् विशेषः तावेवापोहस्वभावत्वादपोहः स आदिर्यस्य क्षण-भङ्गादेस्तस्य वादं च न हि जानते न प्रतियन्ति[10]। तात्पर्यमत्र यथा तदपोहादिकं[11]मपरोपदेश-

---

१ चेत्तर्हि आ०, ब०, प०। २ –स्यात्पदस्यापि आ०, ब०, प०। ३ "अयोगान्ययव्यवच्छेदे उक्तप्रकारेण" –ता० टि०। ४ "सप्तभङ्गी प्रतिपत्तव्येति सम्बन्धः" –ता० टि०। ५ "भो" –ता० टि०। ६ योयमन्य-तरस्य– आ०, ब०, प०। ७ योऽयमु– आ०, ब०, प०। ८ स्यात्कारादि– आ०, ब०, प०। ९ –मन्दस्य ता०। १० प्रतीयन्तेति आ०, ब०, प०। ११ –दिमप- आ०, ब०, प०।

मवगच्छतां[1] व्याख्यातॄन् प्रति विफलमपि तद्वादप्रणयनं तदवगमविकलप्रतिपन्नपेक्षया सफलं तथा स्यात्कारादिनिपातप्रयोगोऽपि ।

के तर्हि स्याद्वादमनुरुन्धते यदि तत्र सौगतादयो जडवृत्तय इति चेत् ? अत्राह—

सर्वथैकान्तविश्लेषतत्त्वमार्गव्यवस्थिताः ।
व्याख्यातारो विवक्षातः स्याद्वादमनुरुन्धते ॥७१॥ इति ।

व्याख्यातारः परप्रत्यायनप्रवृत्ताः स्याद्वादं स्याच्छब्दम्, उपलक्षणमिदं तेनैवकारमपि अनुरुन्धते स्वीकुर्वन्ति विवक्षातो विवक्षया तेन विषयावद्योतनेच्छया । कीदृशास्ते ? सर्वथैकान्तविश्लेषो व्यपोहो यस्मिंस्तत्त्वे[2] तस्य[3] मार्गोऽन्वेषणं प्रत्यक्षादिरूपः तत्र व्यवस्थिता इति । जात्यन्तरं तत्त्वमेकान्तव्यवच्छेदेन प्रत्यक्षादिना निश्चिन्वन्तो व्याख्यातारः तदवद्योतनाय स्याद्वादमवलम्बन्त इति यावत् ।

प्रमाणप्रसिद्धत्वादेवानेकान्ते संशयादिदोषप्रसङ्गोऽपि प्रेक्षावता नावतरतीत्याह—

अनेकलक्षणार्थस्य प्रसिद्धस्याभिधानतः ।
संशयादिप्रसङ्गः किं स्याद्वादेऽमूढचेतसः ॥७२॥ इति ।

संशय आदिर्यस्य विरोधादेस्तस्य प्रसङ्गः किं नैव । क्व कस्य ? स्याद्वादेऽनेकान्तवादे अमूढचेतसः प्रबुद्धबुद्धेः । कुतः स न ? इति चेत्, अनेकलक्षणस्य क्रमाक्रमानेकरूपस्य[4] अर्थस्य चेतनेतरवस्तुनः प्रसिद्धस्य प्रमाणनिर्णीतस्य अभिधानात् स्याद्वादेन[5] प्रतिपादनात् । ततस्तत्र संशयादिकमुपलोकयन्नपि तादृशः अमूढचेता न भवतीति मन्यते । हेयोपादेयतत्त्वमेव सोपायं प्रयत्नतः प्रतिपादयितव्यं पुरुषार्थोपयोगात्[6] किमनेकान्तप्रतिपादनेन विपर्ययात् इति चेत् ? नास्ति विपर्ययः सर्वस्यापि वस्तुनस्तत्त्वस्यानेकान्तपर्यवसितत्वज्ञापनेन एकान्तशासनेषु हेयादितत्त्वसत्त्वा[7]भावनिवेदनार्थत्वात् तत्प्रतिपादनस्य । तदेवाह—

साकल्येनेह सामान्यविशेषपरिणामधीः ।
मिथ्यैकान्तप्रवादेभ्यो विदुषो विनिवर्तयेत् ॥७३॥ इति ।

मिथ्यैकान्ताः सर्वथैकान्ताः तेषां प्रवादाः[8] 'सर्वमपि तत्त्वं सामान्यरूपमेव विशेषात्मैव परस्परविविक्तोभयस्वभावमेव[9] विचारायोगादुपप्लुतमेव सांवृतमेव' इत्यादयो वचनप्रबन्धाः[10] तेभ्यो विदुषो विद्वज्जनान्[11] विनिवर्तयेत् निःश्रेयसार्थितया तत्प्रतिपादितोपायानुष्ठाने प्रवृत्तान्[12] प्रतिनिवर्तयेत् । का पुनरेवमिति चेत् ? सामान्यविशेषपरिणामधीरेव[13] । सामान्यं द्विविधं तद्भवसामान्यं[14] तिर्यक्सामान्यं च, विशेषोऽपि द्विविधः एकद्रव्यगतोऽनेकद्रव्यगतश्च[15] तावेव परिणामस्तस्य धीः[16] बुद्धिः । क्व सा तादृशीति चेत् ? इह अस्मिन् चेतनेतरात्मन्यर्थकलापे । कथम् ? साकल्येन सामस्त्येन । तदनेनानुमानिकी तद्बुद्धिरिति[17] प्रतिपादितं भवति,

---

१ गच्छतो आ० ब० प० । २ स्तत्त्वे स तस्य आ०, ब०, प० । ३ तस्य आ०, ब०, प० । ४ द्रष्टव्यम्–हेतुवि० टी० पृ० ९८, १०४ । अष्ट० टि० पृ० १८२ । ५ –न्तप्रवादेन आ०, ब०, प० । ६ 'पुरुषार्थानुपयोगात्' –सा० टि० । ७ –तत्त्वसत्त्वा– आ०, ब०, प० । ८ प्रवाद आ०, ब०, प० । ९ –वात्मभावमेव आ०, ब० प० । १० –प्रसङ्गा आ०, ब०, प० । ११ –नाद्विनिव– आ०, ब०, प० । १२ प्रवृत्ता प्रवर्त– आ०, ब०, प० । १३ –धीरेव आ०, ब०, प० । १४ तद्भाव सा– आ०, ब० प०, । १५ –तश्च परि– आ०, ब०, प० । १६ बुद्धे आ०, ब०, प० । १७ तद्बुद्धेरिति आ०, ब०, प० ।

प्रत्यक्षस्य निरवशेषसूक्ष्मान्तरितदूरार्थेषु [1]तद्विषयस्यास्मदादीनामसम्भवात् । अनुमानसम्भवस्तु सुनिश्चित[2]तत्त्वपरिणामा[3]विनाभावस्वभावस्य [4]सत्त्वकृतकत्वादेरशेष[5]व्यापिवस्तुधर्मस्य [6]सुविवेचितप्रामाण्यतर्कज्ञानबलेन तत्र सर्वत्राप्यध्यवसायात् । [7]तदियमानुमानिकी बुद्धि सर्वत्रसामान्यविशेषपरिणाम तद्विपर्ययव्युदासेन व्यवस्थापयन्ती सर्वथैकान्तशासनानां मिथ्यात्वनिवेदनेन तद्विषयमादरं प्रेक्षावता प्रतिक्षिपतीति [8]न पुरुषार्थानुयोग, तत्परिणामस्य तदात्मन एव श्रेयोमार्गस्योपपत्ते ।

कथं पुन शासनत्वाविशेषेऽपि शासनान्तरपरिहारेण भगवदर्हच्छासनस्यैव प्रामाण्यमित्यारेकायां तथा तद्दर्शयन्नाह–

**आप्तवादः स एवायं यत्रार्थाः समवायिनः ।**
**प्रमाणमविसंवादात् [ प्रणेता यदि शङ्क्यते ] ॥७४॥ इति ।**

यत्र यस्मिन् अर्था अनेकात्मपरिणाममार्गतद्विषयलक्षणा समवायिनोऽभिधेयत्वेन [9]सम्बद्धा स एवायमाप्तवाद आगम प्रमाणं नापर । कुत एतत् ? अविसंवादादस्यैव इति विभक्तिव्यत्ययेन सम्बन्ध निरूपितश्चान्ययोगव्यवच्छेदेना[10]ऽस्याविसंवाद । स्यान्मतम्–भागासिद्धो हेतु प्रत्यक्षानुमानविषय एव भावात्, न देशादिविप्रकृष्टेष्वत्यन्तपरोक्षेषु इति, तन्न, तत्रापि तदनुसारेण तस्य प्रतिपत्ते । नहि प्रत्यक्षादिविषयमशेषमप्यविसंवादाधिष्ठानमादिशत पुरुषस्य तदपरत्रान्यथोपदेशे कारणमस्ति [11]रागादेरभावात् । भावे तद्विषयेऽपि तन्नियमाभावप्रसङ्गात्, रागादिमता तत्रापि[12] प्रायोविप्रलम्भस्योपलम्भात् । अथवा कस्मादयमेवागम [13]आप्तवादो न प्रत्यागमोपि ? इत्यनेदमाह–आप्तवाद इत्यादि । [14]यत्रार्था निरूपितरूपा समवायिन स एवायमाप्तस्य रागादिदोषविकलस्य वादो नापर । कस्मात् ? अयमेव प्रमाण यत इति । न ह्यनाप्तवादत्वेऽस्य प्रामाण्यम्, अपौरुषेयत्वस्य प्रत्याख्यानात्, प्रामाण्यमपि अविसंवादात् । न हि प्रत्यागमेषु तल्लेशोऽप्यस्ति । ततोऽनाप्त एव सुगतादि. विसंवादिवचनत्वादुन्मत्तादिवत् । न चेदमसिद्धम्, प्रत्यक्षादिनिबद्धनिश्चयेऽपि बहिर्भावहेतुफलभावतत्परिणामतत्त्वादो तद्वचनस्यान्यथैव भावादिति निरूपितत्वान्नेह प्रतन्यते ।

कथं पुन दृष्टागमविरोधविकलतया प्रमाणमप्यनेनाप्तवादो विगलितनिखिलदोषकलापस्य सकलवेदिन एवेति निश्चय ? सम्भवति हि तदपरस्यापि तादृशी वचनवृत्ति, सरागाणामपि वीतरागवद्व्यवहारोपपत्ते । कथं वा यथोक्तगुणोपपन्नोऽपि क्वचिन्मिथ्यावचनानामप्रणेतैवेति निर्णयो वीतरागाणामपि सरागवच्चेष्टासम्भवात् ? एतदेव दर्शयति–

**प्रणेता यदि शङ्क्यते । इति ।**

प्रणेता प्रवचनस्य प्रवक्ता शङ्क्यते दोषवानपि तस्य प्रणेता दोषविकलोऽपि भवति मिथ्यावादीति सशय्यते । यदि इति पराभिप्रायद्योतने । तत्र प्रथमशङ्कायामुत्तरमाह–

**आरम्भो योऽस्य प्रवक्तायमपरालीढसत्पथः । इति ।**

---

१ 'यत्र.'–ता० टि० । वहुव्रीहिसमास इत्यर्थं । २ –त्वपरिणा– आ०, ब०, प० । ३ –मात्रिना-भाव–आ०, ब०, प० । ४ सत्वकृत– आ०, ब०, प० । ५ –पस्यापि आ०, ब०, प० । ६ सुविवेचनस्येव प्रा–आ०, ब०, प० । ७ तदीय– आ०, ब०, प० । 'तत् इयमिति पदच्छेद '–ता० टि० । ८ नापुर – आ०, ब०, प० । ९ सम्बन्धाः आ०, ब०, प० । १० –दै सामान्यावि–आ०, ब० । –दे मान्यवि–प० । ११ 'तस्यानृतकारण नास्ति –ता० टि० । १२–पि यस्मिन्नर्था प्रायो आ०, ब०, प० । १३ –म आप्तासवादो आ०, ब०, प० । १४ यत्रानिरूपित– आ०, ब०, प० ।

य आत्मा पुरुष अस्य वचनस्य सम्बन्धी कर्तृत्वेनाय **प्रवक्ता** प्रकर्षेणातीन्द्रियज्ञानवैराग्यादिरूपेण वक्ता, न तद्विपर्ययेण । कुत एतत् ? **अपरालीढसत्पथो** न परैः सौगतादिभिः दोषोक्ति[1]जिह्वया आलीढ आस्वादितः **सत्पथः** सम्यग्दर्शनादिरूपः सन्मार्गो यस्य स अपरालीढसत्पथो यत एवमतः प्रवक्तेति । नहि सम्यग्दर्शनादिकं स्वर्गापवर्गादिनिरवशेषपुरुषार्थप्राप्त्युपायतया सत्पथव्यपदेशम् अनन्यगोचरम् अखिलापरतीर्थकरपरिकल्पितदोषप्रवादैः स्वरूपतो विषयतः परतश्च दुरुपपीडं प्रत्यासन्ननिष्ठभव्यनिकायसंसारदुःखनिस्तरणकारणमादिशतः पुरुषोत्तमस्य प्रकर्षविपर्ययेण प्रवक्तृत्वकल्पनमुपपन्नम्, तद्विपर्यये तद्वचने प्रवृत्तेरेवासम्भवात् । तदेवाह—

**नात्यक्षं यदि जानाति नोपदेष्टुं प्रवर्त्तते ॥७५॥** इति ।

अत्यक्षमतीन्द्रियं चेत् न जानाति, उपलक्षणमिदम्, तेन वैराग्यातिशयवानपि न भवति **नोपदेष्टुम्** उक्तरूपं सत्पथमभिधातुं **प्रवर्त्तते** अत्यक्षज्ञानादिविकलस्य तदुपदेशशक्त्यसम्भवात् बालकादिवदिति भावः । द्वितीयशङ्कायामप्याह—

**परीक्षाक्षमवाक्यार्थपरिनिष्ठितचेतसाम् ।**
**अदृष्टदोषाशङ्कायामन्यत्रापि प्रसज्यते ॥७६॥** इति ।

**परीक्षा** प्रसिद्धप्रत्यक्षादिरूपा **क्षम** इति परीक्षाक्षम, स चासौ **वाक्यस्य** प्रवचनस्य **अर्थो** जीवादिः तेन **परि** समन्तात् स्वविषये **निष्ठितं** निराबाधस्थितं **चेतः** तदर्थज्ञानं येषां भगवतां ते तथोक्ताः । नहि तेषां जीवादितत्त्वज्ञानमन्तरेण तत्प्रणीतस्य वाक्यस्य परीक्षाक्षम[2]तत्त्वप्रणयनमुपपन्नं बालोन्मत्तादिवाक्यवत् । अस्ति [3]च तत् । ततस्तदेव [4]तेषां तज्ज्ञानं परिनिष्ठापयति[5] । सति च तज्ज्ञाने [6]तेषां निर्दोषा एव [ते] । यत्र तद्विरुद्धं तत्र तन्नास्ति यथोष्णस्पर्शवति शीतम्, अस्ति च भगवत्सु दोषविरुद्धं तत्त्वज्ञानमिति स्वभावविरुद्धोपलब्ध्या तथैव निर्णयात् । तेषां च परीक्षाक्षमे विषये स्वयमदृष्टस्यापि विप्रलम्भबोधस्याशङ्कायां किमत्र विप्रलम्भनमस्ति उत नेति संशीतौ **अन्यत्र** प्रत्यक्षादावपि **प्रसज्यते** तदाशङ्केति विभक्तिव्यत्ययेन सम्बन्धः । तथा हि पुरोवस्थित[7]जलमवलोकयतोऽपि कुतो निःशङ्कत्वम्[8] ? न तावदुपलम्भादेव, तस्य विप्रलम्भिनोऽपि सम्भवात् स्वप्नादिवत् । नापि संवादात्, उत्पत्तिसमय एव तस्यानवसायात् । अवसायेऽपि विसंवादस्यापि [9]तदैव तद्भावाभ्रान्ततो दर्शनात् कस्यचिदपि प्रवृत्तिः स्यात् । प्रवृत्तित तदवसाय इति चेत्, न, तदभावे ततः प्रवृत्तेरेवायोगात् आगमवत् । प्रत्यक्षादेरनवसितसंवादादपि प्रवृत्तिः बहुवित्तव्ययपरिक्लेशाभावात् नागमतो विपर्ययादिति चेत्, न; प्रत्यक्षादेरपि सेवाकृष्यादौ प्रवृत्तस्य तदुपलम्भात् । तन्न प्रवृत्तितोऽपि तदवसायः । सुनिश्चितसंवाददर्शनान्तरसमानसामग्रीप्रभवत्वादिति चेत्, न, तदन्तरेऽपि तथाविधतदन्तरसमानसामग्रीप्रभवत्वेन तदवसायकल्पनायामनवस्थाप्रसङ्गात् । सामग्री च तस्यार्थगर्भैव[10] अर्थकार्यज्ञानवादिनः ।

---

१ –न्निर्जिह्वया आ०, ब०, प० । २–क्षमत्व प्र– आ० ब०, प० । ३ च ततस्त–आ०, ब०, प० । ४ तेषां ज्ञानं आ०, ब०, प० । ५ –पयति च आ०, ब०, प० । ६ तेषां च नि– आ०, ब०, प० । ७ –स्थं जलमवलम्बयतोऽपि आ०, ब०, प० । ८ –शङ्कितत्व प० । ९ तथैव आ०, ब०, प० । १० –गर्भैतार्थं –आ०, ब०, प० ।

न च तत्प्रभवत्वमुत्पत्तिसमये शक्यावसायम्, तदानीं तद्गर्भत्वा[1]ऽतद्गर्भत्वयोरविवेचनात्। [2]प्रवृत्तितः शक्यावसायमेव तदिति चेत्, न, दोषाशङ्कायां प्रवृत्तेरेवासम्भवात्। तन्न प्रत्यक्षं निःशङ्कम्। एवमनुमानमपि। तस्यासम्भवाच्च। नहि निःशङ्कप्रत्यक्षस्याभावे ततः सम्बन्धप्रतिपत्तिः, यतोऽनुमानं सम्भवेत्। सत्यपि तस्मिन् कथं ततः साकल्येन तत्प्रतिपत्तिः ? तस्य सन्निहितवस्तुमात्रविषयत्वात्। अनुमानान्तरात्तत्प्रतिपत्तावनवस्थापत्तेः। प्रादेशिकतत्प्रतिपत्तेश्च व्यभिचारेणानुमानकारणत्वायोगादिति चेत्, सत्यम्, अयमपि परस्य पर्यनुयोगः। तत्र प्रत्यक्षानुमानयोर्निरारेकं[3] प्रामाण्यं वस्तु[4]प्रतिबन्धनिश्चयाभावात्। एवमेतत्, तथापि व्यवहर्तृजनाभिप्रायेणा[5]विसंवादा[6]त्तयोः प्रामाण्यमभ्यनुज्ञायते। अन्यथा सकलव्यवहारविलोपप्रसङ्गादिति चेत्, प्रवचनस्यापि तथैव तदभ्यनुज्ञातव्यम्, तदभावेऽपि तदर्थानुष्ठानादिव्यवहारस्याभावप्रसङ्गात्। तत्र व्यवहारतोऽपि प्रमाणद्वैविध्यकल्पनमनुपपन्नं [7]तदन्तरस्यापि भावात्। तर्हि प्रवचनवत् प्रत्यक्षानुमानयोरपि तन्मा भूत्, संविदद्वैतस्यैव पारमार्थिकस्य प्रमाणस्य भावादिति चेत्, तस्यापि कथं प्रामाण्यम् ? स्वरूपप्रकाशनस्य गुणस्य दर्शनादिति चेत्, प्रवचनस्यापि स्यात्, तत्रापि [8]सत्यचतुष्टयप्रकाशनस्य तस्य दर्शनात्। प्रत्यागमेन व्यभिचार इति चेत्, भवतोऽपि भेदप्रकाशेन कस्मान्न भवति ? तत्र विचारासहत्वदोषस्य भावात्। तस्य चाद्वैतसंवित्तावदर्शनादिति चेत्, समानमितरत्रापि। ततः स्वसंवेदनं प्रमाणयता प्रवचनमपि प्रमाणमभ्युपगन्तव्यमविशेषात्। एतदेवाह–

**प्रत्यक्षागमयोरिष्टं प्रामाण्यं गुणदोषयोः।**
**उपलब्ध्यनुपलब्धिभ्यां क्वचिद्वृत्तसमत्वतः ॥७७॥** इति।

**क्वचित्** विषययोरद्वैतचतुःसत्ययोः यथाक्रमं प्रत्यक्षागमयोः स्वसंवेदनप्रवचनयोः **प्रामाण्यमिष्टं** अभ्युपगतम्। तदिच्छाया निष्प्रत्यूहत्वेनाशक्यचालनत्वज्ञापनार्थं निष्ठाया निर्देशः। कुतस्तदिष्टम् ? **वृत्तसमत्वतः** वृत्तम् अनन्तरव्यावर्णितं यत्प्रत्यक्षागमयोः समत्वं सादृश्यं ततः इति। तदेव कुतः ? इति चेत्, **गुणदोषयोः उपलब्ध्यनुपलब्धिभ्यामिति**, व्याख्यातमिदं पातनिकयैव। तदेव प्रवचनस्य प्रामाण्ये यत्सिद्धं तदाह–

**तथा साक्षात्कृताशेषशास्त्रार्थोऽज्ञानपेक्षणात्।**
**सद्वृत्तकेवलज्ञानः सर्वज्ञः सम्प्रतीयते ॥७८॥**

**तथा** तेन प्रवचनप्रामाण्यप्रकारेण तस्य प्रणेता **सर्वज्ञः** सकलवेदी **सम्प्रतीयते** प्रणेतुः सर्वज्ञत्वाभावे तत्प्रामाण्यानुपपत्तेः निरूपणात्। कीदृशोऽसौ सर्वज्ञ इति चेत् ? [9]स्यादेव यदि नियतार्थमेव प्रवचनम्, न चैवम्, तस्यापि प्रत्यक्षानुमेयात्यन्तपरोक्षलक्षणस्थानत्रयपरिवर्तिपदार्थजातविषयत्वेनाशेष[10]गोचरत्वात् तज्ज्ञानादेव सर्वज्ञत्वोपपत्तेः। यद्येवं छद्मस्थादर्हतः को विशेषः ? तस्याप्यागमतः सर्वज्ञत्वसम्भवादिति चेत्, सर्वविषयसाक्षात्करणमेव[11]। अतएवोक्तं **साक्षात्कृताशेषशास्त्रार्थः** इति। अशेषस्य शास्त्रार्थस्य साक्षात्करणं भगवत्येव, सकलावरणपरिक्षयस्य तन्निबन्धनस्य तत्रैव भावात् न छद्मस्थे विपर्ययात्। निरूपितश्च तस्य

---

१ –त्त्वातद्गर्भत्वयो– आ०, ब०, प०। २ प्रवृत्तिः शक्या– आ० ब०, प०। ३ –रेकप्रामा– आ०, ब०, प०। ४ वस्तुनिश्च –आ०, ब०, प०। ५ –येण हि –आ०, ब०, प०। ६ –दाभिसंज्ञातयोः आ० ब० प०। ७ प्रवचनस्य। ८ दुःखसत्यम्, समुदयसत्यम्, निरोधसत्यम्, मार्गसत्यमिति सत्यचतुष्टयम्। ९ स्यादेवं प्रश्नः। १० –पदोषगो– आ०, ब०, प०। ११ "विशेष इति सम्बन्धः" –ता०टि०।

तत्राभाव इति न पुनरुच्यते। तत्परिक्षयनिबन्धनत्वादेव तस्य करणक्रमव्यवधानातिवर्त्तित्वेन केवलत्वमपि प्रत्येयम्, तदनतिवर्तिनि तत्परिक्षयस्यास्मदादिवदसम्भवात्। अत इदमुक्तम्–**अक्षानपेक्षणात्** इति। अक्षाणामिन्द्रियाणाम्। उपलक्षणमिदम्, तेन देशकालपरिपाटीलक्षणस्य क्रमस्य देशकालस्वभावतिरोधानलक्षणस्य व्यवधानस्य चानपेक्षणादिति प्रत्येयम्। तेषामनपेक्षणं च तदतिक्रमेण प्रवृत्तिरेव। अक्षापेक्षमेव साक्षात्करणमस्मदादौ प्रतिपन्नम् तत्कथं तदनपेक्षायामिति चेत्? न, अस्मदादावपि[1] मलविश्लेषविशेषादेव सत्यस्वप्नादौ तत्प्रतिपत्तेः। यद्येवं जाग्रतोऽपि किं तत्रापेक्षयेति चेत्? तत्रैव गोलकादिरूपे साक्षात्क्रियाहेतोर्मलापगमविशेषस्य भावात्, न पुनः तस्यैव तद्धेतुत्वात्। उक्तं चैतत्–"कथञ्चित्स्वप्रदेशेषु" इत्यादिना[2]। तत्र तद्धेतुत्वव्यवहारश्चोपचारात्। ततो युक्तं भगवतस्तदनपेक्षमेव तदर्थसाक्षात्करणम्, ततश्च प्रवचनबलात् तदर्थवेदिनो गणधरदेवादेश्च विशेष इति।

सकलावरणपरिक्षयाविर्भूतमपि कथं तदशेषविषयमिति चेत्? अत्राह–

**ज्ञस्यावरणविच्छेदे ज्ञेयं किमवशिष्यते।** इति।

**ज्ञस्य** सकलस्वपरविषयपरिज्ञानस्वभावस्य अन्यथा व्याप्तिज्ञानासम्भवेनानुमानाभावप्रसङ्गात् **ज्ञेयं** साक्षाद्वेद्यं **किं** नाम **अवशिष्यते** न किञ्चित् सर्वमपि तस्य साक्षात्कर्तव्यमेव। न चैवमतिप्रसङ्गः सकलबोधावरणविश्लेष एव तदनवशेषत्वसम्भवात्। अत एवोक्तम् **आवरणविच्छेदे** इति। यद्येवमशुचिरसादेरपि साक्षात्करणात् तस्य तद्भक्षणादिदोषः स्यादिति चेत्; सत्यम्, यदीन्द्रियप्राप्तस्य साक्षात्करणम्, न चैवम्, भगवतोऽक्षानपेक्षदर्शनत्वात्। तदाह–

**अप्राप्यकारिणः [तस्मात् सर्वार्थानवलोकते] ॥७९॥** इति।

इन्द्रियेण विषयमप्राप्य करोति निश्चिनोतीत्येवं शीलस्येत्यर्थः। सम्प्रत्युपसंहरति–

**तस्मात् सर्वार्थानवलोकते।** इति।

सुबोधमेतत्। [4]सर्वार्थावलोकनमेव दर्शयन्नाह–

**शास्त्रे दुरवगाहार्थतत्त्वं दृष्टं हि केवलम्।**
**ज्योतिर्ज्ञानादिवत्सर्वं स्वत एव प्रणेतृभिः ॥८०॥** इति।

**शास्त्रे** प्रवचने यदभिधेयत्वेनावस्थितं प्राकृतप्रज्ञैर्दुरवबोधत्वाद् **दुरवगाह**मर्थानां सूक्ष्मान्तरितदूराणां **तत्त्वम्** आत्मीयं रूपं तत्सर्वं निरवशेषं **दृष्टं हि** दृष्टमेव। हिरवधारणे। कैः? **प्रणेतृभिः** तच्छास्त्रकारैः। कथं प्रणेतृभिः? **केवलम्** उपदेशाद्यनपेक्षं **ज्योतिर्ज्ञानं** ज्योतिःशास्त्रम् आदिशब्दादायुर्वेदादि तदेव तद्वत्। यथा ज्योतिःशास्त्रादौ तत्तत्त्वं दृष्टं तैः तद्दर्शनस्य समर्थितत्वात्, तद्वदन्यदपि सर्वं तत्तैर्दृष्टमेव, अन्यथा तद्विषयानुपदेशालिङ्गान्वयव्यतिरेकाविसंवादिशास्त्रप्रणयनानुपपत्तेः।

अनुपदेशादयः प्रणयनविशेषणत्वेन सहिता[5] एव कस्माद्धेतवः न प्रत्येकमपि? इति चेत्; अत्राह–

**संघातो हेतुरेतेषां पृथगन्यत्र सम्भवात्।** इति।

१–पि तु मल– आ०, ब०, प०। २–न्यायवि० भा० २ पृ० २२२। ३–ना न तत्र तावे तुत्वव्यव –आ०, ब०, प०। ४ सर्वार्थानवलो– आ०, ब०, प०। ५ –ता एव कस्माद्धेतवो आ०, ब० प०।

**एतेषां** केवलशब्दात् प्राप्तानामनुपदेशादीनां सङ्घात एव तीर्थकृतां दुरवगाहतदर्थदर्शनसाधने हेतुः न प्रत्येकम् । कस्मात् ? प्रत्येकतद्विशिष्टस्य प्रणयनस्य अन्यत्र तद्दर्शनविकलेऽपि सम्भवात् । तथा हि-अनुपदेशे लिङ्गात्, तदभावे चान्वयादे प्रतिपद्य प्रणयनमसर्वदर्शिन्यपि सम्भवति । तत सङ्घात एव तेषां तत्साधने हेतु, 'तच्च तत्त्वदर्शनं भगवतां स्वत एव, नार्थान्तरदर्शनसम्बन्धात्,' आकाशादेरपि' ततः तत्प्रसङ्गादविशेषात् । स्वतोऽपि न निर्विकल्पात्, तत प्रणयनानुपपत्ते, अत स्वत इति निर्णयस्वभावादित्यर्थ । तत्स्वभावत्व चार्हतामेव । ततो न सुगतादीना प्रणेतृत्व तदभावात् । तत्र च दोषमाह—

**एवं हि सुगतादिभ्यो वरमीक्षणिकादयः ॥८१॥** इति ।

**एवम्** अतत्त्वदर्शित्वादप्रणेतृत्वे हि स्फुट सुगतादिभ्यः आदिपदात् कपिलादिभ्यश्च **वरमीक्षणिकादयः** ते परचित्तादेरुपलक्षणादुपदेशाच्च, इतरेषां तदभावात् । अर्हतामपि किं तत्त्वदर्शित्वकल्पनया शास्त्रादेवानुष्ठेयार्थप्रतिपत्ते, तस्य च संवादादेव प्रामाण्यावगमात्, संवादस्य च प्रत्यक्षादिविषयवत्तृतीयस्थानसङ्क्रान्तेऽपि तदेकदेशत्वेन प्रतिपत्ते । तत्त्वदर्शित्वात् तत्र 'प्रामाण्यावगमे परस्पराश्रयात्–तदवगमात् तत्त्वदर्शी सिद्ध, ततोऽपि तदवगम इति । ततो निष्फलं तत्कल्पनमिति चेत्, अत्राह–

**शास्त्रं तल्लक्षणव्याप्तं सर्वज्ञादेरबाधनात् ।** इति ।

शास्त्रं हि **सर्वज्ञादेव** आदेर्मूलकारणात् तस्यापौरुषेयस्य प्रत्याख्यानात् । पौरुषेयमपि तत्त एव । कीदृशम् ? तस्य शास्त्रस्य लक्षणं स्वार्थप्रत्यायन तेन व्याप्तं क्रोडीकृतम् । न हि तद्व्याप्तिस्तस्य स्वत एव सम्भवति व्याख्यानपेक्षानियमात् । भवतु व्याख्याताऽस्मदादिरेव न सर्वज्ञ तस्य बाधनादिति चेत्, न, असर्वविदा ज्ञानेन तस्य देशकालसाकल्येन बाधस्यासम्भवात् । सर्वविदा च तस्यैव प्रसाधनात् । अस्मदादेश्च स्वतस्तत्त्वदर्शनविकलस्य व्याख्याने न प्रेक्षावता प्रत्ययो म्लेच्छादिव्याख्यानवत् । व्याख्याभेदसम्भवे च कुतोऽयमेवार्थं पुरुषहितो नापर इति निर्णय ? यतस्तत्परिहारेण हित एव प्रवृत्ति स्यात् । सर्वदर्शिनस्तु व्याख्याने स्यात्, तेन हितेतरविभागेन सर्वस्यापि साक्षात्करणात् । तदाह–

**अपौरुषेयवृत्तान्तोऽप्यत एव विरुध्यते ॥८२॥** इति ।

अपौरुषेय. पुरुषहितादन्य तदहित तस्य वृत्तान्तो 'धाम्ययोऽस्मदादिभेदविकल्पनया शास्त्रार्थत्वेन कथनम् । सोऽपि न केवलमस्वार्थप्रतिपादनमेव । अत एव सर्वज्ञादेरेव विरुध्यते व्यपोह्यते । ततो युक्त भगवति सर्वज्ञ वपरिकल्पनम्, असति तस्मिन् शास्त्रस्य तल्लक्षण-'व्याप्त्यायायोगात् । संवादस्यैव दुरवग्रहत्वात्, असत्यार्थव्यवच्छेदस्य चानुपपत्ते तत्कल्पनाया वैफल्याभावात् । साम्प्रति शास्त्रार्थमुपसंहरन्नाह–

**प्रत्यक्षमञ्जसा स्पष्टमन्यच्छ्रुतमविप्लवम् ।**
**प्रकीर्णं प्रत्यभिज्ञादौ प्रमाणे इति संग्रहः ॥८३॥** इति ।

---

१ –शब्दमात्रा–आ०, ब०, प० । २ –कं तस्मात् आ०, ब०, प० । ३ तत्र तद्दर्शनं आ०, ब०, प० । ४ "योगाम्युपगमात्" –ता० टि० । ५ –पि तत्प्रसङ्ग– आ०, ब०, प० । ६ प्रामाण्योपगमे आ०, ब०, प० । ७ धाम्यर्योऽस्मदादिभेद– ता० । ८ "सर्वज्ञादेरमूलकारणादेव" –ता० टि० । ९ –व्याप्त्य योगात् आ०, ब०, प० ।

प्रमाण[1]मिति विभक्तिपरिणामाल्लब्ध ज्ञानमिति च वक्ष्यमाणमत्रापि सम्बध्यते। ततो यत्प्रमाण तद् ज्ञानम् अन्यथा तदनुपपत्तेरित्युक्त भवति। द्विचन्द्रादिज्ञानस्यापि प्रामाण्य-प्रसङ्गे तन्निवृत्त्यर्थम् अविप्लवग्रहणम्। 'व्यवहारत एव केवलमविप्लवत्व वस्तुत सर्व-ज्ञानाना स्वप्नादिवत्सविप्लवत्वात्' इत्यस्य व्युदासार्थम् अञ्जसा ग्रहणम्। वस्तुत क्वचिद[2]प्यविप्लवाभावे। सर्वज्ञानविप्लवस्यापि दुरुपपादत्वेन निरूपितत्वात्। तच्च प्रमाण द्विविध प्रत्यक्ष परोक्षमिति। प्रत्यक्षं स्पष्ट परिस्फुटम्। तदपि द्विविधम्-मुख्यसव्यवहार-विकल्पात्। मुख्यमप्यवधिमन पर्ययकेवलभेदात् त्रिविधम्। व्यावहारिकमपि द्विविधम्-इन्द्रिय-प्रत्यक्षमनिन्द्रियप्रत्यक्षमिति च निरूपितरूपम्। अन्यदिति परोक्षम्। तत्कीदृशम्? श्रुत [3]अस्पष्टोल्लेखम्। "श्रुतमस्पष्टतर्कणम्" [त० श्लो० पृ० २३७] इति वचनात्। तच्च प्रत्यभिज्ञादौ स्मरणादौ। प्रत्यभिज्ञापदेन तत्कारणत्वेन स्मरणस्याभिधानात्। प्रकीर्णं प्रक्षिप्त न बहिर्भूतम्, उपमानादेरपि तद्बहिर्भावे[4] परपरिकल्पितप्रमाणसङ्ख्यानियमाभावस्य निरूप-णात्। ततो द्वे एव प्रत्यक्षपरोक्षरूपे प्रमाणे इति सङ्ग्रह सङ्क्षेपत प्रतिपत्ति. शास्त्रार्थस्य।

सम्प्रति परोक्षविकल्पाना प्रागुपवर्णितमपि प्रामाण्यमनुस्मरणार्थं पुनरुपदिदर्शयिषु प्रथम तदाधारत्वात् स्मरणज्ञानस्योपदर्शयति-

इदमेवमिति ज्ञानं गृहीतग्रहणेऽपि नः। इति।

द्विविध च स्मरणम् 'इदमेवम्' इत्येकम्, 'एवम्' इति च द्वितीयम्। तदुभयम् 'इदमेवम्' इत्युच्यते, परस्याप्येवम्पदस्य समानश्रुतिकत्वेनैकोच्चारणगम्यस्यात्र भावात्। तत्र यदव-ग्रहादेरक्षज्ञानस्यानन्तरमर्थाभिलापस्मरणेन 'नीलमिद पीतमिदम्' इत्याकार[5] ज्ञान तदिद-मेवमिति स्मरणम्। तदस्माक प्रमाणमविसवादात् प्रत्यक्षवत्। अपूर्वार्थाभावान्नेति चेत्, न प्रत्यक्षगृहीतस्य तेन ग्रहणेऽपि कथञ्चिदपूर्वार्थत्वात् शब्द[6]ससृष्टत्वस्यागृहीतस्यैव प्रतिपत्ते। प्रत्यक्षविषयस्य क्षणिकत्वेनापक्रमात् कथ तस्यैव पुनस्तत्ससृष्टत्वेन ग्रहणमिति चेत्? न एकान्तत क्षणिकत्वस्य प्रतिक्षिप्तत्वात्। कथञ्चिदक्षणिकत्वेऽपि पूर्वाकारस्या-तीतत्वेनाग्रहणात्। कथ तस्यैव पुनर्विशिष्टस्य ग्रहणमिति चेत्, न, शक्तिविशेषे क्षयो-पशमलक्षणे [7]सत्यतीतत्वादेरकिञ्चित्करत्वात्। क्षणिकत्वेऽपि भावाना कथमस्याप्रामाण्यम्? अस्वलक्षणविषयत्वादिति चेत्, अनुमानस्यापि स्यात्। स्वलक्षणप्रतिबन्धान्नेति चेत्, न, अत्रापि तुल्यत्वात्, पारम्पर्येण स्वलक्षणादुत्पत्तेरविशेषात्। ततोऽवश्य प्रमाणयितव्य व्यवहारसिद्धत्वाच्च। अन्यथा "प्रामाण्य व्यवहारेण" [प्र० वा० १।७] इत्यसङ्गत स्यात्। तथा यदेवमिति ज्ञानमतीतमात्रस्मरण तदपि प्रमाण तद्वदेवाविसवादात्। गृहीतग्राहित्वान्नेति चेत्, अनुमान कथम्? समारोपव्यवच्छेदादिति चेत, न, स्मरणादप्यदर्शनसमारोप-व्यवच्छेदेन व्यवहारप्रसिद्धे। ततो युक्त तस्यापि प्रामाण्य कथञ्चिदपूर्वार्थत्वस्यापि भावात्, सन्निहिततया हि तद्ग्रहणमक्षज्ञानेन अतीततया च स्मरणेनेति।

साम्प्रत तर्कस्य प्रामाण्य दर्शयितुमाह-

प्रत्यक्षेऽर्थेऽन्यथारोपव्यवच्छेदप्रसिद्धये ॥८४॥
अनुमानम् [ अतो हेतुव्यवच्छेदेऽनवस्थिति ] इति।

१ -णमितीति आ०, ब०, प०। २ -दविप्लवा- आ०, ब०, प०। ३ -मतिपूर्वं श्रुत प्रोक्तमविस्पष्टार्थतर्कणम्। -त० सा० श्लो० ३५। ४ -वे परिक- आ०, ब०, प०। ५ -कार तदि- आ०, ब०, प०। ६ -ससृष्टत्व- आ०, ब०, प०। ७ सत्यमोत- आ०, ब०, प०।

न हि अनुमानं वस्तुप्रतिपत्तये 'परैरभ्यनुज्ञानम् वस्तुन सर्वात्मना प्रत्यक्षत एवाधिगमात् । "तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः ।" [ प्र० वा० ३।४४ ] इति वचनात् । अपितु प्रत्यक्षेऽर्थे क्षणिकनिरंशस्वलक्षणे योऽन्यथारोपो नित्यादिविकल्प तस्य व्यवच्छेद. तस्य प्रसिद्धये "भ्रान्त्या निश्चीयते नेति साधनं सम्प्रवर्त्तते ।" [ प्र० वा० ३।४४ ] इत्यभिधानात् ।

भवत्येव तथापि किमिति चेत् ? उच्यते, लिङ्गादनुमान सम्बन्धप्रतिपत्तौ । न च तत्र प्रत्यक्षस्य सामर्थ्यम्; सन्निहितमात्रविषयत्वात्, साकल्येन च तत्प्रतिपत्तावनुमानोपपत्ति, अन्यथाव्यभिचारसम्भवात् । सकलविषयमेव योगिप्रत्यक्षमिति चेत्; न; तस्यापि विषयकार्यत्वेन कारण' एव प्रवृत्ते । कारणमेव तस्य सर्वमिति चेत्, तर्हि तत्समदेशकालमेव सकलमपि जगत्तत्कार्यं भवेत्, एकसामग्र्यधीनत्वात्, अन्यथा रूपादिकमपि तथा न भवेदिति न रसदेशादौ रूपादेरनुमान भवेत् । सत्यपि ततस्तत्प्रतिपत्तिरसत्कल्पैव निर्विचारत्वात्, 'क्षणभङ्गादिवदिति न ततोऽनुमानमुपपन्नम् । नापि मानसप्रत्यक्षतस्तत्प्रतिपत्ति ; तत्र स्वरूपवेदविकलादर्थज्ञप्तेरेव "विमुखज्ञान" इत्यादिना' प्रतिक्षिप्तत्वात् । एतदेवाह–अतो हेतुव्यवच्छेदेऽनवस्थितिः इति ।

भावप्रधानमत्र हेतुपदम् । हेतोर्हेतुत्वस्य साध्यसम्बन्धस्य अतः प्रकृतात्प्रत्यक्षात्, व्यवच्छेदे विशेषेण साकल्यलक्षणेनावच्छेदोऽवबोध 'तस्मिन् अवस्थितेरुत्पत्तेरभावोऽनवस्थिति. अनुमानस्येति विभक्तिपरिणामेन सम्बन्ध । भवत्वनुमानादेव तद्व्यवच्छेद इति चेत्, न; तत्रापि तदतद्विकल्पात्तदभ्युपगमेऽनवस्थितेरेव दोषात् । तदाह–अत इत्यादि । अत प्रकृतादनुमानात्–'तस्मादेव तद्व्यवच्छेदेऽनुमानम्, अनुमानाच्च तद्व्यवच्छेद' इति परस्पराश्रयादनवस्थिति, उभयोरप्यप्रतिष्ठानात् । अन्यतस्तद्व्यवच्छेदे तत्राप्यन्यतस्तद्व्यवच्छेद इत्यनवधेरनुमानपरम्पराया प्राप्ते ततोऽन्यदेव तत्र प्रमाणमभ्यनुज्ञातव्यम् । तदाह–अत इत्यादि । अतः आभ्या प्रत्यक्षानुमानाभ्याम् अहेतुव्यवच्छेदे हेतुव्यवच्छेदाभावे नचान्यप्रत्ययस्य सम्बन्धप्रतिपत्तिनिबन्धनस्य प्रमाणस्य स्थिति. अविचलनम् । न च तत्कर्ताभिधान प्रत्यक्षमेव, विचारकत्वात्, प्रत्यक्षस्य च विपर्ययात् । नानुमानमपि अलिङ्गजत्वात् । अतस्ताभ्यामन्यदेव प्रमाण निरूपित'स्मरणवत् । तत प्रतिषिद्धमिदम्–"न प्रत्यक्षानुमानव्यतिरिक्तं प्रमाणम्" [　　　　　　] इति, स्मरणतर्कयोस्तद्व्यतिरिक्तयोरेव' प्रमाणत्वात् ।

साम्प्रतमुपमानस्य प्रत्यभिज्ञाविशेषत्वेन प्रमाणान्तरत्व'मपाचिकीर्षुरनदेव तावत्पर'परिकल्पनया दर्शयति–

उपमानं प्रसिद्धार्थसाधर्म्यात्साध्यसाधनम् ॥८५॥ इति ।

गोदर्शनाहितसंस्कारस्याटव्या पर्यटत प्रसिद्धोऽर्थो गवय तस्य साधर्म्यं सादृश्य ततो गवानुस्मरणसहायात् साध्यस्य सादृश्यविशिष्टस्य गो, तद्विशिष्टस्य वा सादृश्यस्य यत्

१ "बौद्धै"– ता० टि० । २ "नाकारणं विषय" इति सौगतैरुक्तत्वात्"– ता० टि० । ३ "प्रत्यक्षात् क्षणभङ्गादिप्रतिपत्तिर्यथा"– ता० टि० । ४ न्यायवि० श्लो० १।१९ । ५ "प्रत्यक्षात् साध्यसाधनसम्बन्धस्यावबोधे सौगतैरङ्गीक्रियमाणे इत्यर्थ. ।"– ता० टि० । ६ –विन स्मर– आ०, ब०, प० । ७ –रेव प्रमाण– आ०, ब०, प० । ८ –मुपाचि– आ०, ब०, प० । ९ –कल्पनया आ०, ब०, प० । न्यायसू० १।१।६ ।

साधनम् अध्यवसाय तदुपमान प्रमाणम् । न चेदमप्रमाणमेव, प्रत्यक्षस्मरणविषयत्वादिति शक्य वक्तुम्, प्रत्यक्षेण सादृश्यस्यैव स्मरणेनापि गोरेव केवलस्य ग्रहणात्, न तयोरन्यतरस्येतरविशिष्टस्य । तत्र तूपमानमेव प्रमाण तत एव तस्य प्रतिपत्ते । तदुक्तम्–

'तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्य वा तदन्वितम् ॥
प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते ।
विशिष्टस्यान्यत सिद्धेरुपमानप्रमाणता ॥"

[ मी० श्लो० १।१।५ उप० श्लो० ३७, ३८ ]

यदि वा, पूर्व 'गौरिव गवय' इत्यतिदेशवचनात् पुनरटवीगतेन च प्रत्यक्षत प्रतिपन्न प्रसिद्धोऽर्थो गवय तस्य साधर्म्यात्तद्वचनादिमहायात् यत् साध्यस्य 'सोऽय गवयशब्दवाच्योऽर्थ' इति सज्ञासज्ञिसम्बन्धस्य साधन प्रतिपत्ति तदुपमान तत्फलम्, 'साक्षात्प्रत्यक्षागमसामग्र्या एवोपमानत्वात् । न चेद प्रत्यक्षमेव, आगमव्यपेक्षणात् । नाप्यागम एव, तत सामान्येनैव साध्यस्य, अतश्च विशेषत प्रतिपत्ते, उपक्रमभेदादागमादस्यार्थान्तरत्वोपपत्ते, उपमानतयैव प्रमाणत्वावकल्पनमस्येति मीमासका नैयायिकाश्च प्रतिपन्ना । तान्प्रत्यतिप्रसङ्ग दर्शयन्नाह–

**यदि किञ्चिद्विशेषेण प्रमाणान्तरमिष्यते ।**
**प्रमितार्थे प्रमाणानां बहुभेदः प्रसज्यते ॥८६॥** इति ।

**प्रमितार्थो** मीमासकस्य गवादि प्रत्यक्षादिना तस्यावगमात् नैयायिकस्य सज्ञासज्ञिसम्बन्ध[1], तस्याप्यागमतोऽध्यवसायात । तत्र **यदि किञ्चिद्विशेषेण** अल्पभेदेन **प्रमाणान्तर** प्रत्यभिज्ञानादुपमानमन्यत्प्रमाणम् **इष्यते** तदा **प्रमाणाना बहु** यथा भवति तथा **भेदो** नानात्व **प्रसज्यते** । तथाहि गवय एव गो समान इतिवत् तमालात्तालद्रुमो दीर्घ विल्वादामलकमल्प क्षीरादपीक्षुरसो[2] मधुरतरो माथुरा पाटलिपुत्रकेभ्य आढ्यतरा इत्यादिज्ञान प्रत्यक्षस्मरणविषयविशिष्टदीपल्यादिभेदोपाधितालामलकादिगोचरम्[3] उपमानाद[4]योऽन्यतश्चानन्तर्भावेन भिन्नजातीयमेव प्रमाणमिति[5]न षट्प्रमाणनियमव्यवस्थापन मीमासकस्योपपन्न भवेत् । तथा [6]गवयदर्शन एव तद्विसदृशो महिष इति च ज्ञानस्य प्रमाणान्तरत्वात् । शक्य हि वक्तुम्–

प्रत्यक्षेणावबुद्धेऽपि वैधर्म्ये महिषे स्मृते ।
विशिष्टस्यान्यत सिद्धेस्तस्यैवान प्रमाणता ॥१८२५॥ इति ।

तथा नैयायिकस्यापि न प्रमाणचतुष्टयनियमकल्पन प्रसिद्धसाधर्म्यादिवान्यतोऽप्यनेकधा सज्ञासज्ञि[7]प्रतिबन्धबुद्धेर्भावात् । तथाहि–'क्षीरनीरविभागकारी हस, षट्चरणो मधुकर, एकविषाणो गण्डक, श्वेतछत्रसिंहासनालङ्कृतो राजा', इति विश्वस्तवचनात् प्रतिपद्य पुनर्हसादिक पश्यत स एष हसादिवाच्योऽर्थ इति प्रतिपत्तेर्बहुलमुपलम्भात् । प्रत्यभिज्ञेवाल्पत्वादिज्ञान प्रागुपलब्धस्यैव तस्य पुनर्विशिष्टतया[8] सङ्कलनादिति चेत्, सिद्धमुपमानस्यापि तत्त्वमविशेषात् । भवतस्तर्हि स्मरणादि[9] किन्नाम प्रमाणमिति चेत् ? आह–

१ स चात्मप्र– आ०, ब०, प० । २ प्रमितार्थं प्र– आ०, ब०, प० । ३ –ध्यस्यारस्यगतोऽध्य– आ०, ब०, प० । ४ –रसा मधुरा माथुरा पा– आ०, ब०, प० । ५ –चरादुप– आ०, ब०, प० । ६ –वि नष्टं प्रमा– आ०, ब०, प० । ७ गवं [illegible] दर्शि– आ०, ब०, प० । ८ प्रतिसम्बन्धप्रसिद्धेर्भा– आ०, ब०, प० । ९ –तयापि स– आ०, ब०, प० ।

सर्वमेतच्छ्रुतज्ञानम् [अनुमानं तथागमः] । इति ।

सर्वं निरवशेषम् एतत् प्रकृतं स्मरणप्रत्यवमर्शतर्कलक्षणं श्रुतज्ञानं परोक्षप्रमाणम् अस्पष्टत्वात् । इदमेवमिति ज्ञानं स्पष्टमेव सन्निहितविषयत्वादिति चेत्, न, तस्यापि [1]सङ्केतिताभिलापयोजनायामस्पष्टत्वात् । कथं तर्हि तच्छ्रुतमेव स्पष्टांशस्यापि भावात् ? न चेदं ज्ञानद्वयमेव, एकस्यैव विकल्पेतरनयेव स्पष्टेतरतयापि प्रत्यवभासनात्, अन्यथा सन्तानान्तरवदप्रतिसन्धानप्रसङ्गादिति चेत्, सत्यमिदं श्रुतत्वकथनं तु तत्र साभिलाप[2]-विषयप्रतिपत्तौ तदंशस्यैव प्राधान्यात् । ततो युक्तं स्मरणादेः [3]परोक्षत्वम् ।

अर्थापत्तिस्तर्हि प्रमाणान्तरमिति चेत्, न, तस्या अनुमानत्वात् व्याप्तिसामर्थ्या-दुत्पत्तेः । बहिर्व्याप्तेरभावादर्थापत्तिरिति चेत्, न, अनुमानस्याप्यन्तर्व्याप्तेरेव गमकत्वस्य निरूपणात् । एतावता च भेदे पक्षधर्मवत्यास्ततस्तद्विकला किन्न प्रमाणान्तरम् ? अन्यथा-नुपपत्तेरविशेषादिति चेत्, अत एवानुमानादपि न भवेत् ।

अभावज्ञानं तु भूतलादौ कैवल्यमात्रे प्रत्यक्षम्, निषेध्यविशेषोपहिते प्रत्यभिज्ञानम्, अविनाभावापेक्षायामनुमानम्, वचनमूलत्वे चागम इति न प्रमाणान्तरम् । अनुमानागमयो-श्चास्पष्टप्रतिभासत्वान्न परोक्षाद्भेदः । तदाह-'अनुमानं तथागमः' इति । न केवलं स्मृत्यादिकमेव श्रुतज्ञानम्, अपि त्वनुमानं तद्वदागमश्चेति ।

कथं पुनरागमः प्रमाणमिति चेत् ? आह-

सम्प्रदायाविघातेन यदि तत्त्वं प्रतीयते ॥८७॥ इति ।

सर्वज्ञोपदेशमूलमुपदेशपारम्पर्यं सम्प्रदायः तस्याविघातोऽविच्छेदस्तेन तत्त्वम् आगमवाच्यं यदि प्रतीयते प्रमाणमागमो नान्यथा । तथा च तत्प्रतिपत्तिर्भगवत्प्रवचनादेव, शक्यपरिच्छेदे वस्तुनि प्रत्यक्षादिना संवादस्यान्यत्र विसंवादानवभासस्य च शासनलक्षणस्य[4] तत्रैव प्रतिपत्तेः, प्रत्यागमेषु च विपर्ययात् । ततः स्थितं प्रत्यक्षं परोक्षं चेति द्वे एव प्रमाणे इति । किं पुनः प्रत्यक्षं किं वा परोक्षमित्यत्राह-

आद्ये परोक्षमपरं प्रत्यक्षं प्राहुराञ्जसम् । इति ।

"मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम् ।" [त० सू० १।९] इत्यत्र पाठापेक्षयाऽऽदौ भवत्वात् आद्ये मतिश्रुते ते प्राहुः प्रतिपादयन्ति सूत्रकारादयः । किम् ? परोक्षं प्रमाणम् । परोक्षत्वञ्च तयोरिन्द्रियसन्निकर्षलिङ्गादिभिरुत्पाद्यमानत्वात् 'परैरुक्ष्यते सिच्यते इति परोक्षम्' इति व्युत्पत्तेः । अपरं ताभ्यामुत्तरम् अवधिमनःपर्ययकेवलभेदं ज्ञानं प्रत्यक्षं प्राहुः । प्रत्यक्षत्वमात्ममात्रापेक्षत्वात् 'अक्षमात्मानं प्रति गतं कारणत्वेनाश्रितं प्रत्यक्षम्' इति व्युत्पत्तेः । न चैवं मतिज्ञानादेरपि प्रत्यक्षत्वम् आत्ममात्रापेक्षस्यैव तत्त्वोपगमात्, मत्यादौ च तदभावात् । तदिदमुभयमपि प्रमाणम् आञ्जसं न व्यवहारमात्रपरिकल्पितम्, परमार्थतः प्रमाणस्याभावे कल्पनयापि तदसम्भवस्य निरूपितत्वात् । कथं तर्हि मतिज्ञान-स्यैवमवग्रहादिभेदस्य प्रत्यक्षत्वमुक्तम् । आत्ममात्रापेक्षत्वाभावादिति चेत् ? अत्राह-

केवलं लोकबुद्ध्यैव मतेर्लक्षणसंग्रहः ॥८८॥ इति ।

---

१ सङ्केताभिला- आ०, ब०, प० । २ -साभिधि- आ०,ब०,प० । ३ -समर्थाप- आ०,ब०,प० । ४ -णस्य च त- आ०, ब०, प० । ५ -नस्यैवारम- आ०, ब०, प० ।

अत एवोक्तम्–"यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता" [ ] इति। इति चेत्, अत्राह–

प्रत्यक्षं श्रुतविज्ञानहेतुरेव प्रसज्यते। इति।

श्रुतमभिलापस्तन्मिश्रं विज्ञानं श्रुतविज्ञानं दध्योदनादिवद्[1]इति तस्य नीलमिद-मित्यादिरूपस्य हेतुरेव कारणमेव प्रत्यक्षं निर्विकल्पदर्शनं प्रसज्यते न प्रमाणमित्येवकारः। तथाहि न तस्य स्वतः प्रामाण्यम्, अनिर्णयस्वभावत्वात् अकिञ्चित्करवत्। नापि निर्णय-हेतुत्वात्, निर्णयस्य विकल्पत्वेनावस्तुविषयत्वात्। तज्जननात् प्रामाण्ये समयादिजननादपि तत्प्रसङ्गात्। वस्तुविषय एव [2]निर्णयः, व्यवहर्त्रा तद्विषयस्य वस्तुतयैवाध्यवसायादिति चेत्, किं पुनर्भवतो व्यवहर्त्तरि विश्वासः? बाढम्, "प्रामाण्यं व्यवहारेण" [प्र० वा० ११७] इति वचनादिति चेत्, तर्हि निर्णयस्यैव प्रामाण्यं स्याद् व्यवहर्तुस्तत्रैव तदभिप्रायात्, न निर्विकल्पदर्शनस्य, तत्र तदन्यस्यापि व्यवहर्त्रानाघ्राणात्। ततो निराकृतमेतत्–"गृहीतग्रहणान्नेष्टं सांवृतं प्रमाणम्" [प्र० वा० ११५] इति। यदि तत्प्रामाण्ये न तत्र विश्वासो नियत[3]वस्तुविषयत्वेऽपि न भवेद्[4]यज्जातीयानुपपत्तेः। कथं वा प्रत्यक्षं निर्णयस्य हेतुः विकल्पत्वात्[5]? अथ तद्वासनैव हेतुर्निर्णयस्य प्रत्यक्षं तु केवलं तदबोधकमिति चेत्, नेदानीं प्रत्यक्षेण किञ्चित्, अर्थस्यैव चक्षुरादिक्रमभिपततस्तदवबोधकत्वोपपत्तेः अचेतनस्य कथं तद्बोधकत्वमिति चेत्? कथं दर्शनहेतुत्वम्? सामर्थ्यादिति समानमन्यत्र। तत्र प्रत्यक्षान्निर्णयसम्भवो यतस्तत्प्रमाणम्। सम्भवेऽपि मुख्यं तस्यैव प्रामाण्यात् प्रत्यक्षं सन्निकर्षादिवत्तस्य हेतुरेव न प्रमाणमिति स्थितम्।

प्रमाणवन्नयानामप्य[6]धिगमहेतुत्वम् "प्रमाणनयैरधिगमः [त० सू० १।६] इति सूत्रे, [7]कामनस्तेऽपि विप्रतिपत्तिनिरासेन निर्णेतव्या इति चेत्, अत्राह—

इष्टं तत्त्वमपेक्षातो नयानां नयचक्रतः ॥९१॥ इति।

स्याद्वादप्रविवेचितार्थैकदेशगोचर[8] प्रतिपत्त्रभिप्रायो नयः। स च द्विधा अर्थनयः शब्दनयश्चेति। प्राच्यः पुनश्चतुर्धा नैगमः सङ्ग्रहो व्यवहारः ऋजुसूत्र इति। पश्चिमस्त्रेधा–शब्दः समभिरूढः एवम्भूत इति। तत्र यस्मिन् द्वयोर्भेदगमनं स नैगमः नैकं गमो नैगम इति व्युत्पत्तेः, यथा गुणगुणिनौ क्रियातद्वन्तौ सामान्यविशेषौ च भिन्नाविति। सम्यक् एकत्वेन सर्वग्रहणं सङ्ग्रहः, यथा सर्वमेकं सदविशेषादिति। सङ्ग्रह[9]विषयस्य पुनर्व्यवहरणं विभजनं व्यवहारः, यथा यत्सत्तद्द्रव्यं गुणः कर्म[10] चेति। ऋजु प्रगुणं सूत्रणमृजुसूत्रः, यथा सर्वं वर्त्त-मानमात्रमेव न पूर्वं नापि पश्चादिति। कालादिभेदादर्थभेदकारी शब्दः। तत्र कालभेदात् अभूद्भवति भविष्यतीति, कारकभेदात् वृक्षं पश्य, वृक्षाय जलं देहीति, लिङ्गभेदादर्धर्चमर्द्धर्चं[11] इति। पर्यायभेदादर्थभेदकृत् समभिरूढः, यथा शक्नात् शक्रो न पूर्दारणात्, ततोऽपि पुरन्दर एव न शक्र इति। क्रियाश्रयस्त्वेवम्भूतः, पुरं दारयन्नेव पुरन्दरो नान्यदेति। तदेतया सप्तविकल्पानामवान्तरविकल्पादनेकप्रकारिणा नयानाम् अपेक्षातः प्रतिपक्षौदासीन्य-

---

१ –दिव वृत्तिः आ०, ब०, प०। समासः। २ निर्णये व्यव– आ०, ब०, प०। ३ –यता वस्तुविषयेऽपि ता०। ४ –दृर्थजातीया– आ०, ब०, प०। ५ –त्वादर्थवद्वासनैव आ०, ब०, प०। ६ –मप्यधि– आ०, ब०, प०। ७ कामनस्ते आ०, ब०, प०। ८ –चरप्रति– आ०, ब०, प०। ९ –हनयस्य आ०, ब०, प०। १० कर्मेति चेति आ०, ब०, प०। ११ –र्द्धर्चमर्धर्चं प– आ०, ब०, प०।

लक्षणयाऽपेक्षया तत्त्वं श्रुतविकल्पत्वेन प्रमाणत्वम् इष्टमभ्युपगतम्, अन्यथा दुर्नयत्वेन तदनुपपत्ते । तच्च तेषां तत्त्व विस्तरतो नयचक्रत तन्नामधेयाच्चिरन्तनशास्त्रात् प्रतिपत्तव्यम् ।

तदेव व्यवस्थापितप्रामाण्यस्य प्रवचनस्य शास्त्रान्ते प्रयोजनमाह—

मिथ्यात्वं सौगतानां कणचरसमयं कापिलीयं प्रमेयं
प्रागल्भ्यं शावराणां जिनपतिविहिताशेषतत्त्वप्रकाशे ।
पर्याप्तत्वं व्यपोहन्नुपहसनमयं प्रस्तुवन्न्यायमार्गे
स्याद्वाद· सर्ववादप्रवणगुणगण· श्रेयसे नोऽस्तु नित्यम ॥९२॥ इति ।

अथमस्मिन्प्रस्तावे निरूपित स्याद्वादो भगवत्प्रवचन श्रेयसे नोऽस्तु नित्यम् । कीदृश ? सर्वस्मिन् वादे प्रत्यक्षा[1]दिस्थानननयलक्षणे प्रवण ममग्र गुणाना निर्दोषत्वादीना गण समूहो यस्मिन् स तथोक्त । किं कुर्वन्निति चेत् ? उच्यते, सुगतस्येमे सौगता· तेषाम्, बहुवचनादन्येषामपि तादृशाना यन्मिथ्यात्व सर्वं स्वप्नादिवद्भ्रान्तमेव न तत्त्वत[2] किञ्चिदिति, यच्च कणचरस्य वैशेषिकतन्त्रकृत समय परस्परव्यतिरिक्त-द्रव्यगुणादि-पदार्थोपदेश, अक्षपादसम[3]यस्यापृथग्वचन कणचरसमयादविशेषात् । यदपि कापिलीय कपिल-शिष्याणा प्रमेय व्यक्ताव्यक्तज्ञातृविकल्पम्, यच्चापि शावराणा प्रागल्भ्य स्वत प्रामाण्या-दिपरिक[4]ल्पनपाटव सर्वमेतद्व्यपोहन्निराकुर्वन् इति । न केवलमिदमेव अपितु योऽसौ जिनपते सम्बन्धी "विशेषेण हितो[5] विनेयलोकस्याशेषाणा सूक्ष्मादिभेदाना तत्त्वाना प्रकाश-स्तस्मिन् यदुपहसनम्–एवं यत्केवलज्ञानम्"–[मी० श्लो० चो० श्लो० १४१] इत्यादि-मीमासकस्य, "तस्मादनुष्ठेयगतम्" [प्र० वा० ११३३] इत्यादि सौगतस्य तदपि व्यपोहन्निति । किं कुर्वन् व्यपोहति ? न्यायमार्गे प्रत्यक्षादिरूपे पर्याप्तत्व भावाना सौगतादि-कल्पनाविपर्ययेण यत् परि समन्तात् आप्तत्व तत्प्रस्तुवन् प्रकटयन्, अन्यथा तद्व्यपोहनानुपपत्ते । किं पुनस्तच्छ्रेयो यदर्थत्व स्याद्वादस्याशास्यते इति चेत् ? सकलावरणपरिक्षय-विजृम्भित केवलज्ञानमेव । तदेवाह—

नैकान्तज्ञायिकाणाम् [अतिशयमवदन्नैव नानार्थसाध्यम्,
नैष्किञ्चन्यं तपो वाऽविगलितसकलक्लेशराशेर्विनाशे ।
निष्पर्यायं प्रवृत्त' सकलविषयगं केवलं वेद नित्यम्,
योऽयं तस्मै नमामस्त्रिभुवनगुरवे शम्भवे शान्तये ते ॥]९३॥ इत्यादि ।

नैकान्तोऽनेकान्त नञ्शब्देन समासात् । अनेकान्तेनाऽनेकप्रकारेण क्षया एव कर्मणा क्षायिका: स्वार्थिकत्वात्प्रत्ययस्य तेषाम् अतिशय तारतम्य अवदन्नैव प्रतिषेधद्वयेन विधिप्रतिपत्ते । स एवातिशय कुत सिद्ध इति चेत् ? तन्निबन्धनात्[6] ज्ञानातिशयादेव । अस्ति चायम्–असहायेन्द्रियादारभ्य आशास्त्रविद प्रतीयमानत्वात्, अतश्च तत्प्रतिपत्ति । अत एवाह–नानार्थसाध्यम् इति नाना चासावतिशयवत्त्वादर्थश्च प्रयोजन ज्ञानलक्षण नानार्थस्तेन साध्यमनुमेय तेषामतिशय[7] मवदन्नैवेत्यनेन हेतूक्त[8] (तुक्त) । साध्य पुनरस्य

---

१ –क्षाधिष्ठान– आ०, ब०, प० । २ –त· कथञ्चिदिति आ०, ब०, प० । ३ –यस्य पृथ– आ०, ब०, प० । ४ –कल्पितेन आ०, ब०, प० । ५ विशेषहितो ता० । ६ –बन्धनज्ञानाति– आ०, ब०, प० । ७ –मवदन्नेवे– आ०, ब०, प० । ८ हेत्पूक्त साध्यं ता० ।

अत एवोक्तम्–"यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता" [ ] इति। इति चेत्, अत्राह–

प्रत्यक्षं श्रुतविज्ञानहेतुरेव प्रसज्यते। इति।

श्रुतमभिलापस्तन्मिश्रं विज्ञानं श्रुतविज्ञानं दध्योदनादिवद्[1]वृत्ति तस्य नीलमिदमित्यादिरूपस्य हेतुरेव कारणमेव प्रत्यक्षं निर्विकल्पदर्शनं प्रसज्यते न प्रमाणमित्येवकारः। तथाहि न तस्य स्वतः प्रामाण्यम्, अनिर्णयस्वभावत्वात् अकिञ्चित्करवत्। नापि निर्णयहेतुत्वात्, निर्णयस्य विकल्पत्वेनावस्तुविषयत्वात्। तज्जननात् प्रामाण्ये संशयादिजननादपि तत्प्रसङ्गात्। वस्तुविषय एव [2]निर्णयः, व्यवहर्त्रा तद्विषयस्य वस्तुतयैवाध्यवसायादिति चेत्, किं पुनर्भवतो व्यवहर्त्तरि विश्वासः? बाढम्, "प्रामाण्यं व्यवहारेण" [प्र० वा० १।७] इति वचनादिति चेत्, तर्हि निर्णयस्यैव प्रामाण्यं स्याद् व्यवहर्तुस्तत्रैव तदभिप्रायात्, न निर्विकल्पदर्शनस्य, तत्र तद्गन्धस्यापि व्यवहर्त्रानाघ्राणात्। ततो निराकृतमेतत्– "गृहीतग्रहणान्नेष्टं सांवृतं प्रमाणम्" [प्र० वा० १।५] इति। यदि तत्प्रामाण्ये न तत्र विश्वासो नियत[3]वस्तुविषयत्वेऽपि न भवेद[4]र्थजातीयानुपपत्तेः। कथं वा प्रत्यक्षं निर्णयस्य हेतुः विकल्पत्वात्[5]? अथ तद्वासनैव हेतुर्निर्णयस्य प्रत्यक्षं तु केवलं तदबोधकमिति चेत्, नेदानीं प्रत्यक्षेण किञ्चित्, अर्थस्यैव चक्षुरादिकमभिपततस्तदबोधकत्वोपपत्तेः अचेतनस्य कथं तद्बोधकत्वमिति चेत्? कथं दर्शनहेतुत्वम्? सामर्थ्यादिति समानमन्यत्र। तन्न प्रत्यक्षान्निर्णयसम्भवो यतस्तत्प्रमाणम्। सम्भवेऽपि मुख्यतः तस्यैव प्रामाण्यात्, प्रत्यक्षं सन्निकर्षादिवत्तस्य हेतुरेव न प्रमाणमिति स्थितम्।

प्रमाणवन्नयानामप्य[6]धिगमहेतुत्वम् "प्रमाणनयैरधिगमः" [त० सू० १।६] इति सूत्रे, [7]कामतस्तेऽपि विप्रतिपत्तिनिरासेन निर्णेतव्या इति चेत्, अत्राह–

इष्टं तत्त्वमपेक्षातो नयानां नयचक्रतः ॥९१॥ इति।

स्याद्वादप्रविवेचितार्थैकदेशगोचरः[8] प्रतिपत्तुरभिप्रायो नयः। स च द्विधा अर्थनय[9] शब्दनयश्चेति। प्राच्यः पुनश्चतुर्धा नैगमः सङ्ग्रहो व्यवहार ऋजुसूत्र इति। पश्चिमस्त्रेधा– शब्दः समभिरूढ एवम्भूत इति। तत्र यस्मिन् द्वयोर्भेदगमनं स नैगमः नैकं गमो नैगम इति व्युत्पत्तेः, यथा गुणगुणिनौ क्रियातद्वन्तौ सामान्यविशेषौ च भिन्नाविति। सम्यग् एकत्वेन सर्वग्रहणं सङ्ग्रहः, यथा सर्वमेकं सदविशेषादिति। सङ्ग्रहविषयस्य पुनर्व्यवहरणं विभजनं व्यवहारः, यथा यत्सत्तद्द्रव्यं गुणः कर्म[10] चेति। ऋजु प्रगुणं सूत्रणमृजुसूत्रं, यथा सर्वं वर्त्तमानमात्रमेव न पूर्वं नापि पश्चादिति। कालादिभेदादर्थभेदकारी शब्दः। तत्र कालभेदात् अभूद्भवति भविष्यतीति, कारकभेदात् वृक्षं पश्य, वृक्षाय जलं देहीति, लिङ्गभेदादर्थभेदश्चैवं[11] इति। पर्यायभेदादर्थभेदकृत् समभिरूढः, यथा शक्तादेव शक्रो न पूर्दारणात्, ततोऽपि पुरन्दर एव न शक्र इति। क्रियाश्रयस्त्वेवम्भूतः, पुरं दारयन्नेव पुरन्दरो नान्यदेति। तदेतेषा सप्तविकल्पानामवान्तरविकल्पादनेकप्रकाराणां नयानाम् अपेक्षातः प्रतिपक्षौदासीन्य-

---

१ –द्विवृत्ति आ०, ब०, प० । समास । २ निर्णये व्यव– आ०, ब०, प० । ३ –यतो वस्तुविषयेपि ता० । ४ –दर्थजातीया– आ०, ब०, प० । ५ –त्वाद्यवद्वासनैव आ०, ब०, प० । ६ –मप्यर्धि– आ०, ब०, प० । ७ कालतस्ते आ०, ब०, प० । ८ –स्वरप्रति– आ०, ब०, प० । ९ –दनयस्य आ०, ब०, प० । १० कर्मेति चेति आ०, ब०, प० । ११ –दादर्थभेदश्च य– आ०, ब०, प० ।

लक्षणयाऽपेक्षया तत्त्वं श्रुतविकल्पत्वेन प्रमाणत्वम् इष्टमभ्युपगतम्, अन्यथा दुर्नयत्वेन तदनुपपत्ते । तच्च तेषां तत्त्वं विस्तरतो नयचक्रात् तन्नामधेयाच्चिरन्तनशास्त्रात् प्रतिपत्तव्यम् ।

तदेवं व्यवस्थापितप्रामाण्यस्य प्रवचनस्य शास्त्रान्ते प्रयोजनमाह—

मिथ्यात्वं सौगतानां कणचरसमयं कापिलीयं प्रमेयं
प्रागल्भ्यं शाबराणां जिनपतिविहिताशेषतत्त्वप्रकाशे ।
पर्याप्तत्वं व्यपोहन्नुपहसनपरं प्रस्तुवन्न्यायमार्गे
स्याद्वाद· सर्ववादप्रवणगुणगणः श्रेयसे नोऽस्तु नित्यम् ॥६२॥ इति ।

अयमस्मिन्प्रस्तावे निरूपित स्याद्वादो भगवत्प्रवचनं श्रेयसे नोऽस्तु नित्यम् । कीदृश ? सर्वस्मिन् वादे प्रत्यक्षा[1]दिस्थाननयलक्षणे प्रवणं समग्र गुणानां निर्दोषत्वादीनां गण समूहो यस्मिन् स तथोक्त । किं कुर्वन्निति चेत् ? उच्यते, सुगतस्येमे सौगताः तेषाम्, यदुपवचनादन्येषामपि तादृशानां यन्मिथ्यात्वं सर्वं स्वप्नादिवद्भ्रान्तमेव न तत्त्वत[2] किञ्चिदिति, यच्च कणचरस्य वैशेषिकतन्त्रकृत समय परस्परव्यतिरिक्त-द्रव्यगुणादिपदार्थोपदेश, अक्षपादसम[3]यस्यापृथग्वचनं कणचरसमयादविशेषात् । यदपि कापिलीयं कपिलशिष्याणां प्रमेयं व्यक्ताव्यक्तज्ञातृविकल्पम्, यच्चापि शाबराणां प्रागल्भ्यं स्वत प्रामाण्यादिपरिक[4]ल्पनपाटवं सर्वमेतद्व्यपोहन्नपाकुर्वन् इति । न केवलमिदमेव अपितु योऽसौ जिनपते सम्बन्धी "[5]विशेषेण हितो विनेयलोकस्याशेषाणां सूक्ष्मादिभेदानां तत्त्वानां प्रकाशस्तस्मिन् यदुपहसनम्–एवं यत्केवलज्ञानम्"–[ मी० श्लो० चो० श्लो० १४१ ] इत्यादिमीमांसकस्य, "तस्मादनुष्ठेयगतम्" [ प्र० वा० १।३३ ] इत्यादि सौगतस्य तदपि व्यपोहन्निति । किं कुर्वन् व्यपोहति ? न्यायमार्गे प्रत्यक्षादिरूपे पर्याप्तत्वं भावानां सौगतादिकल्पनाविपर्ययेण यत् परि समन्तात् आप्तत्वं तत्प्रस्तुवन् प्रकटयन्, अन्यथा तद्व्यपोहनानुपपत्ते.। किं पुनस्तच्छ्रेयो यदर्थत्वं स्याद्वादस्याशास्यते इति चेत् ? सकलावरणपरिक्षयविजृम्भितं केवलज्ञानमेव । तदेवाह—

नैकान्तक्षायिकाणाम् [अतिशयमवदन्नैव नानार्थसाध्यम्,
नैष्किञ्चन्यं तपो वाऽविगलितसकलक्लेशराशेर्विनाशे ।
निष्पर्यायं प्रवृत्तं सकलविषयगं केवलं वेद नित्यम्,
योऽयं तस्मै नमामस्त्रिभुवनगुरवे शम्भवे शान्तये ते ॥]६३॥ इत्यादि ।

नैकान्तोऽनेकान्त नशब्देन समासात् । अनेकान्तेनाऽनेकप्रकारेण क्षया एव कर्मणां क्षायिका स्वार्थिकत्वात्प्रत्ययस्य तेषाम् अतिशयं तारतम्यं अवदन्नेव प्रतिषेधद्वयेन विधिप्रतिपत्ते । स एवातिशय कुत सिद्ध इति चेत् ? तन्निबन्धनात्[6] ज्ञानातिशयादेः । अस्ति चायम्–असर्वज्ञादेरिन्द्रियादारभ्य आशास्त्रविद प्रतीयमानत्वात्, यतश्च तत्प्रतिपत्ति । अत एवाह–नानार्थसाध्यम् इति नाना चासावतिशयवत्त्वादर्थश्च प्रयोजनं ज्ञानलक्षण नानार्थस्तेन साध्यमनुमेयं तेषामतिशयमवदन्नेवेत्यनेन [8]हेतूक्त (तुक्त) । साध्यं पुनरस्य

१ –साधिष्ठान– आ०, ब०, प० । २ –त. कथञ्चिदिति आ०, ब०, प० । ३ –परम पृथ– आ०, ब०, प० । ४ –कल्पितेन आ०, ब०, प० । ५ विशेषहितो आ० । ६ –बन्धनज्ञानाति– आ०, ब०, प० । ७ –यवदन्येरे– आ०, ब०, प० । ८ हेतूक्त साध्यं आ० ।

क्वचित्तदतिशयस्य परिनिष्ठितत्वम् । तथा हि यदतिशयवत् तत् क्वचित्परिनिष्ठित यथा परिमाणम्, अतिशयवाश्च कर्मणा क्षय इति । यत्र च तत्परिनिष्ठा तज्ज्ञान सर्वविषय भवति । तथाहि–यद्यत्र व्यपगतावरण ज्ञान तस्य तद्ग्राह्य यथा नीहाराद्यपगमे प्रत्यक्षस्य वृक्षादि, व्यपगतावरण च कस्यचिद् ज्ञान सर्वत्रेति । तदेवाह–अविगलितेत्यादि । योऽयमेवमवदन्नेव वेद वेत्ति सकलविषयग केवल केवलज्ञान **नित्यमविनश्वर निष्पर्यायमक्रमम्** । उपलक्षणमिद तेन निष्करण निर्व्यवधान च । कदा तत्प्रवृत्तम् ? अविगलितो य सकलाना क्लेशानां कर्मतदास्रवरूपाणा राशिस्तस्य **विनाशे प्रवृत्तम्** । कुतस्तद्विनाशोऽपीति चेत् ? तपस एव । तदाह–**नैष्किञ्चन्य तपो वा** इति । वेति समुच्चये । तपो हि बहिरन्तर्विकल्प तद्विनाशोपाय योऽय वेद । कीदृशम् ? **नैष्किञ्चन्यम्** । ननु तत्त्वज्ञानभावन तपस्तत्कथ नैष्किञ्चन्यमिति चेत् ? न, सत्येव तस्मिन्निस्पृहत्वरूपे तदुपपत्ते । अत एवोक्तम्–

"**समाधितन्त्रस्तदुपोहपत्तये, द्वयेन नैर्ग्रन्थ्यगुणेन चायुजम्** ।" [ ] इति । **तस्मै योऽय वेदे**त्युक्ताय **नमाम** इत्यादि सुगमम् । चतुर्थी तु सर्वत्र "**गत्यादिभिर्बहुलम्**" [ शाक० १।३।१३९ ] इति । तत सूक्तम्–

> **नैकान्तत्वायिकाणामतिशयमवदन्नेव नानार्थसाध्यम्,**
> **नैष्किञ्चन्यं तपो वाऽविगलितसकलक्लेशराशेर्विनाशे ।**
> **निष्पर्यायं प्रवृत्तं सकलविषयगं केवलं वेद नित्यम्,**
> **योऽयं तस्मै नमामस्त्रिभुवनगुरवे शम्भवे शान्तये ते ॥**

पुनरपि शासनस्याराध्यत्व फलवत्त्वेन दर्शयन्नाह–

> **युक्तायुक्तपरीक्षणक्षमधियामत्यादराराधिनाम्,**
> **संसेव्यं परमार्थवेदसकलध्यानास्पदं शाश्वतम् ।**
> **लोकालोककलावलोकनबलप्रज्ञागुणोद्भूतये**
> **आभव्यादकलङ्कमङ्गलफलं जैनेश्वरं शासनम् ॥६४॥** इति ॥

जिनेश्वरस्येद **जैनेश्वरं शासनम्** । कीदृशम् ? **परमार्थस्य** जीवादेर्यो **वेदो** बोधो यच्च **सकल** धर्मशुक्लविकल्पस्य **ध्यान** तयोरास्पद **शाश्वत** प्रबन्धतो नित्यम् । पुनरपि कीदृशम् ? **अकलङ्कमङ्गलफल** निर्दोषप्रशस्तविविधकल्पाभ्युदयप्रयोजनम् । आकुतस्तथेति चेत् ? आह–भव्यभवस्य (अभवस्य) भाव आभव्यम् आ तस्मादाभव्यादा मुक्तिपदादिति । तत्किम ? **संसेव्यमभियोक्तव्यम्** । केषाम् ? **युक्तायुक्तपरीक्षणक्षमधियाम्** उपपन्नेतरवस्तुविचारपटुतरप्रज्ञानाम् । कीदृशानाम् ? **अत्यादराराधिना** प्रशस्तश्रद्धया आराधनशीलानाम् । तत्तेषा किमर्थं संसेव्यम् ? अत्रोत्तर **लोके**त्यादि । लोकालोकयो या कला विविधविकल्पा अणुप्रभृतिप्रतिपत्तिवेद्या भागा तासामवलोकन निरवशेषदर्शन तत्र बलं यस्य **प्रज्ञागुणस्य तस्योद्भूतये** इति ।

---

१ परिणामभति– आ०, ब० प० । २ –दविवेत्ति आ०, ब०, प० । ३ –दुपोपपत्तये आ०, ब०, प० । ४ धर्म्यशुक्ल– आ०, ब०, प० । ५ स्याद्भवस्य भाव आभव्यमित्यपि पाठ । भव्यस्य आ०, ब०, प० । ६ –मुक्तिपदादि– ता० । ७ –नामत्यादरा– आ०, ब०, प० ।

श्रीमन्न्यायविनिश्चयस्तनुभृतां चेतोद्गुर्वीनलः,
सन्मार्गं प्रतिबोधयन्नपि च तान्निःश्रेयसप्रापणम् ।
येनायं जगदेकवत्सलधिया लोकोत्तरं निर्मितो
देवस्तार्किकलोकमस्तकमणिर्भूयात्स वः श्रेयसे ॥ १ ॥

विद्यानन्दमनन्तवीर्यसुखदं श्रीपूज्यपादं दया-
पालं सन्मतिसागरं कनकसेनाराध्यमभ्युद्यमी ।
शुद्ध्यन्नीतिनरेन्द्रसेनमकलङ्कं वादिराजं सदा,
श्रीमत्स्वामिसमन्तभद्रमतुलं वन्दे जिनेन्द्रं मुदा ॥ २ ॥

भूयो भेदनयावगाहगहनं देवस्य यद्वाङ्मयं
कस्तद्विस्तरतो विविच्य वदितुं मन्दप्रभुर्मादृशः ।
स्थूलः कोऽपि नयस्तदुक्तिविषयो व्यक्तीकृतोऽयं मया,
स्थेयाच्चेतसि धीमतां मतिमलप्रक्षालनैकक्षमः ॥ ३ ॥

व्याख्यानरत्नमालेयं प्रस्फुरन्नयदीप्तिभिः[1] ।
क्रियतां हृदि विद्वद्भिस्तुदन्ती मानसं तमः ॥ ४ ॥

श्रीमत्सिंहमहीपतेः परिषदि प्रख्यातवादोन्नति-
स्तर्कन्यायतमोपहोदयगिरिः सारस्वतैः श्रीनिधिः ।
शिष्यः श्रीमतिसागरस्य विदुषां पत्युस्तपःश्रीभृतां
भर्तुः सिंहपुरेश्वरो विजयते स्याद्वादविद्यापतिः ॥ ५ ॥

इत्याचार्यवर्यस्याद्वादविद्यापतिविरचितायां न्यायविनिश्चयतात्पर्यावद्योतिन्यां
व्याख्यानरत्नमालायां तृतीयः प्रस्तावः समाप्तः ।

समाप्तं च शास्त्रम् ।

ॐ नमो वीतरागाय । ॐ नमः सिद्धेभ्यः ।

कारकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

---

१–दीधिति: इत्यपि पाठः । २–स्वन श्री–ता० ।

# न्यायविनिश्चयस्य कारिकार्धानामकाराद्यनुक्रमः


| | भाग | पृष्ठ | श्लो०सं० |
|---|---|---|---|
| अ | | | |
| अक्षिक्रियाऽऽरक्षान सतान् | २ | २३२ | २०२ |
| अक्षग चरणातीत | १ | ५४४ | १७१ |
| अक्षज्ञानानुज स्पष्ट | १ | ५२४ | १६० |
| अक्षज्ञानेऽपि तत्तुल्य | २ | ६६ | ३७ |
| अक्षयात् पुरुषत्वादे० | २ | २२२ | १९१ |
| अक्षादीनां विकारोऽपि | २ | १०६ | ७६ |
| अगादेरप्यदृश्यस्य | २ | २३ | ९ |
| अग्निः स्वपररूपाभ्यां | २ | १७२ | १२३ |
| अग्रहः क्षणभङ्गेऽपि | २ | १६५ | १३९ |
| अज्ञानरूपहेतुत्वाद्- | १ | ३४८ | ८२ |
| अणवः क्षणिकात्मान० | २ | १६८ | १४१ |
| अणूनां युतयोगत्वा- | २ | २२९ | २०१ |
| अत एव विरुद्धत्वादन् | २ | १०२ | ७१ |
| अतत्कालादिरप्यात्मा | १ | २९३ | ४३ |
| अतत्स्वपरावृत्तार्था | २ | १६८ | १४२ |
| अतदर्थपरावृत्तम | १ | २४८ | २९ |
| अतदारम्भतया बुद्धे | १ | ४९१ | १४३ |
| अतद्धेतुफलापोहमति | १ | ४९५ | १४७ |
| अतद्धेतुफलापोहे | १ | १२५ | ५ |
| अतद्धेतुफलापोह | २ | ५० | २५ |
| अतश्च बहिरर्थानां | २ | २१ | ८ |
| अतश्चार्थबलायातम | १ | ३८८ | ९५ |
| अतादात्म्यस्वभावे | २ | १४५ | ११६ |
| अतिप्रसङ्गतस्त्यात् | २ | ६२ | ३१ |
| अतीतस्यानभिव्यक्ती | १ | २५७ | ३३ |
| अतीतानागतादीनां | २ | १६ | ८ |
| अतीत्यादर्थरागेक्ष | १ | ४५४ | ११० |
| अत्यन्तमसदात्मान | १ | २९४ | ४४ |
| अत्यन्ताभेदभेदौ न | १ | ४९७ | १४४ |
| अत्यक्षेषु द्रुमेष्वन्य | १ | ४०९ | १०६ |
| अत्यासन्नानसमशान | १ | ४०६ | १०४ |
| अत्र दृष्टविपर्यस्तम० | १ | ४८९ | १३८ |
| अत्र मिथ्याविकल्पार्थे | १ | १०५ | १०४ |
| अत्राक्षेपसमाधीनाम | १ | २५१ | २० |

| | भाग | पृष्ठ | श्लो०सं० |
|---|---|---|---|
| अत्रान्यत्रापि तत्तुल्य | १ | ९७ | ६२ |
| अत्रापि स्वेतर जातु | २ | २३३ | ५१ |
| अत्रैवोभयपक्षोक्त | २ | २३४ | २०६ |
| अथ न व्यवहारोऽयं | २ | १७३ | १२५ |
| अथ नाम परिच्छेदो | १ | २२९-४२ | २५ |
| अथेदमसरूपं किम | १ | २४१ | २९ |
| अर्थैक सर्वविषयमस्तु | १ | ५२८ | १६३ |
| अदृष्टदोषाशङ्कायाम | २ | २८३ | १६ |
| अदृष्टदोषाशङ्कायामन्यत्रापि | २ | ३५६ | ७६ |
| अदृष्टकल्पनाया | २ | ६५ | ३६ |
| अदृष्टेरर्थरूपस्य | १ | २५३ | ३२ |
| " | १ | २५६ | ३३ |
| अद्वय द्वयनिर्भास | १ | ३१२ | ५१ |
| अद्वय द्वयनिर्भासमात्म | २ | ३४० | ७४ |
| अद्वय परिचित्ताधिपति | १ | ३३४ | ६९ |
| अध ऊर्ध्वविभागादि | १ | ४२१ | १०८ |
| अध्यक्षमात्मनि ज्ञान | १ | २०० | १२ |
| अध्यक्षमात्मवित्सर्व | १ | ५३१ | १६६ |
| अध्यक्षलिङ्गत सिद्ध | १ | ५०४ | १५१ |
| अध्यक्षादिविरोध० | १ | ५२९ | १६४ |
| अनर्थानाशङ्केषु | १ | २७० | ३८ |
| अनर्थमन्यथाभासम् | १ | ४६७ | १२३ |
| अनर्थनिरसन्तानान | १ | ३२२ | ५६ |
| अनर्थं परमात्मानमत | २ | २९५ | २८ |
| अनन्यसाधनं सिद्धि | १ | ४२० | १०७ |
| अनन्वयादिदोषोक्ते | २ | २३४ | २०६ |
| अनपायीति निश्चात्मा | १ | ३६५ | ८९ |
| अनल धाराऽग्निरयात् | २ | २२९ | १९९ |
| अनवस्थानतो भेदे | २ | १६ | ६ |
| अनादिनिधन तन्त्रम | १ | ३४४ | ७८ |
| अनादिनामना न | १ | २६७ | १ |
| अनादिसम्प्रदायच्छेदात् | २ | २०७ | ३२ |
| अनाधिपत्यशून्य | १ | ३५५ | ७६ |
| अनुमानमतो हेतु | १ | ३६० | ८५ |
| अनुमानमल्पि तदेव | १ | ४६ | २३ |

